लिप्सायाम्" ३।३।६१। भिक्षुर्दातृकुलमुपतिष्ठते उपतिष्ठति वा। "उदोऽनूर्द्ध्वेहे" ३।३।६२। मुक्तावुत्तिष्ठते। "सं-वि-प्रावात्" ३।३।६३। संतिष्ठते वितिष्ठते प्रतिष्ठते अवतिष्ठते। "ज्ञीप्सा-स्थेये" ३।३।६४। तिष्ठते कन्या च्छात्रेभ्यः, "श्लाघ-ह्नु-स्था-शपा प्रयोज्ये" २।२।६०। इति चतुर्थी।

सशय्य कर्णादिषु तिष्ठते यः। (किराता० सर्ग ३ श्लो० १४)

"प्रतिज्ञायाम्" ३।३।६५। तदतदात्मकं तत्त्वमातिष्ठते। "उपात् स्थः" ३।३।८३। इति कर्मण्यसति भोजने उपतिष्ठते। "अधेः शीङ्-स्थास आधारः" २।२।२०। इत्याधारस्य कर्मत्वे गृहमधितिष्ठति। क्ये "ईर्व्यञ्जनेऽयपि" ४।३।९७। इतीत्वे स्थीयते। "पिबैति–" ४।३।६६। इत्यादिना सिचो लुपि अस्थात्। "इश्च स्था-दः" ४।३।४१। इति इत्वे कित्त्वे च उपास्थित। प्रत्यष्ठात् कठकालापम्, अत्र "स्था-सेनि–" २।३।४०। इत्यादिनाऽड्व्यवधानेऽपि षत्वं "चरणस्य स्थेणोऽद्यतन्यामनुवादे" ३।१।१३८। इति द्वन्द्वस्यैकार्थत्वम्। अधितष्ठौ, अत्र द्वित्वेऽपि षत्वम्। अनुस्वारेत्त्वात् नेट्, अधिष्ठास्यति। ञपरे णौ "तिष्ठतेः" ४।२।३९। इत्युपान्त्यस्येत्वे अतिष्ठिपत्। "प्रवचनीयादयः" ५।१।८। इति वा कर्तर्यनीये उपस्थानीयो गुरोश्चैत्रः, पक्षे यथाप्राप्तम्, कर्मणि उपस्थानीयो गुरुः शिष्येण, भावे उपस्थानीयं शिष्येण। "श्लिष-शीङ्–" ५।१।९। इत्यादिना च कर्तरि क्ते उपस्थितो गुरुं शिष्यः, पक्षे कर्मणि उपस्थितो गुरुः शिष्येण, भावे उपस्थितं शिष्येण, अत्र "दो-सो-मा–" ४।४।११। इत्यादिनेत्वम्। "ग्रहादिभ्यो णिन्" ५।१।५३। स्थायी। "स्था-पा–"५।१।१४२। इत्यादिना के प्रतिष्ठते प्रष्ठः, अत्र "प्रष्ठोऽग्रगे" २।३।२२। इति षत्वम्। परमेष्ठः, अत्र "गो-ऽम्बा-ऽऽम्ब–"२।३।३०। इत्यादिना षत्वम्। क्विपि साक्षाद् व्यञ्जन एवेत्वविधानादीत्वाभावे संस्थाः। सस्थाशब्दादन्यत्र लुप्तव्यञ्जनेऽपीच्छन्त्येके। तथा च जयकुमारः **पां पाने** इत्यस्य क्विपि पीरित्याह। "स्था-ग्ला–" ५।२।३१। इत्यादिना स्नौ स्थास्नुः। "शृ-कम–"५।२।४०। इत्यादिना उकणि स्थायुकः। "स्थेश–"५।२।८१। इत्यादिना वरे स्थावरः। "स्थादिभ्यः कः" ५।३।८२। इति के आखूनामुत्थानमाखूत्थो वर्तते, अत्र "उदः स्था-स्तम्भः सः" १।३।४४। इति सो लुक्। गावस्तिष्ठन्त्यस्मिन्निति गोष्ठम्, "गो-ऽम्बा-ऽऽम्ब–" २।३।३०। इत्यादिना षत्वम्। "स्थो वा" ५।३।९६। इति क्तौ व्यवस्थितिः, पक्षे "उपसर्गादातः" ५।३।११०। इत्यङि व्यवस्था। व्यवस्था शीलमस्येति "अङ्स्था-च्छत्रादेरञ्" ६।४।६०। इत्यञि वैयवस्थः। उणादौ "स्था-क्षुतोरूच्च" (उ० १८५) इति णे ऊदादेशे च स्थूणा। "शुषीषि-बन्धि–" (उ० ४१६) इत्यादिना किरि स्थिरः। "स्थविर–" (उ० ४१७) इत्यादिनिपातनाद् इरे स्थविरः। "स्था-विडेः कित्" (उ० ४२९) इत्यूरे स्थूरः। "स्थो वा" (उ० ४७२) इत्यले स्थलम्, स्थली अकृत्रिमा चेत्, ङित्त्वाभावपक्षे स्थालं स्थाली। "किति-कुडि–" (उ० ५१८) इत्यादिना कित्यवे स्थवः। "अजि-स्था–" (उ० ७६८) इत्यादिना णौ स्थाणुः। "सव्यात् स्थः" (उ० ८५५) इति डिति ऋप्रत्यये सव्ये तिष्ठतीति सव्येष्ठा। अत्र भीरुष्ठानादित्वात्[1] षत्वम्। "प्रात् स्थः" (उ० ९२४)

१ "भीरुष्ठानादयः" २।३।३३॥

इति णितीनि प्रस्थास्यते प्रस्थायी, "वर्त्स्यति गम्यादिः" ५।३।१। इति भविष्यति साधुः। "परमात् कित्" (उ० ९२५) इति कितीनि परमे पदे तिष्ठतीति परमेष्ठी, भीरुष्ठानादित्वात् षत्वं सप्तम्यलुप् च। षोपदेशः "षः सोऽष्ट्यै-ष्ठिव-ष्वष्क" २।३।९८। इति सादेशार्थः। तथा च कृतत्वात् सस्य तिष्ठासतीत्यादौ "नाम्यन्तस्था–" २।३।१५। इत्यादिना षत्वं सिद्धं स्थातेत्यादौ सकारश्रवणं च॥

**६ म्नां अभ्यासे**। अभ्यासः पारम्पर्येण वृत्तिः। "श्रौति–"४।२।१०८। इत्यादिना शिति मनादेशे आमनति। "आतो णव औः" ४।२।१२०। मम्नौ। अनुस्वारेत्त्वाद् नेट्, म्नाता। घञि आम्नायः॥

**७ दांम्** दाने। मकार इत् अप्रयोगित्वात्, स च "श्रौति–" ४।२।१०८। इत्यादौ विशेषणार्थः। तथा च शिति यच्छादेशे प्रयच्छति। दास्या सम्प्रयच्छते, अत्र "दामः सम्प्रदानेऽधर्म्ये आत्मने च" २।२।५२। इति सम्प्रदानात् तृतीयाऽऽत्मनेपदं च। "अवौ दा-धौ दा" ३।३.५। इति दासञ्ज्ञा, क्ये "ईर्व्यञ्जनेऽयपि" ४।३।९७॥ इति ईत्वे दीयते। "पिबैति–" ४।३।६६। इत्यादिना सिचो लुपि अदात्। णवि ददौ। "प्राद् ज्ञश्च" ५।१।७९। इति डे अन्नं प्रयच्छतीति अन्नप्रदः। "स्वरादुपसर्गाद्दस्ति-कित्यधः" ४।४।९। इति त्तादेशे प्रत्तम्। "दस्ति" ३।२।८८। इति वेर्दीर्घत्वे वीत्तम्। "दत्" ४।४।१०। इति ददादेशे दत्तः। "दा-धे-सि–" ५।२।३६। इत्यादिना रौ यच्छतीत्येवंशीलो दारुः। "भुजि-पत्यादिभ्यः कर्मापादाने" ५।३।१२८। इति कर्मण्यनटि दीयते तदिति दानम्। अनुस्वारेत्त्वात् सम्प्रदाता। "दा-भाभ्यां नुः" (उ० ७८६) इत्यौणादिके नौ दानुः॥

इतः परमिदन्ताश्चत्वारः—

**८ जिं ९ ज्रिं अभिभवे**। जयति। "परा-वेर्जेः"३।३।२८। इत्यात्मनेपदे पराजयते विजयते। "जेर्गिः सन्-परोक्षयोः" ४।१।३५। इति ग्यादेशे जिगीषति, जिगाय। "णौ क्री-जीङः" ४।२।१०। इत्यात्वे जापयति। "क्षय्य-जय्यौ शक्तौ"४।३।९०। इति निपातनात् जेतुं शक्यो जय्यः, जेयोऽन्यः। "जि-विपू-न्यो हलि-मुञ्ज-कल्के" ५।१।४३। इति क्यपि जित्या जित्यो वा हलिः, जेयमन्यत्। "भृ-वृ-जि-तृ-तप-दमेश्च नाम्नि" ५।१।११२। इत्यणोऽपवादे खे धनञ्जयः। "भू-जेः ष्णुक्"५।२।३०। जयतीत्येवंशीलो जिष्णुः। "जीण्-दृ-क्षि–" ५।२।७२॥ इत्यादिनेनि जयी। "सृ-जीण्-नशाट्वरप्" ५।२।७७। जित्वरी। अनुस्वारेत्त्वाद् इडभावे जेता। उणादौ "कृ-वा-पा-जि–" (उ० १) इत्यादिनोणि जायु. पित्तम्। "त-जि–" (उ० २२१) इत्यादिनाऽन्ते जयन्तः। "चि-जि–" (उ० ३९२) इति रे दीर्घे च जीरोऽजाजी, लत्वे जीलश्चर्मपुटः। "ऋ-शी–" (उ० ९०६) इत्यादिना क्वनिपि जित्वा धर्मः, जित्वानौ। स्त्रियां "णस्वराऽघोषाद् वनो रश्च" २।४।४। इति ङ्यां रत्वे च जित्वरी नदी॥

ज्रिं। ज्रयति। जिज्राय जिज्रियतुः जिज्रियुः। अनुस्वारेत्त्वात् नेट् ज्रेता॥

केचित्तु जिं जये इत्यकर्मकत्वार्थं पृथक् पठन्ति जयः सर्वोत्कर्ष इति च व्याचक्षते, तदयुक्तम्, उत्क-

---

१ नेट् वा० नास्ति॥ २ "अप्रयोगीत्" १।१।३७॥

र्थस्याभिभवाविशेषत्वात् सकर्मकत्वा-ऽकर्मकत्वयोश्च विवक्षानिबन्धनत्वात्, तथा च जयति जिन इत्य-कर्मकः, जयति शत्रूनिति सकर्मकः। अत एव **कौशिकोऽ**पि नामुमभ्यैष्ट। अन्ये तु **ञिस्थाने जॄं** इति ऋकारान्तं पठन्ति, जरति, जर्ता॥

**१० क्षिं क्षये**। क्षयति। कर्मकर्तरि तु क्षीयते। **यद्वामनः**—"क्षीयते इति कर्मकर्तरि"। अनुस्वा-रेत्त्वात् क्षेता। कर्तरि क्ते "क्षेः क्षी चाध्यार्थे" ४।२।७४। इति क्तस्य नत्वे क्षीइत्यादेशे च क्षीणः। भावे क्ते क्षितमनेन। **क्षित् निवास–गत्योः** इत्यस्य तु क्षियति। **क्षिण्श् हिंसायाम्** इत्यस्य तु क्षिणाति। ऐश्वर्येऽप्ययमित्येके, ऋभून् क्षयति–ईष्टे ऋभुक्षाः॥

**११ इं १२ दुं १३ द्रुं १४ शुं १५ सुं गतौ**। पञ्चाप्यनुस्वारेतः। अयति।

"उदयति हि स तादृक् क्वापि सन्दर्भरीतौ"।

उदयति विततोर्ध्वरश्मिरज्जावहिमरुचौ हिमधाम्नि याति चास्तम्।
वहति गिरिरयं विलम्बिघण्टाद्वयपरिवारितवारणेन्द्रलीलाम्॥ [शिशुपाल० ४–२०]

एता। **इंण्क् गतौ, इंक् स्मरणे, इंङ्क् अध्ययने** इत्येषा तु एति ग्रामम्, मातुरध्येति, शास्त्रमधीते इति भवति॥

**इतः परं षडुदन्ताः**—

**दुं**। दवति। दोता। "वा ज्वलादि–" ५।१।६२। इत्यादिना णे दावः, पक्षेऽचि दवः। उदन्तत्वाद् "युवर्ण–" ५।३।२८। इत्यादिनाऽलि दवः। सम्पूर्वाद् "यु-दु-द्रोः" ५।३।५९। इति घञि सन्दावः। **टुदुंट् उपतापे** दुनोति॥ **द्रुं**। द्रवति। द्रोता। द्रोष्यति। "स्कृ–"४।४।८१। इत्यादिनाऽनुस्वा-रेतामपि परोक्षायामिड्विहितस्तत्र द्रुवर्जनादिड् नास्ति, दुद्रोथ दुद्रुव दुद्रुम। "णि-श्रि–"३।४।५८। इत्यादिना ङे अदुद्रुवत्। णौ "चल्याहारा–" ३।३।१०८। इत्यादिना फलवत्कर्तर्यपि "इंगित." ३।३।९५। इत्यात्मनेपदापवादे परस्मैपदे द्रावयति अय.। सन्परे णिगि "श्रु-स्रु-द्रु-प्रु-प्लु-च्योर्वा" ४।१।६१। इति पूर्वोकारस्येत्वे दिद्रावयिषति, पक्षे दुद्रावयिषति। सन्वद्भावात् ङपरे णौ अदिद्रवत् अदुद्रवत्। "वेश्च द्रोः" ५।२।५४। इति घिनणि विद्रवणशीलो विद्रावी, एवं प्रद्रावी। उत्पूर्वाद् "यु-पू-द्रोर्घञ्" ५।३।५४। इति घञि उद्द्रावः। सम्पूर्वाद् "यु-दु-द्रोः" ५।३।५९। इति घञि सन्द्रावः। "प्रात् स्नु-द्रु-स्तोः" ५।३।६७ प्रद्राव.। केवलादुदन्तत्वादलि वा द्रवः। उणादौ "द्रोर्वा"(उ० १८४) इति णे द्रुणा ज्या, कित्त्वाभावपक्षे द्रोण., गौरादिपाठात् द्रुणी द्रोणी। "द्रु-हृ-बृहि-दक्षिभ्य इणः" (उ० १९४) इतीणे द्रविणम्। "द्यु-द्रुभ्याम्" (उ० ७४४) इति डिद्रुः, द्रुस्तरुः। "हरि-पीत–"(उ० ७४५) इत्यादिना ड्रुः, हरिद्रु. ऋषिः, पीतद्रुर्देवदारु॥ **शुं**। शवति। शोता। शोष्यति। अचि

१ अस्य श्लोकस्य प्रथम पादं मुक्त्वा अन्यानि खे० संपा १ वा० नास्ति॥ २ °**दले वा** खे० संपा१ वा० स१ सं२। अत्र "**नियश्चानुपसर्गाद् वा**" ५।३।६०। इति सूत्रे अनुपसर्गाद् घञ्विकल्पनात् "**युवर्ण–वृ–दृ–**" ५।३।२८। इति अल् दव, पक्षे दाव, प्रद्राव सन्द्राव इत्यादिषु विधानवलान्न वैकल्पिकत्वम्॥ ३ "**गौरादिभ्यो मुख्याद् ङीः**" २।४।१९॥

शवः। उणादौ "भीण्शलि–" (उ० २१) इत्यादिना नञ्पूर्वात् के अशोकः। "विचि-पुषि-मुषि–" (उ० २२) इत्यादिना किति के शुकः। "चि-जि-शु–" (उ० ३९२) इति रे दीर्घे च शूरो विक्रान्तः। "ऋच्छि-चटि–" (उ० ३९७) इत्यरे शबरः॥　**स्रुं**। स्रवति। स्रोता। "णि-श्रि–" ३।४।५८। इति ङे असुस्रुवत्। णौ "चल्याहारार्थे–" ३।३।१०८। इति फलवत्कर्तर्यपि परस्मैपदम्, स्रावयति। सन्परे णौ "श्रु-स्रु–" ४।१।६१। इति पूर्वस्योतो वेत्वे सिस्रावयिषति सुस्रावयिषति। ङपरे णौ सन्वद्भावात् असिस्रवत् असुस्रवत्। "वा ज्वला–"५।१।६२। इति णे आस्रावः, पक्षेऽचि आस्रवः। "दिद्युद्-दद्दद्–"५।२।८३। इति क्विपि निपातनात् स्रवतीत्येवंशीलः स्रूः। "प्रात् स्रु-द्रु-स्तोः" ५।३।६७। घञि प्रस्रावः। "श्र्वादिभ्यः" ५।३।९२। क्तौ स्रूयतेऽनयेति स्रुतिः। उणादौ "निघृषि–" (उ० ५११) इति किति वे स्रवत्यस्मादिति स्रुवः, "स्रोश्चिक्" (उ० ८७१) स्रवत्यस्या हविरिति स्रुक्, भीमादित्वादपादाने साधू[1]। "स्रु-रीभ्यां तस्" (उ० ९७८) स्रोतः॥

१६ **ध्रुं स्थैर्ये च**। चकाराद् गतौ। ध्रवति। अनुस्वारेत्त्वात् ध्रोता, ध्रोष्यति। **ध्रुंत् गति-स्थैर्ययोः** इत्यस्य ध्रुवति। अचि कुटादित्वाद्[2] ङित्त्वे ध्रुवः॥

१७ **सुं प्रसवैश्वर्ययोः**। गतावप्येके। सवति। अनुस्वारेत्त्वात् सोता, सोष्यति। अषोपदेशत्वात् षत्वाभावे सुसाव। येषां तु षोपदेशोऽयं तन्मते षत्वे सुषाव। **षुंक् प्रसवैश्वर्ययोः** इत्यस्य सौति। **षुंगट् अभिषवे** इत्यस्य तु सुनोति सुनुते॥

**इतः परमृदन्ता नव—**

१८ **स्मृं चिन्तायाम्**। स्मरति। अनुस्वारेत्त्वात् स्मर्ता, स्मर्तुम्। ऋदन्तत्वात् "हनृतः स्यस्य" ४।४।४९। इति प्रतिप्रसवादिडपि स्मरिष्यति। णौ स्मारयति। आध्याने घटादित्वात्[3] स्मरयति। ङपरे णौ "स्मृ-दॄ-त्वर–" ४।१।६५। इति सन्वद्भावापवादे पूर्वस्यात्वे असस्मरत्। "स्मृ-दृशः" ३।३।७२। इति सन्नन्तादात्मनेपदे सुस्मूर्षते। "स्मृत्यर्थे–" २।२।११। इति कर्मणो व्याप्यत्वविकल्पनाद् मातुः स्मरति, मातरं स्मरति। णौ सनि सिस्मारयिषति, अषोपदेशत्वान्न षत्वम्। स्मरति कोकिलो वनगुल्मम्, स्मरयत्येनं वनगुल्मः, अत्र "अणिक्कर्म णिक्कर्तृकाण्णिगोऽस्मृतौ" ३।३।८८। इति स्मृत्यर्थवर्जनादात्मनेपदं न भवति। "पुन्नाम्नि–" ५।३।१३०। इति घे स्मरन्त्यनेनेति स्मरः। क्तौ स्मृतिः। **स्मृंट् पालने च** स्मृणोति॥

१९ **गृं** २० **घृं सेचने**। गरति। जगार। अनुस्वारेत्त्वात् गर्ता। ऋदन्तत्वादिटि गरिष्यति॥ **घृं**। घरति। जघार। उणादौ "सृणीकास्तीक–" (उ० ५०) इतीके निपातनात् घर्घरीका घण्टिका। "घृ-वी-ह्वा–" (उ० १८३) इति किति णे घृणा। "शी-री–" (उ० २०१) इति किति ते घृतम्। "अर्तीरि–" (उ० ३३८) इति मे घर्मः। "ऋदृ–" (उ० ६३५) इति किति णौ घृणिः।

---

१ "भीमादयोऽपादाने" ५।१।१४॥ २ "कुटादेर्ङिद्वद्–" ४।३।१७॥ ३ "घटादेर्ह्रस्वो–" ४।२।२४॥

यथाभिधानमस्य प्रयोग', अनुस्वारेत्त्वाच्च स्तायगिति यद्यस्तिप्रयोगस्तदाऽनिट्त्वं ज्ञेयम् । घृण् स्नरणे इत्यस्य तु घारयति, घारयामास ॥

२१ औस्वृ शब्दोपतापयोः। स्वरति। सम्पूर्वस्य "समो गम्–" ३।३।८४। इत्यात्मनेपदम्, संस्वरते। औदित्त्वाद् वेट्, स्वर्ता स्वरिता। सुस्वूर्षति सिस्वरिषति। "हनृत स्यस्य" ४।४।४९। इति नित्यमिटि स्वरिष्यति। णौ सनि सिस्वारयिषति, अषोपदेशत्वात् षत्वं नास्ति। सिस्वरयिषतीति तु स्वरण् आक्षेपे इत्यस्यादन्तस्य। अचि स्वर.। उणादौ "भृ-मृ-तृ-त्सरि–" (उ० ७१६) इत्युः, स्वरुर्वज्र.। "गम्यमि-रम्यजि–" (उ० ९२) इति गे स्वर्गः ॥

२२ द्वृं वरणे। वरणं स्थगनम्। द्वरति। दद्वरतु दद्वरुः। अनुस्वारेत्त्वात् द्वर्ता। "हनृतः स्यस्य" ४।४।४९। इतीटि द्वरिष्यति। घञि णिगन्तादचि वा द्वारम्। उणादौ "वाद्वारौ"(उ० ९४४) इति क्विपि द्वारयतीति द्वाः ॥

२३ ध्वृं २४ ह्वृं कौटिल्ये। अनुस्वारेतौ। ध्वरति। दध्वरतु दध्वरुः। ह्वरति। जह्वरतुः जह्वरुः। ध्वर्ता, हर्ता। "हनृतः स्यस्य" ४।४।४९। इतीटि ध्वरिष्यति, ह्वरिष्यति। यङि "क्य-यङा–" ४।३।१०। इति गुणे दाध्वर्यते। यङ्लुपि दरिध्वर्ति दर्ध्वर्ति दरीध्वरीति। एवं ह्वरतेरपि। अचि न ध्वरतीत्यध्वरः ॥

२५ सृं गतौ। सरति, प्रसरति। "वेगे सर्तेर्धाव्" ४।२।१००। धावति। क्ये स्रियते। "सर्त्यर्तेर्वा" ३।४।६१। इत्यङि असरत्, पक्षे असार्षीत्। अनुस्वारेत्त्वाद् नेट्, सर्ता। "हनृतः स्यस्य"[1] ४।४।४९। इति इटि सरिष्यति। "स्क्रादि–"[3] ४।४।८१। इत्यनुस्वारेतामपि परोक्षायामिड्विहितस्तत्र सृवर्जनाद् न भवति, सस्रुव सस्रुम ससर्थ। णौ सनि सिसारयिषति, षोपदेशाभावाद् न षत्वम्। "वर्योपसर्या–" ५।१।३२। इति घ्यणपवादे ये उपसर्या ऋतुमती चेत्, उपसार्याऽन्या। "कुप्य-भिद्योध्य–" ५।१।३९। इति निपातनात् क्यपि सूर्यः। "प्रु-सृ-ल्वोऽक साधौ" ५।१।६९। इत्यके साधु सरति सरक'। णके अभिसारिका। "पुरोऽग्र–" ५।१।१४०। इति टे पुरःसर., पुरःसरी। "पूर्वाद् कर्तुः" ५।१।१४१। पूर्वसरः, पूर्वसरी। "भूषा-क्रोधार्थ–" ५।२।४२। इत्यने सरतीत्येवंशील. सरणः। "विपरि-प्रात् सर्ते." ५।२।५५। इति घिनणि विसरतीत्येवंशीलो विसारी, एव परिसारी प्रसारी। "सृघस्य–" ५।२।७३। इति मरकि सृमरः। "सृ-जीण्–" ५।२।७७। इति ट्वरपि सृत्वरः, सृत्वरी। "सर्तेः स्थिर–" ५।३।१७। इति घञि अवयवैरन्योन्यं सरति धावतीति सारः, चन्दनसारः, अतिधावतीत्यतीसारो व्याधिः, सारो बलम्, विसारो मत्स्य.। "सृ-ग्लहः–"५।३।२१। इत्यलि गवामुपसरः। "भावाकर्त्रो "[4] ५।३।१८। घञि आसारः प्रसारः। विसर-प्रसरौ त्वलि वाहुलकात्। उणादौ "दृ-कृ-नृ–"

१ °स्येटि ध्व° सं१ सं२ ॥ २ °स्येति स° वा० खे० संपा१ विना ॥ ३ "स्कस्तृ-सृं-भृ-स्तु-द्रु-श्रु-स्रोर्व्यञ्जनादे. परोक्षायाः" ४।४।८१। इत्यत्र स्क्रप्रमृतीना अनुस्वारेतामपि सर्वधातूनां परोक्षायामिड्विधानेऽपि अस्र इति भणनाद् इट् न भवति ॥ ४ °न्यं धा° संपा १ वा० प्र० सं१ स२ तपा० मु० ॥

(उ०२७) इत्यके सरकः । "सृणीका–" (उ०५०) इतीके निपातनात् सृणीका । "दिव्यवि–" (उ० १४२) इत्यटे सरटः । "जृ-कृ-तृ–" (उ० १७३) इत्यण्डे सरण्डः कृमिजातिः । "सर्तेर्णित्" (उ० २३०) इति थे सार्थः । "सर्ते. षपः" (उ० ३१३) सर्षपः । "सर्तेर्गोऽन्तश्च" (उ० ४७८) इति कित्याले सृगालः । "लटि-खटि–" (उ० ५०५) इति वे सर्वः । "ऋद्-घृ-सृ–" (उ० ६३५) इति किति णौ सृणिः । "ऋ-हृ-सृ–" (उ० ६३८) इत्यणौ सरणिः । "सारेरथिः" (उ० ६७०) सारयतीति सारथिः । "सर्तेरय्वन्यू" (उ० ८०३) सरयुः, सरयूः, सरण्युर्मेघः । "सर्तेरड्" (उ० ८७८) सरड् वृक्षः । "हृ-सृ-रुहि–" (उ० ८८७) इति सरित् । "अस्" (उ० ९५२) इत्यसि [सरः जलाशयः] । अद्भ्यः सरन्ति स्म अप्सरसः[1], बाहुलकाद् भूतेऽपि साधुः ॥

**२६ ऋं प्रापणे च** । चकाराद् गतौ । "श्रौति–" ४।२।१०८। इति ऋच्छादेशे ऋच्छति, प्रार्च्छति । सम्पूर्वात् "समो गम्–" इत्यात्मनेपदे समृच्छते । क्ये अर्यते । "अत्यर्ति–" ३।४।१०। इति यङि अरार्यते, अत्र "क्य-यङाशीर्ये" ४।३।१०। इति गुणः । आरतुः आरुः, अत्र "सयोगादृदर्तेः"[2] ४।३।९। इति गुणः । "सर्त्यर्तेर्वा" ३।४।६१। इत्यङि आरत्, पक्षे आर्षीत् । णौ "अर्तिरी–" ४।२।२१। इति पौ अर्पयति । अनुस्वारेत्त्वाद् नेट्, अर्ता । "हनृतः स्यस्य" ४।४।४९। इतीटि अरिष्यति । थवि "ऋ-वृ-व्ये-ऽद इट्" ४।४।८०। आरिथ । सनि "ऋ-स्मि-पूङ्–" ४।४।४८। इतीटि अरिषति । "ऋ-ह्री-घ्रा–" ४।२।७६। इति क्तयोर्वा नत्वे ऋणमधमर्णदेयम्, अन्यत्र ऋतम् । "स्वामि-वैश्येऽर्यः" ५।१।३३। इति ये[3] अर्यः स्वामी वैश्यो वा, अन्यत्र घ्यणि आर्यः । "लू-धू-सू-खनि–" ५।२।८७। इतीत्रे अरित्रम् । "भिदादयः" ५।३।१०८। इत्यङि निपातनात् आरा । उणादौ "घृ-वी-ह्वा–" (उ० १८३) इति किति णे ऋणम् । "चिक्कण-कुक्कण–" (उ० १९०) इत्यणे निपातनात् उरणो मेषः । **ऋंक् गतौ** इत्यस्य तु इयर्ति ॥

**२७ तॄ प्लवन-तरणयोः** । प्लवनं मज्जनम्, तरणमुल्लङ्घनम् । तरति । क्ये तीर्यते । "स्कृच्छ्रृतोऽकि–" ४।३।८। इति गुणे "तॄ-त्रप–" ४।१।२५। इत्यत एत्वे च तेरतुः तेरुः । अनुस्वारेत्त्वाभावाद् इड्, "वृतो नवा–"[5] ४।४।३५। इतीटो वा दीर्घः, तरिता तरीता । सनि "इवृध–" ४।४।४७। इति वेट्, तितरिषति तितरीषति[4] तितीर्षति । आशिषीटो दीर्घत्वप्रतिषेधात् तरिषीष्ट । "ऋवर्णे–" ४।४।५७। इति नित्यमिड्निषेधात्किति तीर्त्वा । यङि[6] तेतीर्यते । यङ्लुपि तातर्ति । णके तरतीति तारकः, तारिका । "तारका-वर्णका–" २।४।११३। इति निपातनाद् इत्वाभावे तारका ज्योतिः । "भृ-वृ-जि–" ५।१।११२।

१ "आप्नोऽपाताप्सराब्जाश्च" (उ०९६४) इति सूत्रेण 'आप्लृंट् व्याप्तौ' इत्यस्य असप्रत्यये अप्सरआदेशे चापि अप्सरस. देवगणिका. ॥ २ ननु "–प्राक्तु स्वरे–" ४।१।१। इति वचनात् कथं गुणात्प्राग् न द्वित्वम् ? उच्यते, स्वरादित्वाद्धातोर्द्वितीयांशस्येटो द्वित्वे कर्तव्ये द्वित्वनिमित्तस्य स्वरस्याभावाद् द्वित्वात् प्राग् गुण एव ॥ ३ इति ये वा० मु० नास्ति ॥ ४ अत्र "नामिनोऽनिट्" ४।३।३३। इति सनः किन्वाद् इट् ॥ ५ "वृतो नवाऽनाशीः–" ४।४।३५। इत्यनेन सूत्रेण ॥ ६ यङि स१ स२ तपा० नास्ति ॥

इति खे रथात् रथैर्वा तरति रथन्तरो राजा, रथन्तरं साम। "भिदादयः" ५।३।१०८। इति निपातनादङि तारा ज्योतिः। "अवात् तृ-स्तृभ्याम्" ५।३।१३३। घञि अवतरन्त्यनेनास्मिन् वा अवतारः। "युवर्ण–" ५।३।१८। इत्यलि अवतरणमवतरः। उणादौ "पति-तमि–" (उ० ९८) इत्यङ्गे तरङ्गः। "तृ-कृ-कृपि–" (उ० १५१) इति कीटे तिरीटं मुकुटम्। "जॄ-कॄ-तॄ–" (उ० १७३) इत्यण्डे तरण्डः। "यम्यजि–" (उ० २८८) इत्युने तरुणः तलुनः। "नी-नू-रमि–" (उ० २२७) इति किति थे तीर्थम्। "ऋ-हृ-सृ–" (उ० ६३८) इत्यणौ तरणिः। "वृ-कृ-तृ–" (उ० ५४०) इति षे तर्षः प्लवः। "मा-वा-वद्यमि–" (उ० ५६४) इति से तर्सो वीतंसः, वाहुलकात् न षत्वम्। "स्वरेभ्य इः" (उ० ६०६) तरि, तरी नौः। "तृ-स्तृ-तन्द्रि–" (उ० ७११) इति ईप्रत्यये तरीर्नौः। "भृ-मृ-तृ–" (उ० ७१६) इत्युः तरु। "ऋ-तृ-शॄ–" (उ० ७२७) इति णित्युप्रत्यये लत्वे च तालु। तीरमिति तु तीरण् कर्मसमाप्तौ इत्यस्य ॥

२८ **ट्धें पाने**। टकारः शुनिन्धयीत्यादौ ङ्यर्थः। धयति। अशित्यात्वे दधौ। णिगि "अर्ति-री-व्ली–" ४।२।२१। इति पौ धापयति। फलवत्कर्तर्यात्मनेपदस्य प्राप्तस्य "चल्याहारा–" ३।३।१०८। इत्यपवादे परस्मैपदे प्राप्ते "परिमुहा–" ३।३।९४। इति पुनरात्मनेपदम्, धापयते शिशुं माता। क्ये दासञ्ज्ञत्वाद् "ईर्व्यञ्जनेऽयपि" ४।३।९७। इतीत्वे धीयते। "ट्धे-श्वेर्वा" ३।४।५९। इति ङे अदधत्, पक्षे अधात् अधासीत्, अत्र "ट्धे-घ्रा–" ४।३।६७। इति सिचो वा लुप्। अनुस्वारेत्त्वात् नेट्, धाता। "घ्रा-ध्मा–" ५।१।५८। इति शे धयः, उद्धयः, निधयः। ये तु सोपसर्गादेव शमिच्छन्ति तन्मते "तन्-व्यधी–" ५।१।६४। इति णे धायः। "शुनी-स्तन–" ५।१।११९। इति खशि शुनिन्धयः, शुनिन्धयी। क्तयोः धीतः धीतवान्, धावर्जनाद् "दत्" ४।४।१०। इति दत् न भवति। "दा-धे-सि–" ५।२।३६। इति रौ धयतीत्येवंशीलो धारुर्गाः। "तृन्नुदन्ता–" २।२।९०। इति निषेधाद् न षष्ठी। "धात्री" ५।२।९१। इति निपातनात् कर्मणि त्रटि धयन्ति तामिति धात्री। उणादौ "धेः शित्" (उ० ७८७) इति नौ धेनुः ॥

इतः परमैन्दता अनुस्वारेतश्चैकविंशतिः—

२९ **दैव् शोधने**। वकारो "अवौ दा-धौ दा" ३।३।५। इति दासञ्ज्ञानिषेधार्थः। दायति। क्ये निदायन्ते भाजनानि, अवदातं मुखम्, अदासीत्, दिदासति, एषु दासञ्ज्ञाऽभावाद् ईत्वं चः सिज्लुविदादेशश्च न भवति। अनुस्वारेत्त्वाद् नेट्, दाता। यङि दादायते। यङ्लुपि दादाति दादेति दादीतः, अत्र "एषामी–" ४।२।९७। इत्यत्र दासञ्ज्ञस्यैव वर्जनात् ईत्वं भवति। **दांम् दाने** यच्छति। **दैंङ् त्रैंङ् पालने** दयते। **दांवक् लवने** दाति। **डुदांगक् दाने** ददाति। **दों छोंच् छेदने** द्यति॥

---

१ "इतोऽक्त्यर्थात्" २।४।३२। इति ङ्या रूपम्॥ २ °सञ्ज्ञत्वा° खे० संपा१ वा०॥ ३ "ईर्व्यञ्जनेऽयपि" ४।३।९७। इति ईत्वं "स्वरादुपसर्गादस्तिकित्यधः" ४।४।९। इति त्त "पिबैति-दा-भू-स्थः–" ४।३।६६। इति सिचो लुप् "मि-मी-मा-दामित् स्वरस्य" ४।१।२०। इति इदादेशश्च॥

**३० ध्यैं चिन्तायाम्** । मातुर्ध्यायति, मातरं ध्यायति, "स्मृत्यर्थे–" २।२।११। इति कर्मणो वा व्याप्यत्वम् । अशित्यात्वे दध्यौ । अनुस्वारेत्त्वाद् नेट्, ध्याता । णौ ध्यायति वनगुल्मं कोकिलः,ध्यापयत्येनं वनगुल्मः, अत्र "अणिकर्म–" ३।३।८८। इति स्मृत्यर्थवर्जनादात्मनेपदं न भवति । दुष्टं मां च ध्यायतीति "आतो डो–" ५।१।७६। इति डे दूध्यः माध्यः, आध्यायन्ति तमिति "स्थादिभ्यः–" ५।३।८२। इति के आढ्यः, पृषोदरादित्वात् साधवः । सन्ध्यायन्त्यस्यामिति "स्थादिभ्यः–"५।३।८२। इति के सन्ध्या । मां ध्यायतीति डे मध्यम् । "व्यञ्जनान्तस्था–"४।२।७१। इति ध्यावर्जनात् क्तयोस्तस्य नत्वाभावे ध्यातः ध्यातवान् । "दिद्युद्दद्‌त्–" ५।२।८३। इति निपातनात् क्विपि ध्यायतीत्येवंशीला धीः । उणादौ "तीवर–" (उ० ४४४) इति निपातनात् वरटि धीवरः । "ध्या-प्योर्धी पी च" (उ० ९०८) इति क्वनिपि धीवा ॥

**३१ ग्लैं हर्षक्षये** । इह हर्षक्षयो धात्वपचयः । ग्लायति । अशित्यात्वे जग्लौ । अनुस्वारेत्त्वाद् नेट्, ग्लाता । "संयोगादेर्वाऽऽशिष्येः" ४।३।९५। ग्लेयात् ग्लायात् । णौ "ज्वल-ह्वल–"४।२।३२। इत्यनुपसर्गस्य वा ह्रस्वत्वे ग्लपयति ग्लापयति । "व्यञ्जनान्तस्था–"४।२।७१। इति क्तयोस्तस्य नत्वे ग्लानः ग्लानवान् । "स्था-ग्ला–" ५।२।३१। इति स्नौ ग्लायतीत्येवंशीलो ग्लास्नुः । "ग्ला-हा–" ५।३।११८। इत्यनौ ग्लानिः । ग्लायतावुपपदे "शक-धृष–"५।४।९०। इति तुम्, ग्लायति भोक्तुम् । उणादौ "ग्ला-नुदिभ्यां डौः" (उ० ८६८) ग्लौश्चन्द्रः ॥

**३२ म्लैं गात्रविनामे** । विनामः कान्तिक्षयः । म्लायति । अशित्यात्वे मम्लौ । अनुस्वारेत्त्वाद् नेट्, म्लाता । म्लेयात् म्लायात् । म्लानः । "स्था-ग्ला-म्ला–" ५।२।३१। इति स्नौ म्लास्नुः । ये तु म्लायतेरपि "ग्ला-हा-"५।३।११८। इत्यनिमिच्छन्ति तन्मते म्लानिः ॥

**३३ द्यैं न्यङ्करणे** । कुत्सितमङ्ग न्यङ्गम् । द्यायति । अशित्यात्वे दद्यौ । अनुस्वारेत्त्वात् नेट्, द्याता । द्येयात् द्यायात् । द्यानः ॥

**३४ द्रैं स्वप्ने** । द्रायति । अशित्यात्वे दद्रौ । अनुस्वारेत्त्वात् नेट्, द्राता । द्रेयात् द्रायात् । निद्राणः । "शीङ्-श्रद्धा–" ५।२।३७। इत्यालौ निद्राणशीलो निद्रालुः । "उपसर्गादातः"५।३।११०। इत्यङि निद्रा । तारकादित्वात् इते[2] निद्रितः । **द्रांक् कुत्सितगतौ** द्राति, निद्राति ॥

**३५ ध्रैं तृप्तौ** । ध्रायति । अशित्यात्वे दध्रौ । अनुस्वारेत्त्वात् नेट्, ध्राता । "ऋ-ह्री-घ्रा"४।२।७६। इति क्तयोस्तस्य वा नत्वे ध्राणः ध्राणवान्, ध्रातः ध्रातवात् । ध्रेयात् ध्रायात् ॥

**३६ कैं ३७ गैं ३८ रैं शब्दे** । कायति । अशित्यात्वे चकौ । अनुस्वारेत्त्वाद् नेट्, काता । उणादौ "भीण्शलि–" (उ० २१) इति के काकः ॥ **गैं** । गायति । अशित्यात्वे जगौ । क्ये

१ ननु अत्र "**नामिनो गुणः**" ४।३।१। इति कथं न गुण- ऐकारस्यापि नामित्वाद्? इति चेत् 'ऐकारोपदेशवलान्न गुण.' इति **सिद्धहेमबृहद्वृत्तौ** ४।३।१। सूत्रे, यद्वा 'गुण इति सान्वयसञ्ज्ञाग्रमाश्रयणात् न गुण, ऐकराद् एकारस्य हीनत्वात्' इति **क्रियारत्नसमुच्चये** ॥ २ "**तदस्य सञ्जातं तारकादिभ्य इतः**" ७।१।१३८। इति सूत्रम् ॥

गीयते। "गा-पा–" ४।३।९६। इत्येत्वे गेयात्। अनुस्वारेत्त्वाद् नेट्, गाता। "यमि-रमि-नम्यातः सोऽन्तश्च" ४।४।८६। इतीटि से च अगासीत् अगासिष्टाम्। इणादेशस्य तु अगात्। "भव्य-गेय–" ५।१।७। इति वा कर्तरि ये गेयो माणवको गाथानाम्, पक्षे कर्मणि गेया माणवकेन गाथाः। "गस्थ-क" ५।१।६६। इति थके गानशिल्पो गाथकः। "टनण्" ५।१।६७। इति टनणि गायनः, गायनी। "गायोऽनुपसर्गात् टक्" ५।१।७४। इति टकि सामगः, सामगी। "उपसर्गात्" ५।३।११०। इत्यङो-ऽपवादे "गा-पा-पचो भावे" ५।३।९५। इति क्तौ प्रगीतिः, उपगीतिः। उणादौ "कमि-भु-गा–" (उ० २२५) इति थे गाथा। "नी-नू-रमि–" (उ० २२७) इत्युत्पूर्वात्किति थे उद्गीथ ओंकारः। "कृसि-कमि–" (उ० ७७३) इति तुनि गातुः। "हु-पूगोन्नी–" (उ० ८६३) इति तृः, उद्गाता। **गांङ् गतौ** गाते॥

**रैं** रायति। अशित्यात्वे ररौ। अनुस्वारेत्त्वाद् नेट्, राता। अरासीत् अरासिष्टाम्। **रांक् दाने** राति धनम्॥

**३९ ष्ट्यैं ४० स्त्यैं सङ्घाते च**। चकारात् शब्दे। ष्ट्यायति। "षः सो–" २।३।९८। इति ष्ट्यैवर्जनात् षस्य सोऽत्र न भवति। अशित्यात्वे तष्ट्यौ। अनुस्वारेत्त्वाद् नेट्, ष्ट्याता॥

**स्त्यैं**। स्त्यायति। अशित्यात्वे तस्त्यौ। अनुस्वारेत्त्वाद् नेट्, स्त्याता। "प्रसमः स्त्यः स्ती"। ४।१।९५। इति स्तीभावे प्रसस्तीतः, प्रसस्तीतवान्। "प्रात् तश्च मो वा" ४।१।९६। प्रस्तीमः प्रस्तीमवान्, प्रस्तीतः प्रस्तीतवान्। "व्यञ्जनान्तस्था–" ४।२।७१। इति क्तयोस्तस्य नत्वे संस्त्यानः संस्त्यानवान्। उणादौ "दिन-नग्न–" (उ० २६८) इति निपातनात् ने स्तेनः। "स्त्री" (उ० ४५०) इति निपातनाद् डिति त्रटि स्त्री॥

**४१ खैं खदने**। खदन हिंसा स्थैर्य च। खायति। अशित्यात्वे चखौ। अनुस्वारेत्त्वाद् नेट्, खाता॥

**४२ क्षैं ४३ जैं ४४ सैं क्षये**। क्षायति, जायति, सायति। अशित्यात्वे चक्षौ, जजौ, ससौ। अनुस्वारेत्त्वाद् नेट्, क्षाता, जाता, साता। "क्षै-शुषि–" ४।२।७८। इति क्तयोस्तस्य मत्वे क्षामः क्षामवान्॥

**४५ स्रैं ४६ श्रैं पाके**। स्रायति। अशित्यात्वे सस्रौ। अनुस्वारेत्त्वाद् नेट्, स्राता। क्ते स्राणः॥

**श्रैं**। श्रायति। शश्रौ। श्राता। णौ पाके घटादित्वाद् ह्रस्वत्वम्, श्रपयति। पाकादन्यत्र श्रापयति। क्ते "श्रः शृतं हविः क्षीरे" ४।१।१००। इति निपातनात् शृतं क्षीरं हविर्वा। "श्रपेः प्रयोक्त्रैक्ये" ४।१।१०१। श्रप्यते स्म शृतं क्षीरं हविर्वा। **श्रांक् पाके** श्राति॥

---

१ अत्र 'इणिकोर्गा.' ४।४।२३। इति गादेशे कृते "यमि-रमि-नम्यातः सोऽन्तश्च" ४।४।८६। इति सूत्रस्य आदन्तत्वेऽपि नैव प्रवृत्ति, "पिबैति-दा-भू-स्थः–" ४।३।६६। इत्यत्र एति इत्यनेन इण्-इकोर्ग्रहणात् प्रथममेव सिचूलोपात्॥ २ उपगीति स१ सं२ तपा० नास्ति॥ ३ अनेकार्थत्वात् सं१ तपा० टि.। ४ स्वेदयतीत्यर्थः स१ तपा० टि.।

**४७ पैं ४८ ओवैं शोषणे**। पायति, अस्य पारूपं लाक्षणिकमिति "श्रौति–" ४।२।१०८। इति पिबादेशो न भवति। अशित्यात्वे पपौ। अनुस्वारेत्त्वाद् नेट्, पाता। णौ "पा-शा–" ४।२।२०। इति येऽन्ते पाययति। क्ये निपीयते। आशिष्येत्वे पेयात्। **पां पाने** पिबति। **पांक् रक्षणे** पाति॥ **ओवैं**। वायति। ववौ। वाता। ओदित्त्वात् "सूयत्यादि–"४।२।७०। इति क्तयोस्तस्य नत्वे वानः वानवान्। उणादौ "कृ-वा-पा-जि–" (उ० १) इत्युणि वायु। **वांक् गति-गन्धनयोः** वाति॥

**४९ ष्णैं वेष्टने**। स्नायति, "षः सो–"२।३।९८। इति सत्वम्। अशित्यात्वे सस्नौ। अनुस्वारेत्त्वात् नेट्[1], स्नाता। उणादौ "कृ-वा-पा-जि–" (उ० १) इत्युणि स्नायुः। **ष्णांक् शौचे** स्नाति। **ष्णांक् शौचे** इत्यत्र दर्शितप्रयोगा अत्राप्यूह्याः, वेष्टने स्नायतीति प्रयोगार्थत्वादिहैतत्पाठस्य॥

अथ कान्ताः पञ्च सेटश्च—

**५० फक्क नीचैर्गतौ**। अकारः श्रुतिसुखार्थः, एवं शेषेष्वदन्तेषु। नीचैर्गतिर्मन्दगमनम् असद्व्यवहारो वा। फक्कति। पफक्क। फक्किता। "क्तेटो–" ५।३।१०६। इत्यप्रत्यये फक्का। क्ते फक्कितं निगीर्णम्॥

**५१ तक हसने**। सहने इत्यन्ये। तकति। तकिता। "शकि-तकि–"५।१।२९। इति ये तक्यम्॥

**५२ तकु कृच्छ्रजीवने**। उदिद् "उदितः स्वरान्नोऽन्तः" ४।४।९८। इति नागमार्थः। तङ्कति, आतङ्कति। तङ्किष्यति[2]। घञि आतङ्कः॥

**५३ शुक गतौ**। शोकति। शुशोक। शोकिष्यति। "नाम्युपान्त्य–"५।१।५४। इति के शुकः। उणादौ "शुक-शी-मूभ्यः कित्" (उ० ४६२) इति ले शुक्लः॥

**५४ बुक्क भाषणे**। भषणे इत्यन्ये। भषणं भर्त्सनम्। बुक्कति श्वा। बुक्किष्यति। "क्तेटो–" ५।३।१०६। इत्यप्रत्यये बुक्का॥

अथ खान्ता द्वाविंशतिः सेटश्च—

**५५ ओखृ ५६ राखृ ५७ लाखृ ५८ द्राखृ ५९ ध्राखृ शोषणा-ऽलमर्थयोः**। ओखति। "उपसर्गस्यानिणेधेदोति" १।२।१९। प्रोखति। "गुरुनाम्यादेः–" ३।४।४८। इत्यामादेशे ओखाञ्चकार। ऋदित्त्वाद् ङपरे णौ "उपान्त्यस्या–" ४।२।३५। इति न ह्रस्वः, मा भवानोचिखत्। ऋदित्त्वादेव चौतो नेत्सञ्ज्ञा प्रयोगित्वाच्च॥ **राखृ**। राखति। अरराखत्॥ **लाखृ**। लाखति। अललाखत्॥ **द्राखृ**। द्राखति। अदद्राखत्॥ **ध्राखृ**। ध्राखति। अदध्राखत्। केचिदमुं नाधीयते॥

**६० शाखृ ६१ श्लाखृ व्याप्तौ**। शाखति। ऋदित्त्वात् अशशाखत्। अचि "क्तेटो–" ५।३।१०६। इत्यप्रत्यये वा शाखा। उणादौ "कृ-शकृ–"(उ० १६०) इत्योटे शाखोटो वृक्षः। "शाखेरिदेतौ चातः" (उ० ४००) इत्यरे शिखरम्, शेखरः॥ **श्लाखृ**। श्लाखति। अशश्लाखत्॥

---

[1] नेट् म१ सं२ त० प्र० मु० नास्ति॥ [2] आतङ्किष्यति खे०॥

६२ **कक्ख हसने**। कक्खति। "क्तेटो–" ५।३।१०६। इत्यप्रत्यये कक्खा। उणादौ "दि-व्यवि–" (उ० १४२) इत्यटे कक्खटः। द्वितीयादिमेतं केचिन्मन्यन्ते, खक्खति। खक्खा ॥

**६३ उख ६४ नख ६५ णख ६६ वख ६७ मख ६८ रख ६९ लख ७० मखु ७१ रखु ७२ लखु ७३ रिखु ७४ इख ७५ इखु ७६ ईखु ७७ वल्ग ७८ रगु ७९ लगु ८० तगु ८१ अगु ८२ श्लगु ८३ अगु ८४ वगु ८५ मगु ८६ स्वगु ८७ इगु ८८ उगु ८९ रिगु ९० लिगु गतौ**। ओखति। "उपसर्गस्यानिणेधेदोति" १।२।१९। इत्युपसर्गावर्णलोपे प्रोखति। "नाम्युपान्त्य–" ५।१।५४। इति के उखा ॥ **नख**। नखति। प्रनखति, नोपदेशत्वात् "अदुरुपसर्गा–" २।३।७७। इति न णत्वम्। अचि नखः ॥ **णख**। नखति। प्रणखति, णोपदेशत्वाद् णत्वम् ॥ **वख**। वखति ॥ **मख**। मखति। बाहुलकात् "व्यञ्जनाद्–" ५।३।१३२। घञपवादे "पुन्नाम्नि घः" ५।३।१३०। इति घे मख ॥ **रख**। रखति ॥ **लख**। लखति ॥ **मखु**। मङ्खति। उदित्त्वाद् नेऽन्तेऽचि मङ्खो वन्दी ॥ **रखु**। रङ्खति ॥ **लखु**। लङ्खति ॥ **रिखु**। रिङ्खति। रिङ्खणः, रिङ्खण स्खलनम् ॥ **इख**। एखति ॥ **इखु**। इङ्खति, प्रेङ्खति। प्रेङ्खा ॥ **ईखु**। ईङ्खति ॥

अथ गान्ता अष्टादश सेटो वल्गवर्जा उदितश्च—

**वल्ग**। वल्गति। "व्यञ्जनात्–" ५।३।१३२। घञि वल्गो वल्गेत्यर्थः ॥ **रगु**। रङ्गति। उदित्त्वाद् नागमे "व्यञ्जनात्–"। ५।३।१३२॥ घञि रङ्गति–सङ्गच्छते जनोऽस्मिन्निति रङ्गः ॥ **लगु**। लङ्गति। "लङ्गि-कम्प्यो–" ४।२।४७। इति नलोपे विलगितः पशुः। घञि लङ्गः, खञ्जनेऽयं रूढः ॥ **तगु**। तङ्गति। तगुः स्खलने रूढः ॥ **अगु**। अङ्गति ॥ **श्लगु**। श्लङ्गति ॥ **अगु**। अङ्गति। अचि अङ्गम्। उणादौ "अग्यङ्गि–" (उ० ४०५) इत्यारे अङ्गारः "मस्यसि–" (उ० ६९९) इत्युरौ अङ्गुरिः, लत्वे अङ्गुलिः ॥ **वगु**। वङ्गति। अचि वङ्गः। वगुर्गतिवैकल्ये रूढः ॥ **मगु**। मङ्गति। मङ्गः। उणादौ "मङ्गेर्नलुक् च" (उ० २५३) इत्यघे मगधाः। "मृदि-कन्दि–" (उ० ४६५) इत्यले मङ्गलम्। "हृषि-वृति–" (उ० ४८५) इत्युले मङ्गुलम्। **स्वगु**। स्वङ्गति ॥ **इगु**। इङ्गति। क्ते इङ्गितम्। अनटि प्रेङ्गणर्, "नाम्यादेरेव ने" २।३।८६। इति णत्वम् ॥ **उगु**। उङ्गति ॥ **रिगु**। रिङ्गति ॥ **लिगु**। लिङ्गति, आलिङ्गति। "व्यञ्जनात्–" ५।३।१३२। घञि णावचि वा लिङ्गम्। **लिगुण् चित्रीकरणे** लिङ्गयति ॥ वखमुदितमप्येके पठन्ति, वङ्खति ॥

९१ **त्वगु कम्पने च**। चकाराद् गतौ। स्थितस्यैव चलनं कम्पनम्। गतिर्देशान्तरप्राप्तिहेतुः क्रिया। त्वङ्गति। अचि त्वङ्ग ॥

९२ **युगु ९३ जुगु ९४ वुगु वर्जने**। युङ्गति। जुङ्गति। वुङ्गति ॥

**अथ घान्ताश्चत्वारः सेटो गग्घवर्जा उदितश्च—**

**९५ गग्घ हसने**। गग्घति। "क्तेटो–" ५।३।१०६। इत्यप्रत्यये गग्घा। घादिरयमित्येके, घग्घति॥

**९६ दघु पालने**। वर्जनेऽपीत्यन्ये। दङ्घति॥

**९७ शिघु आघ्राणे**। आघ्राणं गन्धोपादानम्। शिङ्घति। उणादौ "धा-ऌ–" (उ० ७०) इत्याणके शिङ्घाणको नासामलः। "शी-भी–" (उ० ७१) इत्यानके शिङ्घानकः श्लेष्मा॥

**९८ लघु शोषणे**। लङ्घति। **लघुङ् गतौ** लङ्घते॥ अत्र **मघु मण्डने** इत्येके पठन्ति, मङ्घति॥

**अथ चान्ता विंशतिः सेटश्च—**

**९९ शुच शोके**। शोचति। शोचिष्यति। क्ते सेट्त्वात्[१] कत्वाभावे घ्यणि शोच्यः। न्यङ्क्वादित्वाद्[२] घञि कत्वे शोकः। "नाम्युपान्त्य–" ५।१।५४। इति के शोचति शुचः। "भूषा-क्रोधार्थ–" ५।२।४२॥ इत्यने शोचनशीलः शोचनः। उणादौ "नाम्युपान्त्य–" (उ० ६०९) इति किति इप्रत्यये शुचिः। "रुच्यर्चि–" (उ० ९८९) इतीसि शोचिः॥

**१०० कुच शब्दे तारे**। तारे उच्च इत्यर्थः। शब्दमात्रेऽपीत्यन्ये। कोचति। चुकोच। "उति शवर्हाद्भ्यः क्तौ भावारम्भे" ४।३।२६॥ इति वा कित्त्वे कुचितम् कोचितमनेन, प्रकुचितः प्रकोचितः। **क्रुच सम्पर्चने**ति ज्वलादौ पठिष्यमाणोऽपीहार्थविशेषात् पुनः पठितः॥

**१०१ क्रुञ्च गतौ**। क्रुञ्चति। क्रुञ्चन्। "युजञ्च–" २।१।७१। इति नस्य ङविधानात् क्वौ नलोपाभावे क्रुङ्। "प्रज्ञादि–" ७।२।१६५। इत्यणि क्रौञ्चः। अजादित्वात् स्त्रियामपि क्रुञ्चा॥

**१०२ कुञ्च च कौटिल्या-ऽल्पीभावयोः**। चकारः क्रुञ्चोऽनुकर्षणार्थः, तेन क्रुञ्चस्यैतयर्थ्ये सिद्धम्, गतेरन्यस्य वा कौटिल्ये द्रव्यस्याल्पीभावे। कुञ्चति। णके कुञ्चिका। क्विपि नलोपे कुक्। क्ते "नो व्यञ्जनस्यानुदितः" ४।२।४५। इति नलोपे सङ्कुचितः, निकुचितः। सङ्कोचितः[३] इति तु **कुच शब्दे तारे** इत्यस्य, अनेकार्थत्वाच्च धातूनां कौटिल्यार्थता॥

**१०३ लुञ्च अपनयने**। अनुपयुक्तापासने। लुञ्चति। "ऋत्तृष–" ४।३।२४। इति क्त्वो वा कित्त्वे लुचित्वा लुञ्चित्वा। क्तयोरपि वा कित्त्वमित्येके, तन्मते लुचितम् लुञ्चितम्॥

**१०४ अर्च पूजायाम्**। अर्चति। "अनातो नश्चान्त–" ४।१।६९। इति पूर्वस्याऽऽत्वे नेऽन्ते च आनर्च। क्ते सेट्त्वाद् घ्यणि कत्वाभावे अर्च्यः, अर्चेरपि कत्वमिच्छन्त्येके, अर्क्यः। "ज्ञानेच्छार्चा–" ५।२।९२। इति सति क्ते अर्चितः। "क्तयोरसदाधारे" २।२।९१। इत्यत्र सतो वर्जनात् प्रतिषेधाभावे "कर्तरि" २।२।८६। इति षष्ठ्या "ज्ञानेच्छार्चा–" ३।१।८६। इति च समासाभावे ब्राह्मणस्यार्चितः। "क्तेटो–" ५।३।१०६। इत्यप्रत्यये अर्चा। उणादौ "भीण्शली" (उ० २१)

---

१ "क्तेऽनिट–" ४।१।१११। इत्यत्र अनिट इत्युक्तत्वात्॥ २ "न्यङ्कुद्गमेघादयः" ४।१।११२। इति सूत्रम्॥ ३ **सङ्कोचक** इ° खे० सं१ सं२ प्र० तपा०। **सङ्कोचिक** इ° वा०॥

इति के अर्कः । "रुच्यर्चि–" (उ० ९८९) इतीसि अर्चिः । **अर्चिण् पूजायाम्** अर्चयति, अर्चते ॥

**१०५ अञ्चू गतौ च** । चकारात् पूजायाम् । अञ्चति । "क्रियाव्यतिहारेऽगति–" ३।३।२३। इति गत्यर्थवर्जनाद् गतौ नाऽऽत्मनेपदम्, व्यत्यञ्चति मिथुन ग्रामम्; पूजाया तु प्रतिषेधाभावादात्मनेपदमेव, व्यत्यञ्चते मिथुन देवम्। क्ये गतौ "अञ्चोऽनर्चायाम्" ४।२।४६। इति नलुकि अच्यते; पूजायामर्चावर्जनाद् नलोपाभावे अञ्च्यते। "अनातो–" ४।१।६९। इति पूर्वस्याऽऽत्वे नेऽन्ते च आनञ्च। ऊदित्त्वाद् "ऊदितो वा" ४।४।४२। इति क्त्वाया वेटि अक्त्वा अञ्चित्वा; अर्चाया "लुभ्यञ्चेः–" ४।४।४४। इति क्तयोः क्त्वायाः च नित्यमिट्, अञ्चिता अस्य गुरव, अञ्चितवान् गुरून्, अञ्चित्वा गुरून्। "पूदिव्यञ्चेः–" ४।२।७२। इति क्तयोर्नत्वे "समक्नौ शकुनेः पादौ"; "–अनपादाने" ४।२।७२। इत्युक्ते "उदक्तमुदकं कूपात्", सापादानार्थे[1] न नत्वम्। क्वावर्चाया नलोपाभावेऽनर्चायां तु नलुक्यपि "अचः" १।४।६९। इति धुटि नागमे प्राङ् प्राञ्चौ प्राञ्चः, शसादौ गत्यर्थे प्राचः प्राचेत्यादि, पूजने तु नलोपाभावे "अच्च् प्राग्–" २।१।१०४। इति चोऽभावे प्राञ्च प्राञ्चेत्यादि। "भावाकर्त्रोः" ५।३।१८। घञि पर्यङ्कः पल्यङ्कः, "[2]क्तेऽनिट्–" ४।१।१११। इति कत्वम्। "उदङ्कोऽतोये" ५।३।१३५। इति निपातनाद् घञि उदच्यतेऽनेनेति उदङ्को घृतस्य, तोये तु जलोदञ्चनः[3], "करणाधारे" ५।३।१२९। इत्यनट्। उणादौ "अञ्चेः क च वा" (उ० ६५६) इत्यतौ अङ्कतिः, कत्वाभावे अञ्चतिः। "नेरञ्चे" (उ० ७२४) इत्युप्रत्यये न्यङ्कुः, [4]न्यङ्क्वादित्वात् कत्वम्, कत्वाभावे न्यञ्चुः स्वेदबिन्दुः॥

**१०६ वञ्चू १०७ चञ्चू १०८ तञ्चू १०९ त्वञ्चू ११० मञ्चू १११ मुञ्चू ११२ म्रुञ्चू ११३ म्रुचू ११४ म्लुचू ११५ ग्लुञ्चू ११६ षस्च गतौ** । षस्चवर्जा ऊदितो दश ।

वञ्चति । यङि "वञ्च-स्रंस–" ४।१।५०। इति न्यागमे वनीवच्यते । यङन्तादचि वनीवचः । यङ्लुपि वनीवञ्चीति । ऊदित्त्वात् क्त्वाया वेट्, वक्त्वा; इटि "ऋत्तृष–" ४।३।२४। इति क्त्वो वा कित्त्वे वचित्वा वञ्चित्वा । वेट्त्वात् क्तयोर्नेट् इतीडभावे वक्तः वक्तवान् । वञ्चित इति तु **वञ्चिण् प्रलम्भने** इत्यस्य । घञि "न वञ्चेर्गतौ" ४।१।११३। इति कत्वाभावे "वञ्चं वञ्चन्ति वाणिजाः"; गतेरन्यत्र कत्वे वङ्कं काष्ठम्, "नाम्नि" ३।२।७५। इति दीर्घे अष्टावङ्कः । णौ फलवत्कर्तर्यात्मनेपदे प्राप्ते "चल्याहारार्थेङ्–" ३।३।१०८। इति परस्मैपदं भवति, अहिं वञ्चयति, गमयतीत्यर्थः । णिगन्तात्तु प्रलम्भने वर्तमानादफलवत्कर्तर्यपि "प्रलम्भे गृधि-वञ्चेः" ३।३।८९। इत्यात्मनेपदम्, बालं वञ्चयते । अणिगन्तस्तु प्रलम्भने **वञ्चिण् प्रलम्भने** इति चुरादिरयम्, बालं वञ्चयते । चौरादिकादेव णिचि णिगन्तात् प्रलम्भे इत्यात्मनेपदमित्येके । उणादौ "भृ-शी-शपि–"(उ० २३२) इत्यथे वञ्चथः अध्वा । "ऋज्यजि–" (उ० ३८८) इति किति रे वक्रम्, [5]न्यङ्क्वादित्वात् कत्वम्॥ **चञ्चू** । चञ्चति ।

---

१ सापादानेऽर्थे वा० ॥ २ क्तेऽनिट्त्वात् कत्वम् संपा०१ वा० ॥ ३ °ञ्चनी, "क° वा० ॥
४-५ 'न्यङ्कूद्गमेघादयः' ४।१।११२॥

चक्त्वा चञ्चित्वा । क्तयोः चक्तः चक्तवान् । घञि चङ्कः । अचि चञ्चा तृणपुरुषः । उणादौ "मृदि-कन्दि–" (उ० ४६५) इत्यले चञ्चलः । चाचल इति तु चलेर्यङन्तादचि रूपम् , अत्र लस्यानुनासिकत्वा-भावपक्षे पूर्वस्य म्वभावः, अनुनासिकत्वे तु मौ चञ्चल इत्यपि । "भृ-मृ-तॄ-त्सरि–"(उ० ७१६) इत्युप्रत्यये चञ्चु ॥　　तञ्चू । तञ्चति । तक्त्वा तञ्चित्वा । तक्त. तक्तवान् । उणादौ "ऋज्यर्जि–" (उ० ३८८) इति रे तक्रम् ॥　　त्वञ्चू । त्वञ्चति । त्वक्त्वा त्वञ्चित्वा ॥　　मञ्चू । मञ्चति । अचि मञ्चः । मक्त्वा मञ्चित्वा । क्ते मक्त । मचुङ् धारणोच्छ्राय-पूजनेषु च मञ्चते ॥　　मुञ्चू । मुञ्चति । मुक्त्वा मुञ्चित्वा ॥　　म्रुञ्चू । म्रुञ्चति । म्रुक्त्वा म्रुञ्चित्वा ॥　　म्रुचू । म्रोचति । अद्यतन्याम् "ऋदिच्छ्वि-स्तम्भू-म्रुचू-म्लुचू-ग्रुचू-ग्लुचू-ग्लुञ्चू-ञ्जो वा" ३।४।६५। इत्यङि अम्रुचत्, अम्रोचीत् । म्रुक्त्वा, सेटः क्त्वो "वौ व्यञ्जनादेः–" ४।३।२५। इति वा कित्त्वे म्रुचित्वा म्रोचित्वा ॥

म्लुचू । म्लोचति । अम्लुचत् अम्लोचीत् । म्लुक्त्वा म्लुचित्वा म्लोचित्वा । "मूलविभुजा–" ५।१। १४४। इति निपातनात् के मलिन म्लोचति मलिम्लुच. ॥　　ग्लुञ्चू । ग्लुञ्चति । अग्लुचत् अग्लु-ञ्चीत् । ग्लुक्त्वा ग्लुञ्चित्वा ॥　　षस्च । "षः सो–"२।३।९८। इति षस्य सत्वे "सस्य शषौ" १।३।६१। इति सस्य शत्वे च सश्चति । षोपदेशत्वाद् णौ सनि षत्वे सिषश्चयिषति; सनि षत्वा-पन्ने "णि-स्तोरेवा–"२।३।३७। इति नियमात् षत्वाभावे सिसश्चिषति । यङि सासश्च्यते । यङ्लुपि सासश्चीति सासक्ति; दिवि असासक्, अत्र "ङ्-नः स. त्सोऽश्च" १।३।१८। इति श्चो वर्जनाद् "दन्त्यसकारापदिष्टं कार्यं तदादेशस्य तालव्यस्यापि भवति" इति "सयोगस्यादौ–"२।१।८८। इति शस्य लुकि चस्य कत्वम् ॥

११७ ग्रुचू ११८ ग्लुचू स्तेये । गतावपि केचित् । ग्रोचति । वा अङि अग्रुचत् अग्रोचीत् । ग्रुक्त्वा ग्रुचित्वा ग्रोचित्वा ॥　　ग्लुचू । ग्लोचति । अग्लुचत् अग्लोचीत् । ग्लुक्त्वा ग्लुचित्वा ग्लो-चित्वा । घञि ग्लोचः, लक्ष्यानुरोधात् कत्वाभाव ॥

अथ छान्ता एकादश सेटश्च—

११९ म्लेछ अव्यक्तायां वाचि । "स्वरेभ्य." १।३।३०। इति छस्य द्वित्वे म्लेच्छति । मिम्लेच्छ । अचि म्लेच्छ । यङ्लुपि मेम्लेष्टि; वस्मसो "अनुनासिके च–" ४।१।१०८। इति छस्य शत्वे मेम्लेश्व मेम्लेश्म , निरनुनासिकत्वे तु शत्वाभावे मेम्लेच्छ्वः, दिवि अमेम्लेट् । "क्षुब्ध-विरि-ब्ध–"४।४।७०। इति निपातनात् के म्लिष्टमविस्पष्टम् , म्लेच्छितमन्यत् ॥

१२० लछ १२१ लाछु लक्षणे । छस्य द्वित्वे लच्छति, लक्षयतीत्यर्थ[1], अङ्कयतीति वा ॥ लाछु । उदित्त्वाद् नागमे लाञ्छति, स एवार्थः । क्विपि लान् । यङ्लुपि लालांष्टि; क्विपि "अनु-नासिके च–" ४।१।१०८। इति शत्वे संयोगान्तलोपे लालान् । अनटि लाञ्छनम् ॥

---

१ लक्षयतीत्यर्थ , अङ्कयतीति वा योऽर्थ ॥

**१२२ वाछु इच्छायाम्** । उदित्त्वाद् नागमे वाञ्छति, वाञ्छा, वाञ्छितम् । क्विपि वान् वांशौ वाशः ॥

**१२३ आछु आयामे** । उदित्त्वाद् नेऽन्ते आञ्छति । क्ये आञ्छ्यते । "अनातो नश्चा–" ४।१।६९। इत्यातो वर्जनाद् आत्व-नागमयोरभावे आञ्छ आञ्छतु¹ । क्विपि आन्, स्वान् स्वांशौ स्वाशः । क्ते आञ्छितः ॥

**१२४ ह्रीछ लज्जायाम्** । छस्य द्वित्वे ह्रीच्छति । जिह्रीच्छ । ह्रीच्छा ॥

**१२५ हुर्छा कौटिल्ये** । हूर्छति, "भ्वादेर्नामि–" २।१।६३। इति दीर्घत्वम् । आदित्त्वात् "आदितः" ४।४।७१। इति क्तयोरिडभावे हूर्णः हूर्णवान् । "नवा भावारम्भे" ४।४।७२। इति वेडभावे हूर्छितम् हूर्णमनेन, प्रहूर्छितः प्रहूर्णः । यङ्लुपि "राल्लुक्" ४।१।११०। इति छस्य लुकि "लघोः–" ४।३।४। इति गुणे जोहोर्ति, ईति जोहूर्छीति । क्विपि हूः हुरौ हुरः ॥

**१२६ मुर्छा मोह-समुच्छ्राययोः** । मूर्छति । आदित्त्वात् क्तयोरिडभावे मूर्तः मूर्तवान्, "र-दाद-मूर्छ–" ४।२।६९। इति वर्जनात् क्तयोस्तस्य न नत्वम् । क्तेऽनिट्त्वात् "क्तेटो गुरोः–" ५।३।१०६। इत्यप्रत्ययाभावे क्तौ मूर्तिः । मूर्छेति तु भिदादित्वादङि¹ । तारकादित्वात् इते मूर्छितः²³ । "नवा भावारम्भे" ४।४।७२। इति वेडभावे मूर्छितम् मूर्तमनेन, प्रमूर्तः प्रमूर्छितः ॥

**१२७ स्फुर्छा १२८ स्मुर्छा विस्मृतौ** । स्फूर्छति । स्फूर्णः । स्फूर्छितम्, स्फूर्णमनेन । क्तौ स्फूर्तिः ॥ **स्मुर्छा** । स्मूर्छति । स्मूर्णः स्मूर्णवान् । स्मूर्छितम् स्मूर्णमनेन स्मूर्छा ॥

**१२९ युछ प्रमादे** । छस्य द्वित्वे युच्छति । "श्यशवः" २।१।११६। इत्यतुरन्तादेशे युच्छन्ती । क्विपि युट् ॥ अत्र 'उछु उञ्छे, उछै विवासे' इति **केचित्** पठन्ति, तदयुक्तम्, तुदादिपठिताभ्यामेवामूभ्यामभिमतरूपसिद्धेः ॥

**अथ जान्ताश्चतुश्चत्वारिंशत् त्यज-पञ्जवर्जाः सेटश्च—**

**१३० धृज १३१ धृजु १३२ ध्वज १३३ ध्वजु १३४ ध्रज १३५ ध्रजु १३६ वज १३७ व्रज १३८ षस्ज गतौ** । धर्जति । दधर्ज । यङि "ऋमता रीः" ४।१।५५। दरीधृज्यते । इकारोपान्त्योऽयमिति **केचित्**, ध्रेजति ॥ **धृजु** । उदित्त्वाद् नागमे धृञ्जति । दधृञ्ज । दरीधृञ्ज्यते ॥ **ध्वज** । ध्वजति । "व्यञ्जनादेर्वोपान्त्यस्यातः" ४।३।४७। इति वा वृद्धौ अध्वाजीत् अध्वजीत् । अचि ध्वज ॥ **ध्वजु** । उदित्त्वाद् नागमे ध्वञ्जति । दध्वञ्ज । यङि दाध्वञ्ज्यते ॥ **ध्रज** । ध्रजति । दध्राज । अध्राजीत् अध्रजीत् ॥ **ध्रजु** । उदित्त्वाद् नागमे ध्रञ्जति । दध्रञ्ज । यङि दाध्रञ्ज्यते ॥ **वज** । वजति । अवाजीत् अवजीत् । "अनादेशादेः–" ४।१।२४। इत्येत्वस्य "न शस-दद–" ४।१।३०। इति प्रतिषेधात् ववजतु ववजुः । घञि वाजो वेग-पक्षौ,

१ "भिदादयः" ५।३।१०८॥ २ "तदस्य सञ्जातं तारकादिभ्य इतः" ७।१।१३८॥ ३ मूर्छा सञ्जाता अस्य इति विग्रहः ॥

क्ते सेट्त्वाद् न गत्वम् । उणादौ "भी-वृधि–"(उ० ३८७) इति रे वज्रः ॥ व्रज । व्रजति । "वद-व्रज–" ४।३।४८। इति वृद्धौ अव्राजीत् । यङि वाव्रज्यते । यङ्लुपि वाव्रक्ति वाव्रजीति । घ्यणि परिव्राज्यम्, क्ते सेट्त्वाद् न गत्वम् । णके परिव्राजकः । "दिद्युद्दद्द्–" ५।२।८३। इत्यादि-निपातनात् क्विपि परिव्राट् । "आस्यटि–" ५।३।९७। इति क्यपि व्रज्या प्रव्रज्या परिव्रज्या । "गोचर–" ५।३।१३१। इति निपातनाद् घे व्रजन्ति तस्मिन्निति व्रजः । **वज व्रजण् मार्गणसंस्कार-गत्योः** वाजयति व्राजयति ॥ षस्ज । "षः सो–" २।३।९८। इति षस्य षत्वे "सस्य शषौ" १।३।६१। इति सस्य शत्वे "तृतीयस्तृतीय–"१।३।४९। इत्यासन्नत्वाच्छस्य जे सज्जति । णौ सनि षोपदेशत्वात् "णि-स्तोरेवा–" २।३।३७। इति षत्वे सिषज्जयिषति । "णि-स्तोरेवा–" २।३।३७। इति नियमात् सनि षत्वभूते न षत्वम्, सिसज्जिषति । अचि सज्जः । क्ते सज्जितः । क्वचि-दात्मनेपदमपि दृश्यते—

प्रकृतेर्गुणसम्मूढाः, सज्जन्ते गुणकर्मसु । [भगवद्गीता अ० ३ श्लो० २९]
'सज्जमानमकार्येषु" इति ॥

**१३९ अज क्षेपणे च** । चकाराद्गतौ । अजति । "अघञ्क्यप्–" ४।४।२। इति वींभावे विवाय, संविवाय । "त्रने वा" ४।४।३। वींभावे प्राजिता प्रवेता, अत्रानुस्वारेत्त्वात् नेट् ; प्राजनो दण्डः, प्रवयणो दण्डः । "क्रियाव्यति–"३।३।२३। इति गत्यर्थवर्जनाद् गतौ नात्मनेपदम्, व्यत्यजन्ति ग्रामम्, क्षेपणे त्वात्मनेपदमेव व्यत्यजन्ते । "अघञ्–" ४।४।२। इत्यशिद्विषये एव वींभावे व्यञ्जनादित्वाद् यङपि, वेवीयते । घञादिवर्जनाद् घञादौ वींभावाभावः । घञि समाजश्छात्राणाम्, उदाजः खगानाम् । "समज–" ५।३।९९। इति क्यपि समज्या सभा । "समुदोऽजः–" ५।३।३०। इत्यलि समजः पशु-सङ्घः, उदजः पशुप्रेरणम् । अचि अजः अजा । "ललाट-वात–" ५।१।१२५। इति खशि वातमजन्ति वातमजा मृगाः । "गोचर-सञ्चर–" ५।३।१३१। इति निपातनाद् घे व्यजः । उणादौ "प्या-धा–" (उ० २५८) इति ने वेनः प्राज्ञः । "यम्यजि–"(उ० २८८) इत्युने वयुनश्चन्द्रः । "विपिना-ऽजिना–" (उ० २८४) इति निपातनादिने अजिनम् । "ऋज्यजि–" (उ० ३८८) इति किति रे वीरः । स्थ-विरादिनिपातनादिरे अजिरम् । "मी-ज्यजि–" (उ० ४३९) इति सरे वेसरः । "पादाचात्यजिभ्याम्" (उ० ६२०) इति णिदिः आजिः, पदाजिः पत्तिः, "पदः पादस्याऽऽज्यातिगोपहते" ३।२।९५। इति पादस्य पदादेश आजीति निर्देशाच्च व्यादेशाभावः । "अजि-स्था–" (उ० ७६८) इति णौ वेणुः । "अञ्ज्यजि–" (उ० ९६६) इत्यसि गादेशे च अगः क्षेमम् ॥

**१४० कुजू १४१ खुजू स्तेये** । कोजति, खोजति । ऊदित्त्वात् क्त्वायां वेटौ, कुक्त्वा, खुक्त्वा; सेटि क्त्वि "वौ व्यञ्जना–"४।३।२५। इति क्त्वो वा कित्त्वे कुजित्वा कोजित्वा, खुजित्वा खोजित्वा ॥

---

१ "स्थविर-पिठिर-स्फिरा-ऽजिरादय" (उ०४१७) इति सूत्रम् ॥

१४२ अर्ज १४३ सर्ज अर्जने । अर्जति । "अनातो नश्चान्त–" ४।१।६९। इति पूर्वस्यान्ते नागमे च आनर्ज । "अयि र" ४।१।६। इति रस्य द्वित्वाभावे अर्जिजिषति । उणादौ "यम्यजि–" (उ० २८८) इत्युने अर्जुन । "अर्जेर्ऋज् च" (उ० ७२२) ऋजु । अर्जण् प्रतियत्ने अर्जयति ॥ सर्ज । सर्जति । ससर्ज । णके सर्जिका । उणादौ "कृषि-चमि–" (उ० ८२९) इत्यूः, सर्जूः क्षारः ॥

१४४ कर्ज व्यथने । कर्जति । चकर्ज ॥

१४५ खर्ज मार्जने च । चकाराद् व्यथने । खर्जति । चखर्ज । उणादौ "मी-मसि–"(उ० ४२७) इत्यूरे खर्जूर । "कृषि-चमि–" (उ० ८२९) इत्यू, खर्जू ॥

१४६ खज मन्थे । मन्थो विलोडनम् । खजति । चखाज चखजतु चखजुः, आदेशादित्वाद् "अनादेशादे –" ४।१।२४। इति नैत्वम् । यङि चाखज्यते । यङ्लुपि चाखजीति । क्ते खजितम् । क्ते सेट्त्वाद् घ्यणि घञि च गत्वाभावे खाज्यम् खाजः । अचि खज. । उणादौ "शलि-चलि–" (उ० ३४) इत्याके खजन्त्यनेनेति खजाको मन्थ, खजाका दर्वी ॥

१४७ खजु गतिवैकल्ये । गतेर्वैकल्यं विकृतत्वम् । उदित्त्वाद् नागमे खञ्जति । चखञ्ज । अचि खञ्ज । नन्द्यादित्वादने खञ्जन । उणादौ "खञ्जेरीटः" (उ० १५२) खञ्जरीट. ॥

१४८ एजृ कम्पने । एजति । "गुरुनाम्यादेः–" ३।४।४८। इति परोक्षाया आमादेशे एजाञ्चकार । ऋदित्त्वाद् "उपान्त्यस्यासमान–" ४।२।३५। इति ह्रस्वाभावे मा भवानेजिजत् । "एजे" ५।१।११८। खश्, अङ्गमेजय । एजृङ् दीप्तौ एजते ॥

१४९ ट्वोस्फूर्जा वज्रनिर्घोषे । स्फूर्जति । पुस्फूर्ज । यङि पोस्फूर्ज्यते । यङ्लुपि पोस्फूर्जीति; दिवि "रात्स" २।१।९०। इति नियमात् संयोगान्तलुगभावे अपोस्फूर्क् । ट्वित्त्वात् "ट्वितोऽथुः" ५।३।८२। स्फूर्जथुः । ओदित्त्वात् क्तयोस्तस्य नत्वे आदित्त्वात् चेडभावे स्फूर्णः स्फूर्णवान् । "नवा भावाऽऽरम्भे" ४।४।७२। इति वेडभावे स्फूर्णम् स्फूर्जितमनेन, प्रस्फूर्णः प्रस्फूर्जित. । "भ्वादेर्नामिनो–" २।१।६३। इति दीर्घे सिद्धे दीर्घोच्चारणं "भ्वादे –" २।१।६३। इति दीर्घत्वस्यानित्यत्वज्ञापनार्थम्, तेन कुर्दते कुर्दनः इत्यपि सिद्धम् ॥

१५० क्षीज १५१ कूज १५२ गुज १५३ गुजु अव्यक्ते शब्दे । क्षीजति । चिक्षीज ॥ कूज । कूजति । चुकूज । क्ते कूजितम् । क्ते सेट्त्वाद् न घञि गत्वम्, कूजः ॥ गुज । गोजति । जुगोज ॥ गुजु । उदित्त्वाद् नागमे गुञ्जति । जुगुञ्ज । गुञ्जितम् । गुञ्जा ॥

१५४ लज १५५ लजु १५६ तर्ज भर्त्सने । लजति । ललाज ॥ लजु । उदित्त्वाद् नागमे लञ्जति । ललञ्ज । लजुण् भासार्थः लञ्जयति ॥ तर्ज । तर्जति । ततर्ज । तर्जिण् सन्तर्जने तर्जयते ॥

---

१ "क्तेऽनिटश्चजोः कगौ घिति" ४।१।१११। इत्यत्र क्ते परे अनिट्धातोर्गत्वविधानात् ॥ २ "नन्द्यादिभ्योऽन." ५।१।५२॥ ३ "सूयत्याद्योदितः"४।२।७०। इत्यनेन ॥ ४ "आदित"४।४।७१। इति सूत्रेण इडभावे "र-पृवर्णान्नो ण–"२।३।६३। इति णत्वे च ॥

**१५७ लाज १५८ लाजु भर्जने च** । चकाराद् भर्त्सने । लाजति । क्ते सेट्त्वाद् गत्वाभावे घञि लाज्यन्ते इति लाजाः ॥ **लाजु** । उदित्त्वाद् नागमे लाञ्जति ॥

**१५९ जज १६० जजु युद्धे** । जजति ॥ **जजु** । उदित्त्वाद् नागमे जञ्जति । यङ्लुपि जाजक्ति जाजञ्जीति ॥

**१६१ तुज हिंसायाम्** । तोजति । तुतोज । "वौ व्यञ्जना–" ४।३।२५। इति क्त्वा-सनोर्वा कित्त्वे तुजित्वा तोजित्वा, तुतुजिषति तुतोजिषति ॥

**१६२ तुजु वलने च** । चकाराद् हिंसायाम् । पालनेऽपीत्यन्ये । वलनं प्राणनम् । उदित्त्वाद् नागमे तुञ्जति । तुतुञ्ज । क्ते तुञ्जिता भूः । क्ते सेट्त्वात् "क्तेटो–' ५।३।१०६। इत्यः, तुञ्जा । तुञ्जं इति तु तमेर्डित्युञ्जे । **तुजुण् हिंसाद्यर्थः, भासार्थश्चान्यः**, तुञ्जयति ॥

**१६३ गर्ज १६४ गजु १६५ गृज १६६ गृजु १६७ मुज १६८ मुजु १६९ मृजु १७० मज शब्दे** ॥ **गर्ज** । गर्जति । जगर्ज । क्ते गर्जितम् । "बहुलमेतन्निदर्शनम्" इति वचनात् चुरादित्वे गर्जयति । यल्लक्षम्—

"प्रतिरवपरिपूर्णा गर्जयन्त्यद्रयोऽपि" ॥

**गजु** । उदित्त्वाद् नागमे गञ्जति । जगञ्ज । अचि गञ्जा ॥ **गृज** । गर्जति । जगृजुः । यङि जरीगृज्यते । यङ्लुपि जरिगर्क्ति जर्गर्क्ति । क्ते गृजितम् ॥ **गृजु** । उदित्त्वाद् नेऽन्ते गृञ्जति । जगृञ्ज । यङि जरीगृञ्ज्यते । यङ्लुपि जरिगृङ्क्ति जर्गृङ्क्ति । उणादौ "ऋसि-रसि–" (उ० २६९) इत्यने गृञ्जनमभक्ष्यद्रव्यम् ॥ **मुज** । मोजति । मुमोज । "वौ व्यञ्जना–" ४।३।२५। इति क्त्वा-सनोर्वा कित्त्वे मुजित्वा मोजित्वा, मुमुजिषति मुमोजिषति ॥ **मुजु** । उदित्त्वाद् ने मुञ्जति । मुमुञ्ज । अचि मुञ्जः ॥ **मृजु** । उदित्त्वाद् ने मृञ्जति ॥ **मज** । मजति ॥

**१७१ गज मदने च** । चकारात् शब्दे । मदनं मदोत्पत्तिः । गजति । जगाज । अचि गजः । **गज मार्जण् शब्दे** गाजयति ॥

**१७२ त्यजं हानौ** । हानिस्त्यागः । त्यजति । तत्याज । अनुस्वारेत्त्वाद् नेट्, अत्याक्षीत्[२] । त्यक्ता । यङि तात्यज्यते । यङ्लुपि तात्यजीति तात्यक्ति । घ्यणि "त्यज–" ४।१।११८। इति गत्वप्रतिषेधात् त्याज्यम् । "युज-भुज–" ५।२।५०। इति घिनणि त्यागी । घञि त्यागः ॥

**१७३ षञ्जं सङ्गे** । "षः सो–" २।३।९८। इति सत्वे "दंश-सञ्जः शवि" ४।२।४९। इति नलोपे सजति । "व्यञ्जनानामनिटि" ४।३।४५। इति वृद्धौ असाङ्क्षीत् । संयोगान्तत्वात् "इन्ध्यसयोगा–"

---

१ तमूच् काङ्क्षायाम् इत्यस्माद्धातो "कमि-तमि-शमिभ्यो डित्" (उ० १०७) इति डित् उञ्ज ॥ "व्यञ्जनानामनिटि" ४।३।४५। "सः सिजस्तेर्दि-स्योः" ४।३।६५। "अघोषे प्रथमोऽशिटः" १।३।५०। २ अत्र "च-जः क-गम्–"२।१।८६। इति वृद्धौ ईत्त्वे प्रथमत्वे कत्वे च कृते "नाम्यन्तस्था-कवर्गात्–" २।३।१५। इति सस्य षत्वे "क-षयोर्योगे क्ष" इति वचनात् क्षत्व च ॥

४।३।२१। इति परोक्षाया कित्त्वाभावे[1] ससञ्जतुः ससञ्जुः। "स्था-सेनि–" २।३।४०। इत्युपसर्गात् षत्वे व्यतिषजति अभिषजति। अभिषिषङ्क्षति। षोपदेशत्वात् णौ सनि "सञ्जेर्वा" २।३।३८। इति षत्वे सिषञ्जयिषति, पक्षे सिसञ्जयिषति। यङि सासज्यते। यङ्लुपि सासञ्जीति सासङ्क्ति। अनुस्वारेत्त्वाद् नेट्, सङ्क्ता, सङ्क्तुम्। क्ते प्रसक्तम्। क्तेऽनिट्त्वाद् घ्यणि गत्वे प्रसङ्ग्यं। घञि उत्सङ्गोऽङ्कः। "घञ्युपसर्गस्य–" ३।२।८६। इति दीर्घे प्रासङ्गो युगम्, निषङ्गस्तूणा। "ज-नशो नि–" ४।२।२३। इति क्त्वो वा कित्त्वे सक्त्वा सङ्क्त्वा। यादेः क्त्वो नित्यं कित्त्वे आसज्य प्रसज्य। उणादौ "वी-सञ्ज्यसिभ्यस्थिक्" (उ० ६६९) सक्थि ॥

अथ टान्ता अष्टात्रिंशत् सेटश्च—

**१७४ कटे वर्षा-ऽऽवरणयोः।** वृष्टावावरणे चार्थे। कटति। चकटतुः चकटुः, आदेशादित्वाद् "अनादेशादेः–" ४।१।२४। इत्येत्वाभावोऽत्र। "व्यञ्जनादेर्वोपान्त्यस्या–" ४।३।४७। इति वा-प्राप्ताया वृद्धेरेदित्त्वात् "न श्वि-जागृ–" ४।३।४९। इति प्रतिषेधे अकटीत्। अचि कटति—वर्षति—मदजलं स्रवति कटः करिगण्डः, कटति—आवृणोति कटो वीरणादिमयः, नास्य कटोऽस्ति निकटः समीप इत्यर्थः। घञि काटः। उणादौ "दॄ-कॄ-नॄ–" (उ० २७) इत्यके कटकः। "कॄ-कडि–" (उ० ३२१) इत्यम्बे कटम्बो वादित्रम्। "कॄ-शॄ-पॄ-पूग्–" (उ० ४१८) इति ईरे कटीरं कटी। "कॄ-गॄ-शॄ–" (उ० ४४१) इति वरटि कट्वरो व्यालाश्वः, कट्वरी दधिविकारः। "पदि-पठि–" (उ० ६०७) इति इः, कटिः। "भृ-मृ-तॄ–" (उ० ७१६) इत्युः, कटुः ॥

**१७५ शट रुजा-विशरण-गत्य-ऽवशातनेषु।** चतुर्ष्वर्थेषु। शटति। शशाट। अचि शटः। ण्यन्तादचि शाटी। णके शाटकः। घञि शाटः। तालव्यादिः ॥

**१७६ वट वेष्टने।** वटति रज्जुम्। "अनादेशादेः–" ४।१।२४। इत्येत्वस्य "न शस-दद–" ४।१।३०। इति प्रतिषेधे ववटतुः ववटुः। अचि वटः। "बहुलम्" ५।१।२। इत्यकटि वट्यते—वेष्ट्यते इति वटकम्। ण्यन्तादचि वाटः वाटी वाटं च वृतिः[2]। उणादौ "पदि-पठि–" (उ० ६०७) इति इः, वटिः। "भृ-मृ-तॄ-त्सरि–" (उ० ७१६) इत्युः, वटुः। परिभाषणे घटादित्वाद् णौ वटयति। **पट वटण् ग्रन्थे,** अदन्तः, वटयति ॥

**१७७ किट १७८ खिट उत्त्रासे।** उत्त्रासो भयोद्गतिः उत्त्रासनं च। केटति। चिकेट। "ना-म्युपान्त्य–" ५।१।५४। इति के किटः, किटी ॥ **खिट।** खेटति। चिखेट। खिट्यते—उत्त्रा-

---

१ ननु "**तत्र क्वसु-कानौ तद्वत्**" ५।२।२। इत्यत्र क्वसु-कानयोः परोक्षावद्भावे "**इन्ध्यसंयोगात् परोक्षा किद्वत्**" ४।३।२१। इति संयोगान्तधातूनां कित्त्वाभावे कथं सेजिवान् बभ्रशानः इत्यादौ न लुक्? इति चेत्, क्वसु-कानयोः परोक्षावद्भावादेव कित्त्वे सिद्धे कित्करणं संयोगान्तधात्वर्थम्, तेन संयोगान्तात् परोक्षाया कित्त्वनिषेधेऽपि अनयोः कित्त्वात् न लुगिति ॥ २ "ण्यन्तस्य त्वस्य अद्यतन्यामेव प्रयोगो दृश्यते तेन णौ ङे प्राचीकटत्" इति **क्रियारत्नसमुच्चये** ॥

स्यतेऽनेनेति "व्यञ्जनाद्–" ५।३।१३२। घञि यावादित्वात् के खेटकः, आखेटकः। काभावे खेटो ग्रामोऽधमश्च ॥

**१७९ शिट १८० षिट अनादरे**। एतौ तालव्य-मूर्धन्यादी। शेटति। शिशेट॥ **षिट**। "षः सो–" २।३।९८। इति सत्वे सेटति। षोपदेशत्वाद् षत्वे सिषेट॥

**१८१ जट १८२ झट सङ्घाते**। जटति। जजाट। जट्यते–संहन्यते "स्थादिभ्यः–" ५।३।८२। इति के जटा। जटा अस्य सन्तीति "काला-जटा–" ७।२।२३। इति लेलौ, जटालः जटिलो जटावान्। अभ्रादित्वा[1]दः जटः। स्थादित्वात्[2] के जटः॥ **झट**। झटति। उज्झटति। अचि झटः, झटा। घञि झाटः॥

**१८३ पिट शब्दे च**। चकारात् सङ्घाते। पेटति। "तिक्कृतौ–" ५।१।७१। इति के स्वार्थे के च पिटकः। "घञ्युपसर्गस्य–" ३।२।८६। इति बाहुलकाद् दीर्घे पिटाकः। लिहादित्वा[3]दचि पेटा। उणादौ "छिदि-भिदि–" (उ० ३०) इति वा कित्यके पिटकः क्षुद्रस्फोटः, पेटकं चक्रम्। **केचित्** 'पेडा' इति सिद्ध्यर्थं डान्तमेनं पठन्ति॥

**१८४ भट भृतौ**। भृतिर्वेतनं भरणं च। भटति। बभाट। परिभाषणे घटादित्वात् णौ भटयति। अचि भटः। णके भाटकम्। उणादौ "वन्धि-वहि–" (उ० ४५९) इति इत्रे भटित्रम्। "कल्यनि–" (उ० ४८१) इति इले भटिलः। "कमि-वमि–" (उ० ६१८) इति णिदिः, भाटिः सुरतमूल्यम्॥

**१८५ तट उच्छ्राये**। तटति। तताट। अचि तटः। णके ताटकः। उणादौ "शलि-बलि–"(उ० ३४) इत्याके तटाकम्॥

**१८६ खट काङ्क्षे**। काङ्क्षाऽस्यास्तीत्यभ्रादित्वादः काङ्क्षः, काङ्क्षाविशिष्टो धात्वर्थः। खटति। चखाट। अचि खटस्तृणम्। †गौरादित्वात्[4] ङ्याम् खटी। लम्वी खटी† खटिका। उणादौ "लटि-खटि–" (उ० ५०५) इति वे खट्वा॥

**१८७ णट नृतौ**। नतावित्यन्ये। हिंसायामप्येके। नटति। प्रणटति, णोपदेशत्वाद् "अदुरुपसर्गा–" २।३।७७। इति णत्वम्। नाय णोपदेश इत्येके, प्रनटयति प्रनाटयति। नेटतुः नेटुः। अचि नटः। णौ नतौ घटादित्वाद् ह्रस्वे नटयति शाखाम्, नृतौ[6] हिंसाया च घटादित्वाभावे न ह्रस्वः, नटं नाटयति, प्रणाटयति, चौरस्यो[7]न्नाटयति, "जास-नाट–" ।२।२।१४। इति कर्मणो वा व्याप्यत्वम्। **नटण् अवस्यन्दने** नाटयति नाटकम्॥

**१८८ हट दीप्तौ**। हटति। जहाट। णके हाटकम्॥

**१८९ षट अवयवे**। "षः सो–" ।२।३।९८। इति सत्वे सटति। ससाट। अचि सटा। षोपदे-

१ "अभ्रादिभ्यः" ७।२।४६॥ २ "स्थादिभ्यः कः" ५।३।८२॥ ३ "लिहादिभ्यः" ५।१।५०॥ ४ °त्वाद् ङी, ख° प्र० मु०॥ ५ † † एतन्मध्यगत. पाठ· स१ स२ संपा१ वा० तपा० नास्ति॥ ६ नर्त्तयतीत्यर्थ॥ ७ चौरस्यो° प्र० मु०॥

शत्वाद् णौ सनि "णि-स्तोरेवा–" २।३।३७। इति षत्वे सिषाटयिषति ॥

**१९० लुट विलोटने** । विलोडने इत्यन्ये । लोटति । लुलोट । **लुटच् विलोटने** लुट्यति । **लुटण् भासार्थः** लोटयति ॥

**१९१ चिट प्रैष्ये** । प्रैष्यं दासत्वम् । चेटति । चिचेट । णके चेटको बालो दासश्च । उणादौ "किलि-पिलि–" (उ० ६०८) इति इः, चेटिः ॥

**१९२ विट शब्दे** । आक्रोशे इत्यन्ये । वेटति । "नाम्युपान्त्य–" ५।१।५४। इति के विटः । णके वेटकम् ॥

**१९३ हेट विबाधायाम्** । हेटति । जिहेट । डान्तोऽयमित्येके, हेडति, जिहेड ॥

**१९४ अट १९५ पट १९६ इट १९७ किट १९८ कट १९९ कटु २०० कटै गतौ** ।

अटति । परोक्षायाम् "अस्यादेः–" ४।१।६८। इति पूर्वस्याऽऽत्वे आटतुः आटुः । "अत्यर्त्ति–" ३।४।१०। इति यङि अटाट्यते । "आस्यटि–" ५।३।९७। इति क्यपि अट्या । "वाऽटाट्यात्" ५।३।१०२। इति यङन्तात् ये अटाट्या; पक्षे "शंसि–" ५।३।१०५। इत्य., अटाटा । सनि "स्वरादे–" ४।१।४। इति द्वितीयाशद्वित्वे अटिटिषति । अने अटनः । उणादौ "सदि-वृन्यमि–" (उ० ६८०) इत्यनौ अटनिः । "छवि-छिवि-स्फवि–"(उ० ७०६) इति वौ निपातनात् अटविः ॥ **पट** । पटति । पपाट । अचि पटः । उणादौ "वी-पति-पटिभ्यस्तनः" (उ० २९२) पट्टनम् । "कृ-शृ-पृ-पूग्–" (उ० ४१८) इतीरे पटीरः । "मृदि-कन्दि–"(उ० ४६५) इत्यले पटलम् , ण्यन्तात् पाटलम् । "कटि-पटि–" (उ० ४९३) इत्योले पटोलः । "कृ-पृ-कटि–" (उ० ५८९) इत्यहे पटहः । "भृ-मृ-तृ-त्सरि–" (उ० ७१६) इत्युः, पटुः । **पटण् भासार्थः** पाटयति । **पट वटण् ग्रन्थे,** अदन्तः, पटयति ॥ **इट** । एटति । इयेट ॥ **किट** । केटति । चिकेट । उत्त्रासे पठितोऽप्यर्थभेदात् पुनरुपात्तः ॥ **कट** । कटति । चकाट । "व्यञ्जनादे–" ४।३।४७। इति वा वृद्धौ अकटीत् अकाटीत् ॥ **कटु** । उदित्त्वाद् नागमे कण्टति । [उणादौ] "दृ-कृ-नृ–" (उ० २७) इत्यके कण्टकः ॥ **कटै** । कटति । ऐदित्त्वात् क्तयोर्नेट्, कट्टः कट्टवान् ॥

**२०१ कुटु वैकल्ये** । उदित्त्वाद् ने कुण्टति । चुकुण्ट । अचि कुण्टः । डान्तोऽयमित्येके, कुण्डति, अचि कुण्डः ॥

**२०२ मुट प्रमर्दने** । मोटति । अने आमोटनम् । णौ क्ते आमोटितः । उदिदयमिति **कौशिकः**, मुण्टति । **मुटत् आक्षेप-प्रमर्दनयोः** मुटति । **पुट मुटण् सञ्चूर्णने** मोटयति ॥

**२०३ चुट २०४ चुटु अल्पीभावे** । चोटति । चुचोट । अनटि उच्चोटनम् । **चुट छुट त्रुटत् छेदने** चुटति । **तुट चुट चुटु छुटण् छेदने** चोटयति ॥ **चुटु** । उदित्त्वाद् ने चुण्टति ।

१ चौरादिकोऽप्ययं वर्त्तते, तत्र चुण्टयति ॥

चुचुण्ट । अनटि चुण्टनम् । डान्तोऽयमित्यन्ये, चुण्डति, चुचुण्ड, अचि चुण्डः ॥

२०५ **वटु विभाजने** । विभाजनं विभागीकरणम् । उदित्त्वाद् ने वण्टति । ववण्ट । अचि वण्ट एकचरः सेवकः । घञि वण्टो भागः । **वटुण् विभाजने** वण्टयति ॥

२०६ **रुटु** २०७ **लुटु स्तेये** । उदित्त्वाद् ने रुण्टति । रुरुण्ट । अचि रुण्टः ॥ **लुटु** । उदित्त्वाद् ने लुण्टति । लुलुण्ट । अचि लुण्टः । "वृङ्-भिक्षि–" ५।२।७०। इति टाके लुण्टाकः । क्ते सेट्त्वात् "क्तेटो गुरोः–" ५।३।१०६। इत्य', लुण्टा । **लुण्टण् स्तेये च** लुण्टयति । ठान्तावेतावित्यन्ये ॥

२०८ **स्फट** २०९ **स्फुट्ट विशरणे** । स्फटति वस्त्रम् । पस्फाट । क्ते स्फटितम् । अचि कर्पूरस्फटा । उणादौ "क्री-कल्यलि–" (उ० ३८) इतीके स्फटिकः । उदिदयमिति **केचित्**, तत्र ने स्फण्टति ॥ **स्फुट्ट** । स्फोटति । पुस्फोट । ऋदित्त्वाद् वाऽङि अस्फुटत्, पक्षे अस्फोटीत् । घञि स्फोटः, आस्फोटः, विस्फोटः । **स्फुटत् विकसने** कुटादिः, स्फुटति, अस्फुटीत् । "नाम्युपान्त्य–" ५।१।५४। इति के स्फुटः । **चट स्फुटण् भेदे** स्फोटयति । कथं स्फुटयति ? स्फुटं करोतीति णिचि भविष्यति । "बहुलमेतत्" इति वचनाच्चुराद्यदन्तो वा **स्फुटण्** ज्ञेयः ॥

२१० **लट बाल्ये** । बाल्यं बालक्रिया । लटति । ललाट । घञि लाटः । अचि कुत्सितं लटति कुलटा, लटः, लटकः । णके लाटकः । उणादौ "लटि-खटि–" (उ० ५०५) इति वे लट्वा ॥

२११ **रट** २१२ **रठ च परिभाषणे** । चकारो लटानुकर्षणार्थः, तेन लटेरर्थद्वयं सिद्धम् । रटति । रराट । घञि विरट्यते इति विराटः । रटिता ॥

**अथ ठान्ताः सप्तदश सेटश्च—**

**रठ** । रठति । रराठ ॥

२१३ **पठ व्यक्तायां वाचि** । पठति । पपाठ । णके पाठकः । क्ते पठितम् । "तेर्ग्रहादिभ्यः" ४।४।३३। इतीटि निपठितिः । "नेर्नद-गद–" ५।३।२६। इति वाऽलि निपठः, निपाठः ॥

२१४ **वठ स्थौल्ये** । वठति । ववाठ । "अनादेशादेः–" ४।१।२४। इत्येत्वस्य "न शस-दद–" ४।१।३०। इति प्रतिषेधे ववठतुः ववठुः । उणादौ "ऋच्छि-चटि–" (उ० ३९७) इत्यरे वठरः ॥

२१५ **मठ मद-निवासयोश्च** । चकारात् स्थौल्ये । मठति ।ममाठ । मठन्ति–निवसन्त्यत्रेति "व्यञ्जनाद्–" ५।३।१३२। इति घञि प्राप्ते बाहुलकात् "पुन्नाम्नि घः" ५।३।१३०। मठः । उणादौ "ऋच्छि-चटि–" (उ० ३९७) इत्यरे मठरोऽधमः ॥

२१६ **कठ कृच्छ्रजीवने** । कठति । चकाठ । अचि कठः । उणादौ "स्या-कठि–" (उ०२८२) इतीने कठिनः । "कठि-चकि–" (उ० ४३३) इत्योरे कठोरः । "चटि-कठि–" (उ० ७५२) इत्याकौ कठाकुः कुटुम्बपोषी ॥

२१७ **हठ बलात्कारे** । प्लवन-कीलबन्धनयोरित्यन्ये । हठति । जहाठ । आदेशादित्वात् "अना-

देशादे.—" ४।१।२४। इति नैत्वम्, जहठतु. जहठुः। अचि हठः॥

२१८ उठ २१९ रुठ २२० लुठ उपघाते। ओठति। उवोठ ऊठतुः ऊठुः। "नाम्युपान्त्य—" ५।१।५४। इति के उठ उपघातकः॥　रुठ। रोठति॥　लुठ। लोठति। लुठत् संश्लेषणे लुठति॥

२२१ पिठ हिंसा-सङ्क्लेशयोः। पेठति। उणादौ "मृद्युन्दि—" (उ० ३९९) इति कित्यरे पिठरं भाण्डम्। पिठिरमिति तु पिठेः "स्थविर—" (उ० ४१७) इति निपातनादिरे रूपम्॥

२२२ शठ कैतवे च। चकाराद् हिंसा-सङ्क्लेशयोः। तालव्यादिः। शठति। शशाठ। अचि शठः। शठ श्वठ श्वठुण् संस्कार-गत्योः शाठयति। शठण् सम्यग्भाषणे अदन्तः, शठयति॥

२२३ शुठ गतिप्रतीघाते। तालव्यादि। शोठति। शुशोठ। उदिदयमित्येके, तत्र च ने शुण्ठति। शुठण् आलस्ये शोठयति॥

२२४ कुठु २२५ लुठु आलस्ये च। चकाराद् गतिप्रतीघाते। उदित्त्वाद् ने कुण्ठति। चुकुण्ठ। कर्मणि घञि कुण्ठः। कुठारं[1] इति तु कुठेः सौत्रस्य॥　लुठु। लुण्ठति। लुलुण्ठ। अचि लुण्ठः॥

२२६ शुठु शोषणे। तालव्यादिः। उदित्त्वाद् ने शुण्ठति। शुशुण्ठ। कर्मणि घञि शुण्ठी। शुठुण् शोषणे शुण्ठयति। उणादौ "किलि-पिलि—" (उ० ६०८) इति इः, शुण्ठिर्नागरमेव॥

२२७ अठ २२८ रुठु गतौ। अठति॥　रुठु। उदित्त्वाद् ने रुण्ठति॥ लुठुमप्यन्येऽधीयते। लुण्ठति। लुलुण्ठ॥　केचिदर्थभेदात् पुनर्लुठमपि पठन्ति॥

अथ डान्तास्त्रिंशत् सेटश्च—

२२९ पुडु प्रमर्दने। उदित्त्वाद् ने पुण्डति। पुपुण्ड। णके पुण्डकम्। उणादौ "सृणीका—" (उ० ५०) इति ईके निपातनात् पुण्डरीकम्। "खुर-क्षुर—" (उ० ३९६) इति रे पुण्ड्रः॥

२३० मुडु खण्डने च। चकारात् प्रमर्दने। उदित्त्वाद् ने मुण्डति। मुमुण्ड। मुडुङ् मज्जने मुण्डते॥

२३१ मडु भूषायाम्। उदित्त्वाद् ने मण्डति। ममण्ड। "भूषा-क्रोधार्थ—" ५।२।४२। इत्यने मण्डन[2]। उणादौ "मृ-मन्यञ्जि—" (उ० ५८) इत्यूके मण्डूकः। "तृ-जि—" (उ० २२१) इति ण्य-न्तादन्ते मण्डयन्त आदर्शः, "आमन्ता—" ४।३।८५। इति णेरयादेशः। मडुण् भूषायाम् मण्ड-यति। "णि-वेत्ति—" ५।३।१११। इत्यने मण्डना। वडुङ् मडुङ् वेष्टने मण्डते॥

२३२ गडु वदनैकदेशे। गण्डगतसंहननक्रियायामित्यर्थः। उदित्त्वाद् ने गण्डति। जगण्ड। अचि गण्डः। णके गण्डिका। उणादौ "कृ-शृ-कुटि—" (उ० ६१९) इति वा णिदिः, गण्डिः, णित्त्वव-लाद् वृद्धौ गाण्डि., ङ्याम् गाण्डी। मण्यादित्वाद्[3] वे गाण्डिवम्, गाण्डीवम्। "तृ-जि—" (उ० २२१) इति ण्यन्तादन्ते गण्डयन्तो मेघः॥

---

१ "तुपि-कुठिभ्यां कित्" (उ० ४०८) इति कित् आर॥ २ मण्डनः मु०। मण्डनम् प्र०॥
३ "मण्यादिभ्यः" ७।२।४४। इति सूत्रम्॥

**२३३ शौड्डृ गर्वे** । तालव्यादिः । शौडति । शुशौड । ऋदित्त्वाद् णौ डे "उपान्त्यस्या-" ४।२।३५। इति ह्रस्वाभावे अशुशौडत् । उणादौ "कृ-शृ-पृ-पूग्-" (उ० ४१८) इतीरे शौडीरः ॥

**२३४ यौड्डृ सम्बन्धे** । सम्बन्ध' श्लेषः । यौडति । युयौड । ऋदित्त्वाद् णौ डे "उपान्त्यस्या-" ४।२।३५। इति न ह्रस्व., अयुयौडत् ॥

**२३५ मेड्डृ २३६ म्रेड्डृ २३७ म्लेड्डृ २३८ लोड्डृ २३९ लौड्डृ उन्मादे** । मेडति, म्रेडति, म्लेडति, लोडति, लौडति । ऋदित्त्वाद् ह्रस्वाभावे अमिमेडत्, अमिम्रेडत्, अमिम्लेडत्, अलुलोडत्, अलुलौडत् । शौड्डादयो लोड्डृवर्जाष्टान्ता इत्यन्ये ॥

**२४० रोड्डृ २४१ रौड्डृ २४२ तौड्डृ अनादरे** । रोडति । रुरोड । ऋदित्त्वात् अरुरोडत् ॥

**रौड्डृ** । रौडति । रुरौड । ऋदित्त्वात् अरुरौडत् ॥　　**तौड्डृ** । तौडति । तुतौड । ऋदित्त्वात् अतुतौडत् ॥

**२४३ क्रीड्डृ विहारे** । क्रीडति । चिक्रीड । "क्रीडोऽकूजने" ३।३।३३। इत्यात्मनेपदम्, सङ्क्रीडते, कूजने तु सङ्क्रीडन्ति शकटानि । "अन्वाङ्-परे." ३।३।३४। अनुक्रीडते, आक्रीडते, परिक्रीडते । ऋदित्त्वाद् डे न ह्रस्वः, अचिक्रीडत् । "आङः क्रीड-" ५।२।५१। इति घिनणि आक्रीडनशील आक्रीडी । क्ते क्रीडितम् । क्ते सेट्त्वात् "क्तेटो-" ५।३।१०६। इत्यः, क्रीडा ॥

**२४४ तुड्डृ २४५ तूड्डृ २४६ तोड्डृ[1] तोडने** । तोडनं दारणम् । तोडति । तुतोड । ऋदित्त्वाद् अतुतोडत् । दारणस्य हिंसाविशेषत्वाद् "हन्त्यर्थाश्च" इति चुरादित्वे तोडयति । संयुक्तडान्तोऽयमित्येके तुड्डति । उभयोर्लक्ष्यम्—

"तुड्डत्यंहः सकलमचिरात्तोडयत्यश्रियं च" ॥

**तूड्डृ** । तूडति । तुतूड । ऋदित्त्वात् अतुतूडत् । क्ते सेट्त्वात् "क्तेटो-" ५।३।१०६। इत्यः, तूडा ॥

**२४७ हुड्डृ २४८ हूड्डृ २४९ ह्रूड्डृ २५० हौड्डृ गतौ** । होडति, हूडति, ह्रूडति, हौडति । ऋदित्त्वात् अजुहोडत्, अजुहूडत्, अजुह्रूडत्, अजुहौडत् ॥

**२५१ खोड्डृ प्रतीघाते** । गतावित्यनुवृत्तेर्गतिविषये प्रतीघाते । खोडति । ऋदित्त्वात् अचुखोडत् । अचि खोडः पङ्गुः । लत्वे खोला शिरस्त्रम् ॥

**२५२ विड आक्रोशे** । वेडति । विवेड । [उणादौ] "कुलि-पिलि-" (उ० ४७६) इति कित्याले विडालः ॥

**२५३ अड उद्यमे** । अडति । व्यडति । अचि व्यडः । व्याङ्पूर्वस्य व्याडः । लत्वे व्यालः ॥

**२५४ लड विलासे** । लडति । लत्वे ललति । जिह्वोन्मन्थने घटादित्वाद् णौ ह्रस्वे लडयति, अन्यत्र लाडयति, लत्वे लालयति । नन्द्यादित्वादने लडना ललना । अचि लडः । **लडण् उपसेवा-**

---

१ तोड्डृधा तोरूपाणि तुड्डृधातुतुल्यानीति नाचार्येणोल्लिखितानीति ज्ञेयम् ॥

याम् उपलाडयति। ललिण् ईप्सायाम् लालयते। "घुषेरविशब्दे" ४।४।६८। इति विशब्दप्रतिषेधाण्णिचोऽनित्यत्वे उल्ललते॥

**२५५ कडु मदे।** उदित्त्वाद् ने कण्डति। चकण्ड। **कडुङ् मदे** उदित्त्वाद् ने कण्डते। कडमप्येकेऽत्र पठन्ति, स तु तुदादिपाठेनैव गतार्थ इति नेहाधीत॥

**२५६ कदूड कार्कश्ये।** दोपान्त्योऽयम्। "तवर्गस्य–" १।३।६०। इति दस्य डत्वे कड्डति। चकड्ड। अचि कड्डः कर्कशः। क्ते सेट्त्वात् "क्तेटो–" ५।३।१०६। इत्यः, कड्डा। क्विपि "पदस्य" २।१।८९। इति सयोगान्तलोपे कद् कत्। अन्ये तु डोपान्त्यमेनं मन्यन्ते, तदा सयोगान्तलोपे कड् कट्॥

**२५७ अदूड अभियोगे।** दोपान्त्यः। "तवर्गस्य–" १।३।६०। इति दस्य डत्वे अड्डति। "अनातो–" ४।१।६९। इत्यात्वे ने च आनड्ड। सनि "न ब-द-नम्–"४।१।५। इति दस्य द्वित्वाभावे अड्डिडिषति। क्विपि "पदस्य" २।१।८९। इति सयोगान्तलोपे अद् अत्। अन्ये तु डोपान्त्यमेनं मन्यन्ते, तदा सयोगान्तलोपे अड् अट्; सनि "न ब-द-नम्–" ४।१।५। इति प्रतिषेधाभावात् ड्डि इत्येतस्य द्वित्वे अडिड्डिषति॥

**२५८ चुदूड हावकरणे।** हावो भावसूचनम्। दोपान्त्योऽयम्। "तवर्गस्य–" १।३।६०। इति दस्य डत्वे चुड्डति। चुचुड्ड। अचि चुड्डं भगम्। क्विपि सौ "पदस्य–" २।१।८९। इति सयोगान्तलोपे चुद् चुत्, साधुचुत्। डोपान्त्योऽयमित्यन्ये तत्र संयोगान्तलोपे चुड् चुट्॥

**अथ णान्ता एकान्नविंशतिः सेटश्च—**

**२५९ अण २६० रण २६१ वण २६२ व्रण २६३ बण २६४ भण २६५ भ्रण २६६ मण २६७ धण २६८ ध्वण २६९ ध्रण २७० कण २७१ क्वण २७२ चण शब्दे।** शब्दः शब्दक्रिया। अणति। आण आणतुः। "तिक्कृतौ नाम्नि" ५।१।७१। इत्यकटि अणकः। अचि अणः, कुत्सायां कपि अणकः। उणादौ "कण्यणेर्णित्" (उ० ५६) इत्युके आणुकमक्षिमलम्। "शल्यणेः–" (उ० ५९) इति णिदूकः, आणूकं तदेव। "कण्यणि–" (उ० १६९) इति वा णिड्डः, सण्डः आण्डः। "कृ-शृ-कुटि–" (उ० ६१९) इति वा णिदिः, अणिः आणिर्द्वारकीलिका। "भृ-मृ-तॄ-त्सरि–" (उ० ७१६) इत्युः, अणुः। "अणेर्डोऽन्तश्च" (उ० ८३६) इति णिदूः, आण्डूर्जलभृङ्गारः॥ रण। रणति। रराण रेणतु. रेणुः। गतौ घटादित्वाण्णौ ह्रस्वः, रणयति, अन्यत्र राणयति। "भ्राज-भास–" ४।२।३६। इति णौ ङे वा ह्रस्वत्वे अरराणत् अरीरणत्। अचि रणः। "युवर्ण–"५।३।२८। इत्यलि रण्यते रणः। रणन्त्यस्मिन्निति "व्यञ्जनाद्–" ५।३।१३२। घञित्यस्यापवादे बाहुलकात् "पुन्नाम्नि–" ५।३।१३०। इति घे रणः। "चालेशब्दार्थात्–" ५।२।४३। इत्यने

---

१ चलश° मंपा१॥

रणनशीलो रणनः ॥　वण । वणति । "अनादेशादेः—" ४।१।२४। इति एत्वस्य "न शस-दद-" ४।१।३०। इति वादित्वात् प्रतिषेधे ववणतुः ववणुः । यङि वंवण्यते । यङ्लुपि वंवणीति वंवण्ति । वनि "वन्याङ्—" ४।२।६५। इति आत्वे प्रवावा । विचि प्रवण् । क्विपि "अहन्पञ्चमस्य—"[1] ४।१।१०७। इति दीर्घत्वे प्रवाण् । उत्पूर्वादचि पृषोदरादित्वाद् दो लत्वे उल्वणम्[2] । क्तौ "अहन्पञ्च-मस्य—" ४।१।१०७। इति दीर्घत्वे तस्य टत्वे वाण्टिः । उणादौ "कमि-वमि—" (उ० ६१८) इति णिद् इः, वाणिर्वाक्, ङ्याम् वाणी ॥　व्रण । व्रणति । अचि व्रणः । व्रणण् गात्रविचूर्णने अद-न्तः, व्रणयति ॥　वेण । वेणति । "अनादेशादेः—" ४।१।२४। इति एत्वे वेणतुः वेणुः, पवर्गतृ-तीयादित्वेन "न शस-दद—" ४।१।३०। इति प्रतिषेधाभावः । णौ—अचि वाणः । "व्यञ्जनाद् —" ५।३।१३२। घञि वणन्त्यस्मिन् पुङ्खा इति वाणः ॥　भण । भणति । णौ—अचि भाणः प्रबन्धविशेषः ॥

भ्रण । भ्रणति । बभ्राण ॥　मण । मणति । ममाण मेणतुः मेणुः । उणादौ "मणि-व-सेर्णित्" (उ० ५१६) इति अवे माणवः शिष्यः । "पदि-पठि-पचि—"(उ० ६०७) इति इः, मणिः । "कुशिक—"(उ० ४५) इति इके मणिको[3] महाकुम्भः ॥　धण । धणति । दधाण ॥　ध्वण । ध्वणति । दध्वाण ॥　ध्रण । ध्रणति । दध्राण ॥　कण । कणति । चकाण । गतौ घटा-दित्वाण्णौ ह्रस्वत्वे कणयति, अन्यत्र काणयति । अचि कणः, कणिका । घञि काणः । उणादौ "स्य-मि-कषि—" (उ० ४६) इति ईके कणीकः पटवासः । कणीका भिन्नतण्डुलावयवः । "कण्यणेर्णित्" (उ० ५६) इति उके काणुकः काकः, काणुकम्—अक्षिमलम् । "कणि-भल्लेर्दीर्घश्च वा" (उ० ६०) इति ऊके कणूको धान्यस्तोकः, काणूकः पक्षी, काणूकम्—अक्षिमलं तमश्च । "वनि-कणि—" (उ० १६२) इति ठे कण्ठः । "कण्यणि—" (उ० १६९) इति वा णिति डे काण्डः शरः, कण्डं भूषणम् । "लटि-खटि—" (उ० ५०५) इति वे कण्वं पापम्, कण्वो मेधावी । "मृ-श्वि—" (उ० ६२७) इति ईचौ कणीचिः शङ्खः शकटं च ॥　क्वण । क्वणति । चक्वाण । "नवा क्वण—" ५।३।४८। इति वाऽलि क्वणः क्वाणः । "नेर्नद—" ५।३।२६। इति वाऽलि निक्वणः निक्वाणः । "वैणे[4] क्वणः" ५।३।२७। इति सोपसर्गाद् वाऽलि प्रक्वणः प्रक्वाणो वीणायाः । उणादौ "सृणीका—" (उ० ५०) इति निपातनाद् यङन्तादीके कङ्कणीको घण्टाजालम्, तथा किमः[5] परादीके किङ्किणीका घण्टिका ॥　चण । चणति । चचाण । हिंसा-दान-गतिषु घटादित्वाद् णौ ह्रस्वत्वे चणयति, अन्यत्र चाणयति । उणादौ "दृ-कृ-नृ—" (उ० २७) इति अके चणकः । "महि-कणि—" (उ० ४२८) इति णिति ऊरे चाणूरो विष्णुहतो मल्लः ॥

---

१ °पञ्चमेति दीर्घे प्र° संपा १ ॥ २ उल्वणः । क्तौ° संपा१ ॥ ३ "कुशिक-हृदिक-मक्षिका-इति-क-पिपीलिकादयः" (उ० ४५) इत्यत्र आदिग्रहणाद् गन्दिक-भुरिक-भुलिकादीनामिव अयमपि ॥ ४ वीणाया भवो वैण, तस्मिन्नर्थे वर्तमानादुपसर्गपूर्वात् क्वणेर्भावाकर्त्रोरल् वा स्यात् । प्रक्वण प्रक्वाणो वीणाया । कथं क्वण क्वाणो वीणाया ? "नवा क्वण—"५।३।४८। इत्यादिना सामान्येन विधानाद् वैणेऽपि भवति । ५ "किमः परात् कणेः किण् च" (उ० ५०)

इह च शब्दार्थत्वाविशेषेऽपि रणितं नूपुरादौ, मणितं सुरतकूजिते, कणितम् आर्ते, क्वणितं वीणादौ ¹रूढम्। एवमन्यत्रापि, कूजितं विहगादौ, बृंहितं गजे, हेषितं हये, वाशितं पशुषु, गर्जितं मेघादौ,¹ गुञ्जित सिंहादावित्यादिकं लक्ष्यादभ्यूह्यम् ॥

२७३ ओणृ अपनयने। ओणति। "गुरुनाम्यादे–" ३।४।४८। इति परोक्षाया आमादेशे ओणाञ्चकार। ऋदित्त्वाद् णौ डे "उपान्त्यस्या–" ४।२।३५। इति ह्रस्वाभावे मा भवान् ओणिणत्। ननु नित्यत्वादन्तरङ्गत्वाच्च द्वित्वे कृते उपान्त्याभावादेव ह्रस्वो न प्राप्नोति किमृदित्करणेन? सत्यम्, इदमेव ऋदित्करणं ज्ञापकम्–नित्यमन्तरङ्ग च द्वित्वमुपान्त्यह्रस्वो बाधते, तेनान्यत्रापि पूर्वं ह्रस्व. पश्चाद् द्वित्वम्, मा भवानटिटत्, मा भवानशिशत्। वनि "वन्याङ् पञ्चमस्य" ४।२।६५। इति आत्वे अवावा, स्त्रिया "ण-स्वरा–" २।४।४। इति ङ्या नस्य रत्वे च अवावरी ॥

२७४ शोणृ वर्ण-गत्योः। तालव्यादिः। शोणति। शुशोण शुशोणतुः शुशोणुः। ऋदित्त्वाद् ह्रस्वाभावे अशुशोणत्। शोणितः शोणितवान्। अचि शोणो वर्ण², स्त्रिया "नवा शोणादे." २।४।३१। इति वा ङी, शोणी शोणा। गतौ "व्यञ्जनाद्–" ५।३।१३२। घञि शोणो नदः। उणादौ "हृ-श्या–" (उ० २१०) इति इते शोणितम् ॥

२७५ श्रोणृ २७६ श्लोणृ सङ्घाते। तालव्यादी। श्रोणति। ऋदित्त्वात् अशुश्रोणत्। अचि गौरादित्त्वाद् ङ्या च श्रोणी। श्रोणिरिति तु श्रृणोतेरौणादिके ³णौ ॥ श्लोणृ। श्लोणति। अशुश्लोणत् ॥

२७७ पैणृ गति-प्रेरण-श्लेषणेषु। पैणति। पिपैण। यङि पेपैण्यते। ऋदित्त्वात् अपिपैणत् ॥

अथ तान्ता दश सेटश्च—

२७८ चितै सञ्ज्ञाने। सञ्ज्ञानं सवित्ति। चेतति। चिचेत। ऐदित्त्वात् क्तयोर्नेट्, चित्त चित्तवान्, चित्तम्। "श्र्वादिभ्य." ५।३।९२। इति क्तौ चित्तिः। "वौ व्यञ्जनादे–" ४।३।२५। इति क्त्वा-सनोरिटि वा किंत्त्वे चितित्वा चेतित्वा, चिचितिषति चिचेतिषति। णौ "साहि-साति–" ५।१।५९। इति शे चेतयः। क्विपि चेतनं चित्। उणादौ "अस्" (उ० ९५२) इति असि चेतः। चितिण् संवेदने चेतयते। चेतन, चेतना ॥

२७९ अत सातत्यगमने। सातत्येन गमन नित्यगति। अतति। आत आततु आतुः। अतिता। सनि अतितिषति। "क्रियाव्यतिहारे–" ३।३।२३। इति गत्यर्थप्रतिषेधाद् नात्मनेपदम्, व्यत्यतति। णिगि आतयति मैत्रम्, अत्र फलवत्कर्तर्यपि "अणिगि प्राणि–" ३।३।१०७। इति परस्मैपदम्; आतयति ग्राम चैत्रमिति सकर्मकत्वविवक्षाया तु चल्यर्थत्वात् "चल्याहारार्थे–" ३।३।१०८। इति

१ ¹ ¹ एतन्मध्यगत पाठः मंपा१ नास्ति ॥ २ शोणृ वर्णे इत्यस्य अचि शोण उज्ज्वलो वर्ण –निर्दोपरत्वर्थ ॥ ३ श्रुंट् श्रवणे इत्यस्मादतोः "का-वा-वी-क्री-श्रि-श्रु-क्षु-ज्वरि-तूरि-चूरि-पूरिभ्यो णि" (उ० ६३४) इति णिः, श्रोणिर्जघनम्। ४ ˚त्यर्थत्वान्नात्म˚ मंपा१ वा०।

परस्मैपदम् ; उभयत्रापि "गति-बोधा–" २।२।५। इत्यणिक्कर्तुः कर्मत्वम्। णौ डे ओणेर्ऋदित्करणज्ञापकात् पूर्वं ह्रस्वे पश्चाद् द्वित्वे मा भवानतितत्। "गत्यर्था–" ५।१।११। इति वा कर्तरि क्ते अतितो ग्रामं चैत्र', पक्षे यथाप्राप्तम्। कर्मणि अतितो ग्रामश्चैत्रेण, कर्माविवक्षायां भावे अतितमनेन। "अद्यर्थाच्चाधारे" ५।१।१२। इदमहेरतितम्। अत्र "क्तयोरसदाधारे" २।२।९१। इत्याधारवर्जनात् कर्तरि षष्ठीप्रतिषेधो न भवति। शतरि अतन्। क्तौ अत्तिः। उणादौ "भीण्-शलि–" (उ० २१) इति के अत्क आत्मा। "प्या-धा-पन्–" (उ० २५८) इति ने अत्नो वायुः। "तप्यणि–" (उ० ५६९) इत्यसे अतसी। "पादाच्चात्यजिभ्याम्" (उ० ६२०) इति णिद् इः, आतिः[2], पैदातिः[3], "पदः पादस्या–" ३।२।९५। इति पदादेशः। "अतेरिथिः" (उ० ६७३) अतिथिः। "सात्मन्नात्मन्–" (उ० ९१६) इति मनि निपातनात् आत्मा॥

**२८० च्युतृ आसेचने।** आसेचनम्–ईषत्सेकः। च्योतति। च्योतिता। ऋदित्त्वाद् "ऋदिच्छ्वि–" ३।४।६५। इति वाऽङि अच्युतत् अच्योतीत्। "वौ व्यञ्जनादेः–" ४।३।२५। इति क्त्वा-सनोरिटि वा कित्त्वे च्योतित्वा च्युतित्वा, चुच्योतिषति चुच्युतिषति। उणादौ "नाम्युपान्त्य–" (उ० ६०९) इति किद् इः, च्युतिः॥

**२८१ चुतृ २८२ श्चुतृ २८३ स्च्युतृ क्षरणे।** क्षरणं स्रवणम्। चोतति। ऋदित्त्वाद् वाऽङि अचुतत् अचोतीत्॥ **श्चुतृ**। सो दन्त्योऽत्र। "सस्य श-षौ" १।३।६१। इति शत्वे श्चोतति। ऋदित्त्वाद् वाऽङि अश्चुतत् अश्चोतीत्॥ **स्च्युतृ**। सो दन्त्य', स्च्युश्च योपान्त्योऽत्र। "सस्य श-षौ" १।३।६१। इति शत्वे श्च्योतति। ऋदित्त्वाद् वाऽङि अश्च्युतत् अश्च्योतीत्। षट् श्च्योतन्तीति "ङ्नः सः–" १।३।१८। इति श्चो वर्जनात् शः त्सो न भवति। श्चो वर्जनादेव च सकारापदिष्टं कार्यं तदादेशस्य तालव्यस्यापि विज्ञायते, तेन घृतं श्च्योततीति क्विप्, घृतश्च्युत्, घृतश्च्युतमाचक्षाण इति णिचि- अन्त्यस्वरादिलुक्, पुनः क्विप्, "य्वो –" ४।४।१२१। इति यलुक्, घृतश्च्, ततः सौ "संयोगस्यादौ–" २।१।८८। इति शलुकि सिद्धं घृतश्। नन्वत्र "न सन्धि–" ७।४।१११। इत्यत्रास्क्लुकीति वर्जनाद् णिलुकः स्थानित्वप्रतिषेधाभावे णिलुक् स्थानी इति पदान्तत्वाभावे सलुग् न प्राप्नोत्येव, यथा सुकुस्सयतेः क्विपि सौ सुकूरिति। सत्यम्। अस्क्लुकीति वर्जनस्य प्रायिकत्वाद् असद्विधौ सलुक्यपि स्थानित्वप्रतिषेधाद् भवत्येव। श्रुतावपि समानमेतत्। आद्यो **द्रमिलानामेव**, द्वितीयः **कौशिकस्यैव**

१ इत्यत्राधा° संपा१ वा०॥ २ अततीति आति पक्षी॥ ३ पादाभ्यामततीति पदातिः पत्ति॥
४ "अत्र "**सस्य शषौ**" १।३।६१। इत्यत्रानु इत्यधिकारे वर्तमाने श्चवर्जनाभावे दन्त्यसकारस्य त्स स्यादिति। ननु तर्हि उपदेशावस्थायामेव तालव्य पठनीय किं दन्त्यपठनेनेति, सत्यम्, दन्त्यं पठन्नेवं ज्ञापयति– "**दन्त्यापदिष्टं कार्यं तालव्यस्यापि भवति परं दन्त्यस्थाननिष्पन्नस्य न सर्वस्य**" तेन भवान् शेते इत्यादौ त्सो न भवति। ननु मधुग् इत्यत्र "**स्वरस्य परे–**" ७।४।११०। इति सूत्रेण णिलोपरूपस्य स्वरादेशस्य स्थानिवत्त्वात् शलोपो न प्राप्नोति, न च वाच्यं "**न सन्धि–**" ७।४।१११। इत्युपतिष्ठते इति, अस्क्लुकीति वचनात्, यथा सुपूर्वात् कुस्मयते सुकूरित्यत्र। न। अस्क्लुकीत्यत्र नञ्निर्देशेन 'नञा निर्दिष्टमनित्यम्' इति न्यायात् स्थानित्वाभाव इति"।

सम्मत.। एवमन्यत्राप्याचार्यभेदेन धातुपाठो द्रष्टव्य.॥

**२८४ जुतृ भासने**। जोतति। ऋदित्त्वाद् वाऽङि अजुतत्, अजोतीत्। "वौ व्यञ्जनादे."—४।३।२५। इति वा कित्त्वे जोतित्वा जुतित्वा. जुजोतिषति जुजुतिषति॥

**२८५ अतु बन्धने**। उदित्त्वाद् ने अन्तति। "अनातो—" ४।१।६९। इत्यात्वे ने च आनन्त। णके अन्तक। अन्ये **अतु इतु बन्धने** इति पेठुः। इन्ताञ्चकार॥

**२८६ कित निवासे**। केतति। अनटि सङ्केतनम् निकेतनम्। घञि सङ्केत.। णके केतकी। धातूनामनेकार्थत्वात् "कित संशय[1]-प्रतीकारे" ३।४।६। इति स्वार्थे सनि विचिकित्सति[2] मे मन., चिकित्सत्यातुरं[3] वैद्यः। निग्रह-विनाशावपि प्रतीकारस्यैव भेदौ[4], परक्षेत्रे चिकित्स्यः[5] पारदारिक., चिकित्स्यानि[6] क्षेत्रे तृणानि॥

**२८७ ऋत घृणा-गति-स्पर्धेषु**। "ऋतेर्डीयः[7]" ३।४।३। इति स्वार्थे डीये ऋतीयते। "अशवि ते वा" ३।४।४। इति वा डीये ऋतीयिता, ऋतीयाञ्चक्रे, पक्षे अर्तिता, आनर्त। "ऋत्तृष—" ४।३।२४। इति सेटः क्त्वो वा कित्त्वे ऋतित्वा अर्तित्वा॥

अथ थान्ताः षट् सेटश्च—

**२८८ कुथु २८९ पुथु २९० लुथु २९१ मथु २९२ मन्थ २९३ मान्थ हिंसा-सङ्क्लेशयोः**। हिंसा प्राण्युपघात., सङ्क्लेशो बाधा। उदित्त्वाद् ने कुन्थति, कुन्थ्यते। क्ते कुन्थितम्। क्त्वि कुन्थित्वा। **कुन्थश् सङ्क्लेशे** कुथ्नाति, कुथ्यते, कुथितम्॥ **पुथु**। उदित्त्वाद् ने पुन्थति, पुन्थ्यते, पुन्थितम्॥ **लुथु** उदित्त्वाद् ने लुन्थति, लुन्थ्यते, लुन्थितम्॥ **मथु**। उदित्त्वाद् ने मन्थति. मन्थ्यते, मन्थितम्॥ **मन्थ**। नोपान्त्याऽयम्। विलोडनेऽयमित्येके। मन्थति। मथ्यते। मथितम्। "ऋत्तृष—" ४।३।२४। इति सेटः क्त्वो वा कित्त्वे मथित्वा, मन्थित्वा। अचि मन्थ। **मन्थश् विलोडने** मथ्नाति मथ्नीत॥ **मान्थ**। मान्थति। माथ्यते॥

अथ दान्ताः षड्विंशतिः स्कन्दवर्जाः सेटश्च—

**२९४ खादृ भक्षणे**। खादति। चखाद। ऋदित्त्वाद् ह्रस्वाभावे अचखादत्। "गति-बोधा-ऽऽहारा—" २।२।५। इति सूत्रेण खादिवर्जनादणिक्कर्तुः कर्मत्वाभावे खादयत्योदनं चैत्रेण मैत्रः, अत्र फलवत्कर्तर्यपि "चल्याहारार्थेङ्—" ३।३।१०८। इति परस्मैपदम्। "निन्द-हिंस—"५।२।६८। इति णके खादनशीलः खादकः॥

---

१ अनवधारणात्मकः प्रत्यय संशय., प्रतीकारो तु स्वहेतोर्निराकरणम्॥ २ संशेते इत्यर्थः॥ ३ प्रतिकरोतीत्यर्थः॥ ४ ननु अन्यैर्निग्रह-विनाशयोरपि सन कथित तत् स्वीयमते कथम् इति शङ्कायामाह—निग्रह-विनाशौ इति॥ ५ निग्राह्य इत्यर्थ.॥ ६ विनाशयितव्यानि, अपनेतव्यानि वेत्यर्थ.॥ ७ ननु ङीय इति अदन्ताकरणेऽपि ऋतीयते इत्यादि सेत्स्यति किमदन्तकरणेन? सत्यम्, ऋतीयते इत्यादीनामदन्तकरणाभावेऽपि सिद्धि परं आर्त्तितीयत् इत्यत्रादन्तताया फलम्, अन्यथा आर्त्तितियत् इति स्यात्। ङकार आत्मनेपदार्थः गुणाभावार्थश्च।

**२९५ वद स्थैर्ये** । ओष्ठ्यादि[1] । **वद व्यक्तायां वाचि** इति तु दन्त्योष्ठ्यादि[1] । वदति । वद्यते । क्ते वदितम् । उणादौ "ऋच्छि-चटि–" (उ० ३९७) इति अरे बदरी बदरम् । पकारादिरयमिति कण्वः, पदति ॥

**२९६ खद हिंसायां च** । चकारात् स्थैर्ये । खदति । अचि भिदादित्वाद् वाऽङि खदा । उणादौ–"मदि-मन्दि–" (उ० ४१२) इति इरे खदिरः ॥

**२९७ गद व्यक्तायां वाचि** । गदति । जगाद । "नेर्ङ्मा-दा–" २।३।७९। इति नेर्णत्वे प्रणिगदति, प्रण्यगदत् । प्रण्यागदत्, "पदेऽन्तरे–" २।३।९३। इत्यत्राऽऽङो वर्जनाद् आङ्व्यवायेऽपि णत्वम् । "यम-मद–" ५।१।३०। इत्युपसर्गाद् ये गद्यम् । सोपसर्गाद् घ्यणि निगाद्यो धर्मः । अचि गदः । भिदादित्वादङि गदा । "अजातेः–" ५।१।१५४। इति णिनि अनुगादी । "नेर्नद–" ५।३।२६। इति वाऽलि निगदः, निगादः । उणादौ "कनि-गदि–" (उ० ८) इति अः स्वरूपद्वित्वं च, गद्गदोऽव्यक्तवाक्, गद्गदमव्यक्तवचनम् । **गदण् गर्जे** अदन्तः, गदयति ॥

**२९८ रद विलेखने** । विलेखनम्–उत्पाटनम् । रदति । रराद । अनटि रदनम् । नन्द्यादित्वादने रदनः । अचि रदः ॥

**२९९ णद ३०० ञिक्ष्विदा अव्यक्ते शब्दे** । शब्दमात्रे इत्यन्ये । "पाठे धात्वादेर्णो नः" २।३।९७। इति नत्वे नदति । "अदुरुपसर्गा–" २।३।७७। इति णत्वे प्रणदति । "नेर्ङ्मा–" २।३।७९। इति नेर्णत्वे प्रणिनदति । अचि नदः । गौरादित्वाद्[2] ङ्या नदी । "कर्तुर्णिन्" ५।१।१५३। इति णिनि "पूर्वपदस्थात्–" २।३।६४। इति णत्वे च खर इव नदति खरणादी, असञ्ज्ञाया तु खरनादी । "नेर्नद–" ५।३।२६। इति वाऽलि निनदः, निनादः । उणादौ "दा-भू-क्षणि–" (उ० ७९३) इति अनुङि नदनुर्मेघः । **नदण् भासार्थः** नादयति, प्रनादयति ॥ **ञिक्ष्विदा** । क्ष्वेदति । चिक्ष्वेद । यङि चेक्ष्विद्यते यङ्लुपि चेक्ष्विदीति चेक्ष्वेत्ति । इटि क्ष्वेदिता, क्ष्वेदितुम् । आदित्त्वात्[3] क्तयोर्नेट् क्ष्विण्णः, क्ष्विण्णवान् । "नवा भावारम्भे" ४।४।७२। इति वेटि क्ष्विण्णम् क्ष्वेदितमनेन । प्रक्ष्विण्णः प्रक्ष्वेदितः, अत्र "न डीङ्-शीङ्–" ४।३।२७। इतीटि कित्त्वाभावाद्गुणः । ञीत्त्वाद् "ज्ञानेच्छा-ऽर्चा–" ५।२।९२। इति सत्यर्थे क्तः, क्ष्विद्यते क्ष्विण्णः । अनुस्वारेदयमित्येके, तन्मते इडभावे क्ष्वेत्ता, क्ष्वेत्तुम् । डान्तोऽयमित्त्येके, क्ष्वेडा ॥

**३०१ अर्द गति-याचनयोः** । अर्दति । "अनातो–" ४।१।६९। इत्यात्वे ने च आनर्द । सनि "अयि रः" ४।१।६। इति रस्य द्वित्वाभावे अर्दिदिषति । ग्रहादित्वाद् णिनि समर्दी । नन्द्यादित्वाद् अने जनार्दनः । "स-नि-वेरर्दः" ४।४।६३। इति क्तयोर्नेट्, समर्णः, न्यर्णः, व्यर्णः । "अविदूरेऽभेः"

१ "ऋवर्णव्यञ्जनाद् घ्यण्" ५।१।१७। इति सूत्रेण ॥ २ "गौरादिभ्यो मुख्याद् ङीः" २।४।१९। ३ "आदितः" ४।४।७१। इति सूत्रेण ॥ ४ अत्र दान्तत्वात् "रदादमूर्च्छ-मदः क्तयोर्दस्य च" ४।२।६९। इति सूत्रेण क्त क्तवतो. तस्य तद्योगे धातोर्दश्च न, "रपृवर्णाद् नो ण–" २।३।६३। इति नस्य ण ।

४।४।६४। अभ्यर्णे शेते। अविदूरादन्यत्र अभ्यर्दितश्चौरः पीडित इत्यर्थः, अत एव याचनस्थाने यातनेत्येके पठन्ति, अर्दितः खेदित इत्यर्थः। क्वथ अर्दिण् हिंसायाम् "युजादेर्नवा" ३।४।१८। इति वा णिचि अर्दयति अर्दते॥

३०२ नर्द ३०३ णर्द ३०४ गर्द शब्दे। नर्दति। नोपदेशत्वाद् णत्वाभावे प्रनर्दति॥ णर्द। "पाठे–" २।३।९७। इति नत्वे नर्दति। णोपदेशत्वाद् णत्वे प्रणर्दति। ग्रहादित्वाद् णिनि न नर्दतीति अनर्दी। "कर्तुर्णिन्" ५।१।१५३। सिंह इव विनर्दति सिंहविनर्दी॥ गर्द। गर्दति। जगर्द। क्ते सेट्त्वात् "क्टेटो–" ५।३।१०६। इत्यः, नर्दा गर्दा। उणादौ "कॄ-गॄ–" (उ० ३२९) इति अभे गर्दभः॥

३०५ तर्द हिंसायाम्। तर्दति। ततर्द। णके वितर्दिका वेदिः। क्ते सेट्त्वाद् अः, तर्दा॥

३०६ कर्द कुत्सिते शब्दे। कर्दति। चकर्द। क्ते सेट्त्वात् कर्दा। उणादौ "स्थ-पृ-प्रथि–" (उ० ३४७) इति अमे कर्दमः॥

३०७ खर्द दशने। दशनमिह दन्दशूककर्तृकं दन्तकर्म स्वभावाच्च धातुः साधनप्रधानप्रयोगसमवायी। खर्दति। चखर्द। अचि घञि च खर्दः। क्ते सेट्त्वात् खर्दा।

पूर्वे तु खर्द दन्दशूके इति पठन्ति, व्याचक्षते च–दन्दशनशीलो दन्दशूक उच्यते, अनेन च तद्विषया क्रिया लक्ष्यते, क्रियार्थत्वाद् धातोः। दन्दशन इति युँ(ल्यु)डन्तनिर्देशेऽपि तद्विषया क्रिया प्रतीयते। किन्तु साधननिर्देशः साधनप्रधानप्रयोगसमवायित्वज्ञापनार्थ इति॥

३०८ अदु बन्धने। उदित्त्वाद् ने अन्दति। "अनातो–" ४।१।६९। इति आत्वे ने च

---

१ सर्वास्वपि प्रतिषु °भ्यर्णे सेने। अवि° इति पाठो दृश्यते॥ २ "३१० खर्द दंदशूके"–शाकटायन धातुपाठ।

"खर्द दन्दशूके। दन्दशूको दंशनशीलः स्वभावभूतगर्हितदंशनक्रियाकर्ता। अनेन तत्समवेता स्वभावभूतगर्हितक्रिया लक्ष्यते धातोः क्रियावचनत्वात्। एवम् अन्यत्रापि द्रव्यनिर्देशे क्रिया लक्ष्यते। दंदशन इत्येतन्नोक्तम्, ताच्छील्यार्थस्य नग्रहो न स्यात्"–मैत्रेयरक्षितरचितधातुप्रदीप पृ० १४–धातु अंक ५९।

"खर्द दन्दशूके। दन्दशूक इति दन्दशूककर्तृका क्रिया अभिधीयते। साधनप्रधानप्रयोगित्वस्थापनार्थं दन्दशूकग्रहणम्–इति संमता-तरङ्गिण्यौ। दन्दशूको गर्हितो दंशनशीलः, इह तु तत्स्था क्रिया, दंश इत्यनुक्तिः ताच्छील्यादिप्रतिपत्त्यर्था इति मैत्रेये प्रतिपादितम्। दन्तशूक इति केशवस्वामी दकारस्य स्थाने तकारमाह"–इत्यादि। माधवीया धातुवृत्ति पृ० ९२ धातुअंक ६०।

"खर्द दन्दशूके। दंशहिंसादिरूपाया दन्दशूकक्रियायाम्–इत्यर्थः"–सिद्धान्तकौमुदी ७–४–७ सूत्र धातु अंक २४।

३ यदन्त तपा०॥ ४ "अति अदि बन्धने। अत्र धनपालः–तान्तं द्रविडाः पठन्ति। आर्यास्तु दन्तम्–इति। उभयमिति मैत्रेय–स्वामि–काश्यप–सम्मताकारादयः"–माधवीया धातुवृत्ति पृ० ९३ धातुअंक ६२। "अत्यादय. (अति–अदि–इदि–चिदि–गाडि–) पञ्चैते न तिङ्विषया इति काश्यपः माधवीया धातुवृत्ति पृ० ९८ धातुअङ्क–६५।

आनन्द । अचि अन्दः । क्ते सेट्त्वात् अन्दा । उणादौ "कृषि-चमि–" (उ० ८२९) इति ऊः, अन्दूर्गजपादशृङ्खलम् ॥

**३०९ इदु परमैश्वर्ये**। परमैश्वर्यं परमेशनक्रिया। उदित्त्वाद् ने इन्दति। "गुरुनाम्यादेः–" ३।४।४८। इत्यामादेशे इन्दाञ्चकार । क्ते सेट्त्वात् इन्दा । अनटि इन्दनम् । उणादौ "भी-वृधि–" (उ० ३८७) इति रे इन्द्रः ॥

**३१० [1]वि(बि)दु अवयवे**। अवयव एकदेशः, अनेन स्वगता क्रिया लक्ष्यते । उदित्त्वाद् ने वि(बि)न्दति । यद्यभिधानमस्ति वि(बि)न्दुरिति दृश्यते, यथा गण्डति गण्ड इति । उणादौ "भृ-मृ-तृ-त्सरि–"(उ० ७१६) इति उः. वि(बि)न्दुः ॥

**३११ णिदु कुत्सायाम्**। "पाठे–" २।३।९७। इति णस्य नत्वे उदित्त्वाद् ने निन्दति । णोपदेशत्वाद् [2]णत्वे प्रणिन्दति। "निंस-निक्ष-निन्दः कृति वा" २।३।८४। इति वा णत्वे प्रणिन्दनम्, प्रनिन्दनम्। "निन्द-हिंस–" ५।२।६८। इति णके निन्दनशीलो निन्दकः । क्ते सेट्त्वात् निन्दा ॥

**३१२ टुनदु समृद्धौ**। उदित्त्वाद् ने नन्दति । नोपदेशत्वाद् न णत्वम्, प्रनन्दति । ननन्द । णौ "नन्द्यादिभ्यो–" ५।१।५२। इत्यने नन्दनः । अचि नन्दतीति नन्दः, आपि नन्दा तिथिः, गौरादित्वाद् ङ्याम् नन्दी नन्द एव । "प्रज्ञादि–" ७।१।१६५। अणि नान्दः, स्त्रियां नान्दी। नन्दोऽस्यास्तीति नन्दी । णके नन्दकः । ट्वित्त्वात् "ट्वितोऽथुः" ५।३।८३। नन्दथुः । उणादौ "रुहि-नन्दि–" (उ० २२०) इत्यन्ते नन्दन्तः सखा, नन्दन्ती सखी । "तॄ-जि–" (उ० २२१) इति णौ अन्ते नन्दयन्तो राजा । "हृषि-पुषि–" (उ० ७९७) इति णौ–इत्नौ नन्दयित्नुः पुत्रः । "यति-न[3]नन्दिभ्यां दीर्घश्च" (उ० ८५६) इति ऋः, न[4]नान्दा ननान्दरौ ॥

**३१३ चदु दीप्त्या-ऽऽह्लादयोः**। आह्लाद आह्लादनम्–आनन्दोत्पादनमित्यर्थः । उदित्त्वाद् ने चन्दति । चचन्द । "रम्यादिभ्यः–" ५।३।१२६। इत्यनटि चन्दति–दीप्यते आह्लादयति चेति चन्दनम् । उणादौ "भी-वृधि–" (उ० ३८७) इति रे चन्द्रः ।"मदि-मन्दि–" (उ० ४१२) इति इरे चन्दिरश्चन्द्रः । छन्द इति तु "छदि-वहिभ्याम्–" (उ० ९५४) इति [5]अस छादयतेः ॥

**३१४ त्रदु चेष्टायाम्**। उदित्त्वाद् ने त्रन्दति । तत्रन्द ॥

**३१५ कदु ३१६ क्रदु ३१७ क्लदु रोदना-ऽऽह्वानयोः**। उदित्त्वाद् ने कन्दति । चकन्द । अचि

---

१ "विदि अवयवे। अवयव इति अवयवक्रिया उच्यते। भ्वादि । विन्दति, विविन्द, विन्दिता इत्यादि। विन्दुः बाहुलकाद् उ–प्रत्यय । अत्र **मैत्रेयः** "विन्दुरिच्छु" इति **सूत्रं** भ्वादि पठन् विन्दुशब्दं व्युदपादयत्। वृत्तौ तु तत्र वेत्तेरेव पाठः। अत्र **सम्मतायाम्**–'भिदि अवयवे'। यद्यभिधानमस्ति 'भिन्दु' इति दृश्यते"। माधवीया धातुवृत्ति पृ०९४ धातुअंक ६४ । २ "**अदुरुपसर्गान्तरो ण-हिनु-मीना-ऽऽनेः**" २।३।७७ इत्यनेन । ३ नञ्पूर्वाद् नन्दते. । ४ अत्र नखादित्वाद् (३।२।१२८) नञोऽत् न भवति ॥ ५ **छदण् संवरणे** इत्यस्मात् अस् धातोश्च छन्द इत्यादेश, छन्दो वेद इच्छा वाग्बन्धविशेषश्च ।

कन्दो मूलम्। उणादौ "ऋच्छि-चटि-" (उ० ३९७) इति अरे कन्दरा। "मृ-मृ-तृ-त्सरि-" (उ० ७१६) इति उ कन्दुः पाकस्थानम्। कन्दुक इति तु "कमि-तिमेर्दोऽन्तश्च" (उ० ५४) इति उके[1] कमेः॥ क्रदु। उदित्त्वाद् ने क्रन्दति। चक्रन्द[2]। "नन्द्यादिभ्यो-" ५।१।५२। इत्यने सङ्क्रन्दनः। घञि आक्रन्दः॥ क्लदु। उदित्त्वाद् ने क्लन्दति। चक्लन्द। कदुङ् क्रदुङ् क्लदुङ् इति घटादावात्मनेपदिनः, कन्दते क्रन्दते क्लन्दते॥

३१८ क्लिदु परिदेवने। परिदेवनं शोचनम्। उदित्त्वाद् ने क्लिन्दति। क्लिन्द्यते। क्ते क्लिन्दितः। क्लिदुङ् परिदेवने क्लिन्दते। क्लिदौच् आर्द्रभावे क्लिद्यति। क्लिन्नः॥

३१९ स्कन्दृं गति-शोषणयोः। स्कन्दति। स्कद्यते[3]। चस्कन्द चस्कन्दतुः चस्कन्दुः। "वेः स्कन्दोऽक्तयोः" २।३।५१। इति वा षत्वे विष्कन्दति, विस्कन्दति। "परेः" २।३।५२। इति क्तयोरपि वा षत्वे परिष्कण्णः परिष्कन्नः। ऋदित्त्वाद् वाऽङि अस्कदत् अस्कान्त्सीत्। अनुस्वारेत्त्वाद् नेट्, स्कन्ता, स्कन्त्स्यति। यङि "वञ्च-स्रंस-" ४।१।५०। इति पूर्वस्य न्यागमे चनीस्कद्यते। यङ्लुपि चनीस्कन्दीति, चनीस्कन्ति। अचि स्कन्दः, प्रस्कन्दः। "स्कन्द-स्यन्दः" ४।३।३०। इति क्त्वः कित्त्वाभावाद् नलोपाभावे स्कन्त्वा, प्रस्कन्द्य। यादेः क्त्वो न अकित्त्वमित्येके, प्रस्कद्य[4]। "भुजि-पत्यादिभ्यः-" ५।३।१२८। इत्यनटि प्रस्कन्दत्यस्मादिति प्रस्कन्दनः। "विश-पत-" ५।४।८१। इति णमि गेहावस्कन्दमास्ते गेहं गेहमवस्कन्दमास्ते गेहमवस्कन्दमवस्कन्दमास्ते। उणादौ "स्कन्यमिभ्यां धः" (उ० २५१) बाहुलाधिकाराद्[5] दस्य लुक्, स्कन्धः अंसः। "स्कन्देर्ध् च" (उ० ९६०) इति असि स्कन्धः स्कन्धसी। "आस्कन्द्यते चनीस्कन्द्यते इति लक्ष्ये नलोपो न दृश्यते स चेच्छिष्टसम्मतस्ततो नलोपाभावश्चिन्त्यः" इति वाचकवार्त्तिकम्॥

अथ धान्तास्त्रयः—

३२० षिधू गत्याम्। "षः सो-" २।३।९८। इति सत्वे सेधति। सिसेध, "गतौ सेधः" २।३।६१। इति न षत्वम्; णौ परिसेधयति गाम्, गमयतीत्यर्थः। गतेरन्यत्र "स्था-सेनि-" २।३।४०। इति षत्वे प्रतिषेधति पापात्, अनेकार्थत्वाच्चायं निषेधेऽपि वर्तते। षोपदेशत्वाद् गतेरन्यत्र "नाम्यन्तस्था-" २।३।१५। इति षत्वे सिषेध। इटि सेधिष्यति। ऊदित्त्वाद् "ऊदितो वा" ४।४।४२। इति क्त्वि वेटि सिद्ध्वा सेधित्वा सिधित्वा, "वौ व्यञ्जनादेः-" ४।३।२५। इतीटि क्त्वो वा कित्त्वम्। सनि[6] सिसिधिषति सिसेधिषति। क्त्वि वेट्त्वात् क्तयोर्नेट्[7], सिद्धः सिद्धवान्। निरनुबन्धपाठे

१ कमूङ् कान्तौ इत्यस्य॥ २ आचक्रन्द सपा १ वा०॥ ३ "नो व्यञ्जनस्यानुदितः" ४।२।४५। इति नलुकि॥ ४ "सर्वधातूना बहुलं वेट्त्वमित्यन्ये, आस्कन्दिषम् आस्कान्त्सम्, आस्कन्त्तव्यम् आस्कन्दितव्यमित्यादि, एवमन्यधातुष्वपि पक्ता पचिता, पट्टा, पटिता इत्यादि। इदं च मतं "धूगौदितः" ४।४।३८। इत्यत्र व्यवस्थितविभाषाविज्ञानाद् "आगमशास्त्रमनित्यम्" इति न्यायाच्च स्वमतेऽपि सङ्गृहीतं द्रष्टव्यम्" – क्रियारत्नसमुच्चय पृ० ६६ 'स्कन्दृं धातु०। ५ बाहुलकाद् इ० संपा १ वा०॥ ६ सनि प्र० मं१ सं२ तपा० नास्ति॥ ७ "णि-स्तोरेवा-" २।३।३७। इति नियमेन षत्वाभावे॥ ८ "वेटोऽपतः" ४।४।६२। इति सूत्रेण।

तु सिधितः । **पिधूंच् संराद्धौ** । सिध्यति । निसिध्यति, "स्था-सेनि–" २।३।४०। इत्यत्र सेध-निर्देशाद् नात्र षत्वम् । सेद्धा, सेत्स्यति ॥

**३२१ पिधौ शास्त्र-माङ्गल्ययोः** । शास्त्र शास्त्रविषय शासनम्, माङ्गल्य मङ्गलविषया क्रिया। अनयोरेवार्थयोरयमौदित्, अर्थान्तरे पुनरूदित् पूर्वक एव, अन्यथा तत्पाठोऽनर्थकः स्यात्, अर्थान्तरेऽप्यनेनैवेड्विकल्पस्य सर्वत्रैव सिद्धत्वात्। "ष: सो–" २।३।९८। इति सत्वे सेधति। षोपदेशत्वात् सस्य कृतत्वे "नाम्यन्तस्था–" २।३।१५। इति षत्वम्, सिषेध। "स्था-सेनि–" २।३।४०। इति षत्वे अभिषेधति, यङ्लुपि अभिषेषिधीति, अड्व्यवाये अभ्यषेधत्। घञि सेधः, शोभनः सेधः सुषेधः, "निर्दु:सोः–" २।३।२१। इति षत्वम्। औदित्त्वात् "धूगौदितः" ४।४।३८। इति वेट्, सेद्धा सेधिता । परोक्षायां "स्क्रसृ-वृ–" ४।४।८१। इति नित्यमिट्, सिषिधिव सिषिधिम । "घसेकस्वरा–" ४।४।८२। इति नियमात् क्वसौ नेट्, सिषिध्वान् । वेट्त्वाद् "वेटोऽपतः" ४।४।६२। इति क्तयोर्नेट्, सिद्धः सिद्धवान् । उणादौ "ऋज्यजि–" (उ० ३८८) इति किति रे सिध्रो वृक्षः, कपि सिध्रकः ॥

**३२२ शुन्ध शुद्धौ** । शुन्धति। इटि शुधितः शुधितवान्। **शुधंच् शौचे** शुध्यति, शुद्धः शुद्धवान् । **शुन्धिण् शुद्धौ** "युजादेर्नवा" ३।४।१८। इति वा णिचि शुन्धते शुधितः, शुन्धयति शुन्धितः ॥

अथ नान्ता नव सेटश्च—

**३२३ स्तन ३२४ धन ३२५ ध्वन ३२६ चन ३२७ स्वन ३२८ वन शब्दे** । स्तनति। तस्तान । इटि स्तनिता । अचि स्तनः । शब्दे घटादित्वाद् णिगि ह्रस्वे स्तनयति, अन्यत्र स्तानयति । घञि अभिनिष्टानो विसर्गः, "अभि-निःष्टानः" २।३।२४। इति षत्वम्। "असमानलोपे–"४।१।६३। इति सन्वद्भावे अतिस्तनत्। **स्तनण् गर्जे** अदन्तः, स्तनयति, समानलोपित्वात् सन्वद्भावाभावे अतस्तनत् ॥ **धन** । धनति । अचि धनम् । इटि धनिता, धनिष्यति । "मन्-वन्–"५।१।१४७। इति वनिप्, धन्वा, वाहुलकादात्वाभाव । उणादौ "कृषि-चमि–"(उ० ८२९) इति ऊः, धनूर्ज्या चापं च । "रुयर्ति–"(उ० ९९७) इति उसि धनुः ॥ **ध्वन** । ध्वनति । दध्वान । यङि दन्ध्वन्यते । इटि ध्वनिता, ध्वनिष्यति । अचि ध्वनः । क्ते "क्षुब्ध-विरिब्ध–" ४।४।७० । इति निपातनात् तमसि नेट्, ध्वान्तं तमः, ध्वनितमन्यत् । शब्दे घटादित्वाद् णौ ह्रस्वे ध्वनयति, अन्यत्र ध्वानयति । उणादौ "पदि-पठि–" (उ० ६०७) इति इः, ध्वनिः । **ध्वनण् शब्दे** अदन्तः, ध्वनयति ॥ **चन** । चनति। हिंसायां घटादित्वाद् णौ ह्रस्वे चनयति ॥ **स्वन** । दन्त्यादिः । स्वनति । सस्वान । "व्यवात् स्वनोऽशने" २।३।४३। इति षत्वे विष्वणति अवष्वणति, विषष्वाण अवषष्वाण,

१ 'सेध' इति कृतगुणस्य निर्देश । ननु सेध इत्यत्र अकारश्रवणात् "तिवा शवा" इति न्यायात् यङ्लुपि न भविष्यति इति चेत्, न, अकारोऽत्रोच्चारणार्थः, न तु शब्निर्देशः, तेन यङ्लुप्यपि भवति, प्रतिषेषिधीति ॥

२ भुङ्क्ते इत्यर्थ –सशब्दं भुङ्क्ते इत्यर्थः इति वृत्तिकारः। "तथा च वृत्तौ अभ्यवहारक्रियाविशेषोऽभिधीयते–

न्यष्वणत् अवाष्वणत्; अशनादन्यत्र न षत्वम्, विस्वनति मेघः। परोक्षायां "जॄ-भ्रम–" ४।१।२६। इति वैत्वे स्वेनतुः सस्वनतुः। अवतंसने घटादित्वाद् णौ ह्रस्वे स्वनयति, अन्यत्र स्वानयति। सेट्त्वात् स्वनिता, स्वनिष्यति। "नवा क्वण–"५।३।४८। इति वा अलि स्वनः स्वानः। "क्षुब्ध-विरिब्ध–" ४।४।७०। इति मनसि क्ते नेट्, स्वान्तं मनः, स्वनितमन्यत्। "श्वस-जप–" ४।४।७५। इति आङ्पूर्वात् क्ते वा नेट्, आस्वान्तः आस्वनितो मृदङ्गः, आस्वान्तम् आस्वनितं मनः। "नेर्नद–"५।३।२६। इति वा अलि निस्वनः निस्वानः॥ वन। वनति। ववान। यङि वंवन्यते। यङ्लुपि वंवनीति, तसि वंवान्तः। "यमि-रमि–"४।२।५५। इत्यत्र वनतीति तिव्-निर्देशात् नलोपाभावे "अहन्पञ्चम–" ४।१।१०७। इति दीर्घत्वम्। इटि वनिता, वनिष्यति। अचि मृग-विहगशब्दैर्वनतीति वनम्॥

**३२९ वन ३३० षन भक्तौ**। भक्तिर्भजनम्। वनिः अर्थभेदार्थं पुनरिहाधीतः। वनति। अनटि संवननम्। क्तौ "यमि-रमि–"४।२।५५। इति नलोपे वतिः। तिकि "न तिकि–"४।२।५९। इति दीर्घ-नलोपाभावे वन्यात् वन्तिः। क्ते वानतम्, वनिता। उणादौ "जठर-क्रकर–"(उ० ४०३) इति निपातनात् अरे वानरः। "वनि-वपिभ्यां णित्"(उ० ४२१) इति ईरे वानीरः। **वनूयि याचने** वनुते॥ **षन**। "षः सो–"२।३।९८। इति सत्वे सनति। ससान सेनतुः सेनुः। "ये नवा" ४।२।६२। इति वा आत्वे सायते सन्यते। यङि सासायते संसन्यते। यङ्लुपि संसनीति, तसि "आः खनि–"४।२।६०। इति आत्वे ससातः। इटि सनिता, सनिष्यति। सनि "इवृध–"४।४।४७। इति वेटि सिसनिषति, "णि-स्तोरेवा–"२।३।३७। इति नियमादत्र न षत्वम्; "सनि" ४।२।६१। इत्यात्वे सिषासति, अत्र षोपदेशत्वाद् "नाम्यन्तस्था–" २।३।१५। इति षत्वम्। णौ डे असीषणत्। क्तौ "आः खनि–"४।२।६०। इत्यात्वे सातिः। तिकि "तौ सनस्तिकि"४।२।६४। इति वा आत्व-नलुको सातिः सतिः, पक्षे "अहन्पञ्चमस्य–" ४।१।१०७। इति दीर्घे सान्तिः, तदेवं सनतेस्तिकि त्रैरूप्यम्। उणादौ "कृ-वा-पा-जि–"(उ० १) इति उणि सानुः। **षणूयी दाने** सनोति सनुते, तिकि सातिः सतिः, पक्षे तनादित्वाद् "न तिकि दीर्घश्च" ४।२।५९। इति दीर्घ-नलुगभावे सन्तिः॥

**३३१ कनै दीप्ति-कान्ति-गतिषु**। दीप्तिः प्रकाशः, कान्तिः शोभा। कनति। चकान। इटि कनिष्यति। ऐदित्त्वात् क्तयोर्नेट् कान्तः, शील्यादित्वात् सत्यर्थे क्तः, कान्तवान्। वनि सुकावा। क्विपि सुका सुकानौ। उणादौ "दॄ-कॄ-नॄ–"(उ० २७) इति अके कनकम्। "कनेरीनकः" (उ० ७३) कनीनिका। "स्था-छा-मा–"(उ० ३५७) इति ये कन्या॥

---

यत्र स्वननमस्तीति सशब्दं भुङ्क्ते इत्यर्थ। **पिनाकी तु** भुञ्जान. किञ्चित् शब्द करोतीति। **काश्यपस्तु** भोजनमेवार्थमाह। **बोधिन्यासे**ऽपि पक्षत्रयमपि दर्शितम्"– **माधवीयधातुवृत्तौ** पृ. १४३ धातुअंक १२।

१ विषयेषु अनाकुलं मन' स्वान्तमित्यन्ये॥ २ मनसा घट्टितं स्पृष्टमिति यावत्॥ ३ तसि तृतीयपुरुष-द्विवचनसूचके प्रत्यये॥ ४ **सम्भक्तौ** संपा१ सं१॥ ५ "**तिक्-कृतौ नाम्नि**" ५।१।७१। इत्यनेन आशिषि तिक्॥ ६ **वनि कावा सु°** संपा१॥

**अथ पान्ताः पञ्चदश, गुपौ वेट्, तपं सृप्लं अनिटौ, शेषाः सेटः —**

**३३२ गुपौ[1] रक्षणे ।** "गुपौ-धूप–" ३।४।१। इति स्वार्थे आयः, गोपायति । "अशवि ते वा" ३।४।४। इति वा आये गोपायाञ्चकार, जुगोप । गोपायिता, पक्षे औदित्त्वाद् वेटि गोप्ता गोपिता[2] । "कुप्य-भिद्योध्य–" ५।१।३९। इति निपातनात् क्यपि कुप्यं[3] सुवर्ण-रजताभ्यामन्यद् धनम्, अन्यत्र "शकि-तकि–" ५।१।२९। इति ये गोप्यम् । आये "शसि-प्रत्ययात्" ५।३।१०५। इति अः गोपाया[4], पक्षे क्तौ गुप्तिः । **गुपि गोपन-कुत्सनयोः** जुगुप्सते । **गुपच् व्याकुलत्वे** गुप्यति । **गुपण् भासार्थः** गोपयति, गोपना ॥

**३३३ तपं ३३४ धूप सन्तापे ।** तपति । "निसस्तपे–" २।३।३५। इति षत्वे निष्टपति[5] । "न्यु-दस्तपः[6]" ३।३।८७। इत्यात्मनेपदम्, वितपते उत्तपते, वितपति उत्तपति पृष्ठम् । तताप तेपतुः तेपुः । यङि तातप्यते । यङ्लुपि तातपीति तातप्ति । अनुस्वारेत्त्वाद् नेट्, तप्ता, तप्तुम् । "तपेस्तपः-कर्मकात्" ३।४।८५। इति कर्तर्यात्मनेपदं क्यश्च, तप्यते तप. साधुः[7]— † अर्जयतीत्यर्थः । अतप्त तपः साधुः, †[8] । अत्र "तपः कर्त्रनुतापे[9] च" ३।४।९१। इति ञिर्न भवति । अन्ववातप्त[10] पापः पापेन कर्म-णा, अत्रानुतापे ञिज् न भवति । "नन्द्यादिभ्यः" ५।१।५२। इत्यने तपनः । "शकि-तकि–" ५।१। २९। इति ये तप्यम् । "ललाट-वात–" ५।१।१२५। इति खशि ललाटन्तपः[11] । "द्विषन्तप-परन्तपौ"

---

१ गुपौ इति औकारो **गुपि गोपने** इत्यस्य निवृत्त्यर्थ. यङ्लुब्निवृत्त्यर्थश्च । **गुपण् भासार्थः गुपच् व्याकुलत्वे** अनयोश्च कथम् ? अनयोस्तु धूपसाहचर्यात् निरासः । ननु धूपश्चुरादिरप्यस्ति, सत्यम्, अणिजन्त**विच्छ**-साहचर्यात् भौवादिकस्यैव ग्रहणम् । ननु **विच्छि**रपि भासार्थः चुरादिस्तत् कथं तेन साहचर्यम्, सत्यम्, तस्य अणि-जन्ताभ्या **पणि-पनि**भ्यां साहचर्यान्निरास । ननु यङ्प्रत्ययस्य प्राप्तिरेव नास्ति आयप्रत्ययेऽनेकस्वरत्वात् तत् कथं 'यङ्लुब्निवृत्त्यर्थश्च' इत्युक्तम्, सत्यम्, अशव्विषये विकल्पितस्याऽऽयस्य प्रथमं यङि 'प्रकृतिग्रहणे यङ्लुबन्तस्यापि' इति न्यायात् प्राप्ति ॥ २ ननु आयस्यादन्तत्वाभावेऽपि गोपायति इत्यादि सिध्यति किमदन्तकरणेन ? सत्यम्, आयस्यादन्तत्वाभावे अजुगोपायत् इत्यादिस्थाने "उपान्त्यस्या–" ४।२।३५। इति ह्रस्वत्वे अजुगोपयदित्याद्यनिष्टं स्यात् इत्यदन्तकरणफलम् ॥ ३ गोपाय्यते तत् इति गुपे क्यप् आदे. कत्व च ॥ ४ "आत्" २।४।१८। इत्याप् सं१ टि० ॥ ५ सकृदग्निं स्पर्शयतीत्यर्थः । अनासेवायामिति किम् ? निस्तपति–पुनः पुनः तपति इत्यर्थः। कथं तर्हि 'निष्टप्तं रक्षः, निष्टप्ता अरातयः' इति ? अत्र सदप्यासेवनं न विवक्ष्यते इति । 'निरतपत्' इत्यत्र कथं न षत्वम् ? उच्यते, अत्र पूर्वं कृतमपि षत्वं परस्मिन्नडागमे "णषमसत्–" २।१।६०। इत्यनेनासिद्धम् इति ॥ ६ इति सूत्रेण अकर्मकात् स्वाङ्गकर्मकाच्च । अकर्मकत्वं चास्य दीप्यते ज्वलति भासते रोचते इत्येषु अर्थेषु । यथा–वितपते रविः, दीप्यते–सामान्येन दीप्तो भवति, ज्वलति–ज्वालावान् भवति, भासते–उद्भूतरूपो भवति, रोचते–किरणवान् भवति इत्यर्थाः । स्वेऽङ्गे उत्तपते वितपते पाणिम्–तापयतीत्यर्थ. । यदा अयमस्वाङ्गकर्मकस्तदा उत्तपति सुवर्णं सुवर्णकार'–द्रवीक-रोतीत्यर्थ. इत्येव भवति ॥ ७ "अत्र तपतेरर्जनमर्थ इति । साधुस्तत्र कर्ता, यत्रा गौ–साधु –कर्म 'उपवासादीनि तपांसि साधु सन्तपन्ति' इति, तत्र तपिर्दु.खानुभावनार्थ इति कर्मणस्तपसो व्यापारो दु खजननमिति क्रियाभेदाद्विध्यर्थमेतद्–मा० धा० वृ० पृ० १९७ धातु–१६५ । ८ स्वस्तिकमध्यगतः पाठ संपा१ नास्ति ॥ ९ नन्वनेन सामान्येन सानुतापेऽननुतापे च कर्तरि कर्मकर्तरि च भविष्यति किमनुतापग्रहणेनेति ? सत्यम्, अनुतापग्रहण भावे कर्मणि चार्थम्, तेन कर्मकर्तरि अन्ववातप्त कितव स्वयमेव, कर्तरि अतप्त तपांसि साधुः, भावे अन्वतप्त चैत्रेण पश्चात्तपन कृतमित्यर्थ. ॥ १० पश्चात्तापं करोति इत्यर्थः । अनुतापादन्यत्र उदतापि सुवर्णं सुवर्णकारेण इति ञिना भवितव्यमेव ॥ ११ "खित्यनव्ययारुषो मोऽन्तो ह्रस्वश्च" ३।२।१११। इति मोऽन्त. ॥

५।१।१०८। इति निपातनात् खे द्विंपन्तपः, परन्तपः। "भृ-वृ-जि–" ५।१।११२। इति खे सर्वन्तप। उणादौ "अस्" (उ० ९५२) इति असि तप. तपसी॥ धूप। स्वार्थे आये धूपायति। अशिति धूपायाञ्चकार दुधूप। धूपायिता, पक्षे नित्यमिटि धूपिता। धूपण् भासार्थः धूपयति॥

३३५ रप ३३६ लप ३३७ जल्प व्यक्ते वचने। रपति। रराप रेपतु' रेपु। रपिता, रपितुम्। "आसु-यु-वपि–" ५।१।२०। इति घ्यणि राप्य, अभिराप्य'॥ लप। लपति। ललाप लेपतुः लेपु'। लपिता, लपितुम्। घ्यणि लाप्य, अभिलाप्य.। करणेऽनटि लपनं मुखम्। क्ते लपितम्। घञि आलापः, सलाप', प्रलाप.। "मथ-लप" ५।२।५३। इति घिनणि प्रलपनशील. प्रलापी॥ जल्प। जल्पति। जजल्प। "क्रियाव्यतिहारे–" ३।३।२३। इत्यत्र शब्दार्थवर्जनान्नात्मनेपदम्, व्यतिजल्पति। "वृङ्-भिक्षि–" ५।२।७०। इति टाके जल्पाकः, जल्पाकी। घञि जल्प'॥

३३८ जप मानसे च। मनोनिर्वर्त्ये वचने। चकाराद् व्यक्ते वचने। जपति। जजाप जेपतु. जेपुः। इटि जपिता। "गृ-लुप–" ३।४।१२। इति यङि गर्हितं जपति जञ्जप्यते, अत्र "जप-जभ–" ४।१।५२। इति पूर्वस्य मुरन्तः। "कृ-वृषि-मृजि–" ५।१।४२। इति वा क्यपि जप्यम्, पक्षे घ्यणि जाप्यम्, विकल्पबलादेवात्र पवर्गलक्षणो यो न भवति। "शोकापनुद–" ५।१।१४३। इति निपातनात् के कर्णेजप' सूचकः, "अमूर्ध-मस्तका–" ३।२।२२। इति सप्तम्या अलुप्; अन्यत्र तृचि कर्णेजपिता मन्त्री। "श्वस-जप–" ४।४।७५। इति क्तयोर्वा नेट्, जप्तः जपित.। "यजि-जपि–" ५।२।४७। इति यङन्ताद् ऊके जञ्जपूक.। "व्यध-जप–" ५।३।४७। इत्यनुपसर्गाद् अलि जप्यते इति जपः। सोपसर्गाद् घञि उपजाप'॥

३३९ चप सान्त्वने। चपति। चचाप चेपतुः चेपुः। अचि चपो वंशः तस्य विकारः चापं धनु। उणादौ "दिव्यवि–" (उ० १४२) इति अटे चपटो विपुलः। "चपेरेट." (उ० १५८) चपेटः। "मृदि-कन्दि–" (उ० ४६५) इति अले चपल'॥

३४० पप समवाये। "षः सो–" २।३।९८। इति षस्य सत्वे सपति। ससाप सेपतु. सेपु.। इटि सपिता, सपिष्यति। षोपदेशत्वाद् "णि-स्तोरेवा–" २।३।३७। इति षत्वे सिषापयिषति। येषा तु नाय षोपदेशस्तेषा षत्वाभावे सिसापयिषति। उणादौ "प्लु-ज्ञा-यजि–" (उ० ६४६) इति तौ सप्ति.–

१ नन्वत्रोपपदे द्विषत्शब्दो द्विषतीशब्दो वा? यद्वा 'नामग्रहणे लिङ्गविशिष्टस्यापि' इति न्यायात् उभयोरपि ग्रहणम्? उच्यते, लिङ्गविशिष्टपरिभाषाया अनित्यत्वात् द्विषच्छब्दोपपदोऽयम् न तु द्विषतीशब्दोपपदः, यद्वा 'निपातनस्येष्टविषयत्वात् स्त्रियामनभिधानम्' इति बृहद्वृत्तौ श्रीहेमचन्द्रसूरयः। द्विषतीशब्दे तु "कर्मणोऽण्" ५।३।१४। इत्यणि द्विषतीतापः, अण्यन्तस्य तु द्विषत्ताप परताप इति॥ २ एतन्नामा कश्चित्॥ ३ "करणाऽऽधारे" ५।३।१२९। इति अनट्॥ ४ "शकि-तकि-चति-यति-शसि-सहि-यजि-भजि-पवर्गात्" ५।१।२९। इति सूत्रेण विशेषाभावात् घ्यण् तु भवत्येव विकल्पसामर्थ्यात्॥ ५ "चपो वृक्ष इति मैत्रेयः, वेणुविशेष इति दण्डनाथः" –मा०धा०वृ०पृ० ८७ धातु–३९६। ६ "समवाय. सम्बन्ध. सम्यगवबोधो वा"–मा०धा०वृ०पृ० ८७ धातु–३९७।

अश्वः । "पप्यशौभ्यां तन्" (उ० ९०३) सप्त घटाः । चान्तोऽयमिति चन्द्रः । सचति । "पलिसचेरिव." (उ० ५२२) सचिव । षचि सेचने सचते ॥

३४१ सृप्लृं गतौ । दन्त्यादिः। सर्पति । क्ये सृप्यते । ससर्प ससृपतुः ससृपुः । लृदित्त्वादङि असृपत् । अनुस्वारेत्त्वाद् नेट्, सर्प्ता, सर्प्तुम् । "लिहादिभ्यः" ५।१।५०। इत्यचि सर्पः । कुटिलं सर्पतीति "गत्यर्थात् कुटिले" ३।४।११। इति यङि अचि सरीसृपः, षोपदेशाभावादत्र न षत्वम् । "ऋदुपान्त्याद्–" ५।१।४१। इति क्यपि सृप्यम् । भावे घञि ससर्पा विपादिका, अभिधानादस्य स्त्रीत्वम् । उणादौ "ऋज्यजि-तञ्चि–" (उ० ३८८) इति किति रे सृप्रा काचिन्नदी । "रुच्यर्चि-शुचि–" (उ० ९८९) इति इसि सर्पिः ॥

३४२ चुप मन्दायाम् । गतावित्यनुवृत्तेर्मन्दायां गतौ । चोपति- किञ्चिच्चलतीत्यर्थः । चुचोप । अनटि चोपनम् । इटि चोपिता, चोपिष्यति । उणादौ "क्षु-चुपि–"(उ० ३०१) इति कित् पः, चुप्पं मन्दगमनम् । "ऋज्यजि–" (उ० ३८८) इति किति रे चुप्रो वायुः ॥

३४३ तुप ३४४ तुम्प ३४५ त्रुप ३४६ त्रुम्प ३४७ तुफ ३४८ तुम्फ ३४९ त्रुफ ३५० त्रुम्फ हिंसायाम् । तोपति । तुतोप । "वौ व्यञ्जनादेः–" ४।३।२५। इति क्त्वा-सनोरिटि वा कित्त्वे तुपित्वा तोपित्वा, तुतुपिषति तुतोपिषति "उति शवर्हाद्भ्यः–" ४।३।२६। इति क्तयोर्वा कित्त्वे तुपितम् तोपितमनेन ॥ तुम्प । तुम्पति । तुतुम्प । "प्रात्तुम्पतेर्गवि" ४।४।९७। इति सटि प्रस्तुम्पति गा वत्सः । येषां तु "प्रात्तुम्पतेः कपि" इति सूत्रं तेषा कपि समासान्ते सटि प्रस्तुम्पकः । क्तयोः तुपितः तुपितवान् । भावे क्ते तुपितम्, अत्र कित्त्वनिमित्तत्वादुपान्त्यत्वस्य सन्निपातलक्षणत्वेन "उति शवर्हाद्भ्यः" ४।३।२६। इति न कित्त्वविघातकत्वम् तथा च न गुणः ॥ त्रुप त्रोपति । तुत्रोप । त्रुपित्वा त्रोपित्वा । तुत्रुपिषति तुत्रोपिषति ॥ त्रुम्प । त्रुम्पति । तुत्रुम्प । त्रुपित त्रुपितवान् ॥

अथ फान्ताः सप्त सेटश्च—

तुफ । तोफति । तुतोफ । क्तयो तुफितः तुफितवान् ॥ तुम्फ । तुम्फति । तुतुम्फ । तुम्फिता । "ऋत्तृष–" ४।३।२४। इति इटि क्त्वो वा कित्त्वे तुफित्वा तुम्फित्वा ॥ त्रुफ । त्रोफति । तुत्रोफ । त्रुफितः त्रुफितवान् ॥ त्रुम्फ । त्रुम्फति । तुत्रुम्फ । त्रुफित्वा त्रुम्फित्वा । तुप-तुम्प-तुफ-तुम्फान्नु तुदादावपीत्यन्ये, तुपति, शे नलुगनिष्टेश्च प्रस्तुम्पति गौः, तुफति, तुम्फति ॥

३५१ वर्फ ३५२ रफ ३५३ रफु ३५४ अर्व ३५५ कर्व ३५६ खर्व ३५७ गर्व ३५८ चर्व ३५९ तर्व ३६० नर्व ३६१ पर्व ३६२ बर्व ३६३ शर्व ३६४ षर्व ३६५ सर्व ३६६ रिवु ३६७ रवु गतौ ।

---

१ 'र्पा अभि' स१ स२ प्र० तपा० सपा१ खे० ॥ २ पाणिनीयाः ॥

सप्तदशाप्येते गत्यर्थाः। फान्तास्त्रयोऽपि हिंसायामिति कण्वः। वर्फति॥ [रफ।] रफति॥ रफु। उदित्त्वाद् ने रम्फति॥

अथ वान्ता अष्टादश सेटश्च—

अर्व। अर्वति। "अनातो—" ४।१।६९। इत्यात्वे ने च आनर्व॥ कर्व। कर्वति। उणादौ "दिव्यवि—" (उ० १४२) इति अटे कर्वट क्षुद्रपत्तनम्। "वाश्यसि—" (उ० ४२३) इति उरे कर्वुरः॥ खर्व। खर्वति। अचि खर्वः॥ गर्व। गर्वति। घञि गर्वः॥ चर्व। चर्वति। घञि चर्वः। अनटि चर्वणम्॥ तर्व। तर्वति॥ नर्व। नर्वति॥ पर्व। पर्वति॥ बर्व। ओष्ठ्यादिः। बर्वति। उणादौ "ऋच्छि-चटि—" (उ० ३९७) इति अरे बर्बरः, बर्बरी कुञ्चिताः केशाः॥ शर्व। तालव्यादि। शर्वति॥ षर्व। षोपदेशः। "षः सो—" २।३।९८। इति षस्य सत्वे सर्वति। षोपदेशत्वाद् "णिस्तोरेवा—" २।३।३७। इति षत्वे सिषर्वयिषति॥ सर्व। सर्वति। सोपदेशत्वात् षत्वाभावे सिसर्वयिषति॥ रिवु। उदित्त्वाद् ने रिम्वति॥ रवु। उदित्त्वाद् ने रम्वति। अचि रम्वः, करम्वः। क्ते करम्बितः। घर्वेत्यपि केचित् पठन्ति, स पुनरनार्षत्वादुपेक्षितः। अर्वेत्यादौ रेफस्थाने नकारं कौशिका मन्यन्ते॥

३६८ कुवु आच्छादने। उदित्त्वाद् ने कुम्वति। "भीषि-भूषि—" ५।३।१०९। इति णौ अङि कुम्वा। कुवुण् आच्छादने कुम्वयति॥

३६९ लुवु ३७० तुवु अर्दने। उदित्त्वाद् ने लुम्वति। उणादौ ण्यन्तात् "स्वरेभ्य इः—" (उ० ६०६) इति इः, लुम्बिः॥ तुवु। उदित्त्वाद् ने तुम्वति। अचि गौरादित्वाद् ङ्याम् तुम्वी। लुवु तुवुण् अर्दने, लुम्वयति, तुम्वयति॥

३७१ चुवु वक्त्रसंयोगे। वक्त्रेण सम्बन्धः। "नमस्तुङ्गशिरश्चुम्बि—" [हर्षचरिते] इत्युपचारात्। उदित्त्वाद् ने चुम्वति। चुचुम्व। चुम्बितुम्॥

अथ भान्ता अष्टौ यभंवर्जाः सेटश्च—

३७२ षृभू ३७३ षृम्भू ३७४ षिभू ३७५ षिम्भू ३७६ भर्भ हिंसायाम्। आद्यास्त्रयो दन्त्याद्याश्चतुर्थः षोपदेशः। सर्भति। सिसर्भयिषति। ऊदित्त्वात् क्त्वि वेट्, सृब्ध्वा सर्भित्वा॥ सृम्भू। सृम्भति। सिसृम्भयिषति। ऊदित्त्वात् सृब्ध्वा सृम्भित्वा॥ सिभू। सेभति। सिसेभ सिसिभतुः सिसिभुः। सिसेभयिषति। ऊदित्त्वात् सिब्ध्वा, पक्षे "वौ व्यञ्जनादेः—" ४।३।२५। इति इटि वा कित्त्वे सिभित्वा सेभित्वा। सनि सिसिभिषति सिसेभिषति। क्त्वि वेट्त्वात् क्तयोर्नेट् सिब्धः सिब्धवान्॥ षिम्भू। "षः सो—" २।३।९८। इति षस्य सत्वे सिम्भति। षोपदेशत्वाद् "नाम्यन्तस्था—" २।३।१५। इति षत्वे सिषिम्भ। ऊदित्त्वात् सिब्ध्वा सिम्भित्वा। वेट्त्वात् क्तयोर्नेट् सिब्धः सिब्धवान्॥ भर्भ। भर्भति। बभर्भ। इटि भर्भिता॥

**३७७ शुम्भ भाषणे च** । चकारात् हिंसायाम्[1] । भासने चेत्यन्ये[2] । तालव्यादिः। शुम्भति । शुशुम्भ । क्ते सेट्त्वात् "क्तेटो-" ५।३।१०६॥ इति अः शुम्भा शोभेत्यर्थः । **शुभ शुम्भत् शोभार्थे** शुभति । षोपदेशोऽयमिति गुप्तः[3], सुम्भति । कुपूर्वादचि कुसुम्भः । लक्ष्य चै ।

"सावष्टम्भनिशुम्भसुम्भन०" [　　　　　　] इति॥

**३७८ यँभं ३७९ जभ मैथुने** । मिथुनस्य कर्मणि भावे वा । आद्योऽन्तस्थादिरन्यश्च चवर्गादिः । यभति । "क्रियाव्यतिहारे-" ३।३।२३। इत्यात्मनेपदे व्यतियभते । क्ये यभ्यते । ययाभ येभतुः येभुः । अनुस्वारेत्त्वाद् नेट्, यब्धा, यब्धुम् । घञि याभः । "शकि-तकि-" ५।१।२९। इति ये यभ्यम् ॥　　**जभ** । "जभः स्वरे" ४।४।१००। इति ने जम्भति । जजम्भ । इटि जम्भिता, जम्भितुम् । णके जम्भकः । घञि जम्भो वर्तते । "शकि-तकि-" ५।१।२९। इति ये जभ्यम् । "गृ-लुप-" ३।४।१२। इति गर्ह्यार्थाद् यङि "जप-जभ-" ४।१।५२। इति पूर्वस्य म्वागमे च जञ्जभ्यते । क्तयोरिटि नागमे नलुकि च जभितः जभितवान् । **जभैङ् गात्रविनामे** जम्भते ॥

**अथ मान्ताः सप्तदश यमूं-णमं-गम्लृंवर्जाः सेटश्च—**

**३८० चमू ३८१ छमू ३८२ जमू ३८३ झमू ३८४ जिमू अदने** । पञ्चाप्यूदितः । "ष्ठिवू-क्लम्वा-" ४।२।११० । इति दीर्घत्वे आचामति । आङ्पूर्वस्यैव दीर्घत्वविधानात् चमति, उच्चमति, विचमति । आचचाम । "अमोऽकम्यमि-" ४।२।२६। इति णौ ह्रस्वाभावे चामयति, आचामयति । "आसु-यु-वपि-" ५।१।२०। इति घ्यणि आचाम्यम् । "मोऽकमि-" ४।३।५५। इत्यत्र आचमो वर्जनाद् वृद्धिनिषेधाभावे णके आचामकः । घञि आचामः । ऊदित्त्वात् क्त्वि वेट्, चान्त्वा चमित्वा । वेट्त्वात् क्तयोर्नेट्, आचान्तः आचान्तवान् । उणादौ "ऋच्छि-चटि-" (उ० ३९७) इति अरे चमरः । प्रज्ञाद्यणि चामरः[6] । "तप्यणि-" (उ० ५६९) इति असे चमसः सोमपात्रम्, गौरादित्वाद् ङ्याम् चमसी मुद्गादिभित्तकृता । "कृपि-चमि-" (उ० ८२९) इति ऊः चमूः ।　　**छमू** । छमति । चछाम । "अमोऽकम्यमि-" ४।२।२६। इति णौ ह्रस्वे छमयति । ऊदित्त्वात् छमित्वा छान्त्वा ॥　　**जमू** । जमति । जजाम । णौ ह्रस्वे जमयति । ऊदित्त्वात् जमित्वा, जान्त्वा ॥ **झमू** । झमति । जझाम । झमयति । झमित्वा झान्त्वा । उणादौ "झमेर्झः" (उ० १३७) झञ्झा ॥

**जिमू** । जेमति । अनटि जेमनम् । घञि जेमः । ऊदित्त्वात् जीन्त्वा, पक्षे "वौ व्यञ्जनादेः-" ४।३।२५। इति वा कित्त्वे जिमित्वा जेमित्वा ॥

---

१ हिंसायामेव इति देव-मैत्रेयादयः॥ २ दुर्ग-धनपाल-शाकटायनाः॥ ३ "गुप्तस्तु 'सावष्टम्भनिपुम्भसम्भ्रमनमद्भूगोल' इत्यादिदर्शनाद् मूर्धन्यादित्वमाह"-मा०धा०वृ०पृ० ८८ धातु-४३०॥ ४ यभ विपरीतमैथुने-विपरीतानुष्ठान इत्यर्थ. इति मैत्रेयः, पुरुषकारे तु विपरीतमैथुने इति -विपरीतयभने इति"-मा०धा०वृ०पृ० १९१ धातु-९६१ । जभं च न पठन्ति पाणिनीया इति ॥ ५ उपसर्गरहितस्य " मोऽकमि-यमि-रमि-नमि-गमि-वमू-आचमः " ४।३।५५। इति वृद्धिप्रतिषेधे घ्यणि ये च न विशेष इति सोपसर्गस्योदाहरणम् ॥ ६ चामरम् वा० संपा१ प्र० ॥ ७ भित्तम्-शकलम्-खण्डम् । "चमसी पिष्टवर्ति."-अभिधान० ३,६४ "मुद्गादीना पिष्टस्य वर्ति."-अभि० वृ० ।

३८५ **क्रमू पादविक्षेपे** । पदन्यासे[1] । "क्रमो दीर्घः–" ४।२।१०९। इति दीर्घे क्रामति । चक्राम । "क्रमोऽनुपसर्गाद्[2]" ३।३।४७। इति वा आत्मनेपदम्, क्रमते क्रामति । "वृत्ति-सर्ग-तायने[3]" ३।३।४८। ऋक्षु अस्य क्रमते[4] बुद्धिः–न प्रतिहन्यते इत्यर्थः; युद्धाय क्रमते–उत्सहते इत्यर्थः; शास्त्राणि क्रमन्ते–स्फीतीभवन्तीत्यर्थः । "परोपात्[6]" ३।३।४९। पराक्रमते, उपक्रमते । "वेः स्वार्थे[7]" ३।३।५०। साधु विक्रमते हसः[8] । "प्रोपादारम्भे[9]" ३।३।५१। प्रक्रमते उपक्रमते भोक्तुम् । "आङो ज्योतिरुद्गमे[10]" ३।३।५२। आक्रमते[11] नभोऽर्कः । इटि क्रमिष्यति । "क्रमः" ४।४।५३। इत्यनात्मनेपदे इड्नियमादात्मनेपदे नेट्, प्रक्रंसीष्ट, उपक्रंसीष्ट । "तुः" ४।४।५४। इति तृप्रत्यये अनात्मनेपदविषयादिड्नियमादात्मनेपदविषयाद् नेट्, प्रक्रन्ता[12] उपक्रन्ता । "गत्यर्थात् कुटिले" ३।४।११। इति यङि चङ्क्रम्यते । "व्यञ्जनाद्–" ५।३।१३२। घञि क्रामन्त्यनेनेति क्रमः, "मोऽकमि–" ४।३।५५। इति वृद्धेरभावः । भावे घञि क्रमः, प्रक्रमः, उपक्रमः । "द्रम-क्रमो यङः" ५।२।४६। इति अने

१ **पदविन्यासे** संपा१ वा० । **पादन्यासे** इति तु प्र० मु० ॥ २ ननु अनुपसर्गाद् इति कोऽयं समासः ? तत्पुरुषो बहुव्रीहिः वा? बहुव्रीहिरेवायम्, यदुक्तं **बृहद्वृत्तौ**–अविद्यमानोपसर्गात् क्रमेरिति । **लघुन्यासकारैरपि** अभिहितम् अविद्यमानोपसर्गादिति बहुव्रीहिरयम् । यदि पुनर्न उपसर्गोऽनुपसर्ग इति तत्पुरुषो विधीयते तदा उपसर्गादन्योऽनुपसर्गस्तस्मात् परो यः क्रमिस्तत इति प्रतिपत्तौ केवलात् न स्यात्, प्रसज्याश्रयणे तु असमर्थसमासः कष्टः स्यादिति ॥ ३ वृत्तिः अप्रतिबन्धः आत्मयापनं वा सर्गः उत्साहः तात्पर्यं वा, सर्गेणातिसर्गस्य लक्षणादनुज्ञा वा, तायनं स्फीतता संतानः पालनं वा ॥ ४ आत्मानं यापयति ॥ ५ तत्परोऽनुज्ञातो वा इत्यर्थः ॥ ६ "**वृत्ति-सर्ग-तायने**" ३।३।४८। इत्येव सिद्धे "**परोपात्**" ३।३।४९। इत्यारम्भान्नियमाद्वाऽन्योपसर्गाद् न भवति, तेन संक्रामतीति परस्मैपदमेव, णौ क्रमयति अचिक्रमत् इत्यादि । ननु तर्हि कथं सङ्क्रामयतीति ? सङ्क्रामन्तं करोतीति शत्रन्ताण्णिचि भविष्यति । "अन्ये तु "मिता ह्रस्वः" (पा० ६।४।९२।) इत्यत्र वा अनुवर्त्तयन्ति, सा च व्यवस्थितविभाषा, तेन सङ्क्रामयतीत्येवमादि सिद्धं भवति इत्युक्तं **माधवीयधातुवृत्तौ**–पृ० ९६ धातु– ४६९ स च निन्दित इति तत्रैवोक्तम्, सङ्क्रमयतीति अविनीत इति कथनेन "रसातले सङ्क्रमिता" इत्यादिप्रयोगोऽप्यनुकूलः इति॥ ७ स्वार्थः पादविक्षेपः, तेन अश्वेन विक्रामति इत्यत्र न भवति। नन्वत्र पादविक्षेप एव क्रमिर्वर्त्तते, स च कर्तृकृतः करणकृतो वा भवतु, सत्यम्, "गौण-मुख्ययोः" इति न्यायात् सर्वकारकप्रधानभूत –कर्तृकृत एव गृह्यते अत्र तु करणकृतः पादविक्षेप इति न भवति । विक्रामति राजा उत्सहते इत्यर्थः, अत्र "**परोपाद्**" ३।३।४९। इत्येवेति नियमात् "**वृत्ति-सर्ग**" ३।३।४८। इत्यादिनाऽपि न भवति ॥ ८ सुष्ठु पदानि विक्षिपतीत्यर्थः। अश्वादीनां गतिविशेषोऽपि क्रम इति ॥ ९ आरम्भ आदिकर्म। अङ्गीकरणं चेत्यन्ये । एके तु स्वार्थविषय एवारम्भे मन्यन्ते, तेनोपक्रमते प्रक्रमते–गादाभ्यां गन्तुमारभते इत्यर्थ इत्यत्रैव भवति । स्वार्थविषयारम्भादन्यत्र तु प्रक्रामति उपक्रामति भोक्तुमित्यत्र न भवति, इति **बृहद्वृत्तौ** ॥ १० ज्योतिषां चन्द्रादीनामुद्गमे ऊर्ध्वगमने प्रधाने उपसर्जने वा वर्तमानात् ॥ ११ उदयते इत्यर्थः, दिवमाक्रममाणेन केतुना, अत्र दिवमिति कर्मणा योगादुद्गमनोपसर्जनव्याप्तिवचनः क्रमिः, केतुर्ग्रहः । ज्योतिरुद्गम इति वचनात् आक्रामति धूमो हर्म्यतलम्–उद्गच्छन् व्याप्नोतीत्यर्थः, उद्गमनपूर्विकया व्याप्तौ अत्रापि क्रमेरिति द्वितीया। **कैयटस्तु** उद्गमने वर्तमानोऽयमकर्मकस्तेन आक्रामति धूमो हर्म्यतलात् इति मन्यते–मा० धा०वृ० पृ० ९६। १२ प्रक्रन्ता, उपक्रन्ता इत्यत्र "**प्रोपादारम्भे**–" ३।३।५१। इत्यात्मनेपदम् । अनात्मनेविषयत्वे तु क्रमिता इत्यादि, **सायणस्तु** 'अनुपसर्गात् क्रमे क्रन्ता क्रमिता इत्युभयमपि भवति, "**अनुपसर्गाद्वा**" (पा० १।३।४३) इति विकल्पेनात्मनेपदविषयादित्येके' इति पठति च । क्रमितेति, "**क्रमोऽनुपसर्गात्**" ३।३।४७। इति विकल्पेनात्मनेपदविषयत्वात् क्रन्तेत्यपि, "**तुः**" ४।४।५४। इति सूत्रस्य न्यासे **कनकप्रभसूरयोऽपि** ॥

चङ्क्रमणः[1] । "शक-धृष–" ५।४।९०। इति तुमि प्रक्रमते भोक्तुम्, उपक्रमते भोक्तुम् । ऊदित्त्वात् क्त्वि वेट्, क्रन्त्वा क्रान्त्वा, अत्र "क्रमः क्त्वि वा" ४।१।१०६। इति वा दीर्घः; पक्षे क्रमित्वा । वेट्त्वात् क्तयोर्नेट्, क्रान्तः क्रान्तवान् । उणादौ "क्रमेः क्रुम् च वा" (उ० ५२) इति उके क्रुमुको वन्धन., क्रमुकः पूगतरु. । "क्रमि-तमि-स्तम्भेरिच्च नमेस्तु वा" (उ० ६१२) इति इः, क्रिमिः । "क्रमि-गमि-क्षमेस्तुमाच्चातः" (उ० ९४२) कान्तुं गमनम् तुमर्थश्च ॥

**३८६ यमूं उपरमे** । उपरमो निवृत्तिः । "गमिषद्यमश्छः" ४।२।१०६। यच्छति । ययाम । अनुस्वारेत्त्वाद् नेट्, यन्ता । "यमोऽपरिवेषणे–"[2] ४।२।२९। इति णौ ह्रस्वे यमयति केशान्, परिवेषणे तु यामयत्यतिथीन्[3] । "यमः स्वीकारे" ३।३।५९। इति उपात् आत्मनेपदम्, उपयच्छते[4] कन्याम् । "आङो यम-हनः स्वेऽङ्गे च" ३।३।८६। आयच्छते[5], आयच्छते[6] पाणिम् । "समुदाङो[7] यमेरग्रन्थे" ३।३।९८। इति फलवत्कर्तर्यात्मनेपदम्[8], संयच्छते उद्यच्छते आयच्छते रज्जुम्, "ईगितः" ३।३।९५। इत्यात्मनेपदापवादस्य "अणिगि प्राणिकर्तृका–" ३।३।१०७। इति परस्मैपदस्यापवादः । "परिमुहाऽऽयमा–" ३।३।९४। इति फलवत्कर्तर्यात्मनेपदम्, आयामयते[9] सर्पम् । "यमः सूचने[10]" ४।३।३९। इति सिचः कित्त्वे उदायत उदायसाताम् । "वा स्वीकृतौ[11]" ४।३।४०। उपायत उपायंस्त कन्याम् । "यमि-रमि-नम्यातः सोऽन्तश्च" ४।४।८६। अयंसीत् अयंसिष्टाम् । यङि यंयम्यते । यङ्लुपि यंयमीति । "यम-मद-गदोऽनुपसर्गाद्" ५।१।३०। इति ये यम्यम्; उपसर्गात्तु घ्यण् एव आयाम्यम् प्रयाम्यम् । 'वाचंयमो व्रते" ५।१।११५। इति निपातनात् खे वाचंयमो[12] व्रती, अन्यत्र अणि वाग्यामः । क्तयोः "यरमि–" ४।२।५५। इत्यन्तलोपे यतः यतवान् । "प्राच्च यम-यसः" ५।२।५२। इति घिनणि प्रयम-

---

१ कुटिलं क्रामतीत्येवशीलः चङ्क्रमणः ॥ २ परिवेषणमिह भोजनविषयि परिवेषणं सूर्यादिवेष्टनं च गृह्यते, तद्भिन्नं अपरिवेष्टनम् ॥ ३ परिवेषणक्रियया तान् व्याप्नोतीत्यर्थः ॥ ४ परिणयतीत्यर्थः, अत्र "उपाद्यमः स्वकरणे" (पा० १।३।५६।) इति सूत्रस्य **भाष्ये** 'इह कस्माद् न भवति स्वं शाटकान्तमुपयच्छति ? अस्वं यदा स्वं करोति तदा भवितव्यमेव ।' इदं भाष्योक्तम्–अस्वस्य स्वत्वेन करणं **वृत्तिकार-शिवस्वामिभ्या** प्रसिद्धिवशात् पाणिग्रहणविषयं संस्कृतम् । तथा च **काशिकायाम्**–१।३।५६। 'पाणिग्रहणविशिष्टमिह स्वकरण गृह्यते न स्वकरणमात्रमिति । **माधवीयधातुवृत्तावपि** "सामान्येनापि "वार्तिककारेण पाणिग्रहणविशिष्ट स्वकरणं **शिवस्वामि-जयादित्यावूचतु**, प्रसिद्धत्वात् 'उपायंस्त नती' इत्यादिप्रयोगस्तु साधर्म्यात् । पाणिग्रहणविशिष्ट स्वकरणमिति मते वेदयामुपयच्छते इत्यादि न भवति । **भाष्यकारेण** तु स्वकरणमात्रे विशिष्टे स्थित इत्युक्तम् । **भट्टिकाव्ये** च 'शस्त्राण्युपायंस्त विजित्वराणि' इति सामान्येन प्रयुज्यते"–पृ० १९६ धातु–९६४। ५ दीर्घो भवति व्याप्रियत इति वाऽर्थ ॥ ६ दीर्घीकरोतीत्यर्थ. । कथं तर्हि आयच्छति पादौ देवदत्तस्य इत्यत्र स्वाङ्गत्वात् पादयोः परस्मैपदम् ? उच्यते, अत्र "अविकारोऽद्रव मूर्तं, प्राणिस्थ स्वाङ्गमुच्यते ।" इत्यादिलक्षणस्य पारिभाषिकस्वाङ्गस्य प्रतिपत्तिर्मा भूदिति सूत्रेऽसमस्तनिर्देश· ॥ ७ ननु "आङो यम-हनः–" ३।३।८६। इत्यनेनैव आत्मनेपदे सिद्धे किमर्थं इह आङ्ग्रहणम् ? इहाङो ग्रहणमस्वाङ्गकर्मकार्थम् ॥ ८ यदा तु कर्त्रभिप्रायत्वं पदान्तरेण प्रतीयते तदा "**पदान्तरगम्ये वा**" ३।३।९९। इति स्वान् व्रीहीन् संयच्छतीत्यपि भवति ॥ ९ कश्चिद् 'यम परिवेषणे' इति पठति तन्मताभिप्रायेण न ह्रस्व, स्वमते तु भवत्येव आयमयते इत्यादि ॥ १० परेण प्रच्छाद्यमानस्य दोषस्य आविष्करणं सूचनम् ॥ ११ अत्रापि उद्वाहे एवेतीच्छन्त्येके ॥ १२ वाचं यच्छति नियमयति वेति विग्रह ॥

णशीलः प्रयामी, आयामी। "सं-नि-व्युपाद्यमः" ५।३।२५। इति वा अलि संयमः संयामः, नियमः नियामः, वियमः वियामः, उपयमः उपयामः। "नवा क्वण–" ५।३।४८। इत्यनुपसर्गाद्वा अलि यमः यामः। क्तौ यतिः। यपि "वा मः" ४।२।५७। इति वा अन्तलोपे प्रयम्य प्रयत्य। उदित्त्वात् क्त्वि वेटि यत्वा यमित्वा। ऊदित्त्वं नेच्छन्त्येके। "तिक्कृतौ नाम्नि" ५।१।७१। इत्यकटि यमकम्। उणादौ "यम्यजि–" (उ० २८८) इति उने यमुना। "हु-या-मा–" (उ०४५१) इति त्रे यन्त्रम्। "मृदि-कन्दि–" (उ० ४६५) इति अले यमलम्॥

**३८७ स्यमू शब्दे**। स्यमति। "जॄ-भ्रम–" ४।१।२६। इति वैत्वे स्येमतुः सस्यमतुः, स्येमुः सस्यमुः। "व्ये-स्यमोर्यङि" ४।१।८५। इति य्वृति सेसिम्यते। "अमोऽकम्यमि-चमः" ४।२।२६। इति णौ ह्रस्वे स्यमयति। इटि स्यमिता, स्यमितुम्। ऊदित्त्वात् क्त्वि वेट्, स्यान्त्वा स्यमित्वा। वेट्त्वात् क्तयोर्नेट्, स्यान्तः स्यान्तवान्। उणादौ "स्यमेः सीम् च" (उ० ४४) इति इके सीमिको वृक्षः। "स्यमि-कषि–" (उ०४६) इति ईके स्यमीको[1] वृक्षः; स्यमेः सिमादेशे च सिमीकः[2] सूक्ष्मकृमिः॥

**३८८ णमं प्रह्वत्वे**। प्रह्वत्वं नम्रत्वम्। "पाठे–" २।३।९७। इति णस्य नत्वे नमति। णोपदेशत्वाद् "अदुरुपसर्गा–" २।३।७७। इति णत्वे प्रणमति। कर्मकर्तरि "एकधातौ–" ३।४।८६। इत्यात्मनेपदे नमते दण्डः स्वयमेव, अनंस्त दण्डः[3] स्वयमेव, अत्र "भूषार्थ–" ३।४।९३। इति प्रतिषेधात् क्यो ञिश्च न भवति। कर्मणि क्ये नम्यते। ननाम नेमतुः नेमुः। "यमि-रमि-नम्यातः सोऽन्तश्च" ४।४।८६। अनंसीत् अनसिष्टाम्। "ज्वल-ह्वल–" ४।२।३२। इत्यनुपसर्गस्य णौ वा ह्रस्वे नमयति नामयति; सोपसर्गस्य तु "अमोऽकम्यमि–" ४।२।२६। इति नित्यं ह्रस्वे प्रणमयति, उन्नमयति। यङि नन्नम्यते। यङ्लुपि नन्नमीति नन्नन्ति। अनुस्वारेत्त्वाद् नेट्, नन्ता नन्तुम्। क्तयोः "यमि रमि–" ४।२।५५। इत्यन्तलोपे नतः नतवान्। "आसु-यु-वपि–" ५।१।२०। इत्याङ्पूर्वाद् घ्यणि आनाम्यः। "रम्यजस–" ५।२।७९। इति रे नमनशीलो नम्रः। उणादौ "नमेर्नाकु च" (उ० ७२०) इति उः, नाकुर्ऋषिः[4]। "नमेः प् च" (उ० ८६२) इति तृः, नप्ता। "सात्मन्नात्मन्–" (उ० ९१६) इति निपातनात् मनि नाम। "अस्" (उ० ९५२) इति असि नमः॥

**३८९ षम ३९० ष्टम वैक्लव्ये**। वैक्लव्यं कातरत्वम्। "षः सो–" २।३।९८। इति षस्य सत्वे समति। ससाम। इटि समिता, समितुम्। "अमोऽकम्यमि–" ४।२।२६। इति णिगि ह्रस्वे समयति। अचि समः, "निर्दुः-सु-वेः–" २।३।५६। इति षत्वे विषमः। षोपदेशत्वात् "णि-स्तोरेवा–" २।३।३७। इति षत्वे सिषमयिषति॥ **ष्टम**। "षः सो–" २।३।९८। इति षस्य सत्वे स्तमति। तस्ताम।

---

१ स्यमीकं जलम्, स्यमीकः कृमिजातिः॥ २ केचित् स्यमे सिम् इति ह्रस्वोपान्त्यमादेशं प्रत्ययस्य च दीर्घत्वमिच्छन्ति तन्मतसङ्ग्रहायेदम्॥ ३ ननु 'नम्' अकर्मकः तत् कथमस्य कर्मस्थक्रियत्वम्? उच्यते, अन्तर्भूतण्यर्थत्वेन सकर्मकत्वाद् दण्डस्य कर्मकर्तृत्वम्। यत्र तु ण्यर्थो नास्ति तत्र कर्तृतैव, यथा नमति शाखा वातेन॥ ४ अनमेर्नेच्छन्त्येके॥

इटि स्तमिता, स्तमितुम्। णौ स्तमयति। षोपदेशत्वात् तिष्टमयिषति। अचि स्तमः। **स्तन-ध्वन-स्वन-स्यमू-षम-ष्टमान्** षडप्यदन्तान् **सभ्या** अभ्युपागमन्॥

**३९१ अम शब्द-भक्त्योः**। भक्तिर्भजनम्। अमति। आम आमतुः आमुः। "अमोऽकम्यमि–" ४।२।२६। इत्यत्र अमो वर्जनाद् णिगि ह्रस्वाभावे आमयति। "मोऽकमि–" ४।३।५५। इति ञ्णिति कृतिस्वृद्धिनिषेधाद् णके अमकः। घञि अमः। आम इति त्वाङ्पूर्वस्य घञि, **अमण् रोगे** इत्यस्य वा णिचि अलि। सेट्त्वात् अमिता, अमितुम्। "श्वस-जप–" ४।४।७५। इति क्तयोर्वा नेट्, अभ्यान्तः अभ्यमितः। "जि-इण्-दृ-क्षि–"५।२।७२। इति इनि अभ्यमनशीलो अभ्यमी। उणादौ "दम्यमि–" (उ० २००) इति ते अन्तः। "चि-जि-शु–" (उ० ३९२) इति रे दीर्घे च आम्रः। "हु-या-मा–" (उ० ४५१) इति त्रे अन्त्रम्। "वृग्-नक्षि–" (उ० ४५६) इति अत्रे अमत्रम्। "वन्धि-वहि–" (उ० ४५९) इति इत्रे अमित्रः। "पा-दा-चमि–" (उ० ५२७) इति शे अंशः। "मा-वा-वद्यमि–" (उ० ५६४) इति से अंसः। "अमेर्भ-हौ चान्तौ" (उ० ९६२) इति असि अम्भः, अंहः॥

**३९२ अम ३९३ द्रम ३९४ हम्म ३९५ मीमृ ३९६ गम्लं गतौ**। अमिरुदाहृत एव। अर्थभेदार्थं तु पुनः पाठः॥ **द्रम**। द्रमति। दद्राम। "व्यञ्जनादेः–" ४।३।४७। इति वा वृद्धेः "न श्वि-जागृ–" ४।३।४९। इति प्रतिषेधात् अद्रमीत्। "द्रम-क्रमो यङः" ५।२।४६। इति अने दन्द्रमणशीलो दन्द्रमणः। इटि द्रमिता, द्रमितुम्। उणादौ "कल्यनि–" (उ०४८१) इति इले द्रमिलः॥ **हम्म**। "हम्मतिः सुराष्ट्रेषु" [आ०१, ५] इति **भाष्याद्** द्विर्बद्धो मकारः। हम्मति। जहम्म। इटि हम्मिता, हम्मितुम्। यङि जहम्म्यते, अत्र "मुरतोऽनुनासिकस्य" ४।१।५१। इत्यत्र अनुनासिकजातिपरिग्रहादतोऽनुनासिकाद् नत्वे पूर्वस्य मुरन्तः। **केचित्तु** म्वागमं नेच्छन्ति, तन्मते जाहम्म्यते॥ **मीमृ**। मीमति। मिमीम। इटि मीमिता, मीमितुम्। यङि मेमीम्यते। ऋदित्त्वाद् णौ ङे "उपान्त्यस्य–" ४।२।३५। इति ह्रस्वाभावे अमिमीमत्। अयं शब्देऽपीत्येके॥

**३९६ गम्लं**। "गम्–इषद्–" ४।२।१०६। इति छे गच्छति। "समो गमृच्छि–" ३।३।८४। इत्यात्मनेपदे सङ्गच्छते[1]। जगाम। "गम-हन–" ४।२।४४। इत्युपान्त्यलुकि जग्मतुः। ऌदित्त्वाद् "ऌदिद्-द्युतादि–"३।४।६४। इत्यङि अगमत्। अनुस्वारेत्त्वाद् नेट् गन्ता, गन्तुम्। "गमोऽनात्मने" ४।४।५१। इतीटि गमिष्यति। "स्कृ-अस्-वृ–" ४।४।८१। इति परोक्षायामिटि जग्मिव जग्मिम; "सृजि-दृशि–" ४।४।७८। इति थवि[2] वा नेटि जगन्थ, जगमिथ। "गम-हन–" ४।२।४४। इति क्वसौ वेटि जग्मिवान् जगन्वान्। "गमो वा" ४।३।३७। इति सिजा-ऽऽशिषोरात्मने वा किस्वम्, समगत, अत्र "यमि-रमि–" ४।२।५५। इत्यन्तलोपः; समगंस्त, संगसीष्ट संगंसीष्ट। गत्यर्थाद्वा कर्तरि

१ कर्मणि असति इदम्। कर्मणि सति तु सङ्गच्छति सुहृदम्॥ २ **थवि वेटि** ज॰ सपा१ वा०॥
३ "**धुड्ह्रस्वा–**" ४।३।७०। इति सिज्लुक् च॥ ४ "**गत्यर्थाऽकर्मक-पिब-भुजेः**" ५।१।११। इति सूत्रेण॥

क्ते गतो ग्रामम्, पक्षे कर्मणि गतो ग्रामः। "नाम्नो गमः खड्डौ च विहायसस्तु विहः" ५।१।१३१। प्रवङ्गः प्रवगः, विहङ्गमः विहङ्गः विहगः, उरगः, पृषोदरादित्वात् सलोपः। "शृ-कम–"५।२।४०। इति उकणि गामुकः। निपातनात् गत्वरः! "दिद्युद्दद्–" ५।२।८३। इति क्विपि जगत्। "युवर्ण–" ५।३।२८। इति अलि गमः। "न ख्या–"२।३।९०। इति प्रतिषेधात् "स्वरात्" २।३।८५।इति "णेर्वा" २।३।८८। इति च णत्वाभावे प्रगमनम्, प्रगमना। "गोचर–" ५।३।१३१। इति घे निगच्छन्ति तत्र तेन वा निगमः पुटभेदन शास्त्रं च। "पुन्नाम्नि–" ५।३।१३०। इति बाहुलकाद् घे आगमः। उणादौ "गम्यमि–" (उ०९२) इति गे गङ्गा। "विदन–" (उ०२७५) इति निपातनात् अने गगनम्। "जि-भृ-सृ–" (उ० ४४७) इति त्रटि वृद्धौ च गान्त्रं[1] मनः। "गमेरा च" (उ० ४५३) इति त्रे गात्रम्। "कृसि-कम्यमि–" (उ० ७७३) इति तुनि आगन्तुः। "द्यु-गमिभ्या डोः" (उ० ८६७) गौः। "गमेरिन्" (उ० ९१९) गमी, "आङश्च णित्" (उ० ९२०) आगामी, गम्यादित्वाद्[2] भविष्यति साधू। "गमेर्डिद् द्वे च" (उ० ८८५) इति कर्तरि जगत्, जगती॥

**अथ यान्ता अष्टौ सेटश्च—**

**३९७ हयँ ३९८ हर्यं क्रान्तौ च।** चकाराद् गतौ[3]। हयति। जहाय। "व्यञ्जनादेः–" ४।३।४७। इति वा वृद्धेः "न श्वि-जागृ–" ४।३।४९। इति प्रतिषेधात् अहयीत्। इटि हयिता, हयितुम्। अचि हयः, गौरादित्वाद् ङ्याम् हयी। क्विपि "य्वोः–" ४।४।१२१। इति यलुक्यपि "अतः" ४।३।८२। इत्यल्लुगित्येके, सुपूर्वस्य सुर्ट्। क्तौ "ढस्तड्ढे" १।३।४२। इति ढलुकि पूर्वदीर्घे च सूढिः, केवलस्य तु ढिः। उणादौ "ऋ-पृ-नहि–" (उ० ५५७) इति उषे हयुषा ओषधिः॥

हर्य। हर्यति। जहर्य। हर्यिता। हर्यितुम्। मनि सुहर्मा। वनि सुहर्वा। क्विपि विचि वा सुहः॥

**३९९ मव्य बन्धने।** मव्यति। ममव्य। मव्यतीति[4] क्विप् "य्वोः–" ४।४।१२१। इति यलुक्, "अनुनासिके च–" ४।१।१०८। इति वस्य ऊट्, ततः "ऊटा" १।२।१३। इत्यौत्वे मौः, लाक्षणिकत्वाच्च "मव्यवि–" ४।१।१०९। इत्युपान्त्येन सह ऊडभावः। मव्यितः मव्यितवान्। क्ते सेट्त्वात् "क्तेटो–" ५।३।१०६। इति अः, मव्या। तिकि मौतिः[5]॥

**४०० सूक्ष्यें ४०१ ईक्ष्यें ४०२ ईर्ष्यें ईर्ष्यार्थाः।** सूक्ष्र्य दन्त्यादिः[6]। ईर्ष्या कामजमसहनम्। सूक्ष्र्यति। सुसूक्ष्र्य। सूक्ष्र्यिता। मनि यलुकि सुसूक्ष्र्मा। वनि सुसूक्ष्र्वा। "क्रुद्-द्रुहेर्ष्या–२।२।२७। इति सम्प्रदानत्वे चतुर्थ्याम् चैत्राय सूक्ष्र्यति। क्विपि यलुकि सौ "पदस्य" २।१।८९। इति षलोपे "रात्सः" २।१।९०। इति नियमात् लुगभावे सूर्क्[7]। क्तयोः सूर्क्ष्यित, सूर्क्ष्यितवान्॥ ईक्ष्र्य। ईक्ष्र्यति।

१ कथं तर्हि गन्त्री? 'गम्' धातोः "त्रट्" (उ०४४६) इति त्रटि भविष्यति॥ २ "वन्स्यति गम्यादि" ५।३।५। इति सूत्रेण॥ ३ हय गतौ इत्येके, भक्ति-शब्दयोरपीत्यन्ये। हर्य गति-कान्त्यो इत्यपरे॥ ४ प्रथमैकवचनम। ५ नि क्विपि सं१ मु० प्र० तपा०॥ ६ अत्र दन्त्यादित्वाद् न षत्वम् इति चन्द्रप्रभा। अथ भाव–"नास्यन्तस्थाकवर्गान् पदान्तः कृतस्य सः शिड्नान्तरेऽपि" २।३।१५। अत्र सूत्रे इत्येति पाठात् इह च मूलस्याकृतत्वान् षत्वम्। केचित्तु "सुपूर्ष्य" इति मन्यन्ते॥ ७ अत्र क्विपि यलुकि च

"गुरुनाम्यादेः–" ३।४।४८। इत्यामादेशे ईर्क्ष्याञ्चकार। मनि "य्वोः–" ४।४।१२१। इति यलुकि ईर्क्ष्मा। वनि ईर्क्ष्वा। ईर्क्ष्यिता। मैत्रायेर्क्ष्यति॥ **ईर्ष्य**। ईर्ष्यति। ईर्ष्याञ्चकार। छात्रायेर्ष्यते। अत्र छात्रस्य सम्प्रदानत्वेऽकर्मकलक्षणं "तत्साप्यानाप्यात्–" ३।३।२१। इति भावे आत्मनेपदम्। ईर्ष्यिता। क्ते सेट्त्वात् ईर्ष्या। "यिः सन्वेर्ष्यः" ४।१।११। इति येः सनो वा द्वित्वे ईर्ष्यियिषति ईर्ष्यिषिषति। णौ डे येर्द्वित्वे ऐर्ष्यियत्। उणादौ "लस्जीर्ष्यिशलेरालुः" (उ० ८२२) ईर्ष्यालुः॥

**४०३ शुच्यै ४०४ चुच्यै अभिषवे**। **शुच्यै** तालव्यादि। द्रवेण अद्रवाणा परिवासनम् अभिषवः[1]। "स्नानम्" इति **चान्द्राः**। शुच्यति। शुशुच्य। मनि यलुकि उपान्त्यस्य गुणे सुशोच्मा। वनि सुशोच्वा। शुच्यिता। विचि सुशोक्। ऐदित्त्वात् क्तयोर्नेट्, शुक्तः शुक्तवान्। तिकि शुक्ति.। क्तेऽनिट्त्वाद् अप्रत्ययाप्राप्तौ "स्त्रिया क्तिः" ५।३।९१। शुक्तिः॥ **चुच्यै**। चुच्यति। चुचुच्य। चुच्यिता। ऐदित्त्वात् क्तयोर्नेट् चुक्तः चुक्तवान्॥

**अथ रान्ता अष्टौ सेटश्च—**

**४०५ त्सर छद्मगतौ**–छद्मप्रकारे। तादिरयम्। त्सरति। तत्सार। "वद-व्रज–" ४।३।४८। इति वृद्धौ अत्सारीत्। उणादौ "भृ-मृ-तॄ-त्सरि–" (उ० ७१६) इति उ. त्सर्यते हस्तेन प्रच्छाद्यते इति त्सरुर्मुष्टिः॥ "त्सद्म" इत्यपि **कौशिकः** त्सद्मति॥

**४०६ क्मर हूर्छने**। कौटिल्ये। क्मरति। चक्मार। "वद-व्रज–" ४।३।४८। इति वृद्धौ अक्मारीत्। अचि क्मर॥

**४०७ अभ्र ४०८ वभ्र ४०९ मभ्र गतौ**। अभ्रति। "अनातो नश्चा–" ४।१।६९। इत्यात्वे ने च आनभ्र। क्ये अभ्र्यते, अत्र सरूपान्तस्थाया अभावे "व्यञ्जनात् पञ्चमा–" १।३।४७। इति रो वा लुग् न भवति। अभ्रिता। अचि अभ्रम्॥ **वभ्र**। वभ्रति। वभ्रिता॥ **मभ्र**। मभ्रति। मभ्रिता॥

**४१० चर भक्षणे च**। चकाराद् गतौ। चरति। "क्रियाव्यतिहारे–" ३।३।२३। गत्यर्थप्रतिषेधाद् गतौ नात्मनेपदम्, व्यतिचरन्ति ग्रामम्; भक्षणे तु "क्रियाव्यतिहारेऽगति–" ३।३।२३। इत्यात्मनेपदम्, व्यतिचरन्ते[2] भक्ष्यम्। "उदश्चरः–" ३।३।३१। इत्यात्मनेपदे गेहमुच्चरते, उल्लङ्घयतीत्यर्थः, साप्यादित्येव ध्वनिरुच्चरति[3]। "समस्तृतीयया[4]" ३।३।३२। अश्वेन सञ्चरते। "वद-व्रज–" ४।३।४८।

---

सौ पदान्तसंयोगादित्वात् "**संयोगस्यादौ स्कोर्लुक्**" २।१।८८। इति क्लुकि "**धुटस्तृतीयः**" २।१।७६। इति षस्य डत्वे प्रथमत्वे च सूट् इति **केचित्**॥

१ अवयवानां शिथिलीकरणम् सुराया सन्धानं वाऽभिषव, तथा सोममभिषुणोतीत्यादौ दर्शनात्, सुराप्रकरणे च 'सन्धान स्यादभिषव.' इति **अमरोक्ते.**। 'स्नानम्' इत्यपि **चान्द्राः**, 'भवेदभिषव स्नाने मद्यसन्धानयोः' इति **मेदिनी**कोषे च॥ २ °रन्ते संपा१॥ ३ ऊर्ध्वं गच्छति इत्यर्थः॥ ४ धातोस्तृतीयया योगाभावात् चरतेः तृतीयान्तेन योगे सति इति व्याख्येयम्। तृतीययेति किम्? "उभौ लोकौ सञ्चरसि इमं चामु च देवल।" नन्वत्र विद्यया तपसा वेत्यर्थादिह तृतीयान्त गम्यते तथापि सञ्चरसि इत्यत्र कथ नात्मनेपदम्? उच्यते, तृतीययेति सहयोगे

इति वृद्धौ अचारीत्। "गॄ-लुप–" ३।४।१२। इति यङि गर्हितं चरति चञ्चूर्यते, अत्र "ति चोपान्त्या–" ४।१।५४। इत्यत उत्वम् "चर-फलाम्" ४।१।५३। इति पूर्वस्य मुरन्तः। यङ्लुचि चञ्चुरः। "चरेराङस्त्वगुरौ ५।१।३१। इति ये चर्यम्, आचर्यं तप.; आश्चर्यमद्भुतम् वर्चस्कादित्वात् साधुः; गुरौ त्वाचार्यः। णके परिचारक.। अचि चरः, गौरादित्वाद् ङ्याम् चरी। प्रज्ञाद्यणि चर एव चारः। पटन्तश्चरन्तीति पटच्चराश्चौरा.। जीर्णवस्त्रं तु "भूतपूर्वे–" ७।२।७८। प्चरटि भूतपूर्वं पट इवाचरत् पटच्चरम्। "तिक्कृतौ नाम्नि" ५।१।७१। इति अकटि चरकः। "चरेष्टः" ५।१।१३८। कुरुचरः, कुरुचरी। "भिक्षा-सेना-ऽऽदायात्" ५।१।१३९। भिक्षा चरति भिक्षाचरः, सेना चरति–परीक्षते सेनाचरः[३], आदीयते इत्यादायः–वागुरा तेन आदायं वा चरति आदायचरः। "ग्रहादिभ्यो–" ५।१।५३। इति णिनि व्यभिचारी। व्यभिचरी गणनिपातनात् पक्षे ह्रस्वः। "सब्रह्मचारी" ३।२।१५०। इति निपातनात् समानं ब्रह्मव्रतं समाने वा ब्रह्मणि–गुरुकुले व्रतं चरतीत्येवंशील. सब्रह्मचारी, अत्र समानस्य सभावो व्रतशब्दलोपश्च। "भ्राज्यलङ्कृग्–" ५।२।२८। इति इष्णौ चरणशीलश्चरिष्णुः। "समत्यपा–" ५।२।६२। इति घिनणि सञ्चारी अतिचारी अपचारी अभिचारी व्यभिचारी। "लू-धू-सू-खन–" ५।२।८७। इति इत्रे चरित्रम्। घञि उच्चारः। चरिता, चरितुम्। क्तौ तिकि वा चूर्तिः ब्रह्मचूर्तिः। "समज–" ५।३।९९। इति क्यपि चर्या। "परे. सृ-चरेर्य." ५।३।१०२। परिचर्या। "गोचर-सञ्चर–" ५।३।१३१। इति निपातनाद् घञपवादे घे गोचर. सञ्चरः। "चराचर–" ४।१।१३। इति निपातनादचि चराचर[११]। उणादौ "तॄ-कॄ-शॄ–" (उ० १८७) इति अणे चरणः पादः। "सृ-पॄ-प्रथि–" (उ० ३४७) इति अमे चरमः। "भू-गॄ–" (उ० ४६०) इति णिति इत्रे चारित्रम्; भावे करणे कर्मणि अधिकरणे च साधुः। "कॄ-शॄ-कुटि–" (उ० ६१९) इति वा णित् इ', चरि' पशुः प्राकाराग्रं च, चारिः पशुभक्ष्यम्। "मि-वहि–" (उ० ७२६) इति वा णित् उ', चरुः[१२] स्थाली,

तृतीया साक्षाद्योगप्रतिपत्त्यर्थम्, न गम्यमाने इति, अन्यथा करणमन्तरेण क्रियासिद्धेरभावाद् व्यावृत्तिरेव न घटते, नहि काचित्क्रिया करणमन्तरेण भवतीति। सह धनेन देवदत्त सञ्चरतीत्यत्र तु विद्यमानार्थताया चरतेस्तृतीयान्तेन योगाभाव एव, तत्र हि तृतीयान्त कर्त्रैव युक्त न सञ्चरतिना, नहि तद्धन चैत्रेण सह सञ्चरतीति ॥

१ अत्र "अङे हि-हनो ह्रो घः पूर्वात्" ४।१।३४। इत्यत' पूर्वादित्यधिकाराद् द्वित्वे सति 'ति चोपान्त्यातोऽनोदुः" ४।१।५४। इति पूर्वमुत्वम्। चर्त्तिरित्यत्र द्वित्वाऽसम्भवाद् द्वित्वाभावेपि दृश्यम् ॥ २ कुरुषु चरति इति अधिकरण एव प्रत्ययः,अनाधारे तु "भिक्षा-सेना-ऽऽदायात्" ५।१।१३९। इति आरम्भ। आधारादित्येव कुरुश्चरति, अत्र न्यासकारः 'प्राप्यात् कर्मण क्वचिदण् भवतीति यदि अण् आनीयते तदा समासोऽपि भवति, तथा च कुरुचार पञ्चालचारः इत्यपि' इति आह ॥ ३ सेनया वा चरति सेनाचर इत्यपि विग्रह ॥ ४ गृहीत्वा इत्यर्थ, द्वितीयविग्रहपक्षे आदान छृत्वा चरतीत्यर्थ, क्रियादायेत्यविवक्षैव तत्र ॥ ५ एतद्वचनमेव प्रमाण गणपाठेऽदर्शनात् ॥ ६ घञि चारः। च° सपा१ ॥ ७ चरण चर्या, चरन्ति अनयेति वा ॥ ८ परिचरण परिचर्या, परिचरन्ति अनयेति वा। केचित्तु भावे एव मन्यन्ते, यदाह वररुचिः "परिचर्यापरिसर्यामृगयाटाट्यानामुपसङ्ख्यानम्" इति पा० ३।३।१०१। सूत्रस्य वार्तिके ॥ ९ गावश्चरन्ति अस्मिन्निति गोचरो देश, व्युत्पत्तिमात्र चेदम्, विषयस्य तु सञ्ज्ञा, तेन 'अनेकान्तात्मक वस्तु गोचरः सर्वसंविदाम्' (न्यायावतार) इत्यादि सिध्येत् ॥ १० सञ्चरन्तेऽनेन इति सञ्चर. ॥ ११ चरतीति चराचर, पक्षे चर ॥ १२ चरन्ति अस्माद् देव-पितृ-भूतानि इति भीमादित्वादपादाने साधु –उणादि ७२६ सूत्रवृत्तौ।

चारुः [शोभनम् "मन्" (उ० ९११)। इति] मनि चर्म ॥

**४११ धोरृ गतेश्चातुर्ये**। धोरति। दुधोर। क्ये धोर्यते। ऋदित्त्वाद् न ह्रस्वः, अदुधोरत्। धोरिता। क्ते धोरितम्। "नन्द्यादिभ्यो–"५।१।५२। इत्यने आधोरणो हस्तिपकः। व्यस्तनिर्देश उत्तरार्थः ॥

**४१२ खोरृ प्रतीघाते**। गतेरित्यनुवृत्तेर्गतिप्रतीघाते। खोरति। चुखोर। क्ये खोर्यते। खोरिता। ऋदित्त्वाद् न ह्रस्वः, अचुखोरत्। अचि खोरा अधमस्त्री। णके खोरिका पात्री ॥

अथ लान्ताश्चत्वारिंशत् सेटश्च—

**४१३ दल ४१४ ञिफला विशरणे**। दलति। ददाल देल्तुः देलुः। "वद-व्रज"–४।३।४८। इति वृद्धौ अदालीत्। **केचित्** एनं घटादिं मन्यन्ते, णौ दलयति। दलिता, दलितुम्। अचि दलम्। उणादौ "दलि-वलि–" (उ० ३०४) इति अपे दलपः प्रहरणम्। "दलेरीपो दिल् च" (उ० ३१०) दिलीपः। "गृ-दृ-रमि–" (उ० ३२७) इति भे दल्भ ऋषिः। **दलण् विदारणे** दालयति ॥ **ञिफला**। फलति। प्रतिफलति, उत्फलति। पफाल। "तॄ-त्रप–" ४।१।२५। इत्येत्वे फेल्तुः फेलुः। "वद-व्रज–" ४।३।४८। इति वृद्धौ अफालीत्। यङि "चर-फलाम्" ४।१।५३। इति म्वागमे "ति चोपान्त्य–" ४।१।५४। इत्युत्वे च पम्फुल्यते। यङ्लुपि पम्फुलीति पम्फुलीषि, "द्व्युक्तोपान्त्यस्य–" ४।३।१४। इति गुणप्रतिषेधः। पम्फुल्ति पम्फुल्षि, अत्र "ति चोपान्त्य–" ४।१।५४॥ इत्यत्राऽनोदिति वचनाद् गुणाभावः। तसि पम्फुल्तः। अचि फलम्, सम्फलः। यङच्यचि पम्फुलः। "तिक्कृतौ नाम्नि" ५।१।७१। इति अकटि फलकम्। "अनुपसर्गाः क्षीबोल्लाघ–" ४।२।८०। इति क्ते निपातनात् फुल्लः फुल्लमनेन, उत्फुल्लः सम्फुल्लः। सोपसर्गस्य प्रफुल्ता लता, अत्र ञीत्त्वात् "ज्ञानेच्छाऽर्चा–" ५।२।९२। इति वर्तमाने क्तः। क्तवतौ निपातनाभावात् फुल्तवान्। ये तु क्तवतावपीच्छन्ति तन्मते फुल्लवान्। आदित्त्वाद् "नवा भावाऽऽरम्भे" ४।४।७२। इति क्तयोर्वा नेटि प्रफुलितमनेन प्रफुल्तमनेन, प्रफुलितः प्रफुल्तः। उणादौ "दृ-कृ-नृ–" (उ० २७) इति अके

१ 'गतिचातुर्ये' इति समस्त न कृत्वा व्यस्तनिर्देश इति भावः ॥ २ **दलण् विदारणे,** दल्भ ऋषिर्वल्कलं विदारण च इति **उणादिवृत्तौ,** तथापि उणादिसूत्रे **"गृ-दृ-रमि-हनि-जन्यर्त्ति-दलिभ्यो भः"** (उ०३२७) इत्यत्र दलि इति सामान्येन पठनात् अत्रोदाहरणाच्च उभयोरपि ग्रहणम् ॥ ३ **"तॄ-त्रप-फल-भजाम्"** ४।१।२५। इत्यत्र **फल ञिफला** इत्युभयोरपि ग्रहणार्थं बहुवचनम् अन्यथा 'निरनुबन्धग्रहणे न सानुबन्धकस्य' इति न्यायाद् ञिफला इत्यस्य न स्यात् ॥ ४ कथं तर्हि प्रफुल्ल ? इति, **फुल्ल विकसने** इत्यस्माद् धातोः केन अचा वा भाव्यम्। यद्वा **"अनुपसर्गाः क्षीबोल्लाघ-"** ४।२।८०। इत्यत्र बहुवचनविधानात् 'समासान्तागमसञ्ज्ञाज्ञापकगणनञ्निर्दिष्टान्यनित्यानि' इति न्यायाच्च यथा फुल्लिः। यद्वा प्रफुल्ल इत्यत्र य. प्रशब्दः स क्रियान्तरयोगात् फुल्लि प्रत्यनुपसर्ग एव, 'यत्क्रियायुक्ताः प्रादयस्तं प्रत्येवोपसर्गसञ्ज्ञा' इति वचनात् प्रगतः फुल्लः प्रफुल्लः इति प्रादिसमासः ॥ ५ इदं **वामनस्य** मतम्, तथा च तद्वचः–"क्तवत्वन्तस्याप्येतल्लत्वमिष्यते" इति पा० ८-२-५५ सूत्रवृत्तौ ॥ ६ **क्तयोर्वेटि** संपा१ मा० ॥

फलेकः । "कीचक-पेचक–" (उ० ३३) इति निपातनात् फलेहकः । "फलेर्गोऽन्तश्च" (उ० २९१) इति उने फल्गुनः फल्गुनी । "कमि-वमि–" (उ० ६१८) इति णित् इः, फालिर्दलम् । "फलि-वल्यमेर्गुः" (उ० ७५८) फल्गुः । **फल निष्पत्तौ** फलित¹ ॥

**४१५ मील ४१६ श्मील ४१७ स्मील ४१८ क्ष्मील निमेषणे** । निमेषणं सङ्कोचः । मीलति । मिमील । णौ डे "भ्राज-भास–" ४।२।३६। इति वा ह्रस्वे अमीमिलत् अमिमीलत् । मीलिता । क्ते मीलितः । क्ते सेट्त्वात् प्रमीला तन्द्रा । अनटि मीलनम् । **मिलत् श्लेषणे** मिलति । अनटि मेलनम् ॥ **श्मील** । तालव्यादि. । श्मीलति । श्मीलिता ॥ **स्मील** । दन्त्यादिः । स्मीलति । स्मीलिता ॥ **क्ष्मील** । क्ष्मीलति । क्ष्मीलिता ॥

**४१९ पील प्रतिष्टम्भे** । प्रतिष्टम्भो रोपणम्³ । पीलति । पिपील । णौ डे अपीपिलत् । पीलिता । "नाम्युपान्त्य–" ५।१।५४। इति के पीला । अपिपूर्वात् णके अपिपीलकः पिपीलिका, पृषोदरादित्वाद् अपेः पिः ॥

**४२० णील वर्णे** । वर्णोपलक्षितायां क्रियायाम् । यथा–"श्वेतं नीलति मरकतकान्त्या" [ ]। "पाठे–"२।३।९७। इति णस्य नत्वे नीलति । णोपदेशत्वाद् "अदुरुपसर्गा–" २।३।७७। इति णत्वे प्रणीलति । निनील । नीलिता । अचि नीलम्, प्रणीलम् । "नीलात् प्राण्यौषध्योः" २।४।२७। इति ङ्याम् नीली⁴ गौः ओषधिश्च, अन्यत्र नीला शाटी । "क्ताच्च–" २।४।२८। इति वा ङ्याम् नीली नीला । उणादौ "प्री-कै-पै-नीलेरङ्गुक्" (उ० ७६१) नीलङ्गुः कृमिः ॥

**४२१ शील समाधौ** । समाधिः ऐकाग्र्यम् । तालव्यादिः । शीलति, परिशीलति । शिशील । णिगि शीलयति । "ज्ञानेच्छा-ऽर्चा–" ५।२।९२। इति सत्यर्थे क्ते अनुशीलितः । "शीलि-कामि–" ५।१।७३। इति णे धर्मशीलः⁵ । घञि शीलम् । उणादौ "कोरदूषा-ऽऽटरूष–" (उ० ५६१) इति निपातनात् ऊषे शैलूषः⁶ शिलूषः शिलूषापत्यं वा । **शीलण् उपधारणे** शीलयति ॥

**४२२ कील बन्धे** । कीलति । चिकील । कीलिता । णिगि कीलयति । "नाम्युपान्त्य–" ५।१।५४। इति के कीलः । घञि कील्यतेऽनेनास्माद् वा कीलः, कपि कीलकः । क्ते सेट्त्वात् "क्तेटो–" ५।३।१०६। इति अः, कीला । क्ते उत्कीलितः । उणादौ "ऋ-कृ-मृ–" (उ०४७५) इति आले कीलालम् । "नाम्युपान्त्य–" (उ० ६०९) इति किद् इः कीलिः ॥

---

१ सर्वाण्यपि अत्र पठितानि उदाहरणानि **फल निष्पत्तौ** इत्यस्य, अत्र पठनाच्च **ञिफला विशरणे** इत्यस्यापि । एवं यत्र यत्र यद्धातुवृत्तौ ये धातवः पठितास्तेषामपि तत्तत्प्रयोगा अभ्यूह्याः ॥ २ फलहकम् संपा० १ वा० ॥ ३ रोधनमिति पक्षे ॥ ४ 'नीली' इत्यत्र जातिशब्दादपि जातौ नित्यस्त्रीत्वाद् 'जातेरयान्त-नित्य-स्त्रीशूद्रात्" २।४।५४। इत्यप्राप्तेऽनेनैव ङीः । ये तु नील पट इत्यर्थान्तरेऽस्यार्थस्यापि दर्शनादनित्यं स्त्रीत्वमभ्युपगच्छन्ति तेषां गुणशब्दस्यैवेदमुदाहरणम् । जातिशब्दात्तु "जातेरयान्त-" २।४।५४। इत्यनेन ङीः सिद्ध एव ॥ ५ धर्मं शीलयति इति धर्मशीलः, स्त्री चेत् धर्मशीला ॥ ६ "शलेरैं चात" इति (५६१) उणादिवृत्तौ निर्देशात् अभिधानचिन्तामणिकोषेऽपि (का०२ श्लो० २४२) "शलति वेपान्तरम्" इत्यभिधानाच्च शलते इदं रूपम् अन्यथा 'शीलेरै-ह्रस्वश्चेतो वा' इति वदेयुः ॥

**४२३ कूल वरणे**[1] कूलति, अनुकूलति। चुकूल। कूलिता। के कर्मणि घञि च कूलम् ॥

**४२४ शूल रुजायाम्**। तालव्यादिः। शूलति। शुशूल। शूलिता। के शूलम् ॥

**४२५ तूल निष्कर्षे**। निष्कर्ष—अन्तस्थस्य वहिर्निःसारणम्। तूलति। तुतूल। तूलिता। के तूलम्। उणादौ "नाम्युपान्त्य—" (उ० ६०९) इति कित् इ', तूलि. शय्या। स्वार्थे के तूलिका चित्रकरशलाका ॥

**४२६ पूल सङ्घाते**। पूलति। पुपूल। पूलिता। के घञि वा पूलः। "जातेरयान्त—" २।४। ५४। इति ङ्याम् पूली तृणोच्चयः ॥

**४२७ मूल प्रतिष्ठायाम्**। मूलति। मुमूल। मूलिता। णिगि उन्मूलयति केशान्। क्ते उन्मूलितः। के घञि वा मूलम्। **मूलण् रोहणे** मूलयति।

**४२८ फल निष्पत्तौ**। निष्पत्तिः–सिद्धिः। फलति। पफाल। "तृ-त्रप—" ४।१।२५। इत्येत्वे फेलतु. फेलु.। फलिता। क्ते फलितः, फलितवान्। **ञिफलेत्यस्य तु फुल्ल.**। अचि फलम्। पलितमिति तु पलेः ॥

**४२९ फुल्ल विकसने**। फुल्लति। पुफुल्ल पुफुल्लतु पुफुल्लु.। फुल्लिता। क्तयोः फुल्लितः फुल्लितवान्। अचि फुल्लम् ॥

**४३० चुल्ल हावकरणे**[2]। मैथुनेच्छाप्रेरितशरीरविकारो हावकरणम्। चुल्लति। चुचुल्ल। चुल्लिता। अचि चुल्लम्। उणादौ "किलि-पिलि—" (उ० ६०८) इति इ, चुल्लि' ॥

**४३१ चिल्ल शैथिल्ये च**। चकाराद् हावकरणे। चिल्लति। चिचिल्ल। चिल्लिष्यति। अचि चिल्लः पटः शिथिल इत्यर्थः। क्ते चिल्लितः ॥

**४३२ पेल ४३३ फेल ४३४ शेल ४३५ षेल ४३६ सेल ४३७ वेह्ल ४३८ सल ४३९ तिल ४४० तिल्ल ४४१ पल्ल ४४२ वेल्ल गतौ**। पेलति। पिपेल। पेलिता। ऋदित्त्वाद् णौ ङे अपिपेलत्। अचि पेलं वृषण', पेला वस्त्रादिभाजनविशेष। णके पेलक.। क्ते पेलितम्। उणादौ "वडि-वटि—"(उ० ५१५) इति अवे पेलवम ॥ **फेल**। फेलति। पिफेल। फेलिता। ऋदित्त्वात् अपिफेलत्। क्ते फेलितम्। क्ते सेट्त्वात् "क्तेटो—" ५।३।१०६। इत्य, फेला भोजनोज्झितम् ॥ **शेल**। शेलति। शिशेल। ऋदित्त्वात् अशिशेलत् ॥ **षेल**। "ष. सो—" २।३।९८। इति सत्वे सेलति। षोपदेशत्वात् षत्वे सिषेल। ऋदित्त्वात् असिषेलत् ॥ **सेल**। सेलति। सोपदेशत्वाद् न षत्वम्, सिसेल। ऋदित्त्वात् असिसेलत्। **वेह्ल**। वेह्लति। अविवेह्लत् ॥ **सल**। सलति। ससाल। सोपदेशत्वाद् न षत्वम्, सिसालयिषति, सिसलिषति। घञि अमरे सल्यते इति साल.॥ **तिल**। तेलति। तितेल। तेलिता।। "नाम्युपान्त्य—" ५।१।५४ इति के तिल.। तिलत् स्नेहने

१ आवरणे मु०, माधवीयधातुवृत्तौ च पृ० १०४ धातुअ० ५११। २ भावकरणे इति पाणिनीया। भावकरणम्–अभिप्रायाविष्कार–माध० धातु० पृ० १०५ धातुअं० ५२५। "हावो भावसूचनम्"–पृ० ३२ धातुअ० २५८।

तिलति। तिलण् स्नेहने तेल्यति॥ तिल्ल। तिल्लति। तितिल्ल। तिल्लिता॥ पल्ल। पल्लति। पपल्ल। पल्लिष्यति। उणादौ "पदि-पठि-" (उ० ६०७) इति इः, पल्लिः॥ वेल्ल। वेल्लति। विवेल्ल। वेल्लिता। क्ते वेल्लितम्। णौ ङे अविवेल्लत्॥

**४४३ वेल ४४४ चेल ४४५ केल ४४६ क्वेल ४४७ खेल ४४८ स्खल चलने।** वेलति। विवेल। वेलिता। ऋदित्त्वात् अविवेलत्। अचि वेला। **वेल कालण् उपदेशे** वेल्यति॥ चेल। चेलति। चिचेल। चेलिता। ऋदित्त्वात् अचिचेलत्, अचिचेलम्। **चिलत् वसने** चिलति। घञि चेलम्॥ केल। केलति। चिकेल। केलिता। ऋदित्त्वात् अचिकेलत्। क्ते केलितम्। **किलत् श्वैत्य-क्रीडनयोः** किलति। उणादौ "किलि-पिलि-" (उ० ६०८) इति इः, केलिः। **कील बन्धे** इत्यस्य तु कीलति, [1]कीलितम्, कीलिः॥ क्वेल। क्वेलति। चिक्वेल। क्वेलिता। ऋदित्त्वात् अचिक्वेलत्॥ खेल। खेलति। चिखेल। खेलिता। ऋदित्त्वात् अचिखेलत्। अचि खेलः, खेला खुरलिः, पृषोदरादित्वाद् ह्रस्वे खिलम्॥ स्खल। स्खलति। चस्खाल। स्खलिता, अचि स्खलः। "चाल-शब्दार्थाद्-" ५।२।४३। इत्यने स्खलनशीलः स्खलनः। क्ते स्खलितम्॥

**४४९ खल सञ्चये च।** चकारात् चलने। खलति। चखाल। खलिता। "गोचर-" ५।३।१३१। इति निपातनाद् घे खल्यन्ते—सञ्चीयन्ते यशांसि धान्यानि वा यत्रेति खलः[2] खलं रणाजिरम् धान्यपवनस्थानं च, खलो दुर्जनः। अचि खलति—सञ्चिनोति पापम् चलति वा गुणेभ्य इति खलो नीचः। उणादौ "खलि-हिंसिभ्यामीनः" (उ० २८६) खलीनम्। "लटि-खटि-" (उ० ५०५) इति वे खल्वं निम्नम्, खल्वा दृतिः। "कपाट-विराट-" (उ० १४८) इति निपातनात् खल्वाटः। "दृ-पॄ-भृ-" (उ० २०७) इति अते खलतः खल्वाट.। "पदि-पठि-" (उ० ६०७) इति इः, खलि. पिण्याकः। "खल्यमि-"(उ० ६५२) इति अतौ खलतिः॥

**४५० श्वल ४५१ श्वल्ल आशुगतौ।** तालव्यादी। श्वलति। "वद-व्रज-" ४।३।४८। इति वृद्धौ अश्वालीत्॥ श्वल्ल। श्वल्लति। अश्वल्लीत्। **शलिमप्यत्र एके पठन्ति, स ज्वलादिपाठेनैव गतार्थ इति नेहाधीतः॥**

**४५२ गल ४५३ चर्व अदने।** गलति। जगाल। गलिष्यति। अचि गलः कण्ठः। स्रवणेऽप्ययमनेकार्थत्वात्, गलत्युदकं कुण्डिकायाः। उणादौ "कलि-गलेरस्योच्च" (उ० ३१५) इति फे गुल्फः। "बहुलमेतन्निदर्शनम्" इति **गलिण् स्रावणे** गालयते उद्गालयते॥

---

१ कीलितम् स्थाने कीलनम् सं १ सं २ तपा०। मुद्रिते तु उभयमपि॥ २ "खल्यन्ते—सञ्चीयन्ते धान्यानि अत्र खल त्रिलिङ्ग., "गोचर-सञ्चर-" ५।३।१३१ इति निपातनाद् घः" इति स्वोपज्ञाभिधानचिन्तामणिटीकायाम्। कां० ४ श्लो० ३५॥

अथ वान्ताः सप्तत्रिंशत् सेटश्च—

**चर्व**। चर्वति । चचर्व । चर्विता। क्ते चर्वितः । उणादौ "मवाक–" (उ० ३७) इति निपातनाद् आके चार्वाकः । "वहुल्मेतन्निदर्शनम्" इति चुरादित्वे चर्वयति ॥

**४५४ पूर्व ४५५ पर्व ४५६ मर्व पूरणे** । पूर्वति । पुपूर्व । पूर्विता । अचि पूर्वः ॥ **पर्व**। पर्वति । पपर्व । पर्विता। विचि सुप सुपरौ सुपरः, "य्वोः प्वय्व्यञ्जने–" ४।४।१२१। इति वलोपः । उणादौ "दृ-पॄ-भृ–" (उ० २०७) इति अते पर्वतः ॥ **मर्व**। मर्वति। ममर्व। मर्विता ॥

**४५७ मर्व ४५८ धवु ४५९ शव गतौ**। मर्वति ममर्व। मर्विता॥ **धवु**। उदित्त्वाद् ने धन्वति। धन्विष्यति। उणादौ "उक्षि-तक्षि–" (उ० ९००) इति अनि धन्वा ॥ "**शवतिर्गतिकर्मा काम्बोजेषु**[1] भाष्यते । विकार एवैनमार्या आहु." [महाभा० आ० १,५]। शवति। अचि शवः, शवम् , सुष्ठु शवतीति सुशव', स्त्रिया गौरादित्वाद् ङ्याम् सुशवी। क्विपि "अनुनासिके च–" ४।१।१०८। इति वस्योट्, ततः "ऊटा" १।२।१३। इत्यस्यौत्वे शौः । शविष्यति॥

**४६० कर्व ४६१ खर्व ४६२ गर्व दर्पे**। कर्वति, खर्वति, गर्वति, चकर्व, चखर्व, जगर्व। अचि घञि वा कर्वः, खर्वः, गर्व' ॥

**४६३ ष्ठिवू ४६४ क्षिवू निरसने**। "षः सो–" २।३।९८। इत्यत्र ष्ठिवो वर्जनात् षस्य सत्वाभावे "ष्ठिवू-क्लम्वा–" ४।२।११०। इति दीर्घे च ष्ठीवति । "तिर्वा ष्ठिवः" ४।१।४३। इति पूर्वस्य वा तित्वे तिष्ठेव टिष्ठेव। यङि तेष्ठीव्यते, टेष्ठीव्यते[2]। ष्ठेविता। ऊदित्त्वात् क्त्वि वेट्, ष्ठ्यूत्वा ष्ठेवित्वा। "इवृध–" ४।४।४७। इति सनि वेट्, तुष्ठ्यूषति[3] टुष्ठ्यूषति; पक्षे तिष्ठेविषति टिष्ठेविषति । वेट्त्वात् क्तयोर्नेट, ष्ठ्यूतः, ष्ठ्यूतवान्। मनि "अनुनासिके च–" ४।१।१०८। इत्यूट्त्वे सुष्ठ्योमा। वनि सुष्ठ्योवा । क्विपि सुष्ठ्यूः । विचि सुष्ठेः । "ष्ठिव्-सिवोऽनटि वा" ४।२।११२। इति वा दीर्घे ष्ठीवनम्, ष्ठेवनम् ॥ **क्षिवू** । क्षेवति । चिक्षेव । क्षेविता । ऊदित्त्वात् क्ष्यूत्वा, क्षेवित्वा । क्तयोः क्ष्यूतः क्ष्यूतवान् । क्षीवम्[4]अप्येके[5] पठन्ति क्षीवति । णौ ङे अचिक्षीवम् । क्ते क्षीवितः। **ष्ठिवू क्षिवूच् निरसने** ष्ठीव्यति । क्षीव्यति ॥

**४६५ जीव प्राणधारणे**[6]। जीवति । जिजीव । जीविता । णौ ङे "भ्राज-भास–" ४।२।३६।

---

१ महाभाष्ये तु–"कम्बोजेष्वेव भाषितो भवति विकार एनमार्या भाषन्ते शव इति" इति पाठभेद'। २ "**ष्ठिवू-क्लम्वाचमः**" ४।२।११०। इत्यत्र सूत्रे 'ष्ठिवू इति ऊकारनिर्देशात् यङ्लुपि न भवति' इति कलिकालसर्वज्ञश्री**हेमचन्द्रसूरि**पादाः । **श्रीगुणरत्नसूरयस्तु "ष्ठिवू-क्लम्वा–"** ४।२।११०। इत्यत्र अत्यादावधिकाराद् यङ्लुपि त्यादौ न दीर्घ, तेष्ठेति, अत्र "**य्वोः–**" ४।४।१२१। इति वृलुक्, तेष्ठिवीति तेष्ठ्यूत. तेष्ठिवति, एवं टेष्ठेतीत्याद्यपि" इति आहु –क्रियारत्नस० पृ० ७८ धातुअ० १२६ । **सायणो**ऽपि 'ऊड्भाविना वकारान्ताना यङ्लुङ् नास्ति' इत्याह–माध० धातु० पृ० १०८ धातुअ० ५५३ । ३ अत्र "**उपान्त्ये**" ४।३।३४। इति सन कित्वे ऊटि द्वित्वे "**तिर्वा ष्ठिवः**" ४।१।४३। इत्यत्र तेरिकारस्योच्चारणार्थत्वात् वा ठस्य तत्वे च रूपम् ॥ ४ **क्षीवुम**° प्र० मु०॥ ५ पाणिनीया.–माध० धातु० पृ० १०९ धातुअ० ५६० । ६ प्राणलक्षणस्य कर्मणो धात्वर्थेनोपसङ्ग्रहणादकर्मकोऽयम् ॥

इति वा ह्रस्वे अजीजिवत् अजिजीवत्। "नाम्युपान्त्य–" ५।१।५४। इति के जीवः। णके जीवकः पक्षी, जीवजीवकोऽपि। 'यावतो विन्द-जीवः" ५।४।५५। इति णमि यावज्जीवमधीते। "नाम्नि पुंसि च" ५।३।१२१। इति णके जीविका। उणादौ "जीवेरातृको जैव् च" (उ० ६७) इति जैवातृक। "रुहि-नन्दि–" (उ० २२०) इति अन्ते जीवतात् जीवन्त., जीवन्ती। "भृ-शी-शपि–" (उ० २३२) इति अथे जीवथो वायु.। "जीवेरातुः" (उ०७८२) जीवातुर्जीवनम्। "जीवेरदानुक्" (उ०७९५) जीवदानुः।

४६६ पीव ४६७ मीव ४६८ तीव ४६९ नीव स्थौल्ये। पीवति। पिपीव। पीविता। के पीवः। उणादौ "तीवर–" (उ० ४४४) इति निपातनात् अरे पीवरः। पीवा इति तु प्यैङः[1]॥ मीव। मीवति। मिमीव। मीविता॥ तीव। तीवति। तितीव। तीविता। उणादौ "खुर-क्षुर–" (उ० ३९६) इति निपातनात् तीव्र.। "तीवर–" (उ० ४४४) इति निपातनात् अरे तीवरं जलं व्यञ्जनं च॥ नीव। नीवति। निनीव। नीविता। उणादौ "नाम्युपान्त्य–" (उ०६०९) इति कित् इः, नीवि, नयतेर्वा डिद्[2] विः। "खुर-क्षुर–" (उ० ३९६) इति निपातनात् नीव्रम्[3], नयतेर्वा। मव्यादिषु सर्वेषा छिविना तुल्यमुदाहरणम्॥

४७० उर्वै ४७१ तुर्वै ४७२ थुर्वै ४७३ दुर्वै ४७४ धुर्वै ४७५ जुर्वै ४७६ अर्व ४७७ भर्व ४७८ शर्व हिंसायाम्। "भ्वादे–" २।१।६३। इति दीर्घे ऊर्वति। ऊर्विता। ऐदित्त्वात् क्तयोर्नेट्, ऊर्ण. ऊर्णवान्। क्विपि "रात् लुक्" ४।१।११०। इति वलुकि ऊः उरौ उरः। उणादौ "उर्वेरादेरूदेतौ च" (उ० ८१४) इति आरौ ऊर्वारुः कट्टुर्चिर्भटी, एर्वारुश्चारुचिर्भटी[4]॥ तुर्वै। तूर्वति। तूर्विता। मनि सुतोर्मा। वनि सुतोर्वा। विचि सुतोः। क्विपि तूः, सुतू: सुतुरौ सुतुरः। ऐदित्त्वात् तूर्ण· तूर्णवान्॥ थुर्वै। थूर्वति। थूर्विता। ऐदित्त्वात् थूर्ण. थूर्णवान्॥ दुर्वै। दूर्वति। दूर्विता। अचि दूर्वा। क्विपि सुदू. सुदुरौ सुदुरः। ऐदित्त्वात् दूर्ण. दूर्णवान्॥ धुर्वै। धूर्वति। धूर्विता। "दिद्युद्दद्–" ५।२।८३। इति क्विपि धू. धुरौ धुरः। ऐदित्त्वात् धूर्णः धूर्णवान्। उणादौ "शी-री–" (उ० २०१) इति किति ते धूर्तः कित्त्वात् न गुणः। "गृ-पृ-दुर्वि-धुर्विभ्य.–" (उ० ९४३) क्विपि[5] धू.॥ जुर्वै। जूर्वति। जूर्विष्यति। क्विपि सुजू. सुजुरौ सुजुरः। ऐदित्त्वात् जूर्ण. जूर्णवान्॥ अर्व। अर्वति। "अनातो–" ४।१।६९। इत्यात्वे ने च आनर्व। अर्विष्यति। अचि अर्व.॥ भर्व। भर्वति। बभर्व। भर्विष्यति॥ शर्व। शर्वति। शशर्व। शर्विष्यति। अचि शर्व.॥

४७९ मुर्वै ४८० मव बन्धने। "भ्वादे.–" २।१।६३। इति दीर्घे मूर्वति। मूर्विता। अचि मूर्वा तृणम्, यद्विकारो[6] मौर्वी। क्विपि मू. मुरौ मुरः। ऐदित्त्वात् मूर्णः मूर्णवान्॥ मव।

१ प्यैङ् वृद्धौ इत्यस्य "प्या-प्योर्धी-पी च" (उ० ९०८) इति क्वनिप्प्रत्यये॥ २ "जृ-शृ-स्तृ-जागृ-क्ष्ण-नी-घृषिभ्यो डित्" (उ० ७०५) इत्यनेन॥ ३ "नियो वोऽन्तश्च" (उ० ३९६ वृत्तौ) इति वचनात् मकरागमे रे च। ४ °चिर्भिटी, एर्वारुश्चारुचिर्भिटी वा० सं१ विना॥ ५ क्विप्, धूः वा०॥ ६ तद्विकारी वा०॥

भवति । बभाव मेवतु मेवुः । क्विपि "मव्यवि–" ४।१।१०९। इत्युपान्त्येन सहोटि मूः मुवौ मुवः । सुमूः सुम्वौ सुम्वः । मविष्यति । एवं मन्नादिष्वपि ॥

**४८१ गुर्वै उद्यमे** । "भ्वादे–" २।१।६३। इति दीर्घे गूर्वति । जुगूर्व । गूर्विता । ऐदित्त्वात् क्तयोर्नेट्, गूर्णः गूर्णवान् । क्विपि गूः गुरौ गुरः ॥

**४८२ पिवु ४८३ मिवु ४८४ निवु सेचने** । सेवने इत्येके । त्रयोऽप्युदितः । उदित्त्वाद् ने पिन्वति । पिपिन्व । मिन्वति । मिमिन्व । निन्वति । निनिन्व । पिन्विता । मिन्विता । निन्विता । मन्नादिषु पूर्ववत् ॥

**४८५ हिवु ४८६ दिवु ४८७ जिवु प्रीणने** । त्रयोऽप्युदितः । उदित्त्वाद् ने हिन्वति । जिहिन्व । दिन्वति । दिदिन्व । जिन्वति । जिजिन्व । हिन्विता । दिन्विता । जिन्विता । मन्नादिषु पूर्ववत् ॥

**४८८ इवु व्याप्तौ च** । चकारात् प्रीणने । उदित्त्वाद् ने इन्वति । इन्वाञ्चकार । अनटि "वोत्तरपदान्तन–" २।३।७५। इति वा णत्वे प्रेण्वनम्, प्रेन्वनम् । णके इन्विका मृगशीर्षशिरस्तारका[1] । सुपूर्वात् मनि "अनुनासिके च–" ४।१।१०८। इत्यूटि स्विनोमा । वनि "य्वोः–" ४।४।१२१। इति वलोपे "वन्याङ्–" ४।२।६५। इति नस्यात्वे यत्वे च सुयावा । विचि "य्वोः–" ४।४।१२१। इति वलुकि गुणे च स्वे स्वेनौ स्वेन. । क्विपि वस्योटि स्विनू । इन्विता । इन्वितुम् । वान्तोऽयमिति धुड्वर्गाभावात् "म्नाम्–" १।३।३९। इति नकारस्य मो न भवति ॥

**४८९ अव रक्षण-गति-कान्ति-प्रीति-तृप्ति-अवगमन-प्रवेश-श्रवण-स्वाम्यर्थ-याचन-क्रिया-इच्छा-दीप्ति-अवाप्ति-आलिङ्गन-हिंसा-दहन-भाव-वृद्धिषु**। एकोनविंशतावर्थेषु। **कैश्चित्** कान्तिवर्जमष्टादशसु । **अन्यैस्तु** रक्षण-गति-कान्ति-प्रीति-तृप्ति-वृद्धिषु षट्सु । अवति । आव आवतु. आवुः । अविता । क्विपि "मव्यवि–" ४।१।१०९। इत्यूटि ऊः उवौ उव. । क्तौ ऊतिः । उणादौ "दिव्यवि–" (उ० १४२) इति अटे अवटः । "जीण्-शी-दी–" (उ० २६१) इति किति ने ऊन । "श्या-कठि–" (उ० २८२) इति इने अविनं जलम् । "अवेर्ह्रस्वश्च वा" (उ० ३४२) इति किति मे उमा, ऊमम् । "मह्यविभ्या टित्" (उ० ५४७) इति इषे अविष समुद्र., अविषी द्यौ. । "पदि-पठि–" (उ० ६०७) इति इ , अविः । "सदि-वृत्यमि–" (उ० ६८०) इति अनौ अवनिः । "तॄ-स्तॄ-तन्द्रि–" (उ० ७११) इति ईः, अवी रजस्वला । "कृसि-कमि–" (उ० ७७३) इति तुनि ओतुः । "अवेर्म" (उ० ९३३) ओम् ॥

अथ शान्ताः सप्त आद्याः पञ्च सेटश्च—

---

१ अवगमनस्थाने अवगम दहनभावस्थाने दानभाग इति माधवीयधातुवृत्तौ पृ० ११३ धातु- अ० ५९२ । २ वर्जनादष्टा प्र० ३ मु०॥३आकाशं नगरं च इति खे०टि० ॥ ४ अत्र "अनुनासिके च च्छ्वः शूट्" ४।१।१०८। इति वस्य ऊट् ॥

**४९० कश शब्दे**। सौत्रोऽयमित्येके। कौशिकस्त्वध्यैष्टेत्यधीतः। कशति। चकाश। कशिता। अचि "वर्चस्कादिषु–" ३।२।४८ इति षागमे प्रतिष्कशोऽग्रयायी दूतश्च।

"ग्राममद्य प्रवेक्ष्यामि, भव मे त्व प्रतिष्कशः" [ ]

कशा चर्मयष्टिः। घञि काशस्तृणजातिः। उणादौ "कशेर्मोऽन्तश्च" (उ० ४२०) इति ईरे कश्मीरा। काशिरिति तु काशृङ् दीप्तौ इत्यस्य। वान्तोऽयमित्यन्ये, कवति॥

**४९१ मिश ४९२ मश रोषे च**। चकारात् शब्दे। शब्दने रोषक्रियाया चेत्यर्थः। मेशति मिमेश। मेशिता। "नाम्युपान्त्य–" ५।१।५४। इति के मिशो व्याजः॥ **मश**। मशति। ममाश। मशिता। "तिक्कृतौ नाम्नि" ५।१।७१। इति अकटि "दॄ-कॄ-नॄ–" (उ० २७) इत्युणादौ अके वा मशकः॥

**४९३ शश प्लुतिगतौ**। तालव्यादिः। प्लुतिभिर्गमने–उत्प्लुत्य गमने इत्यर्थः। शशति। शशाश शेशतुः शेशु॰, अत्र "अनादेशादेः–" ४।१।२४। इत्यत एत्वम्। अचि शशः, शशकः। शशिता। शशितुम्॥

**४९४ णिश समाधौ**। "पाठे–" २।३।९७। इति णस्य नत्वे नेशति। निनेश निनिशतुः निनिशुः। "अदुरुपसर्गान्त–" २।३।७७। इति णत्वे प्रणेशति। "नाम्युपान्त्य–" ५।१।५४। इति के निशः। "स्यादिभ्यः–" ५।३।८२। इति के नेशन्ति–समाहितमनस्का भवन्त्यस्यामिति निशा। नेशितुम्॥

**४९५ दृशृं प्रेक्षणे**। "श्रौति–" ४।२।१०८। इति पश्यादेशे पश्यति। "समो गमृच्छि–" ३।३।८४। इत्यात्मनेपदे सम्पश्यते। ददर्श ददृशतुः ददृशुः। अनुस्वारेत्त्वाद् नेट्, द्रष्टा द्रष्टुम्। अत्र "अः सृजि-दृशो–" ४।४।१११। इत्यकारागम.। परोक्षाया "स्क्र-ऽसृ-वृ-भृ–" ४।४।८१। इति इटि ददृशिव ददृशिम। "सृजि-दृशि-स्क्र–" ४।४।७८। इति थवि वा नेटि दद्रष्ठ ददर्शिथ। "स्वर-ग्रह–" ३।४।६९। इति वा ञिटि दर्शिष्यते द्रक्ष्यते। ऋदित्त्वाद् वा अङि अदर्शत्, अत्र "ऋवर्ण–" ४।३।७। इति गुण.। पक्षे "ह-शिटो–" ३।४।५५। इत्यत्र दृशो वर्जनात् सगभावे सिचि अद्राक्षीत्। णौ ङे "ऋदृवर्णस्य" ४।२।३७। इति गुणापवादे वा ऋदादेशे अदीदृशत् अददर्शत्। सनि "स्मृ-दृशः" ३।३।७२। इत्यात्मनेपदे, दिदृक्षते। "अणिकर्म–" ३।३।८८। इति णावात्मनेपदे पश्यन्ति भृत्या राजानम्[3], दर्शयते राजा भृत्यान् भृत्यैर्वा, अत्र "दृश्यभिवदोः–" २।२।९। इति वाऽणिक्कर्तु-

१ "पदि-पठि-पचि-स्थलि-हलि-कलि–" (उ० ६०७) इत्यादिना इ प्रत्ययः॥ २ "अः सृजि-दृशो–" ४।४।१११। इति अ॰, "व्यञ्जनानामनिटि" ४।३।४५। इति तद्वृद्धिश्च। ननु अत्र परत्वात् "अः सृजि-दृशो-" ४।४।१११। इति पूर्वमकारागमे नाम्युपान्त्यत्वाभावात् सको न प्राप्ति, तर्कि "ह-शिटो नाम्युपान्त्याददृशोऽनिटः सक्" ३।४।५५। इत्यत्र दृशो वर्जनेन ? नैवम्, "नशो धुटि" ४।४।१०९। इत्यत धुटीत्यधिकारात् स्वरादिप्रत्यये "अः सृजि"-४।४।१११। इत्यकारागमो नास्ति, ततो नाम्युपान्त्यत्वात् सकि व्यत्यदृक्षन्त इत्यनिष्टं स्यात्, सिचस्तु व्यञ्जनान्तत्वेनानकारान्तत्वात् "अनतोऽन्तोऽदात्मने" ४।२।११४। इति अन्तो अति व्यत्यदृक्षत इति अमादौ च अदृक्षं व्यत्यदृक्षातामित्यादि स्यात्, सिचि तु अद्राक्ष व्यत्यदृक्षातामिति भवति॥ ३ तान् राजैवानुकूलाचरणेन प्रयुङ्क्ते॥

णिगि कर्मत्वम्। "ऋदुपान्त्या–" ५।१।४१। इति क्यपि दृश्यम्। "घ्रा-ध्मा–" ५।१।५८। इति शे पश्यः, उत्पश्यः। "लिहादि–" ५।१।५०। अचि दर्शः। "कर्मणो–" ५।३।१४। अणि देवदर्शः। "असूर्योग्रा–" ५।१।१२६। इति खशि असूर्यम्पश्या राजदाराः, उग्रम्पश्यो राजा। "त्यदाद्यन्य–" ५।१।१५२। इति टक्-सक्-क्विप्सु "अन्य-त्यदादेः–" ३।२।१५२। इत्यात्वे च तादृशः, तादृशी, तादृक्षः, तादृक्। "दृग्-दृश-दृक्षे" ३।२।१५१। इति समानस्य सत्वे सदृक्, सदृशः, सदृक्षः। "दृशः क्वनिप्" ५।१।१६६। मेरुदृश्वा; स्त्रियां "णस्वराघोषा–" २।४।४। इति ङ्याम् नस्य रत्वे च तत्त्वदृश्वरी। "शासू-युधि–" ५।३।१४१। इत्यने सुदर्शनः। "विद्-दृग्भ्यः कार्त्स्न्ये णम्" ५।४।५४। कन्यादर्शं वरयति। पशुरिति तु स्पशेः "स्पशि-भ्रस्जेः स्लुक् च" (उ०७३१) इति उप्रत्यये रूपम्॥

४९६ दंशं दशने। दशनं दन्तकर्म। "दंश-सञ्जः–" ४।२।४९। इति नलुकि दशति। क्ये दश्यते। ददंश। संयोगान्तत्वाद् "इन्ध्यसंयोगा–" ४।३।२१। इति परोक्षायाः किस्वाभावे ददंशतुः ददंशुः। अनुस्वारेत्त्वाद् नेट्, दंष्टा दंष्टुम्। "व्यञ्जनानाम्–" ४।३।४५। इति वृद्धौ अदाङ्क्षीत्। "गॄ-लुप–" ३।४।१२। इति यङि गर्हितं दशति दन्दश्यते, यङ्लुपि दन्दशीति, सूत्रे कृतनलोपस्य निर्देशाद् अत्र नो लुक्। "यजि-जपि–"५।२।४७। इति ऊके दन्दशूकः। "कर्मणो–" ५।३।१४। अणि वृषं-मूषिकं दशति वृषदंशो विडालः। "दंशेस्त्रः" ५।२।९०। दंष्ट्रा। अचि दंशः, दशी। घञि उपदंशः। "दशना-ऽवोदैधोद्म–" ४।२।५४। इति निपातनाद् अनटि दशनम्, दशनो दन्तः। "दंशेस्तृतीयया–" ५।४।७३। इति णमि मूलकेनोपदंशं मूलकोपदंशं भुङ्क्ते, अत्र "तृतीयोक्तं वा" ३।१।५०। इति वा तत्पुरुषः। उणादौ "लू-पू-यु–" (उ०९०१) इति किति अनि दश घटाः॥

अथ षान्ता एकचत्वारिंशत् कृषवर्जाः सेटश्च—

४९७ घुषृ शब्दे। घोषति। जुघोष। ऋदित्त्वाद् वाऽङि अघुषत्, पक्षे अघोषीत्। "घुषेरविशब्दे" ४।४।६८। इति क्तयोर्नेट्, घुष्टा रज्जुः, विशब्दने त्विटि अवघुषितं वाक्यमाह। सम्पूर्वात् "क्षुब्ध-विरिब्ध–"... "श्वस-जप–" ४।४।७५। इति वेटि सङ्घुष्टा सङ्घुषिता रज्जुः, सङ्घुष्टं सङ्घुषितं वाक्यम्। घुषृण् विशब्दने घोषयति। आङः क्रन्दे आघोषयति। उणादौ "हृषि-पुषि–" (उ० ७९७) इति इत्नौ घोषयित्नुः शब्दः॥

४९८ चूष पाने। चूषति। चुचूष। चूषिता। क्ते निचूषितम्। चूषित्वा॥

---

१ वामनस्तु उपसर्गपूर्वकात् इच्छति, तथा च तद्वच.–उपसर्ग इति केचिन्नानुवर्तयन्ति इति॥ २ सूर्यमपि न पश्यन्ति इति असूर्यम्पश्या, गुप्तिपरं चैतत्, एव नाम गुप्ता यदपरिहार्यदर्शनं सूर्यमपि न पश्यन्ति, अत्र दृशिना सम्बद्धस्य नञः सूर्येण सहासामर्थ्येपि वाक्यार्थप्रतिपादकत्वात् समास ॥ ३ या या कन्या पश्यति तां तां सर्वां वरयति इत्यर्थ ॥ ४ स्पशि बाधन-ग्रथनयोश्च चाद् गतौ, सौत्रोऽयम्॥ ५ दशत्यनया इति दंष्ट्रा॥ ६ विशब्दनं विशब्दः नाना शब्दनं प्रतिज्ञानं च। "विशब्दनं प्रतिज्ञानम्। तच्च शब्देन स्वाभिप्रायप्रकाशनम् इति न्यासे"–माध० धातु० पृ० ११९ धातुअं० ६४३। ७ सम्बद्धावयवा इत्यर्थः॥ ८ नानाशब्दितं प्रतिज्ञातं वा वाक्यं ब्रूत इत्यर्थः॥ ९ आङ्पूर्वको घुषृण् क्रन्दे इत्यर्थ.॥

**४९९ तूष तुष्टौ** । तूषति । तुतूष । तूषिता । तूषितम् । क्ते सेट्त्वात् तूषा । **तुषं हृषंच् तुष्टौ** तुष्यति ॥

**५०० पूष वृद्धौ** । पूषति । पुपूष । पूषिता । क्ते पूषितः । उणादौ "उक्षि-तक्षि–" (उ० ९००) इति अनि पूषा ॥

**५०१ लुष ५०२ मूष स्तेये** । लोषति । लुलोष । लोषिता । "नाम्युपान्त्य–" ५।१।५४। इति के लुष ॥ मूष । मूषति । मुमूष । मूषिता । "नाम्युपान्त्य–" ५।१।५४। इति के मूषः, मूषा तैजसावर्तनी, गौरादित्वाद् ङ्यां मूषी । णके मूषक. ॥

**५०३ षूष प्रसवे** । "ष. सो–" २।३।९८। इति षस्य सत्वे सूषति । षोपदेशत्वात् षत्वे सुषूष । येषां तु सोपदेशस्तन्मते षत्वाभावे सुसूष । सूषिता । "नाम्युपान्त्य–" ५।१।५४। इति के सूषः, गौरादित्वाद् ङ्या सूषी । तालव्यादिरयमिति **चारकाः**, शूषा शाकम् ।

**५०४ ऊष रुजायाम्** । ऊषति । "गुरुनाम्यादेः–" ३।४।४८। इत्यामादेशे ऊषाञ्चकार । "नाम्युपान्त्य–" ५।१।५४। इति के ऊषः । ऊषितुम् । अनटि ऊषणं मरिचम्, त्र्यूषणं त्रिकटुकम् । मनि ऊष्मा । ऊषरं क्षेत्रमिति[2] तु ऊषाद् "रोऽश्मादेः" ६।२।७९। इति चातुरर्थिके रे, ऊषरं जलमिति[1] तु "मध्वादिभ्यो–" ७।२।२६। इति मत्वर्थीये रे सिद्धम् ॥

**५०५ ईष उञ्छे** । उञ्छम्–उच्चयनम् । ईषति । "गुरुनाम्यादेः–" ३।४।४८। इत्यामादेशे ईषाञ्चकार । ईषिता । क्ते सेट्त्वात् "क्तेटो–" ५।३।१०६। इति अः, ईषा व्रणगवेषणी मञ्चकाद्यवयवश्च । उणादौ "ऋच्यृजि–" (उ० ४८) इति ईके ईषीका तृणशलाका । इषीकेति तु **इषत् इच्छायाम्** इत्यस्य ॥

**५०६ कृषं विलेखने** । विलेखनम्–हलोत्कर्षणम् । कर्षति । चकर्ष । अनुस्वारेत्त्वाद् नेट् क्रष्टा । "स्पृश-मृश–" ३।४।५४। इति वा सिचि अकार्क्षीत्, "स्पृशादि–" ४।४।११२। इति वा अकारागमे अक्राक्षीत्, पक्षेऽनिट्त्वात् "ह-शिटो–" ३।४।५५। इति सकि अकृक्षत् । णौ ङे "ऋद्वर्णस्य" ४।२।३७।इति वा ऋदादेशे अचीकृषत् । अचकर्षत् । "नन्द्यादिभ्यो–"५।१।५२। इति अने संकर्षणो[3] हली, अन्यत्र "नाम्युपान्त्य–" ५।१।५४। इति के सङ्कृष । "व्यञ्जनाद्–"५।३।१३२। घञि आकर्षो द्यूतफलहक । "उपपीड–" ५।४।७५। इति णमि पटोपकर्षं धावति, भ्राष्ट्रोपकर्षं धानाः खादति, "तृतीयोक्तं वा"३।१।५०। इति वा तत्पुरुष, पक्षे पटे पटेन वोपकर्षं धावति, भ्राष्ट्रे भ्राष्ट्रेण वोपकर्षं धानाः खादति । उणादौ "कृषेर्गुण-वृद्धी च वा" (उ० ३१) इति अके कर्षक कार्षकः कृषकश्च कुटुम्बी । "पा-पुलि–" (उ० ४१) इति किति इके कृषिक पामरः । "घृ-वी-ह्वा–" (उ० १८३) इति किति णे कृष्ण. । "नाम्युपान्त्य–" (उ० ६०९) इति कित् इ., कृषि. । "कृषेश्च चादे."

---

१ जलमिति सुष्ठु ॥ २ क्षेत्रमिति शोभनम्, "मध्वादि–" ७।२।२६। सूत्रे तथैव दर्शनात् ॥ ३ "**समः क्रन्दि-कृषि-हृषिभ्यः संज्ञायामेव**" इति वचनात् संज्ञायामेवायं प्रयोगः ॥

(उ० ६४१) इति अणौ चर्षणिः चर्षणी कुलटा । "कृपि-चमि–" (उ० ८२९) इति ऊः, कर्षूः कुल्या । **कृषींत् विलेखने** कृषति कृषते ॥

**५०७ कष ५०८ शिष ५०९ जष ५१० झष ५११ वष ५१२ मष ५१३ मुष ५१४ रुष ५१५ रिष ५१६ यूष ५१७ जूष ५१८ शष ५१९ चष हिंसायाम्** । कषति । "कूलाऽभ्र–" ५।१।११०। इति खे कूलङ्कषा नदी । "सर्वात् सहश्च" ५।१।१११। सर्वङ्कष. खल । "कषः कृच्छ्र-गहने" ४।४।६७। इति क्तयोर्नेट्, कष्टं[1] कृच्छ्रम् गहनं च, "कषोऽनिटः" ५।३।३। इति भविष्यति साधुः। "अजातेः शीले" ५।१।१५४। इति णिनि पादाभ्यां कषणशील· पत्काषी, अत्र "हिम-हति–" ३।२।९६। इति पद्भाव· । "वेर्विच–" ५।२।५९। इति घिनणि विकषणशीलो विकाषी । "गोचर–" ५।३।१३१। इति निपातनाद् घञपवादे घे कषः, आकषः, निकष· । "निर्मूलात्[2] कषः" ५।४।६२। इति णमि निर्मूल[3]काषं कषति । "हनश्च समूलात्[4]" ५।४।६३। समूल[5]काषं कषति । उणादौ "स्यमि-कषि–" (उ० ४६) इति ईके कषीका कुद्दालिका । "प्राङ· पणि–" (उ० ४२) इति इके प्राकषिको वायुः। "मा-वा-वद्य-ऽमि–" (उ० ५६४) इति से कक्षस्तृणम् गहनार[6]ण्य च, कक्षः कक्षा बाहुमूलम् गृहोपान्तश्च । "कृ-शृ-कुटि–" (उ० ६१९) इति वा णित् इः कषिर्निकषोपलः खनित्र च, काषिः कर्षकः । "कषेर्ण्ड-च्छौ च षः" (उ० ८३१) इति ऊः, कण्डूः, कच्छूः। "समिण्–निकषिभ्यामाः" (उ० ५९८) निकषा पर्वतं नदी । **शिष** । तालव्यादिः । शेषति । शिशेष । शेषिता । शेषितुम् । **केचि[7]दिटं** नेच्छन्ति, तन्मते शेष्टा, शेष्टुम् । "नाम्युपान्त्य–" ५।१।५४। इति के शिषः। कर्मणि घञि शेषम् । **शिषॢंप् विशेषणे** विशिनष्टि । **शिषण् असर्वोपयोगे** शेषयति । अचि शेषः अत्र [8]युजादित्वाद्वा णिच् । पक्षे शेषति ॥ **जष** । जषति । जषिता ॥ **झष** । झषति । झषिता । अचि झषः ॥ **वष** । वषति । वषिता ॥ **मष** । मषति । मषिता । कर्मणि घञि माषः ॥ **मुष** । मोषति । मोषिता । **मुषश् स्तेये** मुष्णाति । ' मुषेर्दीर्घश्च" (उ० ४३) इत्युणादौ इके मूषिक आखुः, मूषिका तत्स्त्री ॥ **रुष** । रोषति । तादौ "सह-लुभेच्छ– ' ४।४।४६। इति वेट्त्वात् रोष्टा रोषिता । रोष्टुम् रोषितुम् । "वेटोऽपतः" ४।४।६२। इति निषेधापवादे "श्वस-जप–" ४।४।७५। इति क्तयोर्वा नेटि रुष्टः रुषित., शील्[9]यादित्वादत्र सत्यर्थे क्तः । **रुषच् रोषे** रुष्यति ॥ **रिष** । रेषति । "सह-लुभेच्छ–" ४।४।४६। इति वेटि रेष्टा रेषिता । रेष्टुम् , रेषितुम् । वेट्त्वात् क्तयोर्नेट्, रिष्ट. रिष्टवान् । रिष्टम् , अरिष्टम् । उणादौ "निघृषी–" (उ०५११) इति किति वे रि[10]ष्वः ॥ **यूष** । यूषति ।

१ कृच्छ्रं दुःख तत्कारणं च, गहनं दुरवगाहम् ॥ २ निमूलमित्यत्रात्ययेऽव्ययीभाव , निर्गतानि मूलान्यस्येति बहुव्रीहिर्वा ॥ ३ निमूलं कषतीत्यर्थ· ॥ ४ समूलमिति साकल्येऽव्ययीभावो बहुव्रीहिर्वा ॥ ५ समूलं वषतीत्यर्थ· ॥ ६ °रण्यं चेति क° संपा१ ॥ ७ मैत्रेय-सायणादयः ॥ ८ "युजादेर्नवा" ३।४।१८ । इति सूत्रेण ॥ ९ "ज्ञानेच्छार्चार्थे–" ५।२।९२। इति सूत्रेण ॥ १० रिषेर्व्यञ्जनादे केचिदिच्छन्ति इति तन्मतसङ्ग्रहपरमिदमुदाहरणम् स्वमते तु ऋषैत् गतौ इत्यस्य ऋष्व रिपु हिंस्रश्च इति ॥

यूषति । यूषिता । "नाम्युपान्त्य–" ५।१।५४। इति के यूषः, यूषम् । गौरादित्वाद् ङ्यां यूषी ॥ जूष । जूषति । जूषिता । "नाम्युपान्त्य–" ५।१।५४। इति के जूषः । क्ते जूषितः । "क्तेटो–" ५।३।१०६। इत्यि जूषा ॥ शष । तालव्यादि । शषति । शषिता । उणादौ "पम्पा-शिल्पा–" (उ० ३००) इति पे शष्पते शष्पो[1] बालतृणम् ॥ चष । चषति । चषिता । "तिक्कृतौ नाम्नि" ५।१।७१। इति अकटि चषकः ॥ खषेत्यपि कण्वः । खषति ॥

५२० वृषू सङ्घाते च । चकाराद् हिंसायाम् । वर्षति । ववर्ष ववृषतुः । वर्षिता । ऊदित्त्वात् क्त्वि वेट्, वृष्ट्वा वर्षित्वा । क्त्वि वेट्त्वात् क्तयोर्नेट्, वृष्टः वृष्टवान् ॥

५२१ भष भर्त्सने । भर्त्सनं कुत्सितशब्दकरणम्, अतो भर्त्सने शब्दकर्मकोऽयम् । भषति श्वा–बुक्कतीत्यर्थः । भषति भषकः–पैशुन्येन वक्तीत्यर्थः । बभाष । भषिता । अचि भषः, गौरादित्वाद् ङ्यां भषी । क्ते भषितम् । "तिक्कृतौ नाम्नि" ५।१।७१। इति अकटि भषकः ॥

५२२ जिषू ५२३ विषू ५२४ मिषू ५२५ निषू ५२६ पृषू ५२७ वृषू सेचने । षड-प्यूदितः । जेषति । जेषिता । ऊदित्त्वात् क्त्वि वेट्, जिष्ट्वा, "वौ व्यञ्जनादेः–" ४।३।२५। इति वा कित्त्वे जेषित्वा जिषित्वा ॥ विषू । वेषति, परिवेषति । वेषिता । विष्ट्वा वेषित्वा विषित्वा। विष्लृं-की व्याप्तौ वेवेष्टि, वेविष्टे ॥ मिषू । मेषति । मेषिता । मिष्ट्वा मेषित्वा मिषित्वा । "लिहा-दिभ्यः" ५।१।५०। इत्यचि मेषः । मिषत् स्पर्धायाम् मिषति ॥ निषू । नेषति । नेषिता । निष्ट्वा नेषित्वा निषित्वा । बहुभिरयं न पठ्यते ॥ पृषू । पर्षति । पर्षिता । पृष्ट्वा पर्षित्वा । वेट्त्वात् क्तयोर्नेट्, पृष्टः, पृष्टवान् । "नाम्युपान्त्य–" ५।१।५४। इति के पृषः । "ऋदुपान्त्याद्–" ५।१।४१। इति क्यपि पृष्यम् । उणादौ "पी-वि-शि–" (उ० १६३) इति किति ठे पृष्ठम् । "पृषि-रञ्जि–" (उ० २०८) इति किति अते पृषतो मृगः बिन्दुश्च । "कुशि-पिशि–" (उ० २१२) इति किति इते पृषितं वारिबिन्दुः । "हिरण्य–" (उ०३८०) इति निपातनात् अन्ये[2] परिपर्षतीति पर्जन्यः[3]। "ऋह्र-घृ–" (उ० ६३५) इति किति णौ पृष्णिः किरणः । "पृषि-हृषिभ्यां वृद्धिश्च" (उ० ६३६) इति णौ पार्ष्णिः । "द्रुहि-वृहि–" (उ० ८८४) इति कर्त्तरि पृषन्ति जलबिन्दवः, पृषती मृगी । स्थूलपृषतीमालभेत ॥ वृषू । वर्षति । वर्षिता । वृष्ट्वा वर्षित्वा । वृष्टः वृष्टवान् । "ज्ञानेच्छार्चा–" ५।२।९२। इति सत्यर्थे क्ते वृष्टो मेघः । "कृ-वृषि–" ५।१।४२। इति वा क्यपि वृष्यम् वर्ष्यम् । "नाम्युपान्त्य–" ५।१।५४। इति के वृषः । "शृ-कम–" ५।२।४०। इति उकणि वर्षणशीलो वर्षुकः।

1 "शद्रि-गाधि-ग्वनि-हने" पू च" (उ०२९९) इत्यत्र "शष हिंसायामित्यस्य वा रूपम्" इति कथनम् । यत्र न "पम्पा–" (उ०३००) इति सूत्रे आदिग्रहणात् इति ॥ २ 'अन्य'प्रत्यये ॥ ३ "परि [illegible] पृषु सेचने इत्यस्य उपसर्गान्तलोपः धातोश्च ज समस्तादेशः । गर्जतेर्वा गकारस्य पकारः" [illegible] । अस्मदभिप्रायेण तु 'पृषु+अन्य' इति स्थिते उपान्त्यगुणे कृते पर्षन्य इति जाते षस्य [illegible] । ४ क्तित्–अतृप्रत्यये ऋकारो व्यावर्थः । तेन "अघात्-

“वर्षादयः क्लीबे” ५।३।२९। इति अलि वर्षम् ।“भिदादय·”५।३।१०८। इति निपातनात् अङि वर्षाः[1] । “क्विप्” ५।१।१४८। इति “क्रुत्सम्पदादिभ्यः” ५।३।११४। इति वा क्विपि प्रवर्षति प्रवर्षन्त्यत्र मेघा इति वा प्रावृट्, अत्र “गतिकारकस्य–”३।२।८५। इति प्रस्य दीर्घः । उणादौ “ऋषि-वृषि–” (उ० ३३१) इति किति अभे वृषभ. । “तृपि-वपि–” (उ० ४६८) इति किति अले वृषल. । “ऋदु-घृ–” (उ० ६३५) इति किति णौ वृष्णि । “लू-पू-यु–” (उ० ९०१) इति किति अनि वृषा इन्द्रः । “दिवि-पुरि–” (उ० ५९९) इति कित् आः, वृषा प्रबलम् ॥

**५२८ मृषू सहने च** । चकारात् सेचने । मर्षति । मर्षिता । ऊदित्त्वात् क्त्वि वेट्, मृष्ट्वा, इटि “ऋत्तृष–” ४।३।२४। इति क्त्वो वा कित्त्वे मृषित्वा, मर्षित्वा ।वेट्त्वात् क्तयोर्नेट्, मृष्टः मृष्टवान्, अत्रानिट्त्वात् क्तयोः क्षान्तावपि “मृषः क्षान्तौ” ४।३।२८। इति न कित्त्वप्रतिषेधः ।“शासू-युधि–” ५।३।१४१। इति अने दुर्मर्षणः, सुमर्षण· । **मृषीच् तितिक्षायाम्** मृष्यति मृष्यते । अपमृषित वाक्यमाह ॥

**५२९ उषू ५३० श्रिषू ५३१ श्लिषू ५३२ प्रुषू ५३३ प्लुषू दाहे** । पञ्चाप्यूदितः । ओषति । “जाग्रुष–” ३।४।४९। इति वाऽऽमादेशे ओषाञ्चकार, उवोष । ओषिता । ऊदित्त्वात् क्त्वि वेट्, उष्ट्वा उषित्वा । ये तु ऊदित न मन्यन्ते तन्मते ऊषित्वा इत्येव भवति। उणादौ “उषेः किल्लुक् च” (उ०८८) इति खे उखा । “वनि-कणि–”(उ०१६२) इति ठे ओष्ठः । “घृ-वी-ह्वा–”(उ०१८३) इति किति णे उष्णम् । “सू-मू-खनि–” (उ० ४४९) इति किति त्रटि उष्ट्रः । “उषेर्ज् च” (उ० ९५९) इति असि ओजो बलम् । “मिथि-रञ्ज्युषि–” (उ०९७१) इति किति असि उषः प्रातः ॥

**श्रिषू** । श्रेषति । शिश्रेष । श्रेषिता । श्रिष्ट्वा श्रेषित्वा श्रिषित्वा । श्रिष्टः श्रिष्टवान् । “नाम्युपान्त्य–” ५।१।५४। इति के श्रिष. ॥ **श्लिषू** । श्लेषति । श्लेषिता श्लिष्ट्वा श्लेषित्वा श्लिषित्वा । श्लिष्टः श्लिष्टवान् । अश्लेषीत् । **श्लिषंन्च् आलिङ्गने** श्लिष्यति । श्लेष्टा । श्लेष्मा । **श्लिषण् श्लेषणे** श्लेषयति ॥ **प्रुषू** । प्रोषति । पुप्रोष । प्रोषिता । प्रुष्ट्वा प्रोषित्वा प्रुषित्वा । उणादौ “निघृषी–” (उ० ५११) इति किति वे प्रुष्वा निवृचि ॥ **प्लुषू** । प्लोषति । पुप्लोष । प्लोषिता । प्लुष्ट्वा प्लोषित्वा प्लुषित्वा । प्लुष्टः प्लुष्टवान् । **प्लुषूच् दाहे** प्लुष्यति । **प्रुष प्लुषश् स्नेहे[2]-सेचन-पूरणेषु** प्रुष्णाति प्लुष्णाति ॥

**५३४ घृषू संहर्षे**[3] । घर्षति । जघर्ष । घर्षिता । ऊदित्त्वात् घृष्ट्वा घर्षित्वा । वेट्त्वात् क्तयोर्नेट्, घृष्टः घृष्टवान् । “नन्द्यादिभ्य.” ५।१।५२। इति अने सङ्घर्षण· । उणादौ “निघृषी–”(उ० ५११) इति किति वे निघृष्वोऽनुकूल. ॥

**५३५ हृषू अलीके** । हर्षति । जहर्ष । हर्षिता । ऊदित्त्वात् हृष्ट्वा हर्षित्वा । वेट्त्वात् क्तयोर्नेट्, हृष्ट· हृष्टवान्, शील्यादित्वादत्र सत्यर्थे क्त । “हृषे केश-लोम-विस्मय-प्रतिघाते” ४।४।७६। इति[4]

---

१ नित्यबहुवचनान्तः स्त्रीलिङ्गश्चायम् ॥ २ स्नेहन-सेचन° स २ ॥ ३ “घृषू संघर्षे” इति माध० धा० वृ० १२५ धातुप्र० ६९५ । हैमधातुपाठेऽपि “संघर्षे” इति । ४ इति वेटि हृ° सपा०१ वा० ॥

वा नेटि हृष्टाः हृषिता. केशा., हृष्टम् हृषितं केशैः; एवं हृष्टानि हृषितानि लोमानि; हृष्टः हृषित-श्चैत्र विस्मित इत्यर्थ ; हृष्टाः हृषिता दन्ताः प्रतिहता इत्यर्थः। उणादौ "हृषि-वृति–" (उ० ४८५) इति उले हर्षुलः कामी। "हृषि-पुषि–" (उ० ७९७) इति णौ इत्नौ हर्षयित्नुः स्वजनः तुषं हृषच् तुष्टौ हृष्यति ॥

५३६ पुष पुष्टौ। पोषति। पुपोष। अपोषीत्। पोषिता। "स्व-स्नेहनार्थात्–" ५।४।६५। इति णमि स्वपोषम्, गोपोषम्, रैपोषम्। पुषित.। उणादौ "सृ-पुषिभ्या कित्" (उ० ४३६) इति करे पुष्करम्। "वलि-पुषेः कलक्" (उ० ४९६) पुष्कलः। "हृषि-पुषि–" (उ० ७९७) इति णौ इत्नौ पोषयित्नुर्मेघ । पुषंच् पुष्टौ पुष्यति अपुषत्, अत्र "लृदिद्-द्युता–"३।४।६४। इत्यङ्। पुषश् पुष्टौ पुष्णाति। पुषण् धारणे पोषयति ॥

५३७ भूष ५३८ तसु अलङ्कारे। भूषति। बुभूष। भूषिता। क्ते भूषितः। क्ते सेट्त्वात् "क्तेटो–" ५।३।१०६। इत्यः, भूषा। अनटि भूषणम् ॥

अथ सान्तास्त्रयोदश घस्लंवर्जाः सेटश्च—

तसु। उदित्त्वाद् ने तंसति। ततंस। तसिता। "व्यञ्जनाद्–" ५।३।१३२। घञि उत्तंसः अवतंसः। भूष तसुण् अलङ्कारे भूषयति तंसयति ॥

५३९ तुस ५४० ह्रस ५४१ ह्लस ५४२ रस शब्दे। तोसति। तुतोस। तोसिता। उणादौ "मृ-दि-कन्दि–" (उ० ४६५) इति अले तोसलो राजा, तोसला देशः ॥ ह्रस। ह्रसति, जह्रास, ह्रसिता। क्ते ह्रसितम्। उणादौ "लटि-खटि–" (उ० ५०५) इति वे ह्रस्वः ॥ ह्लस। ह्लसति। जह्लास जह्लसतुः जह्लसुः। ह्लसिता। क्ते ह्लसितः ॥ रस। रसति। ररास रेसतुः रेसुः। रसिता। क्ते रसितम्। उणादौ "रसेर्वा" (उ० २६०) इति णिति ने रास्ना ओषधिः, रस्ना जिह्वा। रसण् आस्वादन-स्नेहनयोः अदन्तः रसयति। कर्मणि अलि रसः। "व्यसिरसि" (उ०२६९) इत्युणादौ अने रसना रसनं जिह्वा ॥

५४३ लस श्लेषण-क्रीडनयोः। लसति। ललास लेसतुः लेसुः। लसिता। क्ते लसितम्। अचि लस. कर्मसु श्लिष्टः समाहित इति यावत्, न लसोऽलसः। "वेर्विच–" ५।२।५९। इति घिनणि विलसनशीलो विलासी। घ्यणि लास्यम्। घञि विलासः। "हृदयस्य हृत्–" ३।२।९४। इति हृदा-देशे हृल्लास। "तिक्कृतौ नाम्नि" ५।१।७१। इति अके लसिका रोगः ॥

५४४ घस्लृं अदने। घसति। क्ये घस्यते। जघास जक्षतु' जक्षुः, अत्र "गम-हन–" ४।२।४४। इत्युपान्त्यलोपे "अघोषे–" १।३।५०। इति प्रथमत्वे "घस्वस." २।३।३६। इति षत्वम्।

१ पोषम्। पुष्टः। उ॰ सपा१ वा० ॥ २ क्ते ह्लसितम् सं१ सं २ तण० खे० नास्ति ॥ ३ क्ते [illegible] इति नास्ति ॥ ४ दसे सपा १ नास्ति ॥

अनुस्वारेत्त्वाद् नेट् घस्ता, घस्तुम् । “सृ-घस्यदो मरक्” ५।२।७३। घस्मरः । घञि घासः । उणादौ “भी-वृधि–” (उ० ३८७) इति रे घस्रो दिनम् । मरग्विषय[1] एव घसिरित्येके ॥

**५४५ हसे हसने** । हसति । जहास जहसतुः जहसुः[2] । हसिता । “व्यञ्जनादेः–” ४।३।४७। इति वा वृद्धेरेदित्त्वाद् “न श्वि-जागृ–”४।३।४९। इति प्रतिषेधे अहसीत् । “क्रियाव्यतिहारे–”३।३।२३। हसो वर्जनाद् नात्मनेपदम्, व्यतिहसन्ति । “न वा क्वण–” ५।३।४८। इति वाऽञि हसः हासः । उणादौ “दम्यमि–” (उ० २००) इति ते हस्तः । “भी-वृधि–” (उ० ३८७) इति रे हस्रो दिनम्, सहस्रं दश शतानि ॥

**५४६ पिसृ ५४७ पेसृ ५४८ वेसृ गतौ** । पेसति । पिपेस[3] । पेसिता । ऋदित्त्वाद् णौ ङे “उपान्त्यस्या–” ४।२।३५। इति ह्रस्वाभावे अपिपेसत् । “नाम्युपान्त्य–” ५।१।५४। इति के पिसः । “स्थेश-भास–” ५।२।८१। इति वरे पेसनशील. पेस्वरः । **पिसण् हिंसायाम्** पेसयति ॥ **पेसृ** । पेसति । क्ये पेस्यते । पिपेस पेसिता । ऋदित्त्वाद् णौ ङे अपिपेसत् । क्ते पेसितम् ॥ **वेसृ** । वेसति । क्ये वेस्यते । विवेस । ऋदित्त्वाद् णौ ङे अविवेसत् । वेसिता । क्ते वेसितम् । उणादौ “जठर-क्रकर–” (उ० ४०३) इति निपातनात् अरे वेसरः ॥

**५४९ शसू हिंसायाम्** । ताल्व्यादिः । शसति । शशास । “अनादेशादेः–” ४।१।२४। इत्येत्वस्य “न शस-दद–” ४।१।३०। इति प्रतिषेधात् शशसतुः शशसुः । शसिता । ऊदित्त्वात् शस्त्वा शसित्वा । “धृष-शस–” ४।४।६६। इति प्रगल्भे[4] एव नेट्, विशस्तः प्रगल्भः, अन्यत्रेटि विशसित. । “व्यञ्जनादेः–” ४।३।४७। इति वा वृद्धे “न श्वि-जागृ–” ४।३।४९। इति प्रतिषेधे अशसीत् । “नी-दाव्–” ५।२।८८। इति त्रटि शस्त्रम् । उणादौ “शासि-शंसि–” (उ० ८५७) इति तृः, विशस्ता घातकः ॥

**५५० शंसू स्तुतौ च** । ताल्व्यादिः । चकाराद् हिंसायाम् । शंसति । शशंस शशंसतुः शशंसुः । क्ये शस्यते । शंसिता । ऊदित्त्वात् शस्त्वा शंसित्वा । क्त्वि वेट्त्वात् क्तयोर्नेट्, शस्तः शस्तवान् । “कृ-वृषि–” ५।१।४२। इति वा क्यपि प्रशस्यम्, पक्षे घ्यणि प्रशंस्यम् । अणि नृशंसः, यो मृतान् शंसति निर्गतशसो वा नृशसः निरनुकम्प इत्यर्थः, पृषोदरादित्वान्निरो नृभावः, अनेकार्थत्वाद्वा द्रोहार्थत्वे नॄन् शंसतीति नृशंस । ब्राह्मणादाहृत्य शंसतीति “अजाते.–” ५।१।१५४। इति णिनि ब्राह्मणाच्छंसी, “ब्राह्मणाच्छंसी” ३।२।११। इति निपातनाद् ङसेरलुप् । “शंसि-प्रत्ययात्” ५।३।१०५। इति अः प्रशंसा । उणादौ “चि-मिदि–”(उ० ४५४) इति किति त्रे शस्त्रं स्तोत्रमायुध च । “शासि-शंसि–” (उ० ८५७) इति तृः, शंस्ता पशुविशसिता ॥

---

१ सृ–घसि–अदो मरक्” ५।२।७३। इति विहिते मरक्–प्रत्यये एव ‘घसॢ’ धातोः प्रयोगः–इति भावः । २ जहसुः संपा १ नास्ति ॥ ३ पिपेस सपा १ नास्ति ॥ ४ प्रगल्भो जितसभः, अविनीत इति वामनः । तथा च “धृषि–शसो वैयात्ये” ७।२।१९। पाणि० सूत्रे तद्वच –“वियातस्य भावो वैयात्यम् प्रागल्भ्यमविनीतता” इति ।

जर्त्स परिभाषण-हिंसा-तर्जनेष्वित्येके ॥ जर्त्सति । जर्त्सन्ती स्त्री ॥

**अथ हान्ताः पञ्चदश मिहं-दहंवर्जाः सेटश्च—**

**५५१ मिहं सेचने** । मेहति । मिमेह । अनुस्वारेत्त्वात् नेट्, मेढा । मेढुम् । "ह-शिटो–" ३।४।५५। इति सकि अमिक्षत् । "नाम्युपान्त्य–" ५।१।५४। इति के मिहः । "लिहादि–" ५।१।५०। अचि "व्यञ्जनाद्–" ५।३।१३२। इति घञि वा "न्यङ्कुद्ग–" ४।१।११२। इति घत्वम्, मेघः । "ऋवर्णे–" ५।१।१७। इति घ्यणि मेह्यः । "नी-दाव्–" ५।२।८८। इति त्रटि मेढ्रः । अनटि मेहनम् । "दाश्वत्साह्व–" ४।१।१५। इति निपातनात् क्वसौ मीढ्वान् मीढ्वांसौ । उणादौ "ग्रुषीषि–" (उ० ४१६) इति किति इरे मिहिर ॥

**५५२ दहं भस्मीकरणे** । दहति । ददाह । अनुस्वारेत्त्वाद् नेट्, दग्धा, धक्ष्यति । "गृ-लुप–" ३।४।१२। इति यङि "जप-जभ–" ४।१।५२। इति पूर्वस्य मौ दन्दह्यते । यङ्लुपि दन्दहीति दन्दग्धि । घ्यणि दाह्यम् । "व्यञ्जनाद्–" ५।३।१३२। घञि निदह्यतेऽस्मिन्निति निदाघः, भावे घञि दाघः, कर्मणि अवदाघ[3] भक्ष्ये "न्यङ्कुद्ग–" ४।१।११२। इति घत्वम् ; अन्यत्र अवदाहः। "वेर्दहः" ५।२।६४। इति घिनणि विदहनशीलो विदाही । "परेः–" ५।२।६५। इति परिदाही । उणादौ "ग्वसि-रसि–" (उ० २६९) इति अने दहनः ॥

**५५३ चह कल्कने** । कल्कनं शाठ्यम् । चहति । चचाह चेहतुः चेहुः । "व्यञ्जनादेः–" ४।३।४७। इति वा वृद्धेः "न श्वि-जागृ–" ४।३।४९। इति प्रतिषेधात् अचहीत् । यङि चाचह्यते । यङ्लुपि चाचहीति चाचाढि । अचि चहः शठ इत्यर्थः । **चहण् कल्कने** अदन्तः चहयति । "चहणः शाठ्ये" ४।२।३१। इति ञिणम्परे णौ वा दीर्घे अचाहि अचहि, चाहं चाहम्, चहं चहम् ॥

**५५४ रह त्यागे** । रहति । रराह रेहतुः रेहुः । "न श्वि-जागृ–" ४।३।४९। इति वृद्धिप्रतिषेधात् अरहीत् । उणादौ "कृ-वा-पा-जि–" (उ० १) इति उणि राहु । "अस्" (उ० ९५२) इति असि रहः । **रहण् त्यागे** रहयति । अलि विरहः ॥

**५५५ रहु गतौ** । उदित्त्वाद् ने रंहति । ररंह । रंहिता । उणादौ "अस्" (उ० ९५२) इति असि रंहः । **रहुण् गतौ** रंहयति ॥

**५५६ दृह ५५७ दृहु ५५८ बृह वृद्धौ** । दर्हति । ददर्ह ददृहतुः ददृहुः । दर्हिता ॥ दृहु । उदित्त्वाद् ने दृंहति । क्ये दृह्यते । "वलि-स्थूले–" ४।४।६९। इति निपातनात् क्ते दृहेर्दृंहेश्च दृढः । दृंहितुम् ॥ बृह । बर्हति । बर्हिता । "क्षुब्ध-विरिब्ध–" ४।४।७०। इति निपातनात् क्ते नेट्, परिवृढः प्रभुः । उणादौ "द्रुहि-वृहि–" (उ० ८८४) इति कतृ, बृहन् बृहन्तौ, बृहती ॥

---

१ मु-आगमे । २ दहेर्न्यपाभ्यां घञि सञ्ज्ञाया हस्य घत्वम्, निदाघः ऋतुविशेषः ॥ ३ केवलपानीयभक्ष्योऽपूपः ॥

**५५९ वृहू ५६० वृहु शब्दे च** । चकाराद् वृद्धौ । वर्हति । ववर्ह । वर्हिता । ऋदित्वाद् "ऋदिच्छ्वि—" ३।४।६५। इति वाऽङि अवृहत्, पक्षे अवर्हीत् । शतरि वर्हन् वर्हन्तौ वर्हन्त. । णके वर्हकः ॥ वृहु । उदित्त्वाद् ने बृंहति । बृंहिता । क्ये बृंह्यते । णके बृंहक' । बृंहन् बृंहन्तौ बृंहन्तः । क्ते बृंहितम् । "क्षुब्ध-विरिब्ध—"४।४।७०। इति निपातनात् क्ते परिवृढः । उणादौ "बृहेर्नोऽच्च" (उ० ९१३) इति मनि ब्रह्म । "बंहि-बृहेर्नलुक् च" (उ० ९९०) इति इसि बर्हि ॥

**५६१ उहृ ५६२ तुहृ ५६३ दुहृ अर्दने** । ऋदितस्त्रयोऽपि । ओहति । "उपसर्गस्या—"१।२।१९। इत्यवर्णलोपे अपोहति । ऋदित्त्वाद्वाऽङि औहत्, पक्षे औहीत् ॥ तुहृ । तोहति । ऋदित्त्वाद्वाऽङि अतुहत् अतोहीत् । उणादौ "वृजि-तुहि—" (उ० २८३) इति इने तुहिनम् ॥ दुहृ । दोहति । ऋदित्त्वाद्वाऽङि अदुहत् अदोहीत् ॥

**५६४ अर्ह ५६५ मह पूजायाम्** । अर्हति । "अनातो—" ४।१।६९। इत्यात्वे ने च आनर्ह आनर्हतुः आनर्हुः । अर्हिता । "अर्होऽच्" ५।१।९१। पूजार्ह, पूजार्हा । "सुग्-द्विषा—" ५।२।२६। इति तृशि त्रिलोक्यभ्यर्चनप्रकर्षमर्हति अर्हन् । "व्यञ्जनाद्—" ५।३।१३२। घञि "न्यङ्कूद्ग—" ४।१।११२। इति घे च अर्हन्ति तेनेति अर्घो मूल्यं पूजाद्रव्य च । अर्घिर्धात्वन्तरं च सौत्रम्, अर्घ. ।

"कला नार्घन्ति षोडशीम्" । [ ]

"शक-धृष—" ५।४।९०। इति तुमि अर्हति भोक्तुम् । **अर्हण् पूजायाम्** । अर्हयति । "अयमर्थविशेषे पूजायामेव चुरादिः" इति पूजाया अन्यत्र योग्यत्वादौ न णिच्, अर्हति । इह च पूजाया[३] पाठात् पूजायामपि णिजभावः ॥ **मह** । महति । महिता । अचि मह., गौरादित्वाद् ङ्याम् मही । उणादौ "द्रुहि-वृहि—" (उ० ८८४) इति कतरि महान् महान्तौ महान्तः । "अस्" (उ० ९५२) इति असि महः महसी । "महेरुच्चास्य वा" (उ० ८९) इति खेऽन्तलुकि च मुखम्, मख । "महेर्णिद्वा" (उ० २८५) इति इने माहिनं महिनं च राज्यम्, महिनो माहात्म्यवान् । "मह्यविभ्या टित्" (उ० ५४७) इति इषे महिष', महिषी । **महण् पूजायाम्** महयति ॥

**अथ क्षान्ता विंशतिः सेटश्च**—क्षान्ताना षान्तेषु पाठो युक्त., वैचित्र्यार्थं त्विह कृतः ॥

**५६६ उक्ष सेचने** । उक्षति । "गुरुनाम्यादेः—" ३।४।४८। इत्यामादेशे उक्षाञ्चकार । उक्षिता । क्ते उक्षितः । "व्यतिहारे—" ५।३।११६। इति ञे "नित्य ञ—" ७।३।५८। इति स्वार्थेऽणि व्यात्युक्षी । उणादौ "उक्षि-तक्षि—" (उ० ९००) इति अनि उक्षा ॥

---

१ विक्रीयमाणस्य धान्यादेरियत्ता पूजाविधेश्च इति **माधवीयधातुवृत्तौ** पृ० १२९ धातुअं० ६६२ ॥ २ अर्घ **मूल्ये** इति मौत्रोऽयम्, तथा च श्रीमन्तो **हेमहंसगणयः**—अत्र यथोक्तसकलमौत्रादिधातूना सङ्ग्रहश्लोक्ष — कण्ड्वादिरथ स्तम्भूस्तन्द्राः कि–पति–गृहि–चिरि–जु–क्रुर्भूस्तर्कि । कक्किः कर्कि सिकि–मर्कि–चङ्कि–मकि–रिखि–कगा–ऽर्घिमर्चाश्च ॥१॥ इत्यादि ॥ ३ **पूजायाः पा**° खे० सं१ स२ तपा० ॥

**५६७ रक्ष पालने**। चौराद् रक्षति। ररक्ष। रक्षिता। "ग्रहादि-" ५।१।५३। इति णिनि निरक्षी। क्ते रक्षितः। क्ते सेट्त्वात् "क्तेटो-" ५।३।१०६। इत्यः, रक्षा। उणादौ "अस्" (उ० ९५२) इति असि रक्षः, भीमादित्वादपादाने साधुः। प्रज्ञादित्वात् स्वार्थेऽणि राक्षसः॥

**५६८ मक्ष ५६९ मुक्ष सङ्घाते**। मक्षति मक्षिता। णके मक्षिका। रोषेऽयमित्येके। घञि मक्षो मन्यु.॥ **मुक्ष**। मुक्षति। मुक्षिता॥

**५७० अक्षौ व्याप्तौ च**। चकारात् सङ्घाते। "वाऽक्ष." ३।४।७६। इति श्नुः, अक्ष्णोति अक्षति।, "अनातो-,, ४।१।६९। इत्यात्वे ने च आनक्ष आनक्षतुः आनक्षुः। औदित्त्वाद् "धूगौदितः" ४।४।३८। इति वेटि अष्टा अक्षिता। वेट्त्वात् क्तयोर्नेट्, अष्टः अष्टवान्। उणादौ "जठर-क्रकर-" (उ० ४०३) इति अरे अक्षरम्[1]। "पदि-पठि-" (उ० ६०७) इति इः, अक्षि[3]। "उक्षि-तक्षि-" (उ० (उ० ९००) इति अनि अक्षा दृष्टिनिपात.॥

**५७१ तक्षौ ५७२ त्वक्षौ तनूकरणे**। तनूकरणं कार्श्यम्। "तक्षः स्वार्थे वा" ३।४।७७। इति श्नुः, तक्ष्णोति तक्षति। स्वार्थः पाठापेक्षया तनूकरणम्, इदमेव ज्ञापकम्—'धातवोऽनेकार्थाः' इति। स्वार्थादन्यत्र सन्तक्षति वाग्भि· शिष्यम्—निर्भर्त्सयते इत्यर्थः। ततक्ष। औदित्त्वाद्वेट्, तष्टा तक्षिता। वेट्त्वात् क्तयोर्नेट्, तष्टः तष्टवान्। णके तक्षकः। उणादौ "उक्षि-तक्षि-" (उ० ९००) इति अनि तक्षा, "स्त्रियां नृत-" २।४।१। इति ङ्याम् तक्ष्णी॥ **त्वक्षौ**। त्वक्षति। तत्वक्ष। औदित्त्वाद् वेट्, त्वष्टा त्वक्षिता। वेट्त्वात् क्तयोर्नेट्, त्वष्टः त्वष्टवान्॥

**५७३ णिक्ष चुम्बने**। चुम्बनं वक्त्रसंयोगः। "पाठे-" २।३।९७। इति णस्य नत्वे निक्षति। "अदुरुपसर्गा-" २।३।७७। इति णत्वे प्रणिक्षति, परिणिक्षति। निक्षिता। "निंस-निक्ष-" २।३।८४। इति कृति वा णत्वे प्रनिक्षणम् प्रणिक्षणम्, प्रनिक्षिता प्रणिक्षिता। कृदभावेऽपि वा णत्वम् इत्येके, प्रनिक्षति प्रणिक्षति। एवं **निंस-निन्दोरपि**॥

**५७४ तृक्ष ५७५ स्तृक्ष ५७६ णक्ष गतौ**। तृक्षति। ततृक्ष। तृक्षिता। अचि तृक्षः। तृक्षस्यापत्यं वृद्धम् तार्क्ष्यः[4]॥ **स्तृक्ष**। स्तृक्षति। तस्तृक्ष। स्तृक्षिता। षोपदेशोऽयम् इति **चन्द्रः**॥ **णक्ष**। "पाठे"-२।३।९७। इति णस्य नत्वे नक्षति। "अदुरुपसर्गा-" २।३।७७। इति णत्वे प्रणक्षति। अचि नक्षः। उणादौ "वृग्-नक्षि-" (उ० ४५६) इति त्रे नक्षत्रम्[6]। नखादिसूत्रे[7] त्वस्य निपातनम्—'नाम्ना व्युत्पत्तिरव्यवस्थिता' इति ज्ञापनार्थम्॥

---

१ "मी-व्यजि-मा-मद्यशौ-वसि-किभ्यः सर." (उ० ४३९) इति सूत्रेण सरप्रत्ययेऽपि अक्षरम्॥ २ "जठर-क्रकर-" (उ०४०३) इत्यत्र तु आदिग्रहणात्॥ ३ अत्र "पदि-पठि-"(उ० ६०७)इत्यत्र आदिग्रहणात् अक्षि-इति॥ ४ °पत्यं तार्क्ष्यः मपा १ वा० नं१ सं २ तपा०॥ ५ अत्र "गर्गादेर्यञ्" ६।१।४२। इति यञ्-प्रत्ययः॥ ६ न क्षीयते न क्षरति वा नक्षत्रम्। यद्वा क्षद संवरणे इति सौत्रो धातुः, न क्षदति प्रभामिति नक्षत्रम्, "हु-या-मा-श्रु-" (उ० ४५१) इति त्र। उभयत्र नञादित्वात् सिद्धम्॥ ७ "नखादय." ३।२।१२८। इति सूत्रम्।

**५७७ वक्ष रोषे** । सङ्घाते इत्येके । वक्षति । ववक्ष । उणादौ "अस्" (उ० ९५२) इति असि सपत्नीरोषविषयत्वाद् वक्षतीति वक्षः—उरः ॥

**५७८ त्वक्ष त्वचने** । त्वचनं त्वग्ग्रहणं संवरण वा । त्वक्षति । तत्वक्ष[1] । त्वक्षिता । उणादौ "शासि-शंसि–" (उ० ८५७) इत्यादिग्रहणात् तृः, त्वष्टा त्वष्टारौ ॥

**५७९ सूर्क्ष अनादरे**[2] । सूर्क्षति । सुसूर्क्ष । सूर्क्षिता । मनि सुसूर्क्ष्मा । यान्तोऽयम् इत्यन्ये, सूर्क्ष्यति सुसूर्क्ष्य । मनि "य्वो.–" ४।४।१२१। इति यलोपे सूर्क्ष्मा ॥

**५८० काक्षु ५८१ वाक्षु ५८२ माक्षु काङ्क्षायाम्** । उदित्त्वाद् ने काङ्क्षति चकाङ्क्ष ॥ वाङ्क्षति ववाङ्क्ष ॥ माङ्क्षति ममाङ्क्ष ॥

**५८३ द्राक्षु ५८४ ध्राक्षु ५८५ ध्वाक्षु घोरवाशिते च** । चकारात् काङ्क्षायाम् । त्रयोऽप्युदितः । उदित्त्वाद् ने द्राङ्क्षति दद्राङ्क्ष ॥ ध्राङ्क्षति दध्राङ्क्ष ॥ ध्वाङ्क्षति दध्वाङ्क्ष । अचि ध्वाङ्क्षः ॥

**॥ एते निरनुबन्धत्वात् "शेषात्"[3] ३।३।१००। कर्तरीति परस्मैपदिनः ॥**

**अथ ङित आत्मनेपदिन आईक्षेर्वर्णसमाम्नायक्रमेण वक्ष्यन्ते—**

**५८६ गांङ् गतौ** । ङित्त्वादात्मनेपदम् । एक-द्वि-बहुत्वेषु गाते । जगे जगाते जगिरे । क्ये "ईर्व्यञ्जनेऽयपि" ४।३।९७। इति ईत्वे गीयते । ये तु गायतेरेवेत्वमिच्छन्ति तन्मते गायते । अनुस्वारेत्त्वाद् नेट्, गाता गातुम् गातव्यम् । "इणिकोर्गा" ४।४।२३। अगात् । **कैं गैं रैं शब्दे** गायति ॥

**५८७ ष्मिंङ् ईषद्धसने** । "षः सो–" २।३।९८। इति षस्य सत्वे स्मयते । षोपदेशत्वाद् "नाम्यन्तस्था–" २।३।१५। इति षत्वे सिष्मिये सिष्मियाते सिष्मियिरे । अनुस्वारेत्त्वाद् नेट्, स्मेता स्मेतुम् । सनि "ऋ-स्मि-पूङ्–"४।४।४८। इतीटि सिस्मयिषते, अत्र "णि-स्तोरेवा–"२।३।३७। इति नियमात् न षत्वम् । यङि सेष्मीयते । यङ्लुपि सेष्मेति सेष्मयीति । णौ "स्मिङः प्रयोक्तुः–" ३।३।९१। इत्यात्वे आत्मनेपदे च मुण्डो विस्मापयते; करणात् स्वार्थे तु रूपेणैनं विस्माययति । "स्म्यज-स–" ५।२।७९। इति रे स्मेरः ॥

**५८८ डीङ् विहायसा गतौ** । डयते । डिड्ये डिड्याते । वयांसि च निडिड्यिरे । इटि डयिष्यते । क्तयोरिटि "न डीङ्–शीङ्–" ४।३।२७। इति कित्त्वप्रतिषेधात् डयित. डयितवान् । **डीङ्च् गतौ** डीयते । क्तयोः "डीयश्व्यैदितः" ४।४।६१। इति नेट् "सूयत्यादि–" ४।२।७०। इति तस्य नत्वं च, डीनः डीनवान् ॥

**अथ उकारान्ता एकादश अनिटश्च—**

**५८९ उंङ् ५९० कुंङ् ५९१ गुंङ् ५९२ घुंङ् ५९३ ङुंङ् शब्दे** । पञ्चाप्यनुस्वारेतः । अवते । "वार्णात् प्राकृतं बलीयः" इति न्यायादन्तरङ्गाद्दीर्घात् प्रागुवादेशे ऊवे ऊवाते ऊविरे । क्ये "दीर्घ-

---

१ ˚क्ष । त्वक्षिष्यति । त्व˚ सपा १ विना सर्वत्र ॥ २ आदरे इत्यन्ये ॥ ३ '"शेषात्" ३।३।१००। इति कर्तरि' इत्येवं शब्दयोजना समुचिता ।

श्वि–" ४।३।१०८। इति दीर्घे ऊयते। अनुस्वारेत्त्वाद् नेट्, ओता ओतुम्। सनो "नामिनोऽनिट्" ४।३।३३। इति किस्वाद्गुणाभावे "स्वर-हन्–" ४।१।१०४। इति धातोर्दीर्घे सनो द्वित्वे ऊषिपते। क्तयोः उत उतवान्। णिगि आवयति। "युवर्ण–" ५।३।२८। इति अलि अवः। उणादौ "स्वरेभ्य इ." (उ०६०६) अवि॥ कुंङ्। कवते। चुकुवे। कोता। कोतुम्। "न कवतेर्यङ"४।१।४७। इति कस्य चत्वप्रतिषेधात् कोकूयते खरः। तिव्निर्देशाद् यङ्लुपि चत्वप्रतिषेधाभावात् चोकोति। उणादौ "कु-पू-समिण्भ्यश्चट् दीर्घश्च" (उ० ११२) कूचो हस्ती, कूची चित्रोपकरणम्। "यु-सु-कु–" (उ० २९७) इति पे ऊत्वे च कूपः। "ऋच्छि-चटि–" (उ० ३९७) इति अरे कवरो वर्णः, कवरी वेणि। "नी-मी–" (उ० ४४३) इति वरटि दीर्घे च कूवरः। "स्वरेभ्य–" (उ० ६०६) इति इ, कवि। कुंङ् शब्दे कौति, चोकूयते। कुंङ् कूङ्त् शब्दे कुवते, चोकूयते॥ गुंङ्। अयमव्यक्ते शब्दे इत्येके[१]। गवते। जुगुवे। अनुस्वारेत्त्वाद् नेट्, गोता गोतुम्। उणादौ "शुभि-गृहि–" (उ० ३५) इति किति आके गुवाकम्। "मवाक–" (उ० ३७) इति निपातनात् आके गूवाकम्। "हु-या-मा–" (उ० ४५१) इति त्रे गोत्रम्। "मृदि-कन्दि–" (उ० ४६५) इति अले गवलम्। दीर्घान्तमेन परस्मैपदिन पुरीषोत्सर्गे केचिदधीयते। गवति। गुंत् पुरीषोत्सर्गे गुवति, गुता, गुतुम्॥ घुंङ्। घवते। जुघुवे। अनुस्वारेत्त्वाद् नेट्, घोता घोतुम्। उणादौ "घु-यु-हि–" (उ० २४) इति के दीर्घे च घूकः॥ ङुंङ्। ङवते। जुङुवे। यङि जोङूयते। अनुस्वारेत्त्वाद् नेट्, ङोता ङोतुम्। "खुंङ्" इत्येके॥

५९४ च्युंङ् ५९५ ज्युंङ् ५९६ जुंङ् ५९७ प्रुंङ् ५९८ प्लुंङ् गतौ। पञ्चाप्यनिटः। च्यवते। चुच्युवे। णिगि च्यावयति। णौ सनि "श्रु-स्रु–" ४।१।६१। इति वा ओरित्वे चिच्यावयिषति चुच्यावयिषति। णौ ङे सन्वद्भावात् अचिच्यवत् अचुच्यवत्। अनुस्वारेत्त्वाद् नेट्, च्योष्यते। च्युतः च्युतवान्। "नन्द्यादिभ्य." ५।१।५२। इति अने च्यवनः॥ ज्युंङ्। ज्यवते। जुज्युवे। अनुस्वारेत्त्वाद् नेट्, ज्योता। उणादौ "मवाक-श्यामाक–" (उ० ३७) इति आके निपातनात् ज्योन्ताकं स्वेदगृहम्॥ जुंङ्। जवते। जुजुवे। अनुस्वारेत्त्वाद् नेट्, जोता। "भूषा-क्रोधार्थ–"५।२।४२। इति अने जवनशीलो जवनः[२]। "भ्रात्सू-जोरिन्" ५।२।७१। प्रजवनशीलः प्रजवी। "दिद्युद्–" ५।२।८३। इति निपातनात् क्विपि जू पिशाचः, जुवौ जुवः। "युवर्ण–" ५।३।२८। इति अलि जवः। "साति-हेति–"५।३।९४। इति निपातनात् क्तौ जूतिः। सौत्रोऽप्ययम्, जवति॥ प्रुंङ्। प्रवते। पुप्रुवे। अनुस्वारेत्त्वाद् नेट्, प्रोता। णौ फलवत्कर्तर्यात्मनेपदापवादे "चल्याहारा–" ३।३।१०८। इति परस्मैपदे प्रावयति[३]। णौ सनि "श्रु-स्रु–" ४।१।६१। इति वा ओरित्वे पिप्रावयिषति पुप्रावयिषति। णौ ङे सन्वद्भावात् अपिप्रवत् अपुप्रवत्। "प्र-स्रु-ल्वो–" ५।१।६९। इति अके साधु प्रवते प्रवकः।

---

१ उकारस्य॥ २ यद्यपि जवनः जुं वेगे इति सौत्रेण सिध्यति तथापि अत्रोल्लेखात् जुंङ् गतौ इत्यस्यापि भवति, अत्रार्थे हेमहंसगणयोऽपि तथैव पठनादनुकूला॥ ३ प्रापयतीत्यर्थ॥

"युवर्ण–" ५।३।२८। इति अलि प्रवः। "दिद्युद्–" ५।२।८३। इति निपातनात् क्विपि कटप्रूर्नदीतीर[1]। उणादौ "कमि-प्रु-गा–"(उ०२२५) इति थे प्रोथ अश्वघोणाग्रम्॥ प्लुंङ्। प्लवते। पुप्लुवे। अनुस्वारेत्त्वाद् नेट्, प्लोता। णौ सनि "श्रु-स्रु–"४।१।६१। इति वा ओरित्वे पिप्लावयिषति पुप्लावयिषति। णौ ङे सन्वद्भावात् अपिप्लवत् अपुप्लवत्। "भव्य–गेय–" ५।१।७। इति निपातनाद्वा कर्तरि घ्यणि आप्लाव्यश्चैत्रो नद्याम्, पक्षे भावे "उवर्णात्–" ५।१।१९। इति घ्यणि आप्लाव्यमनेन। अचि प्लव., गौरादित्वाद् ङ्याम् प्लवी। "आङो रु-प्लोः" ५।३।४९। इति वा अलि आप्लव आप्लावः॥

५९९ रुंङ् रेषणे च। चकारात् गतौ। रेषणं हिंसाशब्द। रवते। रुरुवे। अनुस्वारेत्त्वाद् नेट्, रोता रोतुम्। "आङो रु-प्लो" ५।३।४९। इति वा अलि आरव आराव.। "रोरुपसर्गात्" ५।३।२२। इति घञि विरावः संराव। उणादौ "तृ-कृ-शृ–" (उ० १८७) इति अणे रवण.। "स्वरेभ्य–" (उ० ६०६) इति इः, रवि.। "रु-पूभ्या कित्" (उ०८०७) इति रौ रुरु.। रुक् शब्दे रौति॥

अथ ऊदन्तौ द्वौ सेटौ च—

६०० पूङ् पवने। पवन नीरजीकरणम्। पवते। पुपुवे। पविता। पवितुम्। "ग्रह-गुहश्च–" ४।४।५९। इति निषेधापवादे "ऋ-स्मि-पूङ्–" ४।४।४८। इति सनीटि "ओर्जान्तस्था–" ४।१।६०। इति पूर्वस्योत इत्वे च पिपविषते। यङि पोपूयते। यङ्लुपि पोपोति पोपवीति। "पूङ्-क्लिशिभ्यो नवा" ४।४।४५। इति क्त-क्तवतु-क्त्वामादौ वेटि पवित पवितवान्, अत्र "न डीङ्–" ४।३।२७। इति कित्त्वाभावाद्गुण; पक्षे पूतः पूतवान्। पवित्वा, अत्र "क्त्वा" ४।३।२९। इति कित्त्वाभावाद्गुणः, पक्षे पूत्वा। "पू-दिव्यञ्चेः–" ४।२।७२। इति क्तयोर्नत्वे पूना यवा., विनष्टा इत्यर्थः। "जि-विपू न्यो हलि–" ५।१।४३। इति क्यपि विपूयो मुञ्ज। "पूङ्-यजः शानः" ५।२।२३। पवमानः। "हल-क्रोडास्ये–" ५।२।८९। इति त्रटि हलस्य पोत्रम्[2], सूकरस्य पोत्रम्। "पुव इत्रो दैवते" ५।२।८५। पवित्रोऽर्हन्[3]। "ऋषि-नाम्नो करणे" ५।२।८६। पवित्र ऋषिः, पवित्र दर्भादि[4]। "निरभेः पू-ल्वः" ५।३।२१। इति घञि निष्पावः[5]। नन्द्यादित्वादने पवनः। "न ख्या-पूग्–"२।३।९०। इत्यत्र गितो

१ आचार्यहेमचन्द्रः 'कटप्रू' शब्द स्वीये संस्कृतद्व्याश्रये उदाहरति। तथा च–"करिणा कटप्रूर्न मदो द्रुवाम्"–सर्ग १२ श्लो० ४५। अत्र श्लोके उदाहृत 'कटप्रू' शब्द द्व्याश्रयवृत्तिकार श्रीअभयतिलकगणिः एव व्याख्याति–"द्रुवां नश्यता करिणा मदो न स्रू–न स्रवति भयेन मदः शुष्क इत्यर्थः। कीदृक्। कटेभ्यो गण्डेभ्यः प्रवते निर्गच्छति कटप्रू–पूर्व प्रवाहेण वहन्नपि–इत्यर्थ."। एवमेव आचार्यहेमचन्द्र स्वीये अनेकार्थसंग्रहे 'कटप्रू' शब्दस्य इमान् अर्थान् कथितवान्–"कटप्र. अक्षदेवने" ॥५२८॥ "विद्याधरे–अस्रपे रुद्रे"। काण्ड ३। नात्र 'कटप्रू' शब्दस्य 'नदीतीर' इत्यर्थे सूचित। अपर च तटवाचक तीरशब्द नपुसकलिङ्ग ततश्च अत्र 'नदीतीरम्' इति उचित पाठ अथवा घट्ट–(भाषाया घाट) वाचक अपर 'तार' शब्दोऽप्यस्ति ततो नदीतार इत्यपि पाठो भवेत् परतु अस्माभिस्तु–तीर. इत्येव पाठो लब्ध। अन्यच्च पुलिङ्ग 'तीर' शब्द त्रपुवाचक शब्दकल्पद्रुमे दृश्यते परन्तु 'नदीतीर. इत्यत्र 'त्रपु' शब्देन किं कल्प्येत? अत. कथमपि 'नदीतीर.' इत्यस्य नावगम्यते भाव। २ पोत्र मुखम्॥ ३ पवतेइति पवित्र कर्तरीदम्, केचित् करणेऽपि॥ ४ पूयतेऽनेनेति पवित्र ऋषिर्दर्भादि च, ऋषौ कर्तर्यपि केचित्॥ ५ निष्पूयते इति विग्रहः॥

वर्जनात् "स्वरात्" २।३।८५। इति णत्वे प्रपवणम्, प्रपवणीयम्। उणादौ "दम्यमि–" (उ० २००) इति ते पोतः। "पू-मुदिभ्या कित्" (उ० ९३) इति गे पूगः। "ध्वसि-रसि–" (उ० २६९) इति अने पवनः। "शिक्या-ऽऽस्या-ऽऽढ्य–" (उ० ३६४) इति निपातनात् पुण्यम्। "पुत्रादयः" (उ० ४५५) इति त्रे ह्रस्वे च पुत्र.। "स्वरेभ्य इः" (उ० ६०६) पवि·। "हु-यूग्-गोन्नी–" (उ० ८६३) इति तृः, पोता पोतारौ। **पूगूश् पवने** पुनीते पुनाति॥

**६०१ मूङ् बन्धने।** मवते। मुमुवे। मविता। मवितुम्। "ग्रह-गुहश्च–" ४।४।५९। इति सनि नेट्, मुमूषते। णौ सनि "ओर्जान्तस्था–" ४।१।६०। इति पूर्वस्योत इत्वे मिमावयिषति। उणादौ "विचि-पुषि–" (उ० २२) इति किति के मूक.। "शी-री–" (उ० २०१) इति किति ते मूत. पुटबन्ध[1]। जीवनस्य मूलो जीमूत पृषोदरादि.। "शुक-शी–" (उ० ४६३) इति किति ले मूलम्। "स्नु-पू-सू–" (उ० ५४२) इति किति पे मूषा॥

**६०२ धृंङ् अवध्वंसने[2]।** धरते। दध्रे। णिगि मैत्राय शतं धारयति, अत्र "रुचि-क्लृप्यर्थ–" २।२।५५। इत्युत्तमर्णाच्चतुर्थी। यङि देध्रीयते। यङ्लुपि दरीधर्ति दरिधर्ति दर्धर्ति। "साहि-साति" ५।१।५९। इत्यजपवादे शे धारयः। "धारेर्धर्च"५।१।११३। इति खे वसुन्धरा, जलन्धरः, युगन्धर[3]। "धारीङो–" ५।२।२५। इत्यतृशि धारयन्नाचाराङ्गम्[4], अत्र "तृन्नुदन्ता–" २।२।९०। इति कर्मणि न षष्ठी। क्विपि क्षेमधृत्। "न्याया-ऽवाया–" ५।३।१३४। इति निपातनात् करणाधारे घापवादे घञि आधारः। भिदादिनिपातनादङि धारा[5] प्रपातः, धृतिरन्या। उणादौ "अर्तीरि–" (उ० ३३८) इति मे घर्मः। "ऋ-हृ-सृ–" (उ०६३८) इति अणौ धरणिः। **धृंग् धारणे** धरति धरते। **धृंङ्त् स्थाने** ध्रियते। चुरादेराकृतिगणत्वात् धारयति। उभयपदिषु पठिष्यमाणस्याप्यस्य अवध्वंसने[6] धरतीति प्रयोगनिवृत्त्यर्थं इह पाठः॥

**अतः परौ एदन्तौ द्वावनिटौ च—**

**६०३ मेंङ् प्रतिदाने।** प्रतिदानं प्रत्यर्पणम्[7]। मयते। प्रणिमयते, अत्र "नेर्मा-दा–" २।३।७९। इति नेर्णत्वम्। "ईर्व्यञ्जने–" ४।३।९७। इतीत्वे मीयते। ममे। अनुस्वारेत्त्वाद् नेट्, माता मातुम्। "मि-मी-मा-दा–" ४।१।२०। इति स्वरस्येद्भावे द्वित्वाभावे च सनि मित्सते। "आतो डोऽह्वा–" ५।१।७६। इत्यत्र मावर्जनादणि द्रोणमायः। यङि मेमीयते। यङ्लुपि मामाति मामेति। "दो-सो-मा-स्थ इः" ४।४।११। मितः मितवान्। "निमील्यादि–" ५।४।४६। इति परकालार्थादपि वा क्त्व

---

१ जीवनस्य जलस्य मूत पुटबन्धः जीमूतः, अत्र "पृषोदरादयः" ३।२।१५५। इत्यनेम वनशब्दस्य लोप·॥ २ अविध्वंसने इति सं१ सं२ वा० तपा०॥ ३ एतन्नामा तीर्थकर·॥ ४ आचारम्, अ॰ संपा१ सं१ सं२ तपा० प्र० वा०। आचारप्रतिपादकमङ्गमाचाराङ्गम्। आचर्यते शोभनं कर्मानेन व्यञ्जनाद् घञ्, आचारश्च तदङ्गं चेति वा॥ ५ खड्गादेर्वा। "धारा प्रपातन इति भिदादिपाठादङि गुणो दीर्घत्व च·। द्रवद्रव्यनिपातनं धारा इति न्यासे खड्गधारादावुपमानात् प्रयोगः–" इति माधववृत्तिः पृ. १६३ धा. ८८४॥ ६ अविध्वंसने इति सं१ सं२ वा० तपा०॥ ७ "स्वभावात् मेङ् व्यतिहार एव वर्तते"। कोऽर्थः? अपरे धातवो

अपमित्य याचते। अपमाय याचते। अत्र "मेङो वा मित्" ४।३।८८। इति वा मित्। पक्षे याचित्वाऽपमयते। उणादौ "शिग्रु-गेरु-" (उ०८११) इति निपातनात् रौ मेरुः, नमेरुः। "स्था-छा-मा-" (उ०३५७) इति ये माया। **मांक् माने** माति। **मांङ्क् मान-शब्दयोः** मिमीते॥

६०४ **देंङ्** ६०५ **त्रैंङ् पालने**। दयते। "ईर्व्यञ्जने-" ४।३।९७। इतीत्वे दीयते। "देर्दिगिः-" ४।१।३२। इति दिग्यादेशे दिग्ये। "नेर्ङ्मादा-" २।३।७९। इति नेर्णत्वेऽनुस्वारेत्त्वात् इडभावे च प्रणिदाता प्रणिदातुम्। उणादौ "मन्" (उ० ९११) इति मनि दाम। **दांम् दाने** यच्छति। **दैंव् शोधने** दायति। **दांव्क् लवने** दाति। **डुदांग्क् दाने** ददाति। **दोंच् छेदने** द्यति॥

अथ ऐदन्तास्त्रयोऽनिटश्च—

त्रैंङ्। त्रायते। तत्रे तत्राते। अनुस्वारेत्त्वाद् नेट्, त्राता। "ऋ-ह्री-घ्रा-" ४।२।७६। इति क्तयोस्तस्य वा नत्वे त्रातः देवत्रातः त्राणः, त्रातवान् त्राणवान्॥

६०६ **श्यैंङ् गतौ**। तालव्यादिः। श्यायते शश्ये शश्याते। अनुस्वारेत्त्वाद् नेट् श्याता श्यातुम् "श्य. शीर्द्रवमूर्ति-स्पर्शे नश्चास्पर्शे" ४।१।९७। शीनं घृतम्; स्पर्शे तु क्तयोस्तस्य नत्वाभावे शीतं वर्तते, शीतो वायुः; अन्यत्र संश्यानः–शीतेन सङ्कुचित इत्यर्थः, अत्र "व्यञ्जनान्तस्थाऽऽतः-" ४।२।७१। इति क्तस्य नत्वम्। "प्रतेः" ४।१।९८। इति शीभावे क्तयोर्नत्वे च प्रतिशीनः प्रतिशीनवान्, प्रतिपूर्वोऽयं रोगार्थः। "वाऽभ्यवाभ्याम्" ४।१।९९। इति वा शीभावे क्तयोर्नत्वे च अभिशीनः अभिश्यानः, अवशीनः अवश्यानः। "उपसर्गादातो-" ५।१।५६। इत्यत्र श्यावर्जनाद् डस्याभावे "तन्व्यधी-" ५।१।६४। इति णे प्रतिश्यायश्च पीनसः। उणादौ "मवाक-श्यामाक-" (उ०३७) इति आके निपातनात् श्यामाकः। "हृ-श्या-रुहि-" (उ० २१०) इति इते श्येतः। "श्या-कठि-" (उ० २८२) इति इने श्येनः। "विलि-भिलि-" (उ० ३४०) इति मकि श्यामः॥

६०७ **प्यैंङ् वृद्धौ**। प्यायते। पप्ये। अनुस्वारेत्त्वाद् नेट्, प्याता प्यातुम्। उणादौ "तीवर-धीवर-" (उ० ४४४) इति वरटि निपातनात् पीवरः। "ध्या-प्योः-" (उ०९०८) इति क्वनिपि पीवा,

---

व्यतिपूर्वका व्यतिहारे वर्तन्ते, अयं तु स्वभावात् केवलोऽपीति, अत आह 'परकालार्थादपि'। अपमाय अपमित्य याचते अपमातुं प्रतिदातुं याचत इत्यर्थः पूर्वं ह्यसौ याचते पश्चादपमयत इति। "याचेस्तु पूर्वकालेपि क्त्वा न भवति मेङः परकालभाविन्या क्त्वया याचिप्राक्कालस्योक्तत्वात्" इति ५।४।४६ सूत्रबृहद्वृत्तौ॥

१ "ची-नी-पी-म्यशिभ्यो रुः" (उ० ८०६) इति सूत्रेण **मीङ्च् हिंसायाम्** इत्यस्यापि रुप्रत्यये मेरुः॥ २ द्रवस्य मूर्तिः काठिन्यं तस्मिन् स्पर्शे च वर्तमानस्य श्यायतेः क्तयोः परतः शीः आदेशः, तत्संनियोगे च क्तयोस्तकारस्यास्पर्शे नकारादेश॥ ३ कर्तरि क्तः। अत्र शीतस्पर्शो मुख्यभावेन, शीतो वायुरित्यत्र तु गौणभावेन॥ ४ द्रवमूर्ति-स्पर्शयोरप्यनेन परत्वाद्विकल्पो भवति, तेन अभिशीनं अभिश्यानं घृतम्। अवशीनं अवश्यानं हिमम्। अभिशीतः अवशीतो वायुः, अत्र स्पर्शत्वाद् नत्वाभावः। अभिश्यानः अवश्यानः वायुरित्यत्र तु "व्यञ्जनान्तस्थातोऽख्याध्यः" ४।२।७१। इति स्पर्शेऽपि नत्वम्। 'अभिसंशीनः, अभिसंशीनवान् अभिसंश्यानः अभिसंश्यानवान् इत्यादिषु समा व्यवधानेऽपि केचिदिच्छन्ति इति **बृहद्वृत्तौ आचार्याः**। इदं **वामनानुसारिमते** वेदितव्यम्, तच्च **काशिकायाम्** "विभाषाऽभ्यवपूर्वस्य" पा०६।१।२६। इति **सूत्रवृत्तौ**॥

"ण-स्वरा-" २।४।४। इति ङ्या नो रत्वे च पीवरी ॥

अथ कान्ता एकान्नत्रिंशत् सेटश्च—

**६०८ वकुङ् कौटिल्ये** । गतावपीत्येके[1] । उदित्त्वाद् ने वङ्कते, वङ्किना, वङ्कितुम् । अचि वङ्क काष्ठम् । उणादौ "खुर-क्षुर-" (उ० २९६) इति निपातनाद् रे वक्रम्[2] । "नङ्कि-वङ्क्यङ्कि-" (उ० ६९२) इति रि, वङ्क्रि पार्श्वास्थि ॥

**६०९ मकुङ् मण्डने** । उदित्त्वाद् ने मङ्कते । ममङ्के । मिमङ्किषते । "ङ्-डितो-" ५।२।४४। इत्यने मङ्कन मङ्कना वस्त्रविशेष । उणादौ "तृ-कृ-शृ-" (उ० १८७) इति अणे मङ्कण ऋषिः । "मङ्केर्नलुक् वोच्चास्य" (उ० ४२४) इति उरे मुकुर आदर्शो मुकुल च, मकुर आदर्शः कल्कः वालपुष्पं च ॥

**६१० अकुङ् लक्षणे** । गतावप्येके । लक्षण चिह्नम् । उदित्त्वान् ने अङ्कते । अङ्क्यते । "अनातो नश्चा-" ४।१।६९। इति पूर्वस्यात्वे ने च आनङ्के । "म्ना धुड्-" १।३।३९। इत्यत्रान्विन्यविकाराद् द्वित्वे कर्तव्ये नकार एवास्ते ततो "न व-द-न सयोगादि-" ४।१।५। इति नो न द्विरुच्यते, अञ्चिकिषते । "व्यञ्जनाद् घञ्" ५।३।१३२। इति घञि अङ्क्यतेऽस्मिन् निधाय कान्तावक्त्रं शलाकयेत्यङ्क उत्सङ्ग । उणादौ "वाश्यसि-" (उ० ४२३) इति उरे अङ्कुर । "घञ्युपसर्गस्य बहुलम्"[3]३।२।८६। इति दीर्घत्वे अङ्कूरः । **अङ्कण् लक्षणे** अङ्कयति । "णिवेत्त्याम-" ५।३।१११। इत्यने अङ्कना ॥

**६११ शीकृङ् सेचने** । गतावप्यन्ये । ताल्व्यादि[4] । शीकते । शिशीके । शीकिता । शीकितुम् । ऋदित्त्वाद् णौ ङे "उपान्त्यस्यासमान-" ४।२।३५। इति ह्रस्वाभावे अशिशीकत् । अचि "क्तेटो-"५।३।१०६। इत्यप्रत्यये वा शीका । अनटि शीकनम् । उणादौ "ऋच्छि-चटि-"(उ०३९७) इति अरे शीकर । **शीकण् आमर्षणे** "युजादेर्नवा" ३।४।१८। इति वा णिचि शीकयति शीकति ॥

**६१२ लोकृङ् दर्शने** । लोकते । लुलोके । ऋदित्त्वाद् णौ ङे ह्रस्वाभावे अलुलोकत् । लोकितुम्, लोक्यते । लोक, "भावा-ऽकर्त्रोः" ५।३।१८। इति घञ्, लोकतेऽस्मिन्नवस्थितोऽनन्तज्ञानः सर्वभावानिति वा लोक । आलोक्यतेऽनेनार्थ इत्यालोकः, "व्यञ्जनाद् घञ्" ५।३।१३२। इति घञ् । **लोकृण् भासार्थः** लोकयति । उणादौ "शम्बूक-शाम्बूक-" (उ० ६१) इति ऊके निपातनाद् ऊर्ध्वं लोकनाद् उलूक ॥

---

१ पाणिनीयाः-।। २ "खुर-क्षुर-" (उ० ३९६) इत्यत्र आदिग्रहणात् यद्वा "ऋज्यजि-तञ्चि" (उ० ३८८) इत्यनेन **वञ्चू गतौ** इत्यस्यापि रप्रत्ययेनैव ॥ ३ "बहुलवचनात् दीर्घत्वम्"-इति हेमचन्द्रपादा. (उ० ४२३) सूत्रवृत्तौ । ४ "**धनपाल-काश्यपौ** अथ दन्त्यादिरिति अत एव षोपदेशलक्षणे सृपि-सृजि-स्तृ-स्त्या-षीकृ-सेकृ-स्रवर्जम् इति पेठतुः । अथ पाठो न ज्यायान, शीकर इति प्रयोगाननुकूलात्, षोपदेशाः सृपि-सृजि-स्त्या-स्तृ-स्तृ-स्र-सेकृवर्जम् ।" इति कारिकाविरोधाच्च । **वामनाचार्योऽपि** "अजूदन्त्यपराः सादयः षोपदेशा स्मि-स्विदि-स्वदि-स्वञ्जि-स्वपितयश्च । सृपि-सृजि-स्तृ-स्त्या-सेकृ-स्रवर्जम् ' इति (काशिका ६।१।६४) पठन्नत्रैवानुकूल इति" माधव० धा० पृ० ५५ धातुअं० ७५ तथा ८५ ।

६१३ **श्लोकृङ् सङ्घाते**। सङ्घातः संहननं संहन्यमानश्च। श्लोकते। शुश्लोके। श्लोकिता। ऋदित्त्वाद् डे न ह्रस्वः, अशुश्लोकत्। घञि श्लोक्यते-ग्रथ्यते श्लोकः॥

६१४ **द्रेकृङ्** ६१५ **ध्रेकृङ् शब्दोत्साहे**। शब्दस्योत्साह औद्धत्यम् वृद्धिश्च[1]। द्रेकते, दिद्रेके, द्रेकिता। ध्रेकते, दिध्रेके, ध्रेकिता। ऋदित्त्वाद् डे न ह्रस्व अदिद्रेकत्, अदिध्रेकत्। घञि उद्द्रेकः॥

६१६ **रेकृङ्** ६१७ **शकुङ् शङ्कायाम्**। शङ्का सन्देहः पूर्वस्यार्थः, यदाह-"आरेकं संशयेऽप्याहुः"[3] [ ]। द्वितीयस्य त्रासश्च[4]। रेकते। आरिरेके। आरेकिता। ऋदित्त्वाद् डे न ह्रस्वः, आरिरेकत्। "क्तेटो-" ५।३।१०६। इत्य, आरेका। घञि आरेकः॥ शकुङ्। उदित्त्वाद् ने शङ्कते। शङ्क्यते। शङ्किता। "क्तेटो-" ५।३।१०६। इत्य, शङ्का। उणादौ "ह्वषि-वृति-" (उ० ४८५) इति उले शङ्कुला आयुधम्॥

६१८ **ककि लौल्ये**। लौल्यं गर्धश्चापलं च। ककते। इदित्त्वाद् "इ-ङितः-" ३।३।२२। इत्यात्मनेपदम्। चकके, अत्राऽऽदेशादित्वाद् "अनादेशादेः-" ४।१।२४। इत्येत्वाभावः। ककिता। अचि काकः, पृषोदरादित्वाद्दीर्घत्वम्॥

६१९ **कुकि** ६२० **वृकि आदाने**। कोकते। चुकुके। कोकिता। "नाम्युपान्त्य-"५।१।५४। इति के कुकः। घञि कोकश्चक्रवाकः। "वौ व्यञ्जनादेः-" ४।३।२५। इति क्त्वा-सनोर्वा किन्त्वे कोकित्वा कुकित्वा, चुकोकिषते चुकुकिषते। "उति शवर्हाद्भ्यः क्तौ भावा-ऽऽरम्भे" ४।३।२६। इति वा किन्त्वे कुकितमस्य कोकितमस्य, प्रकुकितः प्रकोकितः। उणादौ "कल्यनि-" (उ० ४८१) इति इले कोकिलः॥ वृकि। वर्कते। ववृके। वर्किता। "नाम्युपान्त्य-" ५।१।५४। इति के वृकः। "ऋदुपान्त्यात्-" ५।१।४१। इति क्यपि वृक्यम्। "ऋद्वर्णस्य" ४।२।३७ इति णौ ङे गुणापवादे ऋतो वा ऋत्वे अवीवृकत् अववर्कत्॥

६२१ **चकि तृप्ति-प्रतीघातयोः**। चकते। चेके। क्ते चकितः। उक्तार्थयोर्घटादित्वाद् "घटादेः-" ४।२।२४। इति णौ ह्रस्वे चकयति, ञि-णम्परे तु वा दीर्घे अचाकि अचकि, चाकं चाकम् चकं चकम्, अर्थान्तरे तु ह्रस्वाभावे चाकयति। उणादौ "चकि-रमि-विकसेरुच्चास्य" (उ० ३९३) इति रे चुक्रः अम्लो रसो बीजपूरकमिञ्जिका असुरः निमन्त्रणं च। "कठि-चकि-" (उ० ४३३) इति ओरे चकोरः॥

**६२२ ककुङ् ६२३ श्वकुङ् ६२४ त्रकुङ् ६२५ श्रकुङ् ६२६ श्लकुङ् ६२७ ढौकृङ् ६२८ त्रौकृङ् ६२९ ष्वष्कि ६३० वस्कि ६३१ मस्कि ६३२ तिकि ६३३ टिकि ६३४**

---

१ शब्दोत्साहयो इति केचित्॥ २ उत्साहो वृद्धिरिति चन्द्रः। औद्धत्यमिति क्षीरस्वामी॥ ३ आङ्पूर्वं संशये इति माधवधातुवृत्तौ (पृ० ५५ धा० ८०) आरेकं संशय प्राहुः इति च॥ ४ "शङ्का स्यात् संशये भये" इत्यनेकार्थसङ्ग्रहे (का० २ श्लो० १७) हैमवचनात् अत्र त्रासार्थोऽपि ग्राह्यः।

टीकृङ् ६३५ सेकृङ् ६३६ स्रेकृङ् ६३७ रघुङ् ६३८ लघुङ् गतौ । ककुङ् । उदित्त्वाद् ने कङ्कते । चकङ्के । कङ्किता । अचि कङ्कः । उणादौ “तृ-कृ-कॄ–” (उ०१८७) इति अणे कङ्कणः ॥

श्वकुङ् । ताल्यादिः । उदित्त्वाद् ने श्वङ्कते । शश्वङ्के । श्वङ्किता । अचि श्वङ्कः ॥ त्रकुङ् । उदित्त्वाद् ने त्रङ्कते । तत्रङ्के । त्रङ्किता ॥ श्रकुङ् । उदित्त्वाद् ने श्रङ्कते श्रङ्किता ॥ श्लकुङ् । उदित्त्वाद् ने श्लङ्कते । श्लङ्किता । एतौ द्वौ ताल्यादी ॥ ढौकृङ् । ढौकते । ढौकिता । ऋदित्त्वाद् ङे न ह्रस्वः, अडुढौकत् । उणादौ “गिक्या-ऽऽम्या–” (उ० ३६४) इति ये निपातनात् आढ्यः ॥ त्रौकृङ् । त्रौकते । त्रौकिता । ऋदित्त्वाद् ङे न ह्रस्वः, अतुत्रौकत् ॥ ष्वष्कि “षः सो–” २।३।९८। इत्यत्र वर्जनात् सत्वाभावे ष्वष्कते । षिष्वष्किषते ॥ वस्कि । वस्कते । वस्किता ॥ मस्कि । मस्कते । मस्किता । दन्त्योपान्त्यावेतौ, तेन यङ्लुपि द्वित्वे लुकि च “संयोगस्यादौ–” २।१।८८। इति सस्य लुक् अवावक्, अमामक् ॥ तिकि । तेकते । तेकिता । णौ ङे अतीतिकत् ॥ टिकि । टेकते । टेकिता । अटीटिकत् । ऋदितावेतावित्यन्ये, तेन ङे ह्रस्वाभावे अतितेकत्, अटिटेकत् ॥ टीकृङ् । टीकते । टीकिता । ऋदित्त्वाद् ङे ह्रस्वाभावे अटिटीकत् । “क्तेटो–” ५।३।१०६। इत्यः टीकतेऽन्याः स्फुटमर्थमिति टीका । ण्यन्ताद्वाऽचि टीकयति–गमयत्यर्थमिति टीका ॥ सेकृङ् । सेकते । सेकिता । ऋदित्त्वाद् ङे ह्रस्वाभावे षोपदेशाभावाच्च षत्वाभावे असिसेकत् । येषां तु षोपदेशोऽयं तन्मते कृतत्वात् सस्य षत्वे असिषेकत् ॥

स्रेकृङ् । दन्त्यादिः । स्रेकते । स्रेकिता । ऋदित्त्वाद् ङे ह्रस्वाभावे असिस्रेकत् ॥

अथ घान्ता नव सेटश्च—

रघुङ् । उदित्त्वाद् ने रङ्घते । रङ्घिता ॥ लघुङ् । उदित्त्वाद् ने लङ्घते । लङ्घिता । उणादौ “रङ्घि-लङ्घि-लिङ्घेर्नलुक् च” (उ०७४०) इति कित् उः, रघुः, लघुः । एतौ चुरादौ भासार्थौ[2], रङ्घयति, लङ्घयति । लङ्घिर्भोजननिवृत्त्यर्थोऽपि, “नवज्वरो लङ्घनीयः” [ ] ॥

६३९ अघुङ् ६४० वघुङ् गत्याक्षेपे । गतेराक्षेपो वेग आरम्भ उपलम्भो[3] वा । उदित्त्वाद् ने अङ्घते । “अनातो–” ४।१।६९। इति पूर्वस्यात्वे ने च आनङ्घे । “न बन्द्-नम्–” ४।१।५। इति नस्य द्वित्वाभावे अञ्जिघिषते । उणादौ “तङ्कि-वङ्कि–” (उ० ६९२) इति रौ अङ्घ्रिरित्येके ॥

वघुङ् । उदित्त्वाद् ने वङ्घते । वङ्घिता । “क्तेटो–” ५।३।१०६। इत्यः, वङ्घा ॥

६४१ मघुङ् कैतवे च । कैतवं वञ्चना । चकाराद् गत्याक्षेपे । मङ्घते मिमङ्घिषते । उणादौ “श्वन्मातरिश्वन्–” (उ० ९०२) इति अनि निपातनात् मघवा ॥

६४२ राघृङ् ६४३ लाघृङ् सामर्थ्ये । राघते राघिता । ऋदित्त्वाद् ङे न ह्रस्वः, अरराघत् ॥ लाघृङ् । लाघते । लाघिता । ऋदित्त्वाद् ङे न ह्रस्वः, अललाघत् । “अनुपसर्गाः क्षीब–” ४।२।८०। इति निपातनात् क्तयोः उल्लाघः उल्लाघवान् नीरुक् ॥

---

१ ह्यस्तनीतृतीयपुरुषएकवचनस्य । २ चुरादौ भासार्थौ सं१ तपा० मु० ॥ ३ उपालम्भो खे०सं०पा१ दा० ।

६४४ द्राघृङ् आयासे च। चकारात् सामर्थ्ये। आयास कदर्थनम्। कौशिकस्त्वायामे इत्याह, दैर्घ्यविशिष्टायां क्रियायामिति च व्याख्यत्। काल्पनिके हि प्रकृतिप्रत्ययविभागे द्राघिमादय कस्मिंश्चिद् व्याकरणे धातोरेव साधिताः। एव नेदत्यादेर्नेदिष्ठादयोऽपि। द्राघते। द्राघिता। ऋदित्त्वाद् ङे न ह्रस्व., अदद्राघत्। क्विपि "ग-ड-द-बादे.–" २।१।७७। इति आदिचतुर्थत्वे ध्रग्राक् ॥

६४५ श्लाघृङ् कत्थने। कत्थनमुत्कर्षाख्यानम्। "श्लाघ-ह्नु-स्था–" २।२।६०। इति चतुर्थ्याम् मैत्राय श्लाघते। शश्लाघे। श्लाघिता। ऋदित्त्वाद् ङे न ह्रस्वः, अशश्लाघत्। "क्तेटो–" ५।३।१०६। इत्यः, श्लाघा ॥

अथ चान्तास्त्रयोदश सेटश्च—

६४६ लोचृङ् दर्शने। लोचते। ऋदित्त्वाद् ङे न ह्रस्वः, अलुलोचत्। क्ते आलोचितम्[1]। अनटि आलोचनम्। "तिक्कृतौ नाम्नि" ५।१।७१। इति णके लोचक. स्त्रीगिरोवस्त्रम्। लोचृण् भासार्थः आलोचयति। "णि-वेत्ति–" ५।३।१११। इत्यने आलोचना ॥

६४७ षचि सेचने। सेचनं सेवनं भजनमिति यावत्। "षः सो–" २।३।९८। इति सत्वे सचते। सेचे। षोपदेशत्वात् असीषचत्। "णि-स्तोरेवा–" २।३।३७। इति नियमात् षत्वापन्ने सनि षत्वाभावे सिसर्चिषते[2]। उणादौ "पलि-सचेरिव." (उ० ५२२) सचिवः। "कृसि-कमि–" (उ० ७७३) इति तुनि सच्यते स्नेहेनेति सक्तु। चन्द्रस्तु षच समवाये इति वान्तमधीते, तन्मते सवति ॥

६४८ शचि व्यक्तायां वाचि। ताल्व्यादिः। शचते। शेचे। शचिता। उणादौ "पठि-पठि–" (उ० ६०७) इति इ, शची ॥

६४९ कचि बन्धने। कचते। चकचे। सनि चिकर्चिषते[3]। अचि "पुन्नाम्नि–" ५।३।१३०। घे वा कचाः शिरःप्राग्भागकेशाः। कर्मणि घञि काचः ॥

६५० कचुङ् दीप्तौ च। चकाराद् बन्धने। उदित्त्वाद् ने कञ्चते। कञ्च्यते। चकञ्चे। चिकञ्चिषते। ङे अचिकञ्चत्। क्ते सेट्त्वाद् घ्यणि कत्वाभावे कञ्च्यम्। उणादौ "कञ्चुकांशुक–" (उ०५७) इति उके कञ्चुकः। "कुशिक-हृदिक–" (उ० ४५) इति इके निपातनात् काञ्चिकम्। "विदन-गगन–" (उ० २७५) इति अने निपातनात् काञ्चनं हेम। "कमि-वमि–" (उ० ६१८) इति णित् इः, काञ्चिः ॥

६५१ श्वचि ६५२ श्वचुङ् गतौ। श्वचते। शश्वचे। शिश्वचिषते। ङे अशिश्वचत् ॥

श्वचुङ्। उदित्त्वाद् ने श्वञ्चते। श्वञ्च्यते। शश्वञ्चे। शिश्वञ्चिषते। ङे अशश्वञ्चत् ॥

६५३ वर्चि दीप्तौ। वर्चते। ववर्चे। वर्चिता। क्ते सेट्त्वाद् घञि कत्वाभावे वर्चः। एवं चान्तेषु जान्तेषु च क्ते सेट्सु सर्वेषु वाच्यम्[4]। "नाम्नि पुंसि च" ५।३।१२१। इति णके सुवर्चिका टङ्कणम्।

---

१ आलोचितः सपा१ वा० प्र० ॥ २ °चिपति सं१ सं२ तपा० प्र० मु० ॥ ३ चिकचिषति संपा१ ॥ ४ सूत्रे आदिग्रहणात् सं१ टि० ॥

उणादौ "मुरलोरल–" (उ० ४७४) इति अले सुवर्चला शाकम्। "अस्" (उ० ९५२) इति असि वर्चः अशुचि-तेजसी ॥

**६५४ मचि ६५५ मुचुङ् कल्कने**। कल्कनं दम्भः शाठ्यं कथनं च। मचते। मेचे। मचिता ॥ **मुचेत्यपि चन्द्रः** मोचते ॥ मुचुङ्। उदित्त्वाद् ने मुञ्चते, मुञ्च्यते। मुमुञ्चे। मुञ्चिता। **मुच्लृंती मोक्षणे** मुञ्चति, मुच्यते ॥

**६५६ मचुङ् धारणोच्छ्राय-पूजनेषु च**। चकारात् कल्कने। दीप्तावप्येके। उदित्त्वाद् ने मञ्चते। ममञ्चे। मञ्चिता। णौ मञ्चयति। ङे अममञ्चत्। घञि क्ते सेट्त्वात् कत्वाभावे मञ्चः। णके मञ्चिका। उणादौ "कञ्चुकांशुक–" (उ० ५७) इति उके मञ्चुका खट्विका ॥

**६५७ पचुङ् व्यक्तीकरणे**। उदित्त्वाद् ने पञ्चते। पपञ्चे। पिपञ्चिषते। अपपञ्चत्। प्रपञ्च्यते। "नाम्नि पुंसि च" ५।३।१२१। इति णके पञ्चिका न्यासः। घञि न्यङ्क्वादित्वात् कत्वे पङ्कः। उणादौ "ऋ-कृ-मृ–" (उ० ४७५) इति आले पञ्चाल ऋषिः। "उक्षि-तक्षि–" (उ० ९००) इनि पञ्च घटाः। अनुदिदनुस्वारेत्चायमित्येके पचते पक्ता। **पचुण् विस्तारे** प्रपञ्चयति। णिच्यलि प्रपञ्चः ॥

**६५८ ष्टुचि प्रसादे**। "षः सो–" २।३।९८। इति सत्वे स्तोचते। तुष्टुचे। णौ स्तोचयति। ङे अतुष्टुचत्। यङि तोष्टुच्यते। घञि न्यङ्क्वादित्वात् कत्वे स्तोकः ॥

अथ जान्ता नव सेटश्च—

**६५९ एजृङ् ६६० भ्रेजृङ् ६६१ भ्राजि दीप्तौ**। एजते। "गुरुनाम्यादेः–" ३।४।४८। इति परोक्षाया आमादेशे एजाञ्चक्रे। एजिता। ऋदित्त्वाद् ङे न ह्रस्वः, मा भवानेजिजत्, अत्र ओणेर्ऋदित्करणज्ञापकान्नित्यादपि द्वित्वात् प्रागेव ह्रस्वः प्राप्त ऋदित्त्वेन निषिध्यते। "साहि-साति–" ५।१।५९। इति शे उदेजयः। "एजेः" ५।१।११८। इति खशि अङ्गमेजयः[1]। **एजृ कम्पने** इत्यस्य तु एजति ॥ भ्रेजृङ्। भ्रेजते। बिभ्रेजे। भ्रेजिता। ऋदित्त्वाद् ङे न ह्रस्वः, अबिभ्रेजत् ॥

भ्राजि। भ्राजते। बभ्राजे। भ्राजिता। णौ ङे "भ्राज-भास–" ४।२।३६। इति वा ह्रस्वे अबिभ्रजत् अबभ्राजत्। "यज-सृज–" २।१।८७। इत्यत्र राजिसहचरितस्यैव भ्राजेर्ग्रहणादस्य षत्वाभावे यङ्लुपि बाभ्राक्ति[2], क्तौ भ्राक्तिः, क्विपि विभ्राक्; तस्य[3] तु बाभ्राष्टिः भ्राष्टिः विभ्राडिति भवति। अत एव च

१ अङ्गान्येजयति इति विग्रहः। **वामनस्तु एजृ कम्पने** इति परस्मैपदिण्यन्तात् 'खश्' प्रत्यय मन्यते ॥ २ अयं प्रयोगो वैयाकरणैर्न मन्यते। यदाहु कनकप्रभसूरयः "यज-सृज-मृज-राज-भ्राज"— २।१।८७। इत्यादिसूत्रस्य वृत्तौ, तस्यैव च लघुन्यासे राजभ्राजोः क्तिरेव धुट् इत्यस्य शङ्कायाम् 'ननु यङ्लुबन्तयोरनयोरन्योऽपि तिवादिर्धुट् सम्भवति तत्कथं क्तिरेव धुडिति, सत्यम्, यङ्लुबन्तयोरनयोर्धातुपारायणिकानामेव मते प्रयोग इष्यते न वैयाकरणानामिति क्तिरेवेत्युक्तम्' इति ॥ ३ टुभ्राजि दीप्तावित्यस्य धातुअंक–८९४ ॥

एत्व-द्वित्वाभावविकल्पोऽपि तस्यैव, भ्रेजे बभ्राजे। इदमेव च भ्राजेरात्मनेपदिनोऽप्युभयपदिषु राजृग् टुभ्राजी दीप्ताविति पाठे प्रयोजनम्। "भ्राज्यलङ्कृग्–" ५।२।२८। इतीष्णौ भ्राजिष्णु.। "दिद्युद्-दृद्–"। ५।२।८३। इति क्विपि नभ्राक्। राजृग् टुभ्राजी दीप्ताविस्यस्य तु द्विवत्त्वादथौ भ्राजथु. ॥

६६२ इजुङ् गतौ। उदित्त्वाद् ने इञ्जते। इञ्जाञ्चक्रे। इञ्जिता ॥

६६३ ईजि कुत्सने च। चकाराद् गतौ। ईजते। वीजते। ईजाञ्चक्रे। लौकिकस्य तु वीजेर-वीजयत्। राजहंसैरवीज्यन्त। अस्य तु विपूर्वस्य णौ दिवि व्यैजयत् व्यैज॰॰त ॥

६६४ ऋजि गति-स्थाना-ऽर्जनोर्जनेषु। ऊर्जनं प्राणनम्। अर्जते। "ऋत्यारुपसर्गस्य" १।२।९। इति आरि उपार्जते। "अनातो–" ४।१।६९। इति पूर्वस्यात्वे ने च आनृजे। सनिटः कार्यित्वेन द्वित्वं प्रति निमित्तत्वाभावेन द्वित्वात् प्रागेव स्वरस्य विधौ गुणे सति "अयि रः" ४।१।६। इति रेफस्य द्वित्वा-भावे "स्वरादेर्द्वितीयः" ४।१।४। इति जेरेव द्वित्वम् अर्जिजिषते। णौ अर्जयति। "ऋदुपान्त्यात्–" ५।१।४१। इति क्यपि ऋज्यम्। घञि उद्गादित्वात् गत्वे अर्गः स्थानम्, शोभनोऽर्गः स्वर्ग.। उणादौ "ऋच्यृजि–" (उ० ४८) इति किति ईके ऋजीकं वज्रं वलं च। "ऋजि-शॄ–" (उ० ५५४) इति किति ईषे ऋजीषं अवस्करः। ऋजीषं धनमुपहतं च। उद्रिक्तादिसिद्ध्यर्थं व्यञ्जनादिमेनमन्ये मन्यन्ते ॥

६६५ ऋजुङ् ६६६ भृजैङ् भर्जने। भर्जन पाकप्रकारः। उदित्त्वाद् ने ऋञ्जते। "अ-नातो–" ४।१।६९। इत्यात्वे ने च आनृञ्जे। "ऋत्यारुपसर्गस्य" १।२।९। इत्यारि उपार्ञ्जते। ऋञ्जिता ॥ भृजैङ्। भर्जते। बभृजे। "ऋद्दवर्णस्य" ४।२।३७। इत्यृतो वा ऋत्वे णौ ङे अबीभृ-जत् अबभर्जत्। सनि बिभर्जिषते। ऐदित्त्वात् क्तयोर्नेट्, भृक्त. भृक्तवान्। क्तेऽनिट्त्वात् घञि गत्वे भर्गो रुद्रः। "ऋदुपान्त्यात्–" ५।१।४१। इति क्यपि भृज्यम्। उणादौ "कृषि-चमि–" (उ० ८२९) इति ऊः, भर्जूः, [३]अभ्योषः ॥

६६७ तिजि क्षमा-निशानयोः। निशान तीक्ष्णीकरणम्। "गुप्तिजो–" ३।४।५। इति सनि [४]तितिक्षते कोपम्। क्षान्तौ सन्निधानात् तेजने प्रत्ययान्तरम्। णौ तेजयति। "करणाधारे"

---

१ वीज्यते वा० सं१ ॥ २ "न्यङ्क्वुद्गमेघादयः" ४।१।११२। ॥ ३ 'अभ्योष अर्धरविन्नयवादे-र्घृतादिना भर्जितयवादेर्वा घृतपक्वान्नस्य 'पोळी' इत्यादिप्रसिद्धस्य" इति अमरटीकाकार अमर० वैश्यवर्ग, कांड २ श्लो ४७। ४ सहते इत्यर्थ ॥ ५ तेन तेजनम् तेजयति इत्यादि। त्यादिसमानार्थत्वात् शत्रानशावपि न, 'अर्थान्तरेऽपि त्यादयो नाभिधीयन्ते' इति वचनात्। केचित् शत्रानशाविच्छन्ति, तेन गोपमान तेज-मानं केतन्तं प्रयुङ्क्ते इत्यपि भवति। "गुप्तिजो गर्हा-क्षान्तौ सन्" ३।४।५। इति सूत्रवृत्तौ प्रायेण इति भणनात् गोपते तेजते केतति बधते इत्याद्यपि, अत एव रसवाचकतिक्तशब्दसाधनाय तेजते इति वाक्यं कृत क्षीरस्वा-मिना –" इति ३।४।५ सूत्रलघुन्यासे कनकप्रभसूरिः। "अय पक्षो नन्दि-मैत्रेययोरपि सम्मतः, हर-दत्तस्तु नानुमन्यत एतद्, तथाच तद्वच –'गुप गोपने' इत्यस्य सन्निधौ ग्रहणं तस्माच्च नित्य सन्नेव भवति नापर प्रत्ययः। गोपायतीत्यादिकस्तु प्रयोगो गुप॰ रक्षणे इत्यस्य स चान्य एव, अवश्य चैतदेव विज्ञेयम्।

५।३।१२९। अनटि तेजनम् तेजनी। उणादौ "भ्रूण-तृण–" (उ० १८६) इति निपातनात् तीक्ष्णः। "तिजि-युजेर्ग च" (उ० ३४५) इति किति मे तिग्मम्। "अस्" (उ० ९५२) इत्यसि तेजः। **तिजण् निशाने** उत्तेजयति ॥

**अथ टान्ताः सप्त सेटश्च—**

**६६८ घट्टि चलने**। घट्टते। जघट्टे। घट्टिता। अचि अरघट्टः। घञि घट्टः। णके उद्घट्टकः। "णि-वेत्ति–" ५।३।१११। इत्यने घट्टना। **घट्टण् चलने** घट्टयति ॥

**६६९ स्फुटि विकसने**। स्फोटते। "अघोषे शिटः" ४।१।४५। इति पूर्वस्य सस्य लोपे पुस्फुटे। स्फोटिता। "वौ व्यञ्जनादेः–" ४।३।२५। इति क्त्वा-सनोर्वा किस्वे स्फुटित्वा स्फोटित्वा, पुस्फुटिषते पुस्फोटिषते। "नाम्युपान्त्य–" ५।१।५४। इति के स्फुट.। घञि स्फोट.। डान्तोऽयमुदित्वेत्येके, स्फुण्डते स्फुण्डिता। **स्फट स्फुट्ट विशरणे** स्फोटति। ऋदित्त्वात् अडि अस्फुटत्। **स्फुटत् विकसने** स्फुटति ॥

**६७० चेष्टि चेष्टायाम्**। चेष्टा ईहा। चेष्टते। चिचेष्टे। णौ ङे "वा वेष्ट-चेष्टः" ४।१।६६। इति पूर्वस्य वा अत्वे अचचेष्टत् अचिचेष्टत्। क्ते चेष्टितम्। "क्तेटो–" ५।३।१०६। इत्यः, चेष्टा ॥

**६७१ गोष्टि ६७२ लोष्टि** सङ्घाते। गोष्टते। जुगोष्टे। गोष्टिता ॥ लोष्टते। लोष्टिता। कर्मणि घञि लोष्टः। उणादौ "भृ-मृ-तॄ-त्सरि-" (उ० ७१६) इति उः, लोष्टुर्मृत्पिण्डः ॥

**६७३ वेष्टि वेष्टने**। वेष्टन ग्रन्थनम् लोटनम् परिहाणिश्च। वेष्टते विवेष्टे वेष्टिता। णौ ङे "वा वेष्ट–" ४।१।६६। इति पूर्वस्य वा अत्वे अववेष्टत् अविवेष्टत्। यङि वेवेष्टयते। यङ्लुपि वेवेष्टीति, "धुटो धुटि स्वे वा" १।३।४८। इति टलुकि वेवेष्टि। हौ "हु-धुटो–" ४।२।८३। इति हेर्धित्वे "तवर्गस्य–" १।३।६०। इति धस्य ढत्वे "धुटो धुटि–" १।३।४८। इति टस्य लुकि "तृतीयस्तृतीय–" १।३।४९। इति षस्य डत्वे वेवेड्ढि। अचि प्रवेष्टो बाहुः। "नाम्नि पुंसि च" ५।३।१२१। इति णके वेष्टक., कर्णवेष्टकः ॥

**६७४ अट्टि हिंसा-ऽतिक्रमयोः**। अतिक्रम उलङ्घनम्। दोपान्त्योऽयम्। "तवर्गस्य–" १।३।६०। इति डत्वं न कृतमसन्देहार्थम्। "तवर्गस्य–" १।३।६०। इति दस्य डत्वे "अघोषे प्रथमो–" १।३।५० इति टत्वे च अट्टते। "अनातो–" ४।१।६९। इति पूर्वस्यात्वे ने च आनट्टे। दोपान्त्यत्वात् सनीटि "न ब-द-नम्–" ४।१।५। इति दस्य निषेधात् "स्वरादेः–" ४।१।४। इति द्वितीयाशस्य टेरेव द्विरुक्तौ "तवर्गस्य–" १।३।६०। इति डत्वे "अघोषे–" १।३।५०। इति टत्वे च अट्टिटिषते। अचि घञि वा अट्टः। क्विपि अद् अत्। तोपान्त्योऽयमित्येके, तेषां सनीटि अतिट्टिषते। येषां तु तान्तष्टोपान्त्यश्चायं तेषा ट्टीति द्वित्वे अटिट्टिषते ॥

---

अन्य एव सन्प्रकृतिस्तस्माच्च सन्नेव भवतीति, अन्यथा निन्दाया अन्यत्र यथा णिङ् भवति तथा लडादिरपि स्यात्"–माध० धातु० पृ० १८८ धातुअं० ५५१–५४। अत्रार्थे विशेषार्थिना **पद्मञ्जरी** विलोकनीयेति।

अथ ठान्ताः सप्त सेटश्च—

**६७५ [1]एठि ६७६ हेठि विबाधायाम्[2]** । एठते । "गुरुनाम्यादेः–" ३।४।४८। इति परोक्षाया आमि एठाञ्चक्रे । एठिता । "स्वरादेः–" ४।१।४। इति द्वित्वे एटिठिषते ॥ **हेठि ।** हेठते। जिहेठे। हेठिता । णौ "णि-वेत्ति–" ५।३।१११। इत्यने विहेठना शाठ्यम् ॥

**६७७ मठुङ् ६७८ कठुङ् शोके** । शोकः अत्र आध्यानम् । उदित्त्वाद् ने मण्ठते ममण्ठे । मण्ठिता ॥ **कठुङ् ।** उदित्त्वाद् ने कण्ठते उत्कण्ठते उत्कण्ठ्यते उच्चकण्ठे । घञि उत्कण्ठः । क्ते उत्कण्ठितः । क्ते सेट्त्वात् "क्तेटो–" ५।३।१०६ इत्य., उत्कण्ठा । उणादौ "हृषि-वृति–" (उ० ४८५) इति उले उत्कण्ठुलः । **कठुण् शोके** "युजादेर्नवा–" ३।४।१८। इति वा णिचि उत्कण्ठयति उत्कण्ठति ॥

**६७९ मुठुङ् पलायने[3]** । उदित्त्वाद् ने मुण्ठते । मुमुण्ठे । मुण्ठिता ॥

**६८० वठुङ् एकचर्यायाम्** । एकस्यासहायस्य चर्या गतिस्तस्याम् । उदित्त्वाद् ने वण्ठते। ववण्ठे । वण्ठिता । अचि वण्ठः ॥

**६८१ अठुङ् ६८२ पडुङ् गतौ** । उदित्त्वाद् ने अण्ठते । "अनातो–" ४।१।६९। इति पूर्वस्यात्वे ने च आनण्ठे । अण्ठिता ॥

अथ डान्तास्त्रयोविंशतिः सेटश्च—

**पडुङ्** । उदित्त्वाद् ने पण्डते पपण्डे । गत्यर्थत्वात् कर्तरि क्त पण्डितः । अचि पण्डः । क्ते सेट्त्वात् "क्तेटो" ५।३।१०६। इत्यः, पण्डा । उणादौ "जठर-क्रकर–" (उ० ४०३) इति अरे निपातनात् पाण्डरः। पाण्डुरिति तु "पनेर्दीर्घश्च" (उ० ७६६) इति डौ [4]पनतेः । [5]मध्वादित्वात् - रे तु पाण्डुरः ॥

**६८३ हुडुङ् ६८४ पिडुङ् सङ्घाते** । उदित्वाद् ने हुण्डते । जुहुण्डे । हुण्डिता । अचि हुण्डं समन्ततो विषमं देहसस्थानम् नामकर्मभेदाना षण्णा संस्थानानामन्त्यस्य विपाको नरकभवनियतः । "क्तेटो–" ५।३।१०६। इत्यः, हुण्डा । "नाम्नि पुंसि च" ५।३।१२१। इति णके हुण्डिका । उणादौ "किलि-पिलि–" (उ० ६०९) इति इः, हुण्डिः पिण्डित ओदनः ॥ **पिडुङ्** । उदित्वाद् ने पिण्डते। पिण्ड्यते। पिपिण्डे। पिण्डिता। घञि पिण्डः; स्त्रियां गौरादित्वाद् ङीः, पिण्डी। उणादौ "किलिपिलि-" (उ० ६०८) इति इः, पिण्डिर्निष्पीलितस्नेहः पिण्डः । **पिडुण् सङ्घाते** पिण्डयति ॥

**६८५ शडुङ् रुजायां च** । चकारात् सङ्घाते । तालव्यादिः । उदित्त्वाद् ने शण्डते । शशण्डे।

---

१ "विपूर्वोऽयमिति स्वामि-काश्यपौ"–माधव० धा० पृ० ७४ धातुअं० २६४ ॥ २ विबाधनं शाठ्यम्–माधव० धा० पूर्ववत् ॥ ३ पालने इति माधवधातुवृत्तौ पृ० ७३ धातुअं० २६२ ॥ ४ पनि स्तुतौ इत्यस्य ॥ ५ "मध्वादिभ्यो रः" ७।२।२६। इति सूत्रेण ॥ ६ "अत्र काश्यप –आर्यास्तु न पठन्ति द्रविडास्तु पठन्तीति । भाष्यादौ तु 'हुण्डा' इति 'अविगीतम्' उदाह्रियते"–माधव० धा० पृ० ७४ धातुअङ्क २६६ ।

शण्डिता । अचि शण्ड उत्सृष्टपशुर्ऋषिश्च । षण्ड इति तु सनेतेरौणादिके डे बाहुलकात् षत्वम् ॥

६८६ तडुङ् ताडने । उदित्त्वाद् ने तण्डते। ततण्डे । तण्डिता । "क्तेटो–" ५।३।१०६। इत्यः, वितण्डा । उणादौ "हृषि-वृति–" (उ० ४८५) इति उले तण्डुलः । तण्डुरिति तु तनोतेर्डौ । तण्डुना प्रोक्तमित्यणि ताण्डवम् ॥

६८७ कडुङ् मदे । उदित्त्वाद् ने कण्डते । कण्डिता । अचि कण्डम् । उणादौ "जठर-क्रकर–" (उ० ४०३) इति अरे कण्डरा स्नायुसङ्घातः। "कटि-पटि–" (उ० ४९३) इति ओले कण्डोलो विदलभाजनविशेषः । कण्डुरिति तु कणेर्डौ । कडुण् खण्डने च कण्डयति ॥

६८८ खडुङ् मन्थे । उदित्त्वाद् ने खण्डते । चखण्डे । खण्डिता । घञि खण्डः । खडुण् भेदे खण्डयति ॥

६८९ खुडुङ् गतिवकल्ये । उदित्त्वाद् ने खुण्डते । चुखुण्डे । खुण्डिता । चुरादेराकृतिगणत्वात् खुडुण् खण्डने खुण्डयति ॥

६९० कुडुङ् दाहे । उदित्त्वाद् ने कुण्डते। चुकुण्डे । कुण्डिता । आधारे "व्यञ्जनाद्–" ५।३। १३२। इति घञि कुण्डम् । स्त्रियां "भाज-गोण–" २।४।३०। इति ङ्याम् कुण्डी अमत्रम् । "क्तेटो–" ५।३।१०६। इत्यः, कुण्डा । उणादौ "मृदि-कन्दि–" (उ० ४६५) इति अले कुण्डलम् । कुडुण् रक्षणे कुण्डयति ॥

६९१ वडुङ् ६९२ मडुङ् वेष्टने । विभाजनेऽप्यन्ये । विभाजनं विभागीकरणं चर्माभावश्च । उदित्त्वाद् ने वण्डते । ववण्डे । वण्डिता । अचि घञि वा वण्डः ॥ मडुङ् । उदित्त्वाद् ने मण्डते । ममण्डे । मण्डिता । अचि घञि वा मण्डो रसाग्रम् । णके मण्डकः । उणादौ "मृ-मन्यञ्जि–" (उ० ५८) इति ऊके मण्डूकः । "मृदि-कन्दि–" (उ० ४६५) इति अले मण्डलम्, स्त्रियां गौरादित्वाद् ङ्याम् मण्डली । "मी-मसि–" (उ० ४२७) इति ऊरे मण्डूरं लोहमलम् । "हृषि-पुषि–" (उ० ७९७) इति ण्यन्तात् इत्नौ मण्डयित्नु । मडु भूषायाम् मण्डति । मडुण् भूषायाम् मण्डयति ॥

६९३ भडुङ् परिभाषणे । उदित्त्वाद् ने भण्डते । बभण्डे । अचि भण्डः । भार्ण्डमिति तु भामेर्डः । भडुङ् कल्याणे भण्डयति । "णि-वेत्ति–" ५।३।१११। इत्यने भण्डना ॥

६९४ मुडुङ् मज्जने । मज्जनं शोधनम् न्यग्भावश्च । उदित्त्वाद् ने मुण्डते । मुमुण्डे । मुण्डिता । घञि मुण्डः । मुडु खण्डने च मुण्डति ॥

---

१ षन् भक्तौ इत्यस्मात् "पञ्चमाद् डः" (उ० १६८) इति डप्रत्ययः बाहुलकात् सत्वाभावश्च ॥ २ तनूयी विस्तारे इत्यस्य "तनि-मनि-कणिभ्यो डुः" (उ० ७६५) इति डौ ॥ ३ सूत्रे आदिग्रहणात् ॥ ४ कण शब्दे इत्यस्य "तनि-मनि-कणिभ्यो डुः" (उ० ७६५) इति डुप्रत्यये ॥ ५ "वडि विभाजने, मडि वेष्टने इति नन्दी पठति"–माधवः धा० पृ० ७४ धातुअं० २६९ ॥ ६ भामि क्रोधे इत्यस्य "पञ्चमाद् डः" (उ० १६८) इति डप्रत्यये ॥

**६९५ तुडुङ् तोडने** । तोडनं हिंसा। उदित्त्वाद् ने तुण्डते। तुतुण्डे । तुण्डिता । तुण्ड्यते । अचि घञि वा तुण्डम् । उणादौ "किलि-पिलि–" (उ० ६०८) इति इः, तुण्डि प्रवृद्धा नाभिः ॥

**६९६ भुडुङ् वरणे** । वरणं स्वीकरणम् । उदित्त्वाद् ने भुण्डते । बुभुण्डे । भुण्डिता । अचि भुण्डो धृष्टः ॥

**६९७ चडुङ् कोपे** । उदित्त्वाद् ने चण्डते । चचण्डे । चण्डिता । अचि चण्डः, स्त्रियां शोणादित्वाद् वा ङ्याम् चण्डी चण्डा । उणादौ "ऋ-कृ-मृ–" (उ० ४७५) इति आले चण्डालः । **चडुङ् कोपे** चण्डयति ॥

**६९८ द्राडृङ् ६९९ ध्राडृङ् विशरणे** । द्राडते । दद्राडे । द्राडिता ॥　　**ध्राडृङ्** । ध्राडते । दध्राडे । ध्राडिता । ऋदित्त्वाद् डे न ह्रस्वः, अदद्राडत् । अदध्राडत् ॥

**७०० शाडृङ् श्लाघायाम्** । तालव्यादिः । शाडते । शशाडे । ऋफिडादित्वाड्डस्य लत्वे शाल्ते । ऋदित्वाद् डे न ह्रस्वः, अशशाडत् । अचि शाला । "अजातेः–" ५।१।१५४। इति णिनि गुणशाली । शालिरिति तु शलेरौणादिके णौ रूपम् । शालूकमित्यपि शलतेर्णूके ॥

**७०१ वाडृङ् आप्लाव्ये** । आप्लाव्यमाप्लावनम् । वाडते । ववाडे । वाडिता । ऋदित्त्वाद् डे न ह्रस्वः, अववाडत् । अचि ऋफिडादित्वाद् डस्य लत्वे वालः । वडवेति तु वडेः सौत्रस्य अवे रूपम् ॥

**७०२ हेडृङ् ७०३ होडृङ् अनादरे**। हेडते । जिहेडे । हेडिता । ऋदित्त्वाद् डे न ह्रस्वः, अजिहेडत्। घञि हेडः, "हेड-प्रसादौ प्रभो." [ ] । क्ते सेट्त्वात् "क्तेटो–" ५।३।१०६। इति अः, ऋफिडादित्वाच्च लः, हेला । घटादौ हेड **वेष्टने** हेडति । णौ ह्रस्वे हिडयति ॥　　**होडृङ्** । होडते । जुहोडे । होडिता । ऋदित्त्वाद् डे न ह्रस्वः, अजुहोडत् । "क्तेटो–" ५।३।१०६। इति अः, होडा । अचि होडः ॥

**७०४ हिडुङ् गतौ च** । चकारादनादरे। उदित्त्वाद् ने हिण्डते। जिहिण्डे। हिण्डिता। यङि जेहिण्ड्यते । यङ्लुपि जेहिण्डीति, "तवर्गस्य–" १।३।६०। इति तस्य टत्वे "धुटो धुटि–" १।३।४८। इति धुटो लुकि जेहिण्टि । "ङितो–" ५।२।४४। इति अने हिण्डनः ।गत्यर्थत्वात् कर्तरि क्ते हिण्डितः । उणादौ "किलि-पिलि–" (उ० ६०८) इति इः, हिण्डिः रात्रौ रक्षाचारः ॥

---

१ **भुडि वरणे** इति **माधव० धा०** पृ० ७४ धातुअ० २७४। २ हरणमिति **मैत्रेयः–माधव० धा०** पृ० ७४ धातुअ० २७४॥ ३ गौरीवाचकश्चण्डीशब्दो नात्र द्रष्टव्यः किन्तु कोपनावाचक । गौरीवाचकस्य तु **"गौरादिभ्यो मुख्यान् ङी"** २।४।१९। इति नित्यं ङी । अत्र तु **"नवा शोणादेः"** २।४।३१ इत्यनेन ॥ ४ ऋफिडादीना डश्च ल" ।२।३।१०४॥ ५ **शल गतौ** इत्यस्मात् **"कमि-चमि-जमि-घसि-शलि-फलि-"** (उ० ६१८) इति णि, शालि व्रीहिराजः ॥ ६ **शल्यणेर्णित्** (उ० ५९) इत्यनेन **शल गतौ** इत्यस्य णिति ऊके शालूकं जलकन्दो वलवाश्च॥ ७ **वड आग्रहणे** इत्यस्य **" वडि-वटि-पेल-पणि-पणि** (उ० ५१५) इति अवे वडवा अश्वा॥

अथ णान्ताः पद् सेटश्च—

**७०५ घिणुङ् ७०६ घुणुङ् ७०७ घृणुङ् ग्रहणे**। उदित्त्वाद् ने घिण्णते जिघिण्णे। घिण्णिता ॥ घुण्णते। जुघुण्णे। घुण्णिता ॥ घृण्णते। जघृण्णे। घृण्णिता। यङि जरीघृण्ण्यते। वनि "वन्याङ् पञ्चमस्य" ४।२।६५। इत्यत्र पञ्चमस्येति जातिपरिग्रहाद् णद्वयस्याप्याङादेशे आटो ङित्वाद् गुणाभावाद् यत्वे सुघ्यावा; व्यक्तिपरिग्रहे त्वन्त्यस्यैव आत्वे सुघिनावा। एवं शेषयोरपि। क्विपि "पदस्य" २।१।८९। इति सयोगान्तलोपे सुघिन्नित्यादि ॥

**७०८ घुणि ७०९ घूर्णि भ्रमणे**। घोणते जुघुणे घोणिता। लिहाद्यचि घोणा। "नाम्युपान्त्य" ५।१।५४। इति के घुणः। वनि "वन्याङ् पञ्चमस्य" ४।२।६५। इति आङादेशे ङित्त्वाद्गुणाभावे घ्वावा ॥

घूर्णि। घूर्णते। जुघूर्णे। घूर्णिता। वनि आङि घूरावा। **घुण घूर्णत् भ्रमणे** घुणति। घूर्णति ॥

**७१० पणि व्यवहार-स्तुत्योः**। "गुपौ-धूप–" ३।४।१। इति आये पणायति। आयान्तस्येङित्त्वाभावात् "शेषात्परस्मै" ३।३।१००। इति परस्मैपदम्। "विनिमेय-द्यूतपणम्–" २।२।१६। इति कर्मणो वा कर्मत्वे "शेषे" २।२।८१। इति षष्ठ्याम् शतस्य पणायति। स्वार्थिकप्रत्ययान्तस्य प्रकृतिवद् ग्रहणात् **पणिरेवायम्**।[1] ये तु स्तुत्यर्थादेव **पणे**रायमिच्छन्ति तन्मते व्यवहारार्थात् शवि अपि आयाभावे शतस्य पणते। "अशवि ते वा" ३।४।४। इति वा आये पणायाञ्चकार पेणे, पणायिता पणिता। "न चोपलेभे वणिजा पणायाः"[2] [भट्टिकाव्ये स० ३ श्लो० २७] अत्र "शंसिप्रत्ययात्" ५।३।१०५। इति अः। "वर्योपसर्या–" ५।१।३२। इति निपातनाद् ये पण्यं विक्रेयम्; अन्यत्र घ्यणि पाण्यः साधुः। "पणेर्माने" ५।३।२२। इति घञपवादे अलि शाकपणः। "गोचर-सञ्चर–" ५।३।१३१। इत्याधारे च घञपवादे घे एत्य तत्र पणायन्तीति आपण.। उणादौ "आङः पणि–" (उ० ३९)

---

१ जयादित्यप्रभृतय इति लघुन्यासकारः ३।४।१ सूत्रन्यासे। तथा च ३।१।२८। सूत्रे काशिकायाम्—'स्तुत्यर्थेन पनिना साहचर्यात् तदर्थ. पणि प्रत्ययमुत्पादयति न व्यवहारार्थ' इति। 'पणे' स्तुतावेव आयप्रत्यय' इति च **मिताक्षरा**–माधव० धा० पृ० ८९ धातुअं० ४३५। **तरङ्गिणीकारो**ऽपि मिताक्षरामनुसरति ॥ २ भट्टिकाव्ये ""न चोपलेभे वणिजा पणाऽऽयान्" इति पाठो लभ्यते। भट्टिकाव्यटीकाकारः **श्रीजयमङ्गलसूरिः** ''पणाऽऽयान्' पद व्याचक्षाणः पणानाम् अयाः—लाभा.—तान् पणाऽऽयान्—व्यवहारलाभान् इत्येवं निरूपयति। ततस्तन्मते 'पणाऽऽयान्' पदे नास्ति "गुपौ–धूप-" ३।४।१। इति सूत्रेण विहित आय–प्रत्यय। अत माधवीयधातुवृत्तौ (पृ० ८९ धातुअक ४३५) प्रस्तुतपद्यगत 'पणाऽऽयान्' पदम् आय–प्रत्ययान्तं मन्यमानेन श्रीतरङ्गिणीकारेण या **भट्टिकवेः** भ्रान्तता निरूपिता सा निराधारा। अथ च टीकाकार श्रीजयमङ्गल. 'पणायाम्' इतिरूपं अन्य पाठं निर्दिशति स्तुतिरूप च तदर्थ निबध्नाति ततोऽपि तरङ्गिणीकारस्य आक्षेपः विफल.। यदि 'पणायाम्' पदस्य केनापि व्यवहाररूप अर्थ निर्दिष्टो भवेत् तदा स्तुत्यर्थादेव आयप्रत्ययं मन्वानस्य मते 'पणायाम्' पदम् अपपद भवेत्। न चात्र तथा। 'वणिजा प्रलापान्' इति तृतीयोऽपि पाठः श्रीजयमङ्गलेन निरदेशि। **हेमचन्द्रस्तु** 'पणाया' इति आयप्रत्ययान्तमखण्ड पद मन्यते तस्य च द्वितीयाबहुवचनमेतत् 'पणाया.' इति।

इति इके आपणिकः पत्तनवासी। "प्राङः पणि–" (उ० ४२) इति इके प्रापणिको वणिक्। "कमि-वमि–" (उ० ६१८) इति णित् इः, पाणिः। "भृ-पणिभ्यामिज् भुर-वणौ च" (उ० ८७५) वणिक्। प्रज्ञाद्यणि वाणिजः॥

अथ तान्तास्त्रयः सेटश्च—

**७११ यतैङ् प्रयत्ने**। यतते। येते। यतिता। ऐदित्त्वात् क्तयोर्नेट्, यत्तः आयत्तः यत्तवान्। "यजि-स्वपि–" ५।३।८५। इति ने यत्नः। उणादौ "पदि-पठि–" (उ० ६०७) इति इः, यतिः। "यति-ननन्दिभ्यां दीर्घश्च" (उ० ८५६) इति ऋः, याता देवरभार्या। "तृ-स्वसृ–" १।४।३८। इत्यत्र तुः सार्थकस्य ग्रहणात् आर्-अभावे यातरौ। **यतण् निकार-उपस्कारयोः** यातयति॥

**७१२ युतृङ् ७१३ जुतृङ् भासने**। योतते। युयुते। योतिता। ऋदित्वाद् ङे न ह्रस्वः, अयुयोतत्॥ **जुतृङ्**। जोतते। जुजुते। जोतिता। ऋदित्त्वाद् ङे न ह्रस्वः, अजुजोतत्। **जुतृ भासने** जोतति; ऋदित्त्वाद् वाऽङि अजुतत् अजोतीत्। **कौशिकस्तु** 'ज्योतिः' सिद्धये **जुतिस्थाने** ज्युतिमधीते, तदसत्, "द्युतेरादेश्च जः" (उ० ९९१) इति सिद्धत्वात्॥

अथ थान्ताः षट् सेटश्च—

**७१४ विथृङ् ७१५ वेथृङ् याचने**। वेथते। विविथे। विथितः। ऋदित्त्वाद् ङे न ह्रस्वः, अविवेथत्॥ **वेथृङ्**। वेथते। विवेथे। वेथितः। ऋदित्त्वाद् ङे न ह्रस्वः, अविवेथत्। **कौशिकस्तु** 'विथुर'सिद्धये **यातने** इत्याह, तन्न, व्यथेरेव "श्वशुर–" (उ० ४२६) इति उरे निपातनात् सिद्धेः॥

**७१६ नाथृङ् उपताप-ऐश्वर्य-आशीःषु च**। चकारात् याचने। उपताप उपघातः[1]। अत्र याच्ञा-उपतापौ क्रियात्वात् अर्थौ,ऐश्वर्य-आशिषौ तु धर्ममात्रत्वाद् द्योत्ये। यद्वा 'गण्डति, श्वेतते प्रासादः, घण्टा ध्वनति, संयुज्यते, अस्ति, समवैति' इति द्रव्य-गुण-संयोग-सत्ता-समवायानामिव सिद्धानामप्याख्यातवाच्यत्वेन साध्यतया प्रतीतेरनयोरर्थत्वमप्यस्तु। **यदाह**—"पूर्वापरीभूत भावमाख्यातेनाचष्टे"। [ ] सर्पिषो नाथते सर्पिर्नाथते, सर्पिर्मे भूयादित्याशास्ते, "नाथः" २।२।१०। इति कर्मणो वाऽकर्मत्वे "शेषे" २।२।८१। इति षष्ठी। "आशिषि नाथः" ३।३।३६। इत्याशिष्येवात्मनेपदनियमादर्थान्तरे परस्मैपदमेव, रिपुं नाथति—उपतपति। स्वामी नाथति—ईष्टे, नृपं नाथति—याचते, एष्वात्मनेपदाभावात् "नाथः" २।२।१०। इति कर्मणो वा अकर्मत्वाभावे "कर्मणि" २।२।४०। इति द्वितीयैव। कथम्

"एतन्मन्दविपक्वतिन्दुकफलश्यामोदरापाण्डुरप्रान्तं हन्त! पुलिन्दसुन्दरकरस्पर्शक्षमं लक्ष्यते।
तत् पल्लीपतिपुत्रि! कुञ्जरकुलं जीवाभयाभ्यर्थनादीनं त्वामनुनाथते कुचयुगं पत्रांशुकैर्मा पिधाः"[2]॥

[काव्यप्रकाशे उल्लास ७ श्लो० १४२ पृ० २६९ पूना]

अपपाठ एषः, "अनुनाथति स्तनयुगं पत्रांशुकैर्मा पिधाः" इति त्वभियुक्तः। येषां चानुपसर्गस्य

---

१ "उपतापो रोगः इति वृत्तौ। उपघात इति तरङ्गिण्याम्"–इति माधव० धा० पृ० ३७ धातु सं०६॥ २ त्वामुपनाथते सं१ सं२ तपा०॥

नियमस्तन्मते सोपसर्गस्यार्थान्तरेऽप्यात्मनेपदं न विरुध्यते। अणोपदेशश्चायम्। यदाह—"सर्वे नादयो णोपदेशा नृति-नन्दि-नर्दि-नक्कि-नाटि-नृ-नाधृ-नाथृवर्जम्" इति, तेन "अदुरुपसर्गा–" २।३।७७। इति णत्वाभावे प्रनाथते। अचि नाथ.। "इ-ङितो–" ५।२।४४। इत्यने नाथनः ॥

७१७ श्रथुङ् शैथिल्ये। तालव्यादि। शैथिल्यम् अगाढता। उदित्त्वाद् ने श्रन्थते। श्रन्थ्यते। श्रन्थिता। शश्रन्थे, अत्र "वा श्रन्थ-ग्रन्थो नलुक् च" ४।१।२७। इत्यत्रौपदेशिकस्य श्रन्थो ग्रहणाद् वा एत्व-नलुकौ न भवत, अन्ये त्वत्रापीच्छन्ति। "दग्नाऽवोदैधौद्म–" ४।२।५४। इति घञि निपातनात् प्रश्रथ. हिमश्रथ। "णि-वेत्ति–" ५।३।१११। इति अने श्रन्थना। उणादौ "श्रन्थेः शिथ् च" (उ० ४१४) इति इरे शिथिरम्, लत्वे शिथिलम् ॥

७१८ ग्रथुङ् कौटिल्ये। कौटिल्य कुसृतिर्बन्धश्च। उदित्त्वाद् ने ग्रन्थते। जग्रन्थे। ग्रन्थिता। "णि-वेत्ति–" ५।३।१११। इति अने ग्रन्थनेत्येके। **श्रन्थश् मोचन-प्रतिहर्षयोः, ग्रन्थश् सन्दर्भे,** श्रथ्नाति श्रथ्यते, ग्रथ्नाति ग्रथ्यते। "वा श्रन्थ-ग्रन्थो नलुक् च" ४।१।२७। इति वा एत्वे नलुकि च श्रेथतुः शश्रन्थतुः, ग्रेथतु जग्रन्थतुः। **श्रन्थ ग्रन्थण् सन्दर्भे,** "युजादेर्नवा" ३।४।१८। इति वा णिचि श्रन्थयति श्रन्थति। ग्रन्थयति ग्रन्थति। श्रेथतुः शश्रन्थतुः, ग्रेथतुः जग्रन्थतु। "एकधातौ–" ३।४।८६। इत्यात्मनेपदे "भूषार्थ–" ३।४।९३। इति ञि-क्ययोरभावे च कर्मकर्तरि त्रयाणामपि श्रन्थते श्रथ्नीते अश्रन्थिष्ट वा स्वयमेव, एव ग्रन्थते ग्रथ्नीते अग्रन्थिष्ट। उणादौ "पदि-पठि–" (उ० ६०७) इति इ, श्रन्थिर्ग्रन्थिश्च पर्वसन्ध्यादिः ॥

७१९ कत्थि श्लाघायाम्। श्लाघा गुणारोप। कत्थते। चकत्थे। कत्थित्वा। "इ-ङितो–" ५।२।४४। इति अने कत्थनः। "वेर्विच–" ५।२।५९। इति घिनणि विकत्थी। "न णिङ्-य–" ५।२।४५। इत्यत्र दीपिग्रहणेन ताच्छीलिकेष्वप्युत्सर्गसमावेशस्य ज्ञापनादने विकत्थनः ॥

अथ दान्ता एकविंशतिर्हदिवर्जा सेटश्च—

७२० श्विदुङ् श्वैत्ये। श्वैत्य श्वेतगुणक्रिया। उदित्त्वाद् ने श्विन्दते; कोऽर्थः? यदि सकर्मकस्तदा श्वेतीकरोतीति, अथाकर्मकस्तदा श्वेतीभवतीति; श्वेतगुणः सिद्धोऽप्याख्यातेन साध्यैकरूप उच्यते, कृतानुसाध्योऽपि सिद्धतया पाकादिवत् शब्दशक्तिस्वाभाव्यात्। क्ये श्विन्द्यते। क्ते श्विन्दितः॥

७२१ वदुङ् स्तुत्यभिवादनयोः। स्तुतिर्गुणैः प्रशंसा। अभिवादनं पादयोः प्रणिपातः। उदित्त्वाद् ने वन्दते, देवान् स्तौतीत्यर्थ.। ववन्दे गुरून्, अभिवादितवानित्यर्थः। वन्दिता। अचि वन्दी हठाकृष्टा स्त्री। ग्रहादित्वाद् णिनि वन्दी मङ्ख.। "शॄ-वन्देरारुः" ५।२।३५। वन्दनशीलो वन्दारुः

१ आचार्यहेमचन्द्रस्तु–"नृति–नन्दि–नर्दि–नशि–नाटि–नक्कि–नाधृ–नाथृ–नृवर्जम्" इत्येव (२।३।९७ सूत्रवृत्तौ) उल्लिखन् अत्र नव धातून् गणयति। अत्र विषये विविधमतानि जिज्ञासुना मा० धा० पृ० ३७ धातुअंक ६–७ विवरण विहेयम्।

कामवृक्षश्च। "न णिङ्-य–" ५।२।४५। इत्यत्र दीपिग्रहणादसरूपे अने वन्दनः। "णि-वेत्ति–" ५।३।१११। इति अने वन्दना। उणादौ "पदि-पठि–" (उ० ६०७) इति इः, वन्दिर्ग्रहणिः॥

**७२२ भदुङ् सुख-कल्याणयोः**। सुखं सद्वेद्यकर्मोदयाच्छुभानुभवनम्। कल्याणं श्रेयः। प्रीताप्यन्ये। प्रीतिर्मोहनीयविपाकः। उदित्त्वाद् ने भन्दते। बभन्दे। भन्दिता। "इ-ङितो–" ५।२।४४। इति अने भन्दनः। उणादौ "सीमन्त-हेमन्त–" (उ० २२२) इति अन्ते निपातनात् भदन्तः। "भन्देर्वा"(उ०३९१) इति रे वा नलुकि च भद्रं भन्द्रं च सुख-कल्याणे। चुरादौ **भडुण् कल्याणे** दान्त इत्येके भन्दयति॥

**७२३ मदुङ् स्तुति-मोद-मद-स्वप्न-गतिषु**। मोदो हर्षः। मदो दर्पः। स्वप्नेन आलस्यमपि लक्ष्यते। चन्द्रस्तु मदि जाड्ये इत्येवाह। मोद-मद-स्वप्नेष्वकर्मकोऽयम्, स्तुति-गत्योः सकर्मकः। उदित्त्वाद् ने मन्दते। ममन्दे। मन्दिता। अचि मन्दः[1]। स्त्रियां "जातेरयान्त–"२।४।५४। इति, यौवनावस्थावृत्तौ तु "वयस्यनन्त्ये" २।४।२१। इति ङीप्राप्तौ "अजादेः" २।४।१६। इति आपि मन्दा स्त्रीजातिः युवतिर्वा। उणादौ "शलि-बलि-पति–" (उ० ३४) इति आके मन्दाकः। मत्वर्थीये इनि मन्दाकिनी। "भी-वृधि–" (उ० ३८७) इति रे मन्द्रं गम्भीरम्। मद्रमिति तु माघतेः। "ऋच्छि-चटि–" (उ० ३९७) इति अरे मन्दरः शैलविशेषः। "अग्यङ्गि–" (उ० ४०५) इति आरे मन्दारो देववृक्षः। "मदि-मन्दि–" (उ० ४१२) इति इरे मन्दिरं सद्म। मदिरेति तु माघतेः। "वाश्यसि–" (उ० ४२३) इति उरे मन्दुरा वाजिशाला॥

**७२४ स्पदुङ् किञ्चिच्चलने**। उदित्त्वाद् ने स्पन्दते[2]। पस्पन्दे। स्पन्दिता। णिगन्तात् फलवत्कर्तर्यपि "चल्याहारार्थेङ्–"३।३।१०८। इति परस्मैपदम्, स्पन्दयति। घञि स्पन्दः। "चालशब्दार्थाद्–" ५।२।४३। इति अने स्पन्दनो वृक्षविशेषः।

**७२५ क्लिदुङ् परिदेवने**। परिदेवनं शोचनम्। उदित्त्वाद् ने क्लिन्दते। क्लिन्दिता। **क्लिदु परिदेवने** क्लिन्दति। ङित्त्वमकृत्वोभयत्र पाठस्तु फलवत्यपि कर्तरि परस्मैपदार्थः अफलेऽप्यात्मनेपदार्थश्च॥

**७२६ मुदि हर्षे**। अकर्मकोऽयम्। मोदते। मुमुदे। मोदिता। क्ते मुदितः। "वौ व्यञ्जनादेः–" ४।३।२५। इति क्त्वा-सनोर्वा कित्त्वे मुदित्वा मोदित्वा, मुमुदिषते मुमोदिषते। णौ मोदयति चैत्रम्, अत्र "अणिगि–" ३।३।१०७। इति फलवत्कर्तर्यपि परस्मैपद "गति-बोधा-ऽऽहारार्थ–"२।२।५। इत्यणिक्कर्तुः कर्मत्वं च। मूलविभुजादित्वात्[3] के कुमुदम्। "तिक्कृतौ नाम्नि" ५।१।७१। इत्यानशि मोदमानः कोऽपि ग्रामः। णके मोदयतीति मोदकः। "नाम्युपान्त्य–" ५।१।५४। इति के मुदः। "इ-ङितो–" ५।२।४४। इति अने मोदनः। उणादौ "पू-मुदिभ्या कित्" (उ० ९३) इति किति

---

१ "स्तुति-मोद-मद-स्वप्न-कान्ति-गतिषु इति। चन्द्रस्तु मदि जये इत्यपि पपाठ"–मा०धा० पृ०४२ धा० १३॥ २ °ते। स्पन्दितुम्। णिग° खे० संपा१ वा० म२॥ ३ "मूलविभुजादयः" ५।१।१४४। इति सूत्रेण॥

रुत्वे "रो रे लुग्–" १।३।४१। इति रो लुक्यस्य दीर्घे च अपास्पा. । "इ-ङितो–" ५।२।४४। इति अने स्पर्धन. । अकर्मकोऽयम् , तेन स्पर्धयति मैत्रमित्यत्र "अणिगि प्राणिकर्तृका–" ३।३।१०७। इति फलवत्कर्तर्यपि परस्मैपदम् "गति-बोधा–" २।२।५। इत्यणिक्कर्तुः कर्मत्वं च । स्पर्धमानः स कृष्णमिति तु कृष्णं प्राप्येत्यध्याहारात् । "बहुलम्" ५।१।२। इति इष्णौ

"मेरु स्पर्धिष्णुनेवान्यो धृतो नाको हिमाद्रिणा ॥" [ ]

"क्तेटो–" ५।३।१०६। इत्यः, स्पर्धा । घञि स्पर्धः ॥

**७४३ गाधृङ् प्रतिष्ठा-लिप्सा-ग्रन्थेषु** । प्रतिष्ठा–आस्पदम् । लब्धुमिच्छा लिप्सा । ग्रन्थनं ग्रन्थः । प्रतिष्ठायामकर्मकोऽयम् , लिप्सा-ग्रन्थयोः सकर्मकः । गाधते जगाधे गाधिता । ऋदित्वाद् ङे न ह्रस्वः, अजगाधत् । सनि जिगाधिषते । यङि जागाध्यते । यङ्लुपि जागाधीति । अचि अगाधम्– अतलस्पर्शम् । "इ-ङितो–" ५।२।४४। इति अने गाधनः । उणादौ "पदि-पठि–" (उ० ६०७) इति इ , गाधिर्विश्वामित्रपिता ॥

**७४४ बाधृङ् रोटने** । रोटन प्रतिघातः । बाधते बबाधे बाधिता । ऋदित्त्वाद् ङे न ह्रस्वः, अबबाधत् । "इ-ङितो–" ५।२।४४। इति अने बाधनः । "क्तेटो–" ५।३।१०६। इति अः, बाधा । घञि बाधः । बाहुरिति तु "मि-वहि–" (उ०७२६) इति णिति औ वहेः ॥

**७४५ द्धिँ धारणे** । दाने इति **कौशिकः** । दधते देधे दधिता । यङ्लुपि दादधीति दादद्धि । णौ ङे अदीदधत् । अचि दधः । उणादौ "पदि-पठि–" (उ० ६०७) इति इः, दधि ॥

**७४६ बधि बन्धने** । वैरूप्ये "शान्-दान्–" ३।४।७। इति सनि इतो दीर्घे च बीभत्सते । अर्थान्तरे तु बंधते । "न जन-वध" ४।३।५४। इति वृद्ध्यभावे अबधि, बधक. । उणादौ "पदि-पठि–" (उ० ६०७) इति इः, बधि । **बधण् संयमने** बाधयति ॥

**७४७ नाधृङ् नाथृङ्वत्** । उपताप-ऐश्वर्य-आशीर्-याच्ञासु अर्थेषु नाथृङ्वदयं वर्तते । लाघवार्थमेवं निर्देश , वर्णक्रमानुसरणात् तु नैकत्राधीतौ । नाधते । अणोपदेशत्वात् "अदुरुपसर्गान्तरो–" २।३।७७। इति णत्वाभावे प्रनाधते परिनाधते । येषां तु णोपदेशोऽयं तन्मते प्रणाधते परिणाधते । ननाधे । नाधिता ॥

---

१ "बाधृ लोडने । लोडन प्रतिघात"–मा० धा० धातुअ० ५ पृ० ३७। २ वहीं प्रापणे इत्यस्मात् उप्रत्यये इत्यर्थः ॥ ३ "दध धारणे । दाने इति केचित् पठन्ति । 'दद दाने' इत्यत्र 'दद धारणे' इति । तद् अयुक्तम् ।"तद्वेषोऽसदृशोऽन्याभिः स्त्रीभिर्मधुरतामृत । दधते सुलभा शोभा तदीया विभ्रमा इव" । पिबति च पाति च याऽसकौ रहस्त्वाम् । व्रज विटपममुं ददस्व तस्यै ॥ × × × इत्यादौ दधो धारणार्थत्वस्य अन्यस्य दानार्थत्वस्य च व्यवस्थितत्वात"–मा०धा०धातुअ० ८ पृ० ४० । ४ निन्दितरूपो विरूप. तस्य भावो वैरूप्यम् ॥ ५ बन्धनार्थमिदमुदाहरणम्, यदाहु **श्रीहेमचन्द्रसूरिपादा**–"न जन-वध ' ४।३।५४। सूत्रस्य बृहद्वृत्तौ– "बधिरत्र वध बन्धने इत्यय गृह्यते यस्य बीभत्सत इति वैरूप्ये एव सनिष्यते. अन्यत्र बधते । 'भक्षकश्चेन्नास्ति बधकोऽपि न विद्यते' अर्थान्तरेऽपि न्यादयो नाभिधीयन्त इति अङ्गीकुर्वाणाः परस्मैपदिनश्च एतस्यानियमस्यार्थीन् प्रनि इति न्यानकर । अन्ये तु अगणपठितं वधिं हिंसार्थं "यत्र शालप्रतीकाशः कर्णोऽवध्यत संयुगे" इत्यादिदर्शनात् मन्यन्ते, प्रत्युदाहरन्ति च अबाध इति" ॥

अथ नान्तौ द्वौ सेटौ च—

**७४८ पनि स्तुतौ**। "गुपौ-धूप्–" ३।४।१। इत्याये पनायति जिनम्, इ-ङित्त्वाभावादत्र "शेषात्परस्मै–" ३।३।१००। इति परस्मैपदम्। ये तु स्वार्थिकप्रत्ययान्तस्य प्रकृतिवद् ग्रहणाद् यथा 'आय' प्रत्ययान्तस्य प्रकृत्यर्थवाचित्वं तथेदित्त्वमपीति प्रतिपन्नास्तन्मते "इ-ङितः कर्तरि" ३।३।२२। इत्यात्मनेपदे पनायते जिनम्। एवं पणायते। "अशवि ते वा" ३।४।४। इति वा आये पनायिष्यते पनिष्यते। उणादौ "तप्यणि–" (उ० ५६९) इति असे पनसः फलवृक्षः। फनस इति तु फणेः[1] "फनस-तामरसादयः" (उ० ५७२) इति असे निपातनात्॥

**७४९ मानि पूजायाम्**। विचारे "शान्-दान्-मान्–" ३।४।७। इति सनि पूर्वस्येतो दीर्घे च मीमांसते धर्मम्। "शंसिप्रत्ययात्" ५।३।१०५। इत्यः, मीमांसा। अर्थान्तरे घञि मानः। अनटि माननम्। णौ मानयति। उणादौ "मा-वा-वदि–" (उ० ५६४) इति से मासम्। "मानि-भ्राजेर्लुक् च" (उ० ८५९) इति तृः, माता। **मानण् पूजायाम्** "युजादेर्नवा" ३।४।१८। इति वा णिचि मानयति मानति॥

अथ पान्ताश्चतुर्दश सेटश्च—

**७५० तिपृङ् ७५१ ष्टिपृङ् ७५२ ष्टेपृङ् क्षरणे**। तेपते तितिपे तेपिता। 'आगमशासनमनित्यम्' इतीडभावे तेप्ता। ऋदित्त्वाण्णौ ङे अतितेपत्। "वौ व्यञ्जनादेः–" ४।३।२५। इति क्त्वा-सनोर्वा कित्त्वे तिपित्वा तेपित्वा, तितिपिषते तितेपिषते॥ **ष्टिपृङ्**[2]। "षः सो–" २।३।९८। इति सत्वे स्तेपते। षोपदेशत्वात् षत्वे तिष्टिपे। स्तेपिता। ऋदित्त्वाद् ङे न ह्रस्वः, अतिष्टेपत्। क्ते स्तिपितः॥ **ष्टेपृङ्**। "षः सो–" २।३।९८। इति सत्वे स्तेपते। षोपदेशत्वात् षत्वे तिष्टेपे। स्तेपिता। क्ते स्तेपितः। ऋदित्त्वाद् ङे अतिष्टेपत्॥

**७५३ तेपृङ् कम्पने च**। चकारात् क्षरणे। तेपते तितेपे तेपिता। क्ते तेपितः। ऋदित्त्वाद् ङे न ह्रस्वः, अतितेपत्॥

**७५४ टुवेपृङ् ७५५ केपृङ् ७५६ गेपृङ् ७५७ कपुङ् चलने**। वेपते विवेपे वेपिता। ऋदित्त्वाद् ङे न ह्रस्वः, अविवेपत्। ट्वित्त्वादथौ[3] वेपथुः। "न ख्या-पूग्–" २।३।९०। इति प्रतिषेधाद् णत्वाभावे प्रवेपनम्। उणादौ "विपिना-ऽजिनादयः" (उ० २८४) इति इने निपातनात् विपिनं गहनम्॥ **केपृङ्**। केपते केपिता। ऋदित्त्वाद् ङे अचिकेपत्॥ **गेपृङ्**। गेपते जिगेपे गेपिता। ऋदित्त्वाद् ङे अजिगेपत्॥ **कपुङ्**। उदित्त्वाद् ने कम्पते चकम्पे कम्पिता। "चल्याहारार्थ–" ३।३।१०८। इति फलवत्कर्तर्यपि ण्यन्तात् परस्मैपदम्, कम्पयति शाखाम्, "गति-बोधा–" २।२।५। इत्यणिक्कर्तुरत्र कर्मत्वम्। भीष्यादिभ्यः[4] 'अ' प्रत्ययेनैव 'भीषा' आदिसिद्धौ 'अङ्'-

---

१ फण गतौ इत्यस्य॥ २ "दिष्ट देष्ट इति च काश्यपः"–मा० धा० वृ० पृ० ८३ धा० ३६१। ३ 'अथु' प्रत्यये। ४ "भीषि-भूषि-चिन्ति" ५।३।१०९। इत्यादिसूत्रनिर्दिष्टेभ्यः भीष्यादिभ्यो धातुभ्यः॥

गे मुद्गः। "ऋज्यजि–" (उ० ३८८) इति किति रे मुद्रा। "मुदि-गूरिभ्यां टिद्गजौ चान्तौ" (उ० ४०४) इति अरे मुद्गरः मुद्गरी। "शुषीषि–" (उ० ४१६) इति किति इरे मुदिरो मेघः। **मुदण् संसर्गे** मोदयति ॥

**७२७ ददि दाने**[1]। धारणे इति **कौशिकः**। ददते। "अनादेशादेः–" ४।१।२४। इत्येत्वस्य "न शस-दद–" ४।१।३०। इति प्रतिषेधात् ददटे। ददिता ॥

**७२८ हदिं पुरीषोत्सर्गे**। हदते। जहदे। अनुस्वारेत्त्वाद् नेट्, हत्त्वा हत्तुम्। सनि जिहत्सते। "इ-ङितो–" ५।२।४४। इति अने हदनः ॥

**७२९ ष्वदि ७३० स्वर्दि ७३१ स्वादि आस्वादने**[2]। आद्यः षोपदेशो(ऽयम्) नेतरौ। यद् **स्मृतिः**—स्वरदन्त्यपराः षोपदेशाः स्मि-स्विदि-स्वदि-स्वञ्जि-स्वपयश्च। सृपि-सृजि-स्तृ-स्तृ-स्त्या-सेक्तृ-सृवर्जम्[3]। आस्वादनं जिह्वया लेहः। चैत्राय स्वदते। सस्वदे। षोपदेशत्वात् षत्वे असिष्वदत्। सनि षत्वापन्ने "णि-स्तोरेवा–" २।३।३७। इत्यत्र वर्जनाद् ण्यन्तस्य षत्वाभावे सिस्वादयिषति। "णि-स्तोरेवा–" २।३।३७। इति नियमात् सनि षत्वाभावे सिस्वदिषते। "इ-ङितो–" ५।२।४४। इति अने स्वदनः। उणादौ "कृ-वा-पा-जि–"(उ०१) इति उणि स्वादुः। **ष्वदण् आस्वादने** स्वादयति ॥ **स्वर्दि**। स्वर्दते। अषोपदेशत्वात् षत्वाभावे सिस्वर्दयिषति, असिस्वर्दत्[4]। स्वर्दिता ॥ **स्वादि**। स्वादते। सस्वादे। अषोपदेशत्वात् षत्वाभावे असिस्वदत्। सनि सिस्वादिषते ॥

**७३२ उर्दि मान-क्रीडयोश्च**। चकारात् आस्वादने। मानं मितिः[5]। "भ्वादेः–" २।१।६३। इति दीर्घे ऊर्दते। "गुरुनाम्यादे.–" ३।४।४८। इति परोक्षाया आमि ऊर्दाञ्चक्रे। "अयि रः" ४।१।६। इति रस्य प्रतिषेधात् "स्वरादेः"४।१।४। इति [6]देरेव द्वित्वे सनि ऊर्दिदिषते। अचि स्त्रियां गौरादित्वाद् ङ्याम् ऊर्दी विमानम् ॥

**७३३ कुर्दि ७३४ गुर्दि ७३५ गुदि क्रीडायाम्**[7]। "भ्वादेः–" २।१।६३। इति दीर्घे कूर्दते[8] चुकूर्दे। कूर्दिता ॥ [गुर्दि।] गूर्दते। जुगूर्दे। गूर्दिता। **गुर्दि**स्थानेऽन्ये **खुर्दि** पेठुः। खूर्दते चुखूर्दे। **गुर्दण् निकेतने** गूर्दयति ॥ **गुदि**[9]। गोदते जुगुदे। "वौ व्यञ्जनादेः–" ४।३।२५। इति क्त्वा-सनोर्वा कित्त्वे गुदित्वा गोदित्वा, जुगुदिषते जुगोदिषते। "नाम्युपान्त्य–" ५।१।५४। इति के गुदं स्त्रीणामपाङ्गम्। कल्याणं गुदमस्याः क्रोडादित्वाद् ङ्यभावे कल्याणगुदा। **गुदि**स्थाने **गुधिमेके**ऽध्यैषत ॥

---

१ "किञ्चिद् उद्दिश्य अपुनर्ग्रहणाय स्वीयत्यागो दानम्"–मा० धा० धातुअं० १७ पृ० ४३। २ "लवणे इति क्षीरस्वामी। आस्वादनम्–अनुभव"–मा० धा० धातुअ० १८ पृ० ४३। ३ °वर्जाः। आ° सपा१ वा० ॥ ४ **असिस्वर्दत्** संपा१ वा० प्र० नास्ति ॥ ५ "इह मान सुखमिति **सम्मतायाम्**, क्रीडायामकर्मक"इति–मा०धा० पृ० ४४ धा० २० ॥ ६ देरेव–दिकारस्यैव। ७ "अत्र **कैयट–पुरुषकार–मैत्रेयादिषु** तृतीयो न पठ्यते। **संमतामोघाविस्तार–चान्द्रेषु** तु त्रयोऽपि पठ्यन्ते। गुदक्रीडा गुदविहार इति चरके"।–मा० धा० धातुअं० २४ पृ० ४४। ८ "स्फूर्जेर्दीर्घोपदेशात् "भ्वादे–" २।१।६३। इति दीर्घ एषा न इति **चन्द्रः**–मा०धा० धा०पृ० ४४ धा० २४ ॥ ९ **गुदि** संपा१ वा० नास्ति ॥

७३६ षूदि क्षरणे। क्षरणं निरसनम्। "षः सो–" २।३।९८। इति सत्वे सूदते सुषूदे सूदिता। ङे असूषुदत्। क्ते निषूदितः। नन्द्यादित्वादने [मधु]सूदनः। अचि सूदः। स्त्रियां गौरादित्वाद् ङ्याम् सूदी। शीलाद्यर्थविवक्षायाम् "इ-ङितो–"५।२।४४। इत्यस्य "न णिङ्-य–"५।२।४५। इति प्रतिषेधात् तृनि सूदनशीलः सूदिता। षूदण् आस्रवणे सूदयति॥

७३७ ह्रादि शब्दे। अव्यक्ते शब्दे इत्यन्ये। अव्यक्तः अपरिस्फुटवर्णः। ह्रादते जह्रादे ह्रादिता। घञि ह्रादः। अचि ह्रदः, पृषोदरादित्वाद् ह्रस्वः॥

७३८ ह्लादैङ् सुखे च। चकाराच्छब्दे। ह्लादते जह्लादे ह्लादिता। ऐदित्त्वात् क्तयोर्नेट्, प्रह्लन्नः प्रह्लन्नवान्, अत्र "ह्लादो ह्लद् क्तयोश्च" ४।२।६७। इति ह्लद् तो नश्च। णौ क्ते आह्लादितः। क्तौ प्रह्लत्तिः। "म-न-य-व-लपरे हे" १।३।१५। इत्यनुस्वारानुनासिकयोः किं ह्लादते किँल्ह्लादते॥

७३९ पर्दि कुत्सिते शब्दे। पायुध्वनौ वर्तते। अन्ये तु निःशब्दमधोवातं पर्दनं मन्वाना अशब्दे इत्याहुः। पर्दते पपर्दे पर्दिता। "इ-ङितो–" ५।२।४४। इति अने पर्दनः। पृदाकुरिति तु पिपर्तेर्दाकुकि[1]॥

७४० स्कुदुङ् आप्रवणे[2]। आप्रवणम् उत्प्लुत्य गमनम् आस्कन्दनं वा। उद्धरणमित्यन्ये। उदित्त्वाद् ने स्कुन्दते चुस्कुन्दे स्कुन्दिता। सनि चुस्कुन्दिषते। यङि चोस्कुन्द्यते। यङ्लुपि चोस्कुन्दीति। कुन्द इति तु कुवतेर्दे[3] नेऽन्ते च रूपम्॥

अथ धान्ताः सप्त सेटश्च—

७४१ एधि वृद्धौ। एधते। "उपसर्गस्याऽनिण्–" १।२।१९। इत्यत्रैधिवर्जनादुपसर्गावर्णलुगभावे प्रैधते। अकर्मकत्वाद् भावे एध्यते मैत्रेण। सोपसर्गस्तु साप्योऽपि भवति। "गुरुनाम्यादेः–" ३।४।४८। इति परोक्षाया आमि एधाञ्चक्रे। एधिता। ओणेर्ऋदित्करणान्नित्यमपि द्विर्वचनं ह्रस्वो बाधते, तेन ङे ह्रस्वे द्वित्वे च मा भवानिदिधद्। सनि एदिधिषते। आनशि एधमानः। घञि एधः। उणादौ "अस्" (उ० ९५२) इति असि एधः एधसी। इन्धेरपि "दशना-ऽवोदै–" ४।२।५४। इति "येनिधिभ्याम्–" (उ० ९६८) इति च वचनाद् एध-एधसोः सिद्धिः॥

७४२ स्पर्धिँ[4] सङ्घर्षे। सङ्घर्षः पराभिभवेच्छा। स्पर्धते भ्रातुः–भ्रात्रा सह स्पर्धां करोतीत्यर्थः। पस्पर्धे। सनि पिस्पर्धिषते। यङि पास्पर्ध्यते। यङ्लुपि पास्पर्धीति। [5]दिवि "यङ्-तु-रु-स्तोः–" ४।३।६४। इतीति अपास्पर्धीत्। सिवि[6] "सेः स्-द्-धां च रुर्वा" ४।३।७९। इति सिवो लुकि धस्य

१ पृंक् पालन-पूरणयोः इत्यस्मात् धातो "स्तृ-पृभ्यां दाकुक्" (उ०७५६) इत्यनेन कित् दाकुः प्रत्ययः, पृदाकु सर्पे गोत्रकृच्च। २ "आप्रवणम् उत्प्लवनम् उत्प्लुत्य गमनं वा इति तरङ्गिणी। उद्धरणम्–इति भोजः"–मा०धा० धातुअं० ९ पृ० ४१। ३ कुंङ् शब्दे अस्मात् "वृ-तु-कु-सुभ्यो नोऽन्तश्च" (उ०२४०) इति दः नोऽन्तादेशश्च, कुन्दः पुष्पजाति॥ ४ अकर्मकोऽयम्। "पराभिभवस्य धात्वर्थेनोपसङ्ग्रहात्, उक्तञ्च–"धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसङ्ग्रहात्। प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया" इति–मा०धा० धातुअं० ३ पृ० ३५। ५ ह्यस्तनभूत-तृतीयपुरुषैकवचने। ६ ह्यस्तनभूतद्वितीयपुरुषैकवचने॥

विधानं णिलुकोऽनित्यत्वज्ञापनार्थम् , तेनाचि णेर्गुणे कम्पया स्त्री। "लङ्किकम्प्योः–" ४।२।४७। इति नलुकि विकंपित'; अङ्गविकृतेरन्यत्रोदित्त्वान्नलोपाभावे कम्पितः। शीलाद्यर्थविवक्षायाम् "चालशब्दार्थात्–" ५।२।४३। इति अने कम्पनः। "स्म्यजस–" ५।२।७९। इति रे कम्प्रः। "क्तेटो–" ५।२।१०६। इति अ', कम्पा। उणादौ "अम्भि-कुण्ठि–" (उ० ६१४) इति इर्नलुक् च, कपिः। कपोल इति तु कपे' सौत्रस्य ओले। केपृङ्-गेपृङौ गतावपि [अन्ये] ॥

७५८ ग्लेपृङ् दैन्ये च। चकाराच्चलने। गतावप्यन्ये। 'ग्लेपते जिग्लेपे ग्लेपिता। ऋदित्त्वाद् ङे न ह्रस्व', अजिग्लेपत् ॥

७५९ मेपृङ् ७६० रेपृङ् ७६१ लेपृङ् गतौ। मेपते मिमेपे मेपिता। ऋदित्त्वाद् ङे न ह्रस्वः, अमिमेपत् ॥ रेपृङ्। रेपते रिरेपे रेपिता। ऋदित्त्वाद् ङे अरिरेपत्। रेपृ शब्देऽपीत्येके ॥ लेपृङ्। लेपते लिलेपे लेपिता। ऋदित्त्वाद् ङे अलिलेपत्। क्ते लेपितः। देशान्तरप्राप्तिहेतुर्गति , तत्रैव स्थितस्य स्पन्दनं चलनमिति पृथगेषां पाठ.' ह्रेपृङ् चेति कौशिकः ॥

७६२ त्रपौषि लज्जायाम्। त्रपते। "तॄ-त्रप-फल–" ४।१।२५। इत्येत्वे द्वित्वाभावे च त्रेपे। औदित्त्वाद् वेट्, त्रप्ता त्रपिता। "वेटोऽपतः" ४।४।६२। इति क्तयोर्नेट्, त्रप्तः त्रप्तवान्। "आसु-यु-वपि–" ५।१।२०। इति यापवादे घ्यणि अपत्राप्यम्। "भ्राज्यलङ्कृग्–" ५।२।२८। इति इष्णौ अपत्रपाशीलादिः अपत्रपिष्णुः। षित्वादङि, त्रपा अपत्रपा। उणादौ "भृ-मृ-तॄ–" (उ० ७१६) इति उः, त्रपु ॥

७६३ गुपि गोपन-कुत्सनयोः। गर्हायां सनि जुगुप्सते। "अवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवति यं समुदायं सोऽवयवो न व्यभिचरति" न व्यभिचरति च गुपिर्गर्हायां सन्नन्तसमुदायमिति, "इ-ङ्ति.–" ३।३।२१। इत्यात्मनेपदम् , "स्वार्थे" ४।४।६०। इतीडभाव'। इच्छासनन्तादेव सनो निषेधात् "तुमर्हात्–"३।४।२१। इति सनि जुगुप्सिषते। "शंसिप्रत्ययात्–" ५।३।१०५। इति अः, जुगुप्सा। गर्हाया अन्यत्र सनोऽभावे अर्थान्तरेऽपि प्रायेण त्यादयो नाभिधीयन्ते इत्यत्र प्रायोग्रहणात् गोपते। अनटि गोपनम्। क्तौ गुप्ति'। गुपौ रक्षणे गोपायति। गुपच् व्याकुलत्वे गुप्यति। भासार्थः गोपयति ॥

१ विकृतशरीर ॥ २ चित्ते भीत इत्यर्थ ॥ ३ "कटि-पटि-कण्डि-गण्डि-शक्ति-कपि-चहिभ्य ओल" (उ० ४९३) इति सूत्रेण ॥ ४ "केपृ गेपृ ग्लेपृ च चकारात् कम्पने गतौ च। सूत्रविभागादिति स्वामी मैत्रेयस्तु चकारमन्तरेण पठित्वा कम्पने इत्यपेक्षते इत्याह" इत्यादि–मा० धा० धातुअं० ३६७ पृ० ८३ ॥ ५ न ह्रस्वः इति तु प्र० एव ॥ ६ "मैत्रेयस्तु मेपृ लेपृ सेवने। रेपृ प्लवगतौ–इत्याह"–मा० धा० धातुअं० ३७० पृ० ८३। ७ चलनार्थेन '७५४ टुवेपृङ्' इत्यादिधातुकदम्बकेन सहैव '७५९ मेपृङ्' इत्यादिधातुत्रिकस्य पाठ श्रेयान् चलन–गत्योरभेदात्–इत्याशङ्कायामाह—गति–चलनयोर्नाभेद'–गति स्थानान्तरगमनम् चलनं तु स्थानान्तरगमनाभावेऽपि गतिरहितस्य–स्थितस्य–अपि संभवति इत्यत' 'मेपृङ्' इत्यादित्रिकस्य पृथक् पाठः। ८ त्रपुः इति० संपा१ सं०१ सं०२ तपा० प्र० ॥ ९ प्रायग्रह° से० संपा१ स१–२ तपा० ॥

अथ वान्ताः षट् सेटश्च—

७६४ अबुङ् ७६५ रबुङ् शब्दे । उदित्त्वान्ने अम्बते । "अनातो–" ४।१।६९। इति पूर्वस्याऽऽत्वे ने च आनम्बे । अचि कर्मणि घञि वा अम्बा । उणादौ "शा-मा-श्या–" (उ० ४६२) इति ले अम्लो रसः ॥

रबुङ् । उदित्त्वान्ने रम्बते ररम्बे रम्बिता । के रम्बते इत्यचि करम्ब, कुगो वा "कृ-कडि-कटि–" (उ० ३२१) इति अम्बे करम्बः ॥

७६६ लबुङ् अवस्रंसने च । चकाराच्छब्दे । उदित्त्वान्ने लम्बते प्रलम्बते अवलम्बते आलम्बते उल्लम्बते विलम्बते इत्यनेकार्थत्वमुपसर्गद्योतितमन्यत्राप्युदाहार्यम् । णके लम्बिका त्रिकटा, विलम्बिका शकृद्विलम्बः । अचि लम्बः । उणादौ "नञो लम्बेर्नलुक् च" (उ० ८३८) इति णिदूः, अलाबूः । अलम्बुसेति त्वलतेरम्बुसे[1] अलम्बुसा नाम शाकम् ॥

७६७ कबृङ् वर्णे । वर्णो वर्णनं शुक्लादिश्च । कबते चकबे कबिता । ऋदित्त्वाद् ङे न ह्रस्व, अचकाबत् । घ्यणि काव्यम् । उणादौ "जठर–"(उ० ४०३) इति अरे कबरः[2] कबरी । "पदि-पठि–" (उ० ६०७) इति इ, कबिः । कर्बुर इति तु कर्वेरोष्ठ्यान्तस्य "वाश्यसि–" (उ० ४२३) इति उरे ॥

७६८ क्लीबृङ् अधार्ष्ट्ये[3] । क्लीबते चिक्लीबे क्लीबिता । ऋदित्त्वाद् ङे अचिक्लीबत् । "नाम्यु-पान्त्य–"५।१।५४। इति के क्लीबः । क्ते सेट्त्वात् "क्तेटो–" ५।३।१०६। इति अश्च, क्लीबा विक्लीबा ॥

७६९ क्षीबृङ् मदे । क्षीबते चिक्षीबे क्षीबिता । ऋदित्त्वाद् ङे अचिक्षीबत् । "नाम्युपान्त्य–" ५।१।५४। इति के क्षीबः प्रक्षीबः । क्तयोः "अनुपसर्गाः क्षीबो–" ४।२।८०। इति निपातनात् क्षीबः क्षीबवान्, उपसर्गात्तु प्रक्षीबितः प्रक्षीबितवान् । एते च कबृङादयो यद्यपि दन्त्यौष्ठ्यान्ता अपि काव्यादिशब्देषु श्रूयन्ते तथापि वृद्धैरोष्ठ्यान्त्यमध्ये पठितत्वादस्माभिस्तथैव पठिताः ॥

अथ भान्ताः सप्तदश रभि-लभिवर्जाः सेटश्च—

७७० शीभृङ् ७७१ वीभृङ् ७७२ शल्भि कत्थने[4] । शीभते शिशीभे शीभिता । ऋदित्त्वाद् ङे अशिशीभत् । उणादौ "ऋच्छि-चटि–" (उ० ३९७) इति अरे शीभरो हस्तिहस्तमुक्तो जललवः ॥ वीभृङ् । वीभते विवीभे वीभिता । ऋदित्त्वाद् ङे अविवीभत् ॥

शल्भि । शल्भते शशल्भे शल्भिता । ङे अशशल्भत् । त्रयोऽपि क्ते सेट इति "क्तेटो–"५।३।१०६। इति अः, शीभा वीभा शल्भा ॥

७७३ वल्भि भोजने । वल्भते ववल्भे वल्भिता । घञि वल्भः ॥

---

१ अली भूषणपर्याप्तिवारणेषु इत्येतस्य "अलेरम्बुसः" (उ० ५८५) इति अम्बुसप्रत्ययः ॥
२ "ऋच्छि-चटि–" (उ० ३९७) इति कुंकृ शब्दे इत्यस्मात् अरेऽपि कबरः इति उणादिगणविवृतौ ॥
३ आधार्ष्ट्ये संपा०१ सं१ वपा० का० मु० ॥ ४ कथने संपा०१ का० ॥

**७७४ गल्भि धार्ष्ट्ये** । गल्भते प्रजगल्भे गल्भिता । अचि प्रगल्भः । "क्तेटो–" ५।३।१०६। इति अ., प्रगल्भा । प्रगल्भ इवाचरतीति ["कर्तुः क्विप्] गल्भ-क्लीब-होडात् तु–" ३।४।२५। इति ङिति क्विपि "धातोरनेकस्वरात्–" ३।४।४६। इति परोक्षाया आमि प्रगल्भाञ्चक्रे, क्विपो ङित्त्वादात्मनेपदम् ॥

**७७५ रेभृङ् ७७६ अभुङ् ७७७ रभुङ् ७७८ लभुङ् शब्दे** । रेभते रिरेभे रेभिता । ऋदित्त्वाद् ङे न ह्रस्वः, अरिरेभत् । "क्षुब्ध-विरिब्ध–" ४।४।७०। इति निपातनाद् विरिब्ध. स्वरः, विरेभितमन्यत् ॥ अभुङ् । उदित्त्वाद् ने अम्भते । "अनातो–" ४।१।६९। इति पूर्वस्याऽऽत्वे ने च आनम्भे । अम्भिता । अम्भ इति तु "अमेर्भ-हौ चान्तौ"(उ० ९६२) इति अमते[1] रूपम् ॥ रभुङ् । उदित्त्वाद् ने रम्भते ररम्भे रम्भिता । अचि रम्भा कदली । ,करम्भो दधिसक्तवः । क्ते रम्भित ॥ लभुङ् । उदित्त्वाद् ने लम्भते ललम्भे लम्भिता । क्ते लम्भितः । अचि घञि वा लम्भ. ॥

**७७९ ष्टभुङ् ७८० स्कभुङ् ७८१ ष्टुभूङ् स्तम्भे** । स्तम्भः क्रियानिरोधः । "षः सो–" २।३।९८। इति सत्वे उदित्त्वाद् ने च स्तम्भते तस्तम्भे स्तम्भिता । अचि घञि वा स्तम्भः । "अङ-प्रतिस्तब्ध-निस्तब्धे–" २।३।४१। इति षत्वे विष्टम्भः । "अवाच्चाश्रयोर्जा–" २।३।४२। इति षत्वे अवष्टम्भते दण्डम्, अवष्टम्भते शूरः । "उदः स्था–" १।३।४४। इति सलुकि उत्तम्भते । णौ सनि षत्वे तिष्टम्भयिषते । टपर. षकारोऽयमित्येके, तन्मते टिष्टम्भयिषते टाष्टम्भ्यते । विष्टम्भ्यते[2] । स्तम्भ्यते इति तु स्तम्नातेः ॥ स्कभुङ् । उदित्त्वाद् ने स्कम्भते स्कम्भ्यते चस्कम्भे स्कम्भिता । विष्कम्भ्यते इति तु स्कम्नातेः । **स्तम्भू स्कम्भू** सौत्रौ स्त, स्तम्नाति स्तम्नोति, स्कम्नाति स्कम्नोति । "स्कम्नः–"२।३।५५। इति षत्वे विष्कम्भ· ॥ ष्टुभूङ् । "षः सो–"२।३।९८। इति सत्वे स्तोभते दोष । षोपदेशत्वात् षत्वे तुष्टुभे । "उपसर्गात् सुग्–" २।३।३९। इति षत्वे अभिष्टोभते । ऊदित्त्वाद् "ऊदितो वा" ४।४।४२। इति क्त्वि वेट्, स्तुब्ध्वा; इटि "वौ व्यञ्जनादेः–" ४।३।२५। इति वा कित्त्वे स्तुभित्वा स्तोभित्वा । वेट्त्वात् क्तयोर्नेट्, स्तुब्धः स्तुब्धवान् । घञि स्तोभः । उणादौ "ककुप्–" (उ० ९३२) इति कर्मणि क्विपि त्रिष्टुप् अनुष्टुप् । **स्तुम्भू** इति सौत्रस्य स्तुम्नाति स्तुम्नोति ॥

**७८२ जभुङ् ७८३ जभैङ् ७८४ जृभुङ् गात्रविनामे** । जभुङ् । उदित्त्वाद् ने जम्भते जम्भ्यते जजम्भे । क्ते जम्भितः । अने जम्भनः ॥ जभैङ् । "जभः स्वरे" ४।४।१००। इति मे जम्भते जम्भिता । ऐदित्त्वात् क्तयोर्नेट्, जब्धः जब्धवान् ॥ जृभुङ् । उदित्त्वाद् ने जृम्भते जजृम्भे जृम्भिता जृम्भितः जृम्भितवान् । क्ते सेट्त्वात् "क्तेटो–" ५।३।१०६। इति अः, जृम्भा । घञि जृम्भः ॥

---

१ अम गतौ इत्यस्य स०१ टि० ॥ २ विष्टम्भ्यते सपा०१ तपा० नास्ति ॥

**७८५ रभिं राभस्ये** । राभस्यं कार्योपक्रम । "रभोऽपरोक्षा-शवि" ४।४।१०२। इति शव्-परोक्षयोर्वर्जनाद् नस्याभावे आरभते आरेभे । अनुस्वारेत्त्वान्नेट्,आरब्धा आरब्धुम् । [सनि] "रम-लभ–"४।१।२१। इति स्वरस्येत्वे द्वित्वाभावे च आरिप्सते । घञि आरम्भः । णौ आरम्भयति । णके आरम्भक । "साधौ" ५।१।१५५। इति णिनि साध्वारम्भी । "ख्णम् चाभीक्ष्ण्ये" ५।४।४८। इति णमि आरम्भमारम्भं याति । अचि रम्भ , स्त्रियाम् रम्भा । अनटि आरम्भणम् । एषु "रभोऽपरोक्षा–" ४।४।१०२। इति न । "शकि-तकि–" ५।१।२९। इति ये रभ्यम्[1] आरभ्यम् संरभ्यम् । "शक-धृष–" ५।४।९०। इति तुमि आरभते भोक्तुम् । उणादौ "दिवादि–" (उ० ५७२) इति किति असे रभसो निर्विचारा[2] प्रवृत्ति ॥

**७८६ डुलभिंष् प्राप्तौ** । शव्-परोक्षयोर्वर्जनाद् "लभः" ४।४।१०३। इति नस्याभावे लभते लेभे; अन्यत्र स्वरे ने आलम्भयति, आलम्भकः, साध्वालम्भी, आलम्भमालम्भं याति, आलम्भो वर्तते। अनुस्वारेत्त्वान्नेट्, लब्धा लब्धुम् । "शकि-तकि–" ५।१।२९। इति ये लभ्यम् । "आङो यि" ४।४।१०४। इति ने आलम्भ्यम् । "उपात् स्तुतौ" ४।४।१०५। इति ने उपलम्भ्यं धनम् । ड्वित्त्वात् त्रिमक्, लब्धिमम् । षित्त्वाद् अङि "लभः" ४।४।१०३। इति ने "नो व्यञ्जनस्या–" ४।२।४५ इति नलुकि लभा उपलभा । "श्र्यादिभ्यः" ५।३।९२। इति क्तौ लब्धिः उपलब्धि । "ञि-ख्णमोर्वा" ४।४।१०६। इति वा ने अलाभि अलम्भि, लाभलाभम् लम्भंलम्भम् । "उपसर्गात् खल्-घञोश्च" ४।४।१०७। इति ने दुष्प्रलम्भः उपलम्भः उपालम्भि उपलम्भमुपलम्भम् । "सु-दुर्भ्यः" ४।४।१०८। इति ने अतिसुलम्भम् अतिदुर्लम्भम् अतिसुलम्भः अतिदुर्लम्भः । केवलेभ्यस्तु[3] नस्याभावे सुलभम् दुर्लभम् सुलाभः दुर्लाभः । "रभ-लभ–" ४।१।२१। इति स्वरस्येत्वे द्वित्वाभावे च सनि लिप्सते भोक्तुम् , अत्र "शक-धृष–" ५।४।९०। इति तुम् ॥

**अथ मान्तास्त्रयः सेटश्च—**

**७८७ भामि क्रोधे** । भामते बभामे भामिता । यङि बाभाम्यते, अत्रातः परस्यानुनासिकस्याभावाद् "मुरतो–" ४।१।५१। इति पूर्वस्य मुरन्तो न भवति, ये त्वत इति पूर्वस्य विशेषण प्रतिपन्नास्तन्मते मौ बम्भाम्यते । यङ्लुपि वम्-मसो. "मो नो–" २।१।६७। इति मस्य नत्वे बाभान्वः बाभान्मः बम्भान्व बम्भान्मः । क्विपि पदान्ते मो नत्वे प्रभान् , "नाम्नो नोऽनह्नः" २।१।९१। इति नलुग् न भवति, नत्वस्यासिद्धत्वात् । आवश्यके णिनि भामिनी । घञि भाम । उणादौ "पञ्चमाद् डः" (उ० १६८) इति डे भाण्डम् ॥

---

१ रभ्यम् शक॰ इति संपा०१। खे० तु रभ्यम् आरभ्यम् शक॰ इति ॥ २ ॰विचारा वृत्तिः संपा०१ वा० प्र० ॥ ३ कथ तर्हि अतिसुलभम् अतिदुर्लभमिति ? अत्राहे. पूजातिक्रमार्थत्वादनुपसर्गत्वम्, तेन न नोऽन्तः इति ॥

**७८८ क्षमौंषि सहने।** क्षमते चक्षमे। औदित्त्वाद् वेट्, क्षमिता क्षन्ता, क्षमितव्यम् क्षन्तव्यम्। "शकि-तकि-" ५।१।२९। इति ये क्षम्यम्। षित्त्वादङि क्षमा। **क्षमौच् सहने** इत्यस्य तु स्त्रिया क्तौ क्षान्तिः। वेट्त्वात् क्तयोर्नेट्, क्षान्तः क्षान्तवान्। उणादौ "गमि-जमि-" (उ० ९३७) इति डिति अमि क्षं भार्या। "क्रमि-गमि-क्षमेस्तुमाचान" (उ० ९४२) क्षान्तुं भूमिः तुमर्थश्च। **क्षमौच् सहने** क्षाम्यति॥

**७८९ कमूङ् कान्तौ।** कान्तिरभिलाषः। "कमेर्णिङ्" ३।४।२। इति णिङि कामयते। "अशवि ते वा" ३।४।४। इति वा णिङि कम्यते काम्यते। "णि-श्रि-" ३।४।५८। इति ङे अचकमत अचीकमत। चकमे। "धातोरनेकस्वरात्-"३।४।४६। इति परोक्षाया आमि कामयाञ्चक्रे। कमिता कामयिता। "ऊदितो वा" ४।४।४२। इति क्त्वि वेट्, कान्त्वा कमित्वा कामयित्वा। "ज्ञानेच्छा-" ५।२।९२। इति वर्तमाने क्तः, कान्तः, अत्र "वेटोऽपतः" ४।४।६२। इति नित्यमिडभावः। णिङि कामितः। क्तौ कान्तिः। "णि-वेत्त्या-"५।३।१११। इति अने कामना। अनटि कमनम् कामनम्। "न स्या-पूग्-"२।३।९०। इति प्रतिषेधाद् "अदुरुपसर्गान्तरो-" २।३।७७। इत्यधिकृत्य "स्वराद्" २।३।८५। इति "णेर्वा" २।३।८८। इत्यनेन च णत्वं न भवति, प्रकमनम् प्रकामना।"कर्मणोऽण्" ५।१।७२। इति अणि धर्मकामी। णिङि "शीलि-कामि-" ५।१।७३। इत्यणोपवादे णे धर्मकामा। "अतः कृ-कमि-" २।३।५। इति रेफस्य सत्वे पयस्कामः। "शकि-तकि-" ५।१।२९। इति ये कम्यम्। णिङि "य एचातः" ५।१।२८। इति ये काम्यम्। णिङ्यानशि कामयमानः, अत्र शब्विषयत्वाद् नित्यं णिङ् "अमोऽकम्यमि-"४।२।२६। इत्यत्र कमेर्वर्जनाद् ह्रस्वाभावश्च। कथं कामयानः? कामो यानमस्येति बहुव्रीहौ कामयानः, कामगतिरित्यर्थः; आनशि वाऽऽगमशासनस्यानित्यत्वाद् माभावः। यद् वामनः-"कामयानः सिद्धोनादिश्चेति"। "मोऽकमि-"४।३।५५। इत्यत्र कमेर्वर्जनाद् वृद्धिप्रतिषेधाभावे घञि कामः। "शॄ-कम-" ५।२।४०। इति उकणि कामनशीलो दास्याः कामुकः, अत्र "अकमेरुकस्य" २।२।९३। इत्यत्र कमेर्वर्जनात् प्रतिषेधाभावे "कर्मणि कृतः" २।२।८३। इति षष्ठी। "स्म्यजस-" ५।२।७९। इति रे कम्रः। "न णिङ्-य-" ५।२।४५। इत्यत्र दीपिग्रहणादुत्सर्गस्यापि समावेशे "इङितो-" ५।२।४४। इति अने कमनः। उणादौ "मृ-जॄ-शॄ-" (उ०१६७)

---

१ इदमुदाहरणं णिङभावे वेदितव्यम् अन्यच्च णिङ्भावे॥ २ शीलादिरयम्, तथा चाहुः-'शीलितो रक्षितः क्षान्त आक्रुष्टो जुष्ट उद्यतः। सयतः शयितस्तुष्टो रुष्टो रुषित आशितः॥१॥ कान्तोऽभिव्याहृतो हृष्टस्तृप्तः सप्तस्थितो मृतः। अमृतो मुदितः पूर्तः शक्तोऽक्तः श्रान्तविस्मितौ॥२॥ सरब्धारब्धदयिता दिग्धः स्निग्धोऽवतीर्णकः। आरूढो मूढ आयस्तः क्षुधितक्लान्तव्रीडिता॥३॥ मतश्चैव तथा क्रुद्धः श्लिष्टः मुहित इत्यपि। लिप्तदप्तौ च विज्ञेयौ सति लग्नादयस्तथा॥४॥ इति शीलादयः॥ ३ "शीलि-कामि-भक्ष्या-चरीक्षिक्षमो णः" ५।१।७३। इत्यत्र कामीनि ण्यन्तनिर्देशात् 'अण्'प्रत्ययान्तोऽयं प्रयोगः, अण्यन्तनिर्देशे च "अतः कृकमि-कंस-कुम्भ-कुशा-कर्णी-पात्रेऽनव्ययस्य" २।३।५। इत्यत्र केवलस्यैव कमेर्ग्रहणात् सकारादेशः, ण्यन्तस्य तु णे सति पयःकाम इत्येव भवति, स्त्रिया तु पयःकामा, अणन्तस्य पयस्कामी इति॥

इति अठे कमठो भिक्षाभाजनम्। "ऋच्छि-चटि–" (उ०३९७) इति अरे कमरो मूर्खः। "कमेरत उच्च" (उ० ४०९) इति आरे कुमारः। "मृदि-कन्दि–" (उ० ४६५) इति अले कमलम्, णिङि कामलः [नेत्ररोग]। "मुरलोरल–" (उ० ४७४) इति अले निपातनात् कोमलम्। "कमि-तिमेर्दो-ऽन्तश्च" (उ० ५४) इति उके कन्दुकः। "शमि-कमि-पलिभ्यो बलः" (उ०४९९) कम्बलः। "मा-वा-वदि–"(उ० ५६४) इति से कंसः। "क्रुसि-कमि–" (उ० ७७३) इति तुनि कन्तुः कन्दर्पः॥

**अथ यान्ताः सप्तदश सेटश्च—**

**७९० अयि ७९१ वयि ७९२ पयि ७९३ मयि ७९४ नयि ७९५ चयि ७९६ रयि गतौ।** अयते। "उपसर्गस्यायौ" २।३।१००। इति लत्वे पलायते पल्ययते। "दया-ऽया-ऽऽस्–" ३।४।४७। इति परोक्षाया आमि पलायाञ्चक्रे। पलायिता। अनटि निलयनम् दुलयनम्। निर्दुसोस्तु सो रुत्वस्य परे लत्वेऽसिद्धत्वात् निरयणम्, अत्र "स्वरात्" २।३।८५। इति नस्य णत्वम्। "अदुरुपसर्गान्तरो–" २।३।७७। इत्यत्र दुरो वर्जनात् "स्वरात्" २।३।८५। इति णत्वाभावे दुरयनम्। मनि "य्वोः–"४।४।१२१। इति यलोपेऽकारान्ताद् विहितेऽशिति "अत" ४।३।८२। इति लोपविधानादस्य लोपाभावे स्वमा, ये त्वत्राप्यल्लुकमिच्छन्ति तन्मते सुमा। क्विपि "य्वो.–"४।४।१२१। इति यलुकि "ह्रस्वस्य–" ४।४।११३। इति ते स्वत्; ये त्वत्रापि "अतः" ४।३।८२। इत्यल्लोपमिच्छन्ति तन्मते सुत्; ये त्वन्तरङ्ग तागमं प्रति बहिरङ्गस्य यलुकोऽसिद्धत्वमिच्छन्ति तन्मते स्वः। विचि यलुकि स्वः। क्तौ "य्वोः–" ४।४।१२१। इति यलुकि अतिः, अल्लुक्पक्षे तु तिः॥ **वयि।** वयते। "न शस–"४।१।३०। इत्येत्वनिषेधाद् ववये। वयिता। मनि "य्वोः–"४।४।१२१। इति यलुकि सुवमा; अल्लुक्पक्षे सुव्मा, अत्र "स्वरस्य परे प्राग्विधौ" ७।४।११०। इति स्थानित्वाद् "अनुनासिके च–" ४।१।१०८। इति वस्योट् न भवति। उणादौ "सृ-वयिभ्या णित्" (उ० ५७०) इति असे वायसः। "अस्" (उ० ९५२) इति असि वयः पक्षी बाल्यादि च॥ **पयि।** पयते पेये पयिता। मनि यो लुकि सुपमा, अल्लुक्पक्षे सुप्मा। एवं वनि सुपवा सुप्वा। क्तौ पतिः प्तिः। [उणादौ] "अस्" (उ० ९५२) इति असि पयः, पिबतेर्वा "पा-हाक्भ्यां पय-ह्यौ च" (उ० ९५३) इति असि॥ **मयि।** मयते मेये मयिता। अचि मयः॥ **नयि।** नयते नेये नयिता। अणोपदेशत्वाद् णत्वाभावे प्रनयिता। मनि यो लुकि सुनमा, अल्लुक्पक्षे सुन्मा। एवं वनि सुनवा सुन्वा। क्विपि यलुकि "ह्रस्वस्य–" ४।४।११३। इति ते च सुनत् सुनतौ सुनतः। सू सूनौ सूनः, अत्राल्लुक् "स्वरस्य परे प्राग्विधौ" ७।४।११०। इति स्थानित्वस्य 'न सन्धि–" ७।४।१११। इति प्रतिषेधात् "नि दीर्घ" १।४।८५। इति दीर्घः "नाम्नो नोऽनह्नः" २।१।९१। इति नस्य लुक् च भवति। क्तौ नतिः न्तिः॥ **चयि।**

१ °स्यायलुको° इति सं१ बिना सर्वत्र मुद्रितेऽपि च॥

चयते चेये चयिता। घञि चायः। चय इति तु चिनोते: अलि॥ रयि। रयते रेये रयितेत्यादि॥

७९७ तयि ७९८ णयि रक्षणे च। चकाराद् गतौ। तयते तेये तयिता। "णिन् चावश्यका–" ५।४।३६। इति णिनि तायी॥ णयि। "पाठे धात्वादेः–" २।३।९७। इति णस्य नत्वे नयते। णोपदेशत्वाद् "अदुरुपसर्गान्तरो–" २।३।७७। इति णत्वे प्रणयते। नेये नयिता। मन्त्रादिषु पूर्ववद्॥

७९९ दयि दान-गति-हिंसा-दहनेषु च। चकाराद् रक्षणे। "स्मृत्यर्थ-दयेशः" २।२।११। इति कर्मणो वा कर्मत्वे "शेषे" २।२।८१। इति षष्ठ्याम् दानस्य दयते, दानं दयते। "दयाऽया-ऽऽसू–" ३।४।४७। इति परोक्षाया आमि दयाञ्चक्रे। दयिता। क्ये दय्यते, अत्र "य्वोः प्वय्–" ४।४।१२१। इत्यत्र यि वर्जनाद् यलोपाभावः। "शीङ्-श्रद्धा–" ५।२।३७। इति आलौ दयालुः। दयनं दयन्ते प्राणिनोऽनयेति वा यथाक्रमं क्त्यनटोरपवादे भिदादित्वाद् अङि दया। क्ते दयितः। दयेरेव कर्मणो वा कर्मत्वविधानाद् देंङ् पालने इत्यस्य कर्मणि द्वितीयैव भवति, मातरं दयते॥

८०० ऊयैङ् तन्तुसन्ताने। ऊयते। "गुरुनाम्यादेः–" ३।४।४८। इति परोक्षाया आमि ऊयाञ्चक्रे। ऊयिता। ऐदित्त्वात् क्तयोर्नेट्, ऊतः ऊतवान्। मनि यलुकि गुणे च ओमा। एवं वन्नादिष्वपि॥

८०१ पूयैङ् दुर्गन्ध-विशरणयोः। पूयते पुपूये पूयिता। ऐदित्त्वात् क्तयोर्नेट्, पूतः पूतवान्। अचि पूयः, स्त्रियां गौरादित्वाद् ङ्याम् पूयी। क्तौ पूति, अत्र क्तेऽनिट्त्वात् "क्तेटो–" ५।३।१०६। इत्यप्रत्ययो न भवति। उणादौ "दृ-सुषि–" (उ० ६५१) इति किति तौ पूतिर्दुर्गन्धः॥

८०२ क्नूयैङ् शब्द-उन्दनयोः। उन्दनं क्लेदनम्। दुर्गन्धेऽपीत्येके। क्नूयते चुक्नूये क्नूयिता। ऐदित्त्वात् क्तयोर्नेट्, क्नूतः क्नूतवान्। णौ "अर्ति-री–" ४।२।२१। इति पौ "पुस्पौ" ४।३।२। इति गुणे "य्वोः–" ४।४।१२१। इति यलुकि च क्नोपयति। "चेलार्थात् क्नोपेः" ५।४।५८। इति णमि चेलक्नोपं वृष्टो देवः। "न णिङ्-य–" ५।२।४५। इति प्रतिषेधाद् अनाभावे तृनि क्नूयनशीलः क्नूयिता॥

८०३ क्ष्मायैङ् विधूनने। क्ष्मायते चक्ष्माये क्ष्मायिता। ऐदित्त्वात् क्तयोर्नेट्, क्ष्मातः क्ष्मातवान्। णौ "अर्ति-री–" ४।२।२१। इति पौ "य्वोः–" ४।४।१२१। इति यलुकि क्ष्मापयति। तृनि पूर्ववत् क्ष्मायिता॥

८०४ स्फायैङ् ८०५ ओप्यायैङ् वृद्धौ। स्फायते पस्फाये स्फायिता। ऐदित्त्वात् क्तयो-

---

१ मनू–मनुत्र्यतिङ्दन्तप्रत्ययेषु॥ २ क्लिशब्दे इति शाकटायनः॥

नैद्, स्फातः स्फातवान्। "स्फायः स्फी वा" ४।१।९४। इति स्फीभावे स्फीतः स्फीतवान्। णौ "स्फायः स्फाव्" ४।२।२२। इति स्फाव्, स्फावयति। **पारायणिकानां** तु स्फाययतीत्यपि। तथा क्विपि यलुकि स्फामाचष्टे इति णिचि अन्तस्थावादेशे स्फवयतीति। उणादौ "दिन-नग्न–" (उ० २६८) इति ने निपातनात् फेन.। "भी-वृधि-" (उ० ३८७) इति रे स्फारम्। "स्थविर-पिठिर–"(उ० ४१७) इति इरे निपातनात् स्फिरः स्फार इत्यर्थ.॥　　**ओप्यायैङ्।** प्यायते। परोक्षा-यङो "प्यायः पी." ४।१।९१। इति प्यादेशे आपिप्ये आपेपीयते। "क्तयोरनुपसर्गस्य" ४।१।९२। इति पीभावे "सूयत्याद्यो–" ४।२।७०। इति क्तस्य नत्वे च पीनौ स्तनौ, पीनं मुखम्। "आङोऽन्धूधसोः" ४।१।९३। इति प्यादेशे आपीनोऽन्धुः, आपीनमूधः; अर्थान्तरे तु आप्यानः चन्द्रः, अत्र "व्यञ्जनान्तस्थाऽऽतो–" ४।२।७१। इति तस्य नत्वम्। "दीप-जन–" ३।४।६७। इति कर्तर्यद्यतन्यास्ते वा ञिचि तलुकि च अप्यायि अप्यायिष्ट। "न स्या-पूग्–" २।३।९०। इति प्रतिषेधात् "स्वरात्" २।३।८५। इति णत्वाभावे प्रप्यानः, ओदित्त्वात् "सूयत्याद्यो–" ४।२।७०। इति तस्य नत्वम्॥

**८०६ तायृङ् सन्तान-पालनयोः।** सन्तानः प्रबन्धः। तायते तताये तायिता। "दीप-जन–" ३।४।६७। इति वा ञिचि अतायि अतायिष्ट। ऋदित्त्वाद् ङे न ह्रस्व., अततायत्। यङि तातायते। यङ्लुपि तातायीति तातति। "न णिङ्-य–" ५।२।४५। इति प्रतिषेधादनाभावे तृनि तायनशीलस्तायिता। "णिन् चावश्यका–" ५।४।३६। इति णिनि तायी॥

**अथ लान्ता नव सेटश्च—**

**८०७ वलि ८०८ वल्लि संवरणे**[2]। वलते। "अनादेशादेः–" ४।१।२४। इत्येत्व-द्वित्वाभावयोः "न शस–"४।१।३० इति निषेधात् ववले। वलिता। क्ते उपोद्वलितः। अचि वलः, कुत्सितो वलः कुवल., स्त्रियां गौरादित्वाद् ङ्याम् कुवली बदरी। घञि वालाः केशाः; कल्याणा वाला यस्या इति क्रोडादित्वाद् "असह-नञ्–" २।४।३८। इति ङ्यभावे आपि कल्याणवाला; श्वेतवालीति तु जातिवाचिनः "पाक-कर्ण–"२।४।५५। इति ङ्या सिद्धम्। उणादौ "भीण्-शलि–"(उ०२१) इति के बल्कम्। "स्यमि-कषि–"(उ० ४६) इति ईके वलीकं नीव्रम्। "सृणीका-ऽस्तीक–" (उ० ५०) इति ईके निपातनाद् वल्मीको नाकुः। "कु-गु-वलि–"(उ० ३६५) इति अये वलयः कटकः। "वलि-पुषेः कलक्" (उ० ४९६) वल्कलम्, वल्कं लातीति वा डे वल्कलम्। "पदि-पठि–" (उ० ६०७) इति इः, वलि। "फलि-वलि–" (उ० ७५८) इति गौ वल्गुः। दन्त्यौष्ठ्यादिरयम्। ज्वलादौ **वल प्राणन-धान्यावरोधयोरि**ति त्वोष्ठ्यादिः। वलति। "वर्षादयः क्लीबे" ५।३।२९। इत्यलि वलम्। "वा ज्वलादि–" ५।१।६२। इति णे वाल.। अचि बल.। उणादौ "शलि-वलि–" (उ०३४) इति आके बलाका। "बलेर्वोऽन्तश्च वा" (उ० १३३) इति अजे बल्वज उलपः, बल्वजा सबुसो धान्य·

---

१ क्तौ स्फातिः। कथं स्फीतिरिति ? उच्यते, स्फायते स्म क्त स्फीत., स्फीत इवाचरति "कर्तु क्विप्" ३।४।२५। स्फीततीति "स्वरेभ्य इः" (उ० ६०६) इति स्फीतिः॥ २ सवरणे सम्वरणे चेति **माधवधा०** पृ०९९ धा० ४८७–८८ **कौमुद्य** च पृ०१३८ धा० ४९२–२॥

पुञ्ज· । “विष्टपोलप–” (उ०३०७) इति अपे निपातनात् उलपः । वलण् प्राणने । घटादिश्चेत्येके । वलयति ॥ वल्लि । वल्लते ववल्ले वल्लिता । क्ते वल्लित । क्ते सेट्त्वात् “क्तेटो–”५।३।१०६। इति अः, वल्ला । अचि वल्लम् । उणादौ “कृ-शृ-गृ–”(उ० ३२९) इति अभे वल्लभः । “मी-मसि–” (उ० ४२७) इति ऊरे वल्लूरं शुष्कमासम् । “वडि-वटि–” (उ० ५१५) इति अवे वल्लवो गोपालः । “पदि-पठि–” (उ० ६०७) इति इ, वल्लिर्लता । “नदि-वल्लि–” (उ० ६९८) इति अरौ वल्लरिर्मञ्जरी ॥

८०९ शलि चलने च । चकारात् संवरणे । तालव्यादि· । शलते शेले शलिता । उणादौ “भीण्शलि–”(उ० २१) इति के शल्क· शरणम् । “शलि-वलि–” (उ० ३४) इति आके शलाका । “शल्यणेर्णित्” (उ० ५९) इति ऊके शालूक· । “ कृ-शृ-गृ–” (उ० ३२९) इति अभे शलभः । “स्था-छा-मा–” (उ० ३५७) इति ये शल्यम् , यावादित्वात् के शल्यकः । “मृदि-कन्दि–” (उ० ४६५) इति अले शललं श्वावित् सूची । शलमिति तु अचि । “कमि-चमि–”(उ०६१८) इति णिदिः, शालि· । “शलेराटुः” (उ० ७६३) शलाटु· कोमल फलम् । “लस्जीर्ष्यि-शलेरालुः” (उ० ८२२) शलालुर्वृक्षावयवः । शल गतौ ज्वलादिः । शलति । “वा ज्वलादि–” ५।१।६२। इति णे शाला । अचि शलं श्वाविद्रोम ॥

८१० मलि ८११ मल्लि धारणे । मलते मेले मलिता । अचि मलः । कर्मणि घञि माला । उणादौ “कु-गु-वलि–” (उ० ३६५) इति अये मलयो गिरि· । “महि-कणि–” (उ० ४२८) इति ऊरे मालूरो विल्वः । चुरादेराकृतिगणत्वाच्चुरादावदन्तः । मलयति । अलि परिमलः ॥ मल्लि । मल्लते ममल्ले मल्लिता । अचि मल्ल·, गौरादित्वाद् ङ्याम् मल्ली विचकिलः । णके मल्लक·, स्त्रियाम् मल्लिका । उणादौ दृ-कृ-नृ–” (उ० २७) इति अके मल्लकः शरावः, मल्लिका विचकिलः शरावश्च ॥

८१२ भलि ८१३ भल्लि परिभाषण-हिंसा-दानेषु । भलते बभले भलिता । भलिस्थाने ओष्ठ्यादिं बलिमेके पठन्ति, बलते । “अनादेशादेः–” ४।१।२४। इत्येत्व-द्वित्वाभावयो· बेले । भलिण् आभण्डने । निभालयते । उणादौ “मृ-मन्यञ्जि–” (उ०५८) इति ऊके भालूक ऋक्षः ॥ भल्लि । भल्लते बभल्ले भल्लिता । करणे “व्यञ्जनाद्–” ५।३।१३२। इति घञि भल्लः क्षुरप्रः । उणादौ “कणि-भल्लेर्दीर्घश्च वा” (उ० ६०) इति ऊके भल्लूको भाल्लूकश्च ऋक्ष· । “पदि-पठि–” (उ०६०७) इनि इ·, भल्लि· ॥

८१४ कलि शब्द-सङ्ख्यानयोः । कलते आकलते सङ्कलते परिकलते प्रत्याकलते विकलते । चकले कलिता । अचि कलः । कर्मणि घञि काल· । “तिक्कृतौ नाम्नि” ५।१।७१। इति अके कलिका । उणादौ “भीण्शलि–”(उ०२१) इति के कल्को दम्भः । “क्री-कलि–” (उ० ३८)इति

---

१ “यावादिभ्य· कः” ७।३।१५॥ २ च सं १ तपा० नास्ति ॥

इके कलिका कोरकम्, उत्कलिका ऊर्मिः। कलम इति तु **कडत् मदे** इत्यस्य "स्-पृ-प्रथि–" (उ० ३४७) इति अमे डस्य लत्वे च सिद्धम्। "स्था-छा-मा–" (उ० ३५७) इति ये कल्यं प्रातः। "कुलि-लुलि–" (उ० ३७२) इति आये कलायः त्रिपुटधान्यम्। "मृदि-कन्दि–" (उ०४६५) इति अले कललं शुक्रशोणितमलः। "कल्यनि-महि–" (उ० ४८१) इति इले कलिलं व्याप्तम्। "ऋ-पृ-नहि–" (उ० ५५७) इति उषे कलुष पापम्। "कलेर्मषः (उ० ५६२) कलमषं पापम्। "कुलेश्च माषक्" (उ० ५६३) कल्माषः शबलः। "कलि कुलिभ्या मासक्" (उ०५८४) कल्मासः शबलः। "पदि-पठि–" (उ० ६०७) इति इः, कलिः। **कलण् क्षेपे** कालयति। अचि कालः। "णि-वेत्त्या–" ५।३।१११। इति अने कालना। "स्वरेभ्यः–"(उ० ६०६) इति इः, कालिः। कालिकेति तु कालात् चौरादयकञि। **कलण् संख्यान-गत्योः** अदन्तः, कलयति। कलना। "भीषि-भूषि–" ५।३।१०९। इत्यत्र बहुवचनाद् अङि कला॥

**८१५ कल्लि अशब्दे**। शब्दस्याभावोऽशब्दम् तूष्णीम्भावः। शब्दार्थोऽयमित्येके। अव्यक्तशब्दार्थे इत्यपरे। कल्लते चकल्ले कल्लिता। अचि कल्लः। उणादौ "पिञ्छोल-कल्लोल–" (उ० ४९५) इति ओले कल्लोलः॥

**अथ वान्ताश्चतुर्दश सेटश्च—**

**८१६ तेवृङ् ८१७ देवृङ् देवने**। तेवते तितेवे तेविता। ऋदित्त्वाद् ङे न ह्रस्वः, अतितेवत्। यङि तेतेव्यते। यङ्लुपि तेतेवीति, पक्षे "अनुनासिके च–" ४।१।१०८। इति वस्योटि गुणे च तेतयोति, क्ङित्येवोडिति पक्षे "य्वोः–" ४।४।१२१। इति वलुकि तेतेति। मनि "अनुनासिके च–" ४।१।१०८। इति वस्योटि गुणे च सुतयोमा। वनि "य्वोः–" ४।४।१२१। इति वलुकि सुतेवा। क्विपि ऊटि सुतयूः। विचि "य्वोः–" ४।४।१२१। इति वस्य लुकि सुतेः। क्तेरपवादः "क्तेटो–" ५।३।१०६। इति अः, तेवा॥ **देवृङ्**। देवते दिदेवे देविता। ऋदित्त्वाद् ङे न ह्रस्वः, अदिदेवत्। शेषं पूर्ववत्। "परेर्देवि–" ५।२।६५। इति घिनणि परिदेवी। "उपसर्गाद् देवृ-देवि–" ५।२।६९। इति णके आदेवकः। उणादौ "ऋच्छि-चटि–" (उ० ३९७) इति अरे देवरः। "मृदि-कन्दि–" (उ० ४६५) इति अले देवलः ऋषिः। देवट इति तु दीव्यतेः "दिव्यवि–" (उ० १४२) इति अटे॥

**८१८ पेवृङ् ८१९ सेवृङ् ८२० केवृङ् ८२१ खेवृङ् ८२२ गेवृङ् ८२३ ग्लेवृङ् ८२४ पेवृङ् ८२५ प्लेवृङ् ८२६ मेवृङ् ८२७ म्लेवृङ् सेवने**। सर्वे ऋदितः सेटश्च। ऋदित्त्वं ङपरे णावुपान्त्यह्रस्वाभावार्थम्। "षः सो–" २।३।९८। इति सत्वे सेवते सिषेवे सेविता। ऋदित्त्वाद् ङे ह्रस्वाभावे षोपदेशत्वाच्च "नाम्यन्तस्था–" २।३।१५। इति षत्वे असिषेवत्। "परि-नि-वेः सेवः" २।३।४६। इति षत्वे परिषेवते निषेवते विषेवते। अड्व्यवायेऽपि पर्यषेवत इत्यादि।

---

१ कलिः सं १ तपा० प्र० ॥ २ चोरादेः" ७।१।७३। इति सूत्रम्॥

सनि परिषिषेविषते, अत्र "णि-स्तोरेवा–" २।३।३७। इति नियमेन बाधितस्य षत्वस्य प्रतिप्रसवः। अनटि सेवनम्। भीरुष्ठानादित्वात् षत्वे दुन्दुभेः सेवनं दुन्दुभिषेवणम्॥ सेवृङ्। सेवते। अषोपदेशत्वात् षत्वाभावे परिसेवते निसेवते विसेवते पर्यसेवत। सनि परिसिसेविषते। सिसेवे। णौ ङे असिसेवत्। क्ते सेवित। "क्तेटो–" ५।३।१०६। इत्य', सेवा॥ केवृङ्। केवते चिकेवे। णौ ङे अचिकेवत्। उणादौ मृदि-कन्दि–" (उ० ४६५) इति अले केवल॥ खेवृङ्। खेवते चिखेवे खेविता। णौ ङे अचिखेवत्॥ गेवृङ्। गेवते जिगेवे। णौ ङे अजिगेवत्॥ ग्लेवृङ्। ग्लेवते जिग्लेवे। णौ ङे अजिग्लेवत्॥ पेवृङ्। पेवते [2]पिपेवे। णौ ङे अपिपेवत्॥ प्लेवृङ्। प्लेवते पिप्लेवे। णौ ङे अपिप्लेवत्॥ मेवृङ्। मेवते मिमेवे। णौ ङे अमिमेवत्॥ म्लेवृङ्। म्लेवते मिम्लेवे। णौ ङे अमिम्लेवत्॥

**८२८ रेवृङ् ८२९ पवि गतौ**। रेवृङ् प्लुतिगतावित्यन्ये। प्लुतिभिर्गतिः प्लुतिगतिः। रेवते रिरेवे रेविता। ऋदित्त्वाद् ङे ह्रस्वाभावे अरिरेवत्। "नाम्युपान्त्य–" ५।१।५४। इति के रेवा नर्मदा। उणादौ "तॄ-जि–" (उ० २२१) इति अन्ते रेवन्तः सूर्यपुत्र.। रेवती तु रीयतेर्विचि मतौ ङ्या रूपम्॥ पवि। पवते पेवे पविता। "इ-ङितः" ५।२।४४। इति अने पवनः॥

अथ शान्तौ द्वौ सेटौ च—

**८३० काशृङ् दीप्तौ**। काशते चकाशे काशिता। ऋदित्त्वाद् ङे ह्रस्वाभावे अचकाशत्। अचि काश आकाशः सङ्काशः प्रकाश.। "नामिन काशे" ३।२।८७। इति दीर्घे प्रतीकाश. नीकाशः। घञि काश.। उणादौ "वनि-कणि–" (उ० १६२) इति ठे काष्ठम्। "पदि-पठि–" (उ० ६०७) इति इः, काशि॥

**८३१ क्लेशि [3]बाधने**। क्लेशते चिक्लेशे क्लेशिता। क्ते क्लेशितः। "क्तेटो–" ५।३।१०६। इत्य, क्लेशा। घञि क्लेशः॥

अथ षान्ता द्वादश सेटश्च—

**८३२ भाषि च व्यक्तायां वाचि**। प्रकृतेः परश्चकारः प्रकृतिमनुकर्षति, तेन क्लेशिर्भाषिश्च व्यक्तायां वाचि। क्लेशिरुदाहृत एव। भाषि। [4]भाषते बभाषे भाषिता। णौ ङे "भ्राज-भास–" ४।२।३६। इति वा ह्रस्वे अबीभषत् अबभाषत्। क्ते भाषितः। "क्तेटो–" ५।३।१०६। इति अ., भाषा। घञि भाष। घ्यणि भाष्यते इति भाष्यम्, करणे वा "बहुलम्" ५।३।१। इति घ्यण्। "निन्द हिंस–" ५।२।६८। इति णके व्याभाषणशीलो व्याभाषक.॥

१ "भीरुष्ठानादय." २।३।३३॥ २ पिपेवे पेविता णौ इति मुद्रिते॥ ३ क्लेशि विबाधने प्र०। क्लेश व्यक्तायां वाचि इति धातुप्रदीप पृ. ४५ धा० ६०७। अत्र सायणः क्लेश अव्यक्तायां वाचि। बाधन इति दुर्गः, अत्र स्वामी क्लेश व्यक्तायां वाचि चेति पठन् इमावपि पूर्वधातोरर्थाविवाह। चन्द्र-दुर्ग-मैत्रेय-सम्मताकार-देवादयस्तु धात्वन्तरमेवाहु। इति माधवधा०पृ०११४ धा०५९९॥ ४ भाषते भाषिता सपा०१॥

**८३३ ईषि गति-हिंसा-दर्शनेषु।** ईषते। "गुरुनाम्यादे –" ३।४।४८। इति परोक्षाया आमि ईषाञ्चक्रे। ईषिता। क्ते ईषितः। "क्तेटो–" ५।३।१०६। इति अ, ईषा, "नाम्युपान्त्य-" ५।१।५४। इति के वा रूपम्। उणादौ ऋच्यृजि–" (उ० ४८) इति ईके ईषीका काश। इषीकेति तु इषत् इच्छायामित्यस्य। इषुरित्यपीच्छते "पृ-का-हृषि–" (उ० ७२९) इति किति औ रूपम्। ईष उञ्छे ईषति॥

**८३४ गेषृङ् अन्विच्छायाम्।** अन्विच्छाऽन्वेषणम्। गेषति जिगेषे गेषिता। ऋदित्त्वाद् ङे ह्रस्वाभावे अजिगेषत्॥

**८३५ येषृङ् प्रयत्ने।** येषते यियेषे येषिता। ऋदित्त्वाद् ङे ह्रस्वाभावे अयियेषत्॥

**८३६ जेषृङ् ८३७ णेषृङ् ८३८ एषृङ् ८३९ ह्रेषृङ् गतौ।** जेषते जिजेषे जेषिता। ऋदित्त्वाद् ङे अजिजेषत्॥ **णेषृङ्।** "पाठे धात्वादे·–" २।३।९७। इति नत्वे नेषते। णोपदेशत्वात् "अदुरुपसर्गा–" २।३।७७। इति णत्वे प्रणेषते। निनेषे नेषिता। ऋदित्त्वाद् ङे अनिनेषत्। नेष्टेति तु नयते· "निय· षादिः" (उ० ८६४) इति तृप्रत्यये रूपम्॥ **एषृङ्।** एषते अन्वेषते। "गुरुनाम्यादे –" ३।४।४८। इति परोक्षाया आमि एषाञ्चक्रे। "स्व··देर्द्वितीयः" ४।१।४। इति षेर्द्वित्वे अन्वेषिषते। ऋदित्त्वाद् ङे न ह्रस्वः, मा भवानेषिषत्। अत्राप्योणेरिव ऋदित्करणेन नित्यस्यापि द्वित्वस्य ह्रस्वेन बाधाज्ञापनाद् ह्रस्वस्य प्राप्ति·[1]। क्ते अन्वेषितः। अन्विष्ट इति त्विच्छते·॥ **ह्रेषृङ्।** ह्रेषते जिह्रेषे ह्रेषिता। ऋदित्त्वाद् ङे अजिह्रेषत्। क्ते ह्रेषितः। "क्तेटो–" ५।३।१०६। इत्य·, ह्रेषा॥

**८४० रेषृङ् ८४१ हेषृङ् अव्यक्ते शब्दे[2]।** रेषते रिरेषे रेषिता। ऋदित्त्वाद् ङे अरिरेसत्। "क्तेटो–" ५।३।१०६। इत्यः, रेषा॥ **हेषृङ्।** हेषते जिहेषे हेषिता। क्ते हेषितम्। ऋदित्त्वाद् ङे अजिहेषद्। "क्तेटो–" ५।३।१०६। इत्यः हेषा॥

**८४२ पर्षि स्नेहने।** पर्षते पपर्षे पर्षिता। क्विपि तलुकि "रात्सः" २।१।९०। इति नियमात् "पदस्य" २।१।८९। इति लोपाभावे सुपर्ट्। पार्ष्णिरिति तु पृषे[3]: "पृषि-हृषिभ्यां वृद्धिश्च" (उ० ६३६) इति णौ। पर्षदित्यपि पृणाते[4]· "प्र· सद्" (उ० ८९७) इति सदि। परिषदिति तु परिपूर्वात् सीदते[5]· क्विपि[6]॥

---

१ ह्रस्वस्याप्राप्तिः इति मुद्रिते॥ २ अस्य स्थाने माधवदीक्षितधातुकाव्यकारादयः पेषृमिति रेपृ-हेपृ ह्वेपृ अव्यक्ते शब्दे इति चाहु, तथा च "सुप्रेषितान् पथि सरेषत्रके सहेष, हेयास्तकासरमदानतिभासुराङ्गान्। नाभोत्थरासलसितान्नसितेन दाम्ना, सूतो ययाम समराभ्यमियास्तुरङ्गान्" ॥ इति धातुकाव्यसर्ग१ श्लो०७९। एव केशवोऽपि 'कौक्षे कर्दति पर्दते गुदरवे रेषेति वार्के हसे बुक्कति श्वरवे भषेति हयजे हेषेति हेषेति च' इति। रेषृधातुः स्वभावाद् वृकशब्दे, हेषृ हेषृ च धातू अश्वशब्दे इति॥ ३ पृषू सेचने इत्यस्मात् धातोः॥ ४ पृश् पालन-पूरणयोः इत्यस्मात्॥ ५· षदॢ विशरणगत्यवसादनेषु॥ ६ क्विप् स१-२ तपा०॥

८४३ घुंपुङ् कान्तीकरणे। उदित्त्वाद् ने घुंपते जुघुंपे घुंपिता ॥

अथ सान्तास्त्रयोदश सेटश्च—

८४४ स्रंसूङ् प्रमादे। दन्त्यादिः। प्रमादोऽवलेपः। स्रंसते सस्रंसे स्रस्यते। ऊदित्त्वात् क्त्वि वेट्, स्रस्त्वा, इटि "क्त्वा" ४।३।२९। इति कित्त्वाभावे स्रंसित्वा। वेट्त्वात् क्तयोर्नेट्, स्रस्तः स्रस्तवान्। "वञ्च-स्रंस–" ४।१।५०। इत्यत्र ध्वंसिसहचरितस्य द्युतादिस्रंसेर्ग्रहणादस्य यङि न्यभावे सास्रस्यते। "स्रस्-ध्वंस्–" २।१।६८। इत्यत्र साहचर्यानाश्रयणादुभयोरपि ग्रहणे क्विपि दत्वे उखास्रत्। भान्तोऽयमित्येके, विस्रम्भते विस्रभ्यते ॥

८४५ कासृङ् शब्दकुत्सायाम्। शब्दस्य कुत्सा रोगः। कासते "दयायास्–" ३।४।४७। इति परोक्षाया आमि कासाञ्चक्रे। कासिता। ऋदित्त्वाद् ङे न ह्रस्वः, अचकासत्। क्ते कासितम्। "क्तेटो–" ५।३।१०६। इति अः, कासा। घञि कासः। विकास इति तु कसेर्घञि ॥

८४६ भासि ८४७ टुभ्रासि ८४८ टुभ्लासृङ् दीप्तौ। भासते बभासे भासिता। णौ ङे "भ्राज-भास–"४।२।३६। इति वा ह्रस्वे अबीभसत् अबभासत्। ग्रहादित्वाद् णिनि उद्भासी। "भञ्जि-भासि–" ५।२।७४। इति घुरे भासनशीलो भासुरः। "स्थेश-भास–" ५।२।८१। इति वरे भास्वरः। "दिद्युद्दद्द्–" ५।२।८३। इति क्विपि भाः भासौ भासः। भेति तु "मृगयेच्छा–" ५।३।१०१। इति निपातनादङि आपि च भातेः। क्ते भासितः। "क्तेटो–" ५।३।१०६। इत्यः, भासा। घञि उद्भासः। उणादौ "तॄ-जि-भू-वदि–" (उ० २२१) इति अन्ते भासन्तः णौ "आमन्ता–" ४।३।८५। इति अयि भासयन्तश्च सूर्यः ॥ टुभ्रासि। "भ्रास-भ्लास–" ३।४।७३। इति वा श्ये भ्रास्यते भ्रासते। "जॄ-भ्रम-वम–" ४।१।२६। इति वा स्वरस्यैत्वे द्वित्वाभावे च भ्रेसे बभ्रासे। भ्रासिता। णौ ङे "भ्राज-भास–" ४।२।३६। इति बहुवचनाद्वा ह्रस्वे अबिभ्रसत् अबभ्रासत्। ट्वित्त्वादथौ भ्रासथुः ॥ टुभ्लासृङ्। "भ्रास-भ्लास–" ३।४।७३। इति वा श्ये भ्लास्यते भ्लासते। "जॄ-भ्रम–" ४।१।२६। इति वैत्वे द्वित्वाभावे च भ्लेसे बभ्लासे। भ्लासिता। ऋदित्त्वाद् णौ ङे न ह्रस्वः, अबभ्लासत्। ट्वित्त्वादथौ भ्लासथुः ॥

८४९ रासृङ् ८५० णासृङ् शब्दे। रासते ररासे। ऋदित्त्वाद् णौ ङे न ह्रस्व, अररासत्। "नाम्नि पुंसि च" ५।३।१२१। इति णके रासकः। उणादौ "कॄ-शॄ-गॄ–" (उ०३२९) इति अभे रासभः। रास्ना रस्नेति तु "रसेर्णिद्वा" ("रसेर्वा") (उ० २६०) इति ने रसतेः ॥ णासृङ्। "पाठे धात्वादेः–" २।३।९७। इति नत्वे नासते। णोपदेशत्वाद् "अदुरुपसर्गा–"२।३।७७। इति णत्वे

१ अत्र सायणः घुमि कान्तिकरणे। घिपीतीदुपधं पेठतु. चन्द्रकाश्यपौ। स्वामि घसेति दन्त्यान्तमदुपधं पपाठ। यथा वयं तथा देव-मैत्रेय-दुर्गा। षकारान्तोऽप्ययमिति मा०धा०पृ० ११९ धा०६४२। धातुकाव्ये तु घसीत्येके। घषेत्यन्ये। सर्ग१ श्लो ८४ टीकायाम् ॥ २ रोगजे कुत्सितशब्देऽयं प्रसिद्ध। शब्दमात्रे शोभार्थेऽप्याह भट्टिः इति धातुका०पृ. १५३ स१–७९ श्लोकटीकायाम् ॥ ३ दयायाकास् प्र० ॥ ४ °त्वान्न ह्र° सं१ स२ तपा० ॥ ५ टुभ्राशृ टुभ्लाशृ इति पाणिनीयाः ॥

प्रणासते। ननासे नासिता। ऋदित्त्वाद् ङे अननासत्। अचि नासा। णके नासिका॥

८५१ णसि कौटिल्ये। "पाठे धात्वादे:–" २।३।९७। इति णस्य नत्वे णोपदेशत्वाद् "अदुरुपसर्गा–" २।३।७७। इति णत्वे प्रणसते। नेसे नसिता। णके नासिका। विचि क्विपि वा सौ भ्वादित्वाद् "अभ्वादे:–" १।४।९०। इति दीर्घाभावे सुनः। कर्मणि घञि नासो घ्राणम्। उणादौ "नसि-वसि–" (उ० ४०) इति णिदिकः, नासिका॥

८५२ भ्यसि भये। भ्यसते बभ्यसे भ्यसिता। "भेषृ" इति चन्द्रः। भेषते॥

८५३ आङः शसुङ् इच्छायाम्। आङ इति आङः पर एवायं प्रयुज्यते नान्योपसर्गात् नापि केवल इति ज्ञापनार्थम्। उदित्त्वाद् ने आशंसते आशंस्यते आशशंसे। क्ते आशंसितम्। "क्तेटो–"५।३।१०६। इति अः, आशंसा। "सन्-भिक्षा–" ५।२।३३। इति उः, आशंसुः। प्रशस्यते शस्त्रम्, प्रशंसेति तु शंसू स्तुतावित्यस्य॥

८५४ ग्रसूङ् ८५५ ग्लसूङ् अदने। ग्रसते जग्रसे ग्रसिता। यङि जाग्रस्यते। यङ्लुपि जाग्रसीति जाग्रस्ति। ऊदित्त्वात् क्त्वि वेट्, ग्रस्त्वा ग्रसित्वा। वेट्त्वात् क्तयोर्नेट्, ग्रस्तः ग्रस्तवान्। घञि ग्रास। उणादौ "ग्रसि-हागृभ्या ग्रा-जिह्मौ च" (उ०३३९) इति मे ग्रामः। "रुक्म-ग्रीष्म–" (उ० ३४६) इति मे निपातनात् ग्रीष्म॥ ग्लसूङ्। ग्लसते जग्लसे ग्लसिता। ऊदित्त्वात् क्त्वि वेट्, ग्लस्त्वा ग्लसित्वा। वेट्त्वात् क्तयोर्नेट्, ग्लस्तः ग्लस्तवान्। घञि ग्लासः॥

८५६ घसुङ् करणे। उदित्त्वाद् ने घसते जघंसे घंसिता। मूर्धन्यान्तोऽयमिति चन्द्रः घंषते॥

अथ हान्ता अष्टादश सेटश्च—

८५७ ईहि चेष्टायाम्। ईहते। "गुरुनाम्यादे:–" ३।४।४८। इति परोक्षाया आमि ईहाञ्चक्रे[1]। ईहिता। घञि ईहः। स्त्रियां "क्तेटो–" ५।३।१०६। इति अः, ईहा॥

८५८ अहुङ् ८५९ प्लिहि गतौ। उदित्त्वाद् ने अंहते। "अनातो–" ४।१।६९। इति पूर्वस्यात्वे ने च आनंहे। अंहिता। उणादौ "अम्भि-कुण्ठि–" (उ० ६१४) इति इर्नलुक् च, अहिं। "तङ्कि-वङ्कि–" (उ० ६९२) इति रौ अंह्रिः। "अस्–" (उ० ९५२) इति असि अंहः पापम्, अमेर्वा "अमेर्भहौ चान्तौ" (उ० ९६२) इति असि[2]। अहुण् भासार्थः अहयति॥ प्लिहि। प्लेहते पिप्लेहे प्लेहिता। उणादौ "श्वन्–" (उ० ९०२) इति अनि निपातनात् प्लीहा॥

८६० गर्हि ८६१ गल्हि कुत्सने। गर्हते जगर्हे गर्हिता। यङि जागर्ह्यते। मनि सुगर्ह्मा। वनि सुगर्ह्वा। स्त्रियां "क्तेटो–" ५।३।१०६। इति अः, गर्हा। "श्वादिभ्यः" ५।३।९२। इति क्तौ

१ अत्र कृग उभयपदित्वेऽपि "आमः कृग" ३।३।७५। इत्यात्मनेपदमेव न परस्मै। ईहाम्बभूव, ईहामास, भ्वस्तिभ्यां परस्मैपदमेव एवमन्यत्रापि॥ २ अम गतौ इत्यस्माद् असि भकार-हकारौ चान्तौ भवत, अहः पाप अपराधः दीनश्च॥

गर्दि । घञि गर्हः । क्विपि "रात्सः" २।१।९०। इति नियमात् संयोगान्तलोपाभावे सुघर्ट् । **गर्हण् विनिन्दने** युजादित्वाद् वा णिचि गर्हयति गर्हति ॥ **गल्हि** । गल्हते जगल्हे गल्हिता । यङि जागल्ह्यते । मन्नादिषु पूर्ववत् ॥

**८६२ वर्हि ८६३ वल्हि प्राधान्ये** । वर्हते ववर्हे वर्हिता । अचि वर्हः प्रधानभूतः । मुनिप्रवर्हः ॥ **वल्हि** । वल्हते ववल्हे वल्हिता । चुरादौ भासार्थौ वर्हयति वल्हयति ॥

**८६४ वर्हि ८६५ वल्हि परिभाषण-हिंसा-ऽऽच्छादनेषु** । दानेऽप्यन्ये[1] । ओष्ठ्यादी एतौ, पूर्वौ तु दन्त्यौष्ठ्यादी । वर्हते ववर्हे वर्हिता । घञि वर्हः । प्रज्ञाद्यणि वार्हः । "फल-वर्हाच्च–" ७।२।१३। इति इने वर्हिण ॥ **वल्हि** । वल्हते ववल्हे वल्हिता । "हाऽन्तस्था–" २।१।८१। इत्यन्तस्था धस्य वा ढत्वे अवल्हिढ्वम् अवल्हिध्वम् । उणादौ "सृणीका–" (उ० ५०) इति इके निपातनात् वाल्हीकः । "पदि-पठि–" (उ० ६०७) इति इः, वल्हि । वाहुलकाद्दीर्घे वाल्हयः । स्वार्थिके के वाल्हिका देशः क्षत्रियाश्च ॥

**८६६ वेहृङ् ८६७ जेहृङ् ८६८ वाहृङ् प्रयत्ने** । वेहते विवेहे वेहिता । ऋदित्त्वाद् ङे न ह्रस्वः, अविवेहत् । वेहदिति तु हन्तेः, विहन्ति गर्भमिति वेहद् गर्भघ्नी गौः, "सश्चद्वेहत्साक्षादादयः" (उ० ८८२) इति निपातनात् ॥ **जेहृङ्** । जेहते जिजेहे जेहिता । ऋदित्त्वाद् ङे अजिजेहत् ॥ **वाहृङ्** । वाहते ववाहे वाहिता । ऋदित्त्वाद् ङे अववाहत् । "क्षुब्ध-विरिब्ध–" ४।४।७०। इति क्ते निपातनादिडभावे वाढं भृशम्[3] । वाहितमन्यत् ॥

**८६९ द्राहृङ् निक्षेपे** । निद्राक्षेपे इत्येके[4] । द्राहते दद्राहे द्राहिता । ऋदित्त्वाद् ङे अदद्राहत् ॥

**८७० ऊहि तर्के**[5] । तर्क उत्प्रेक्षा । ऊहते । "उपसर्गादस्य–" ३।३।२५। इति वाऽऽत्मनेपदे समूहति समूहते । "उपसर्गादूहो–" ४।३।१०६। इति क्ङिति यि ह्रस्वे अभ्युह्यते समुह्यते । "गुरुनाम्यादेः–" ३।४।४८। इति परोक्षाया आमि ऊहाञ्चक्रे । सनि "स्वरादेः–" ४।१।४। इति हेर्द्वित्वे ऊजिहिषते । क्ते ऊहितम् । "क्तेटो–" ५।३।१०६। इति अः, ऊहा । घञि ऊहः ।

**८७१ गाहौङ् विलोडने** । विलोडनं परिमलनम् । गाहते जगाहे । औदित्त्वाद् वेट्, गाढा गाहिता । वेट्त्वात् क्तयोर्नेट्, गाढः गाढवान् । अचि गाहः । स्त्रियां गौरादित्वाद् ङ्याम् गाही । घञि अवगाहः ॥

**८७२ ग्लहौङ् ग्रहणे** । ग्लहते जग्लहे । औदित्त्वाद् वेट्, ग्लाढा, अत्र "ढस्तड्ढे" १।३।४२।

---

१ **पाणिनीयाः** ॥ २ विपूर्वात् हन्तेर्डित्कत् वेश्च गुण, वेहत् गर्भघ्नी अप्रजा स्त्री अनड्वाश्च ॥ ३ क्रियाविशेषणमेवैतत्, यद्यय क्रियाविशेषणं तत्कथं वाढविक्रमा इत्यत्र विक्रमाभिधायी वाढशब्द इति चेत्, उच्यते । नात्र वाढशब्दो विक्रमाभिधायी किन्तु विस्पष्टपटुवत् वाढशब्देन क्रियाविशेषणेन सह समास इति ॥ ४ **पाणिनीयाः** ॥ ५ वितर्के । । वितर्कः सम्भावनम्, इति **पाणिनीयाः** । कथं तर्हि 'अनुत्तमप्यूहति पण्डितो जनः' इत्यत्र परस्मैपदम् ? अत्राहु –अनुदात्तेत्त्वलक्षणस्य तङो अनित्यत्वान्न दोष इति **तत्त्वबोधिन्यां** सिद्धान्तकौ० पृ० ३७१॥

इति ढे ढो लुक् पूर्वस्यातो दीर्घश्च। इटि ग्लहिता। वेट्त्वात् क्तयोर्नेट्, ग्लाढः ग्लाढवान्। "स्तृ-ग्लहः प्रजनाक्षे" ५।३।३१। इत्यलि अक्षाणां ग्लहः पणः। अक्षविषयादन्यत्र घञि ग्लाहः। अयं **गृहौङ्** इत्येके। गर्हते गर्हिता गर्ढा गृढः गृढिः गृहम् गृहा॥

**८७३ बहुङ् ८७४ महुङ् वृद्धौ**। उदित्त्वाद् ने बंहते बबहे बहिता। उणादौ "स्था-वङ्कि-बंहि-" (उ० ४८६) इति किति उले नलुकि च बहुलः कृष्णपक्षः। "बंहि-बृंहेर्नलुक् च" (उ०९९०) इति इसि बहिः। बहुः बाहुरिति तु "मि-वहि-" (उ० ७२६) इति वा णिति औ बहे॥

**महुङ्**। उदित्त्वाद् ने महते ममहे महिता। महानिति तु महेः "द्रुहि-वृहि-" (उ० ८८४) इति कतरि। महीत्यप्यस्यैव "पदि-पठि-"(उ० ६०७) इति इप्रत्यये, अजन्तस्य वा ङ्याम्। **बहुण् महुण् भासार्थौ** बंहयति मंहयति॥

**अथ क्षान्ता अष्टौ सेटश्च**। एतेषां च षान्तेषु पाठो युक्त, वैचित्र्यार्थं त्विह कृतः॥

**८७५ दक्षि शैघ्र्ये च**। शैघ्र्य शीघ्रता चकाराद् वृद्धौ। दक्षते ददक्षे दक्षिता। अचि दक्षः। उणादौ "द्रु-हृ-" (उ० १९४) इति इणे दक्षिणः दक्षिणा। "श्रु-दक्षि-" (उ० ३७३) इति आय्ये दक्षाय्यो गरुडः॥

**८७६ धुक्षि ८७७ धिक्षि सन्दीपन-क्लेशन-जीवनेषु**। धुक्षते दुधुक्षे धुक्षिता। मनि सुधुक्ष्मा। क्विव्लुकि "सयोगस्यादौ-" २।१।८८। इति कौ लुकि सुधुट्। क्ते सन्धुक्षितः॥

**धिक्षि**। धिक्षते दिधिक्षे धिक्षिता। मनि सुधिक्ष्मा। क्विपि सुधिट्॥

**८७८ वृक्षि वरणे**। वृक्षते ववृक्षे वृक्षिता। यङि "ऋमताम्-" ४।१।५५। इति री, वरीवृक्ष्यते। अचि घञि वा वृक्षः। मन्नादिषु धुक्षिवत्॥

**८७९ शिक्षि विद्योपादाने**। शिक्षते शिशिक्षे शिक्षिता। क्ते शिक्षितः। "क्तेटो-" ५।३।१०६। इति अः, शिक्षा। णके शिक्षकः। शिक्षतीति तु शकेः सन्नन्तस्याजिज्ञासायां रूपम्। जिज्ञासायां तु शकेरप्यात्मनेपदमेव, विद्यासु शिक्षते॥

**८८० भिक्षि याच्ञायाम्**। भिक्षते गा राजानम्। बिभिक्षे भिक्षिता। "सन्-भिक्षा-" ५।२।३३। इति उ, भिक्षणशीलो भिक्षुः। "वृङ्-भिक्षि-"५।२।७०। इति टाके भिक्षाकः भिक्षाकी। क्ते भिक्षितः। "क्तेटो-"५।३।१०६। इति अः, भिक्षा। घञि भिक्षः। **केचि**दलाभे लाभे चेत्याहुः॥

**८८१ दीक्षि मौण्ड्येज्योपनयन-नियम-व्रतादेशेषु**। मौण्ड्यं वपनम्, इज्या यजनम्, उपनयनं मौञ्जीबन्धः, नियमः संयमः, व्रतादेशः संस्कारादेशः। दीक्षते दिदीक्षे दीक्षिता। "इङितो-" ५।२।४४। इत्यनस्य "न णिङ्य-"५।२।४५। इति प्रतिषेधात् तृनि दीक्षिता। क्ते दीक्षितः। "क्तेटो-" ५।३।१०६। इत्यः, दीक्षा। **केचित्तु** दीक्षि मौण्ड्येज्योपनयनादौ चेति वृद्धपाठं भिन्दन्ति। ज्यवते जीतः॥

**८८२ ईक्षि दर्शने**। ईक्षते। "गुरुनाम्यादे-" ३।४।४८ इति परोक्षाया आमि ईक्षा-

ध्वङ्के। "यद्वीक्ष्ये राधीक्षी" २।२।५८। इति चतुर्थ्याम् मैत्रायेक्षते, ईक्षितव्यं परस्त्रीभ्यः[1]। अचि वीक्षः। "शीलि-कामि–" ५।१।७३। इत्यणोऽपवादे णे प्रियेक्षा। क्ते प्रेक्षितः। "क्तेटो–" ५।३।१०६। इत्य, प्रेक्षा। घ्यणि उत्प्रेक्ष्यः। करणेऽनटि ईक्षणम्॥

१ तस्य दैवं पर्यालोचयतीत्यर्थः ॥२॥ "ईक्षितव्यं परस्त्रीभ्यः, स्वधर्मो रक्षसामयम्। संक्रुध्यसि मृषा किं त्वं, दिदृक्षुं मां मृगेक्षणे"॥ १॥ परस्त्रीणामभिप्राये यत्सन्देहाद् ईक्षितव्यं निरूपयितव्यं किमेवं करोषि नवेति तद् रक्षसां कुलधर्मो न दोष इति॥

# भ्वादिगणे

## अथोभयपदिनो भ्लक्षीपर्यन्ता वर्णक्रमेण ॥

'८८३ श्रिञ् सेवायाम्'। ञित्त्वात् फलवति कर्तरि "ईगितः" ३।३।९५ इति आत्मनेपदम्, अन्यत्र च "शेषात् परस्मै" ३।३।१०० इति परस्मैपदम्। एवं सर्वत्र। श्रयते, श्रयति, शिश्रिये, शिश्राय। "णिश्रि०" ३।४।५८ इति ङे अशिश्रियत्। श्रयिता, श्रयितुम्। "ऋवर्णश्र्यूर्णुगः कितः" ४।४।५७ इतीडभावे श्रित्वा, श्रितः, श्रितवान्। सनि "इवृध०" ४।४।४७ इति वेटि शिश्रीषति, शिश्रयिषति। "जीण्-दृक्षि०" ५।२।७२ इतीनि विश्रयणशीलो विश्रयी। "दिद्युद्-दद्दृ०" ५।२।८३ इति क्विपि निपातनात् श्रीः। "भूश्र्यदोल्" ५।३।२३ इति सोपसर्गादलि प्रश्रयः, अनुपसर्गात्तु घञि श्रायः, श्रय इति तु बाहुलकादलि। "उदः श्रेः" ५।३।५३ इति वाऽलि उच्छ्रयः, पक्षे घञि उच्छ्रायः। उणादौ "कावावी०" (उ० ६३४) इति णौ श्रेणिः। अश्रिः इति तु अश्नोतेः "तङ्कि-वङ्कि०" (उ०६९२) इति रौ। श्मश्रुः इत्यपि शेतेः "श्मनः शीङोडित्" (उ० ८१०) इति रौ। शिर इति च शृणातेः "मिथिरञ्ज्युपि०" (उ० ९७१) इति किति असि ॥

'८८४ णींञ् प्रापणे'। अजां नयते, नयति वा ग्रामम्, प्रापयतीत्यर्थः। णोपदेशत्वात् "अदुरुपसर्गान्तरो०" २।३।७७ इति णत्वे प्रणयते, प्रणयति। "पूजाऽऽचार्यक०" ३।३।३९ इत्यात्मनेपदे नयते विद्वान् स्याद्वादे, बटुमुपनयते। "कर्तृस्था०" ३।३।४० इत्यात्मनेपदे क्रोधं विनयते। क्ये अजा नीयते ग्रामम्। निन्ये, निनाय। अनुस्वारेत्त्वान्नेट्, नेता, नेतुम्। णिगि "गतिबोधा०" २।२।५ इत्यत्र नीवर्जनादणिक्कर्तुः कर्मत्वाभावे नाययति भारं ग्रामं चैत्रेण। "प्रणाय्यो निष्का-माऽसम्मते" ५।१।२३ इति ध्यणि निपातनात् प्रणाय्यः। "धाय्यापाय्य०" ५।१।२४ इति निपातनात् सान्नाय्यं हविः। "परिचाय्योपचाय्या०" ५।१।२५ इति निपातनाद् आनाय्यो दक्षिणाग्निः। ये तु अग्नेः अन्यत्राप्यनित्यविशेषे[1] इच्छन्ति तन्मते आनाय्यो गोधुक्[2]। "जिविपून्यो०" ५।१।४३ इति क्यपि विनीयः कल्कः। "वा ज्वलादि०" ५।१।६२ इति णे नायः, पक्षेऽचि नयः। "ग्रामाग्रान्नियः"

१. विशेषमि० इति मु० ॥ २. विशेषार्थिना द्र० काशिका (३।१।२७) ॥

२।३।७१ इति णत्वे क्विपि ग्रामणीः, अग्रणीः । "असरूपोपत्रादे०" ५।१।१६ इत्यणि ग्रामनाय इत्यपि। "नीदाव्०" ५।२।८८ इति करणे त्रटि नेत्रम् । "नियश्चानुपसर्गा०" ५ ३।६० इति वा घञि नायः, पक्षेऽलि नयः । "वोदः" ५।३।६१ उन्नायः, उन्नयः । "अवात्" ५।३।६२ अवनायः । "परेर्द्यूते" ५।३।६३ परिणायेन शारीन् हन्ति । "पुन्नाम्नि घः" ५।३।१३० नीयतेऽनेनेति नयः । "आनायो जालम्" ५।३।१३६ इति घञि आनायो मृगाणाम् । उणादौ "नीनूरमि०" (उ० २२७) इति किति थे नीथं जलम्, सुनीथो नाम राजा । "नियो वा" (उ० ३०२) इति वा किति पे नीपः कदम्बः । कित्त्वाभावे नेपः पुरोधाः, नेपं जलं यानं च । "ऋज्यजि०" (उ० ३८८) इति किति रे नीरम् । "नीसा०" (उ० ६८७) इति मौ नेमिः चक्रधारा । "नियो डित्" (उ० ८५४) इति ऋः, ना, नरौ । "हुपूद्गोन्नी०"[1] (उ० ८६३) इति तृः उन्नेता ऋत्विक् । "नियः षादिः" (उ० ८६४) नेष्टा ऋत्विक् ॥

## अथ ऋदन्ताश्चत्वारोऽनिटश्च ॥

'८८५ हृंग् हरणे' । हरते, हरति, जह्रे, जहार । "विनिमेय०" २।२।१६ इति कर्मणो वा कर्मत्वे "शेषे" २।२ ८१ इति षष्ठ्यां शतस्य व्यवहरति, शतं व्यवहरति । अनुस्वारेत्त्वान्नेट्, हर्ता, हर्तुम् । "हनृतः स्यस्य" ४।४।४९ इतीटि हरिष्यति । "हृगो गतताच्छील्ये" ३।३।३८ इत्यात्मनेपदे पैतृकमश्वा अनुहरन्ते । हरतिः अयं सकर्मकश्च अकर्मकश्च तथा अभ्यवहारार्थश्च इतरार्थश्च दृश्यते, यदा अकर्मकश्च अभ्यवहारार्थश्च भवति तदा णौ "गतिबोधा०" २।२।५ इत्यणिकर्तुर्नित्यं प्राप्तं कर्मत्वं "हृक्रोर्नवा" २।२।८ इति विकल्प्यते, हरति मैत्रः, हारयति मैत्रं मैत्रेण वा चैत्रः; अभ्यवहरति मैत्रः, अभ्यवहारयति मैत्रं मैत्रेण वा चैत्रः । यदा सकर्मको भवति तदा चौर्यार्थत्वाद् अनभ्यवहारार्थश्च, तदा कर्मत्वमप्राप्तं "हृक्रोर्नवा" २।२।८ इति विभाष्यते, हरति द्रव्यं चौरः, हारयति द्रव्य चौरं चौरेण वा चैत्रः । यदा तु सकर्मकोऽपि देशान्तरप्रापणार्थः तदा गत्यर्थत्वाद् "गतिबोधा०" २।२।५ इति नित्यं प्राप्तं कर्मत्वं विभाष्यते, हरति भारं चैत्रः, हारयति भारं चैत्रं चैत्रेण वा मैत्रः, देशान्तरं प्रापयतीत्यर्थः । ग्रहादित्वाण्णिनि व्याहारी, संव्याहारी । "अवहृसासंस्रोः" ५।१।६३ इति णे अवहारो ग्राहः । "हृगो वयोऽनुद्यमे" ५।१।९५ इत्यचि अस्थिहरः श्वा, मनोहरः । उद्यमे तु अणेव, भारहारः । "आङः शीले" ५।१।९६

१ 'हुपुंग्गो०' इत्युणादिसूत्रे ॥

इत्यचि पुङ्गाहरो विद्याधरः । "दृति-नाथात् पशाविः" ५।१।९७ दृतिहरिः नाथहरिः पशुः । "न्यायाऽन्राया०" ५।३।१३४ इति घापवादे घञि संहारः, अवहारः । उणादौ "कुशिक-हृदिक०" (उ० ४५) इति इके निपातनाद् हृदिको यादवः । "द्रुहृवृहि०" (उ०१९४) इतीणे हरिणः । "हृश्या०" (उ० २१०) इति इते हरितः । "गयहृदया०" (उ० ३७०) इति अये निपातनाद् हृदयम् । "हिरण्य०" (उ० ३८०) इति अन्ये निपातनाद् हिरण्यम् । "स्वरेभ्य इः" (उ० ६०६) हरिः । "नीवीप्रहृभ्यो डित्" (उ० ६१६) प्रहिः कूपः । "कृहृ०" (उ० ७७२) इति एणौ हरेणुर्गन्धद्रव्यम् । "हसृरुहि०" (उ० ८८७) इति इति हरित् दिक् । "हृजनिभ्यामिमन्" (उ० ९१७) हरिमा मृत्युः । "सृहृभृ०" (उ० ९१८) इति ईमनि हरीमा वायुः ॥

'८८६ भृंग् भरणे'। भरते, भरति । अनुस्वारेत्त्वान्नेट्, भर्ता, भर्तुम् । तीर्थस्य भर्ता तीर्थभर्ता, "कर्मजा तृचा च" ३।१।८३ इति प्रतिषिद्धोऽपि याजकादित्वात् षष्ठीसमासः । "हनृतः स्यस्य" ४।४।४९ इतीटि भरिष्यते, भरिष्यति । सनि "इवृध०" ४।४।४७ इति वेटि बुभूर्षति, बिभरिषति । भृतः, भृतवान् । घञि भारः । भर इति तु भृणातेरलि । "भृगोऽसंज्ञायाम्" ५।१।४५ इति क्यपि भृत्यः, संज्ञायां तु "ऋवर्ण०" ५।१।१७ इति घ्यणि भार्यो नाम क्षत्रियः । भार्या वधूः । "कुक्ष्यात्मोदराद् भृगः खिः" ५।१।९० कुक्षिम्भरिः, आत्मम्भरिः, उदरम्भरिः । "भृवृजि०" ५।१।११२ इति खे विश्वंभरा भूः । क्विपि विदभृत् । "अजातेः शीले" ५।१।१५४ इति णिनि मालभारी, अत्र "मालेपीके०" २।४।१०२ इति पूर्वपदस्य ह्रस्वः । एवम् उत्पलमालभारी । उणादौ "दृपृभृ०" (उ० २०७) इत्यते भरतः । "अवभृ०" (उ० २२९) इति किति थे अवभृथो[१] यज्ञान्तः । "कृवृभृ०" (उ० ५२८) किति शे भृशम् । "भृमृतृ०" (उ० ७१६) इत्युः, भरुः देशः, समुद्रश्च । "ऋतृशृमृभ्रादिभ्यो णे लश्च" (उ० ७२७) इति णिदुः, भालुः इन्द्रः । "हनिया०" (उ० ७३३) इति कित्यौ द्वित्वे च बभ्रुर्नकुलः । भृगुः इति तु भ्रस्जेः "स्पशिभ्रस्जेः स्लुक् च" (उ० ७३१) इति कित्यौ । "भृगणिभ्यामिज् भुरवणौ च" (उ० ८७५) भुरिक् भुरिजौ बाहुः । "दिव्यवि" (उ० १४२) इत्यटे भरटः उडुपः । "शासि-शंसि०" (उ० ८५७) इति तृः, भर्ता पतिः । डुडुभृंग्क् पोषणे च (२।८२) बिभर्ति ॥

---

१ सोमयज्ञानां समाप्तौ क्रियमाणं स्नानं अवभृथशब्देन उच्यते, (क्षी. त. पृ. १२९, टि०) ॥

'८८७ धृंगू धारणे' । धरते धरति। अनुस्वारेत्त्वान्नेट्, धर्ता, धर्तुम् । " आयुधादिभ्यो०" ५।१।९४ इत्यचि वज्रधरः, चक्रधरः । दण्डादेस्तु " कर्मणोऽण् " ५।१।७२ इत्यणि दण्डधारः, सूत्रधारः । धृङ् अविध्वंसने ( १।६०२ ) धरते । " धृंङूत् स्थाने " ( ५।१५३ ) ध्रियते । चुरादेराकृतिगणत्वात् धारयति ॥

'८८८ डुकृंग्[२] करणे' । " कृगूतनादेरुः" ३।४।८३ कुरुते, करोति । फलवत्कर्तर्यपि " परानोः कृगः" ३।३।१०१ इति परस्मैपदे पराकरोति, अनुकरोति । तनादिषु पाठम् अकृत्वा अस्य पाठः " तन्भ्यो वा० " ४।३।६८ इति सिचो लुग्विकल्पाभावार्थः, तेन अकृत, अकृथाः इत्यत्र " धुड्ह्रस्वात्०" ४।३।७० इति नित्यमेव सिज्लुक् भवति, शवर्थश्च; तेन करते, करति इत्यत्र " कर्तर्यनद्भ्यः० " ३।४।७१ इति शवपि भवति । चक्रे, चकार। अनुस्वारेत्त्वान्नेट्, कर्ता, कर्तुम् । ड्वित्त्वात् त्रिमक्, कृत्रिमम् । "गन्धना०" ३।३।७६ इत्यात्मनेपदे उत्कुरुते । " अधेः प्रसहने " ३।३।७७ अधिकुरुते । " वेः कृगः०" ३।३।८५ इत्यात्मनेपदे क्रोष्टा विकुरुते स्वरान् , विकुर्वते सैन्धवाः । णौ " मिथ्याकृगो०" ३।३।९३ इत्यात्मनेपदे पदं मिथ्या कारयते, स्वरादिदोपदुष्टमसकृत् उच्चारयति इत्यर्थः । " कृगो यि च " ४।२।८८ इत्युलोपे कुर्यात् , कुर्वः, कुर्मः । एषु " कुरुच्छुरः " २।१।६६ इति प्रतिषेधात् " भ्वादे० " २।१।६३ इति दीर्घो न भवति । " हनृतः० " ४।४।४९ इतीटि करिष्यते, करिष्यति । " स्कृस्वृ० " ४।४।८१ इतीटि संचस्करिव, संचस्करिम । अत्र " संपरेः० " ४।४।९१ इति स्सट्, " स्कृच्छृतो० " ४।३।८ इति गुणश्च । " उपाद् भूषा० " ४।४।९२ इति स्सटि एधोदकस्योपस्कुरुते, अत्र " कृगः प्रतियत्ने " २।२।१२ इति कर्मणो वा कर्मत्वे " शेषे " २।२।८१ इति षष्ठी । " हृक्रोर्नवा " २।२।८ इति अणिकर्तुः णौ वा

---

२. अत्रेदमवधेयम्-प्रायेण सर्वे एव प्राचीना देव-पाल्यकीर्ति-हेमचन्द्र-दशपाद्युणादिवृत्तिकारादयः कृञं भ्वादौ पठन्ति । अस्य भ्वादिस्थस्यैव प्रयोगाः पालि-प्राकृतभाषयोरुपलभ्यन्ते । हिन्दी भाषायामपि ' करता है ' इति अस्यैवाऽपभ्रंश न तु करोतेः । एतेन कृञो भ्वादिष्वविगीत एव पाठ. । सायणेन ' उपो षु शृणुहि ' ( ऋ० १।८२।१ ) मन्त्रव्याख्याने धातुवृत्तौ ( पृष्ठ १६३ ) चास्य महता प्रपञ्चेन भ्वादित्वं निराकृतम् । ये च तत्र हेतवो निर्दिष्टास्ते सर्वे हेत्वाभासा एव । भट्टोजिदीक्षितादय सायणमेवानुययु । वस्तुतः कृञो भ्वादावेव पाठ', न तु तनादौ । अत एव पाणिनिना ' तनादिकृञ्भ्य. उः ' ( ३।१।७९ ) सूत्रे तनादिभ्यः पृथक् कृञः पाठः कृत' । सति तनादौ, कृञः पृथक् पाठोऽनुचित एव । कदाचिदुत्तरकालीनैरयं तनादिषु प्रक्षिप्तः स्यात् । ' तनादिकृञ्भ्यः उः ' इति सूत्रस्थमहाभाष्याच्चैतत्प्रतीयते यत्पतञ्जलेः प्रागेवास्य धातोः तनादिषु प्रक्षेपो बभूव । ( क्षी. त. टि. पृ. १३० ) ॥

कर्मत्वे करोति कटं चैत्रः, कारयति कटं चैत्रं चैत्रेण वा मैत्रः । "कृगो नवा" ३।१।१० इति वा गति संज्ञायां "तिरसो वा" २।३।२ इति वा रस्य सत्वे, तिरस्कृत्य, तिरःकृत्य । पक्षे गतित्वाभावे "गतिक्व०" ३।१।४२ इति समासाभावाद् यबभावे तिरः कृत्वा । "कर्मणोऽण्" ५।१।७२ इत्यणि पयस्कारः, अत्र "अतः कृकमि०" २।३।५ इति रस्य सत्वम् । "सत्यागदा०" ३।२।११२ इति मे सत्यङ्कारः । "कृवृषि०" ५।१।४२ इति वा क्यपि कृत्यम् । पक्षे घ्यणि कार्यम् । "शकृत्स्तम्बाद्०" ५।१।१०० इति इः, शकृत्करिर्वत्सः, स्तम्बकरिर्व्रीहिः । "किंयत्तद्बहोरः" ५।१।१०१ किंकरः, किंकरा, जातिरिदानीम् । किंकरीति तु "हेतु-तच्छीला०" ५।१।१०३ इति टे रूपम्, यथा विद्या यशस्करी । "संख्याहर्दिवा०" ५।१।१०२ इति टे संख्याकरः, एककरः इत्यादि । "भृतौ कर्मणः" ५।१।१०४ कर्मकरः, कर्मकरी । "क्षेम-प्रिय-मद्र-भद्रात् खाऽण्" ५।१।१०५ क्षेमङ्करः, क्षेमकारः । "मेघर्ति-भयाभयात् खः" ५।१।१०६ मेघङ्करः । "कृगः खनट् करणे" ५।१।१२९ नग्नङ्करणं द्यूतम् । "कृगः सुपुण्यपाप०" ५।१।१६२ इति भूते क्विपि सुकृत् । "सहराज०" ५।१।१६७ इति भूते क्वनिपि सहकृत्वा, राजकृत्वा । "भ्राज्यलम्०" ५।२।२८ इतीष्णौ अलंकरणशीलः अलंकरिष्णुः, निराकरिष्णुः । "कृगः श च वा" ५।३।१०० क्रिया, क्यपि कृत्या । पक्षे क्तौ कृतिः । भिदादिनिपातनाद् अङि कारा गुप्तिः । "कारणम्" ५।३।१२७ इत्यनटि निपातनात् करोतीति कारणम् । "च्व्यर्थे कर्त्राप्या०" ५।३।१४० इति खलि सुकटंकराणि वीरणानि । "अन्यथैवं०" ५।४।५० इति खणमि अन्यथाकारं भुङ्क्ते । "यथातथादीर्ष्योत्तरे" ५।४।५१ यथाकारमस्तु किं तवानेन ? । "शापे व्याप्यात्" ५।४।५२ चौरंकारमाक्रोशति । "स्वाद्वर्थाददीर्घात्" ५।४।५३ स्वादुङ्कारं भुङ्क्ते। "कृगोऽव्ययेनानिष्टोक्तौ क्त्वाणमौ" ५।४।८४ उच्चैःकृत्य, उच्चैः कृत्वा, उच्चैःकारं कथयति ब्राह्मण ! कन्या तेगर्भिणी । "तिर्यचापवर्गे" ५।४।८५ तिर्यक्कृत्य, तिर्यक् कृत्वा, तिर्यक्कारं गतः, समाप्य इत्यर्थः । "स्वाङ्गतश्च्व्यर्थे नानाविनाधार्थेन भुवश्च" ५।४।८६ मुखतःकृत्य, मुखतः कृत्वा मुखतःकारं गतः, एषु "तृतीयोक्तं वा" ३।१।५० इति वा समासः । सनि क्ते चिकीर्षितम् । "प्रज्ञादि०" ७।२।१६५ अणि चैकीर्षितम् । "कृभ्वस्तिभ्यां०" ७।२।१२६ इति च्वौ घटीकरोति मृदम् । "अरुर्मन०" ७।२।१२७ इति सो लुकि अरूकरोति । "तीयशम्ब०" ७।२।१३५ इति डाचि द्वितीयाकरोति क्षेत्रम् । "संख्यादेर्गुणात्" ७।२।१३६ द्विगुणा करोति क्षेत्रम् । "अव्यक्तानुकरणा०" ७।२।१४५ इति डाचि, "डाच्यादौ" ७।२।१४९ इति

पूर्वस्य तो लुकि पटपटा करोति । उणादौ "कृशपाजि०" (उ० १) इत्युणि कारुः शिल्पी । "कृगो वा" (उ० २३) इति वा किति के कृकः शिरोग्रीवम्, कर्कः श्वेताश्वः । करकः, करका इति तु "दकन०" (उ० २७) इत्यके रूपम् । "कृगो द्वे च" (उ० ७) इति किद् अः, चक्रम् । "कृकडि०" (उ० ३२१) इत्यम्बे करम्बो दध्योदनो दधिसक्तवश्च । "कृकले रम्भः" (उ० ३३६) करम्भो दधिसक्तवः । करीर[1] इति तु किरतेः "कृश्रप०" (उ० ४१८) इतीरे । "ऋकृमृ०" (उ० ४७५) इत्याले करालम् उच्चम् । "पतिकृलूभ्यो णित्" (उ० ४७९) कारालं लेपद्रव्यम् । "कृधूतन्यृ०" (उ० ४४०) इति किति सरे कृसरः तिलौदनः । "कृकुरिभ्यां पासः" (उ० ५८३) कर्पासः । "कृशृ—कुटि०" (उ० ६१९) इति वा णिद् इः, कारिः शिल्पी, करिर्हस्ती, विष्णुश्च । "ऋह्वसृ०" (उ० ६३८) इत्यणौ करणिः सादृश्यम् । "आङः कृहृ०" (उ० ६४३) इति सनः अणौ आचिकीर्षणिः व्यवसायः । "कृभूभ्यां कित्" (उ० ६९०) इति मौ कृमिः । क्रिमिरिति तु क्रमेः "क्रमितमि०" (उ० ६१३) इति इप्रत्यये उपान्त्येत्वे च । "जशस्त०" (उ० ७०५) इति डिति वौ कृविः रुद्रो राजा च । "कृह्व०" (उ० ७७२) इत्येणौ करेणुर्हस्ती । "कृलाभ्यां कित्" (उ० ७८०) इत्यतौ क्रतुः । मनि [ मन् (उ० ९११) ] कर्म । करण्ड इति तु "जकत०" (उ० १७१) इत्यण्डे किरतेः । एवं "किरोङ्को रो लश्च वा" (उ० ६२) कङ्कः, कलङ्कः । "कग्र ऋत उर् च" (उ० ७३४) इन्युः, कुरुः । कुरोरपत्यमिति "दुनादि०" ६।१।११८ इति ञ्यः [ कौरव्यः ] । "कुरोर्वा" ६।१।१२२ इति स्त्रियां तल्लुपि "उतोऽप्राणिनश्चा०" २।४।७३ इत्यूङि कुरूः । कुंगूट् हिंसायाम्, [ ४।८ ] कृणुते, कृणोति ।

## अथ कान्तः ॥

'८८९ हिक्की अव्यक्ते शब्दे' । ईदित्त्वात् फलवत्कर्तरि "ईगितः" ३।३।९५ इत्यात्मनेपदम् । अफलवति तु "शेषात् परस्मै" ३।३।१०० इति परस्मैपदम् । हिक्कते, हिक्कति, जिहिक्के, जिहिक्क, हिक्किता, क्ते हिक्कितम् । "क्तेटो०" ५।३।१०६ इत्यः, हिक्का ॥

---

१ करीरः वंशाद्यङ्कुरः, वृक्षविशेषः [ लोके कइर इति ] घटश्च, (लि. टी. पृ. १३३) ॥

## अथ चान्तास्त्रयः तत्र आद्यौ सेटौ अन्त्यः अनिट् ॥

'८९० अञ्चूग् गतौ च' । चकारादव्यक्ते शब्दे । गतिपूजयोरयं परस्मैपदिषु पठितः स चास्य पाठो गतौ फलवत्कर्तर्यपि परस्मैपदार्थः, अञ्चते, अञ्चति । "अञ्चोनर्चायाम्" ४।२।४६ इति नस्य लुकि अच्यते । "अनातो०" ४।१।६९ इति पूर्वस्यात्वे ने च आनञ्चे, आनञ्च, अञ्चिता, अञ्चितुम् । ऊदित्त्वात् क्त्वि वेट्, अक्त्वा, अञ्चित्वा । अत्र "क्त्वा" ४।३।२९ इति कित्त्वाभावान्नस्य लुग् नास्ति । वेट्त्वात् क्तयो नेट्, अक्तः, अक्तवान् । अयमचूग् गतावित्येके; तन्मते[1] अचते, अचति, आचे, आच, अचिता, अचितुम् । ऊदित्त्वात् क्त्वि वेट्, अक्त्वा, अचित्वा । अचुग् गतावित्यन्ये, उदित्त्वान्ने अञ्चते, अञ्चति, क्ये अञ्च्यते, क्ते अञ्चितः । अञ्चू गतौ च [ १।१०५ ] अञ्चति । अनर्चायां नस्य लुकि अच्यते । अर्चायां नलोपाभावे अञ्च्यते ॥

'८९१ डुयाचृग् याञ्चायाम्' । याचते, याचति, ययाचे, ययाच । क्ते याचितः । ऋदित्त्वाद् ङे न ह्रस्वः, अययाचत् । डुवित्त्वात् त्रिमक् याचित्रिमम् । ट्विदय- मित्येके, तन्मतेऽथौ याचथुः । क्ते सेट्त्वात् घ्यणि कत्वाभावे याच्यम् । "मृग- येच्छा०" ५।३।१०१ इति निपातनान्ने याञ्चा ॥

'८९२ डुपचींष् पाके' । पचते, पचति, पेचे, पपाच, यङि पापच्यते । यङ्लुपि पापचीति, पापक्ति । अनुस्वारेत्त्वान्नेट्, पक्ता, पक्तुम् । "क्षैशुषि०" ४।२।७८ इति क्तयोस्तस्य वत्वे पक्वः, पक्ववान् । "क्तेनिट०" ४।१।१११ इति चस्य कत्वे घ्यणि पाक्यः । "व्याप्ये घुरकेलिमकृष्टपच्यम्" ५।१।४ कृष्टे स्वयमेव पच्यन्ते कृष्टपच्या व्रीहयः । उणादौ "विद्याविशा०" (उ० ३५४) इति केलिमे पचे- लिमा माषाः । लिहादित्वादणोपवादे अचि श्वपचः । न्यङ्क्वादिनिपातनादणि कत्वे च श्वपाकः, मांसपाकः । न्यङ्क्वादित्वादेव कर्मकर्तर्यचि वृद्धावुदन्तत्वे च दूरे- पाकुः, फलेपाकुः । "मांसस्यानङ्०" ३।२।१४१ इत्यल्लुकि मांस्पचनम्, मांसपच- नम्, मांस्पाकः, मांसपाकः । "परिमाणार्थ०" ५।१।१०९ इति खे प्रस्थंपचः, मितंपचः, नखंपचा यवागूः । "उदः पचि०" ५।२।२९ इतीष्णौ उत्पचनशीलः उत्पचिष्णुः । डुवित्त्वात् त्रिमकि पाकेन निर्वृत्तं पक्त्रिमम् । "पितोड्" ५।३।१०७ पच्यतेऽसाविति पचा । स्त्रियां भावे तु "गापा०" ५।३।९५ इति क्तिरेव, पक्तिः । उणादौ "स्थविर०" (उ० ४१७) इति निपातनात् कितीरे पिठिरम् ॥

[1] तन्मते मु० नास्ति ॥

## अथ जान्ताश्चत्वारः तत्र आद्यौ सेटौ अन्त्यौ त्वनिटौ ॥

'८९३ राजृग् ८९४ टुभ्राजि दीप्तौ'। राजते, राजति। "जॄभ्रम०" ४।१।२६ इति वा स्वरस्य एत्वे द्वित्वाभावे च रेजे, रराजे, रेजुः, रराजुः। राजिता। ऋदित्त्वाद् ङे अरराजत्। क्विपि सम्राट्, विराट्। उणादौ "शीभी०" (उ० ७१) इत्यानके राजानकः। "धाग्राजि०" (उ० ३७९) इत्यन्ये राजन्यः। त्रटि राष्ट्रम्। "उक्षितक्ष्य०" (उ० ९००) इत्यनि राजा।

'८९४ टुभ्राजि' इदित्त्वाद् आत्मनेपदे भ्राजते। "जॄभ्रम०" ४।१।२६ इति वा स्वरस्य एत्वे द्वित्वाभावे च भ्रेजे, बभ्राजे, भ्राजिता। णौ ङे "भ्राजभास०" ४।२।३६ इति वा ह्रस्वे अबिभ्रजत्, अबभ्राजत्। टूवित्त्वादथुः, भ्राजथुः। टूवित्त्वमेके नेच्छन्ति। भ्राजेः आत्मनेपदिनोऽपि पुनरिह पाठः राजृसाहचर्यप्रदर्शनार्थः, तेन "यजसृज०" २।१।८७ इति अत्रास्यैव ग्रहणात् षत्वे यङ्लुपि बाभ्राष्टि, पूर्वस्य तु धातोर्गत्वे बाभ्राक्ति, टूविच्चायं तेनास्य भ्राजथुः, पूर्वस्य तु भ्राज इति रूपम्। यद्येवं षत्वमेव विकल्प्यतां किं पुनः पाठेन ? सत्यम्, अस्यात्मनेपदाव्यभिचारोपदर्शनद्वारा अन्येषां यथा दर्शनमात्मनेपदानित्यत्वज्ञापनार्थः[1] पुनः[2] पाठः, तेन लभते, लभति, सेवते, सेवति, 'श्रोतारमुपलभति न प्रशंसितारम्', 'स्वाधीने विभवेऽप्यहो ! नरपतिं सेवन्ति किं मानिनः ?' इत्यादयः प्रयोगाः साधव इति ॥

'८९५ भजीं सेवायाम्'। भजते, भजति। "तॄत्रप०" ४।१।२५ इत्येत्वे द्वित्वाभावे च भेजे, भेजुः। यङि बाभज्यते, बाभजीति, बाभक्ति। अनुस्वारेत्त्वान्नेट् भक्ता, भक्तुम्। "श्लिष०" ५।१।९ इति वा कर्तरि क्ते विभक्ता भ्रातरो रिक्थम्, पक्षे कर्मणि क्ते विभक्तं धनं तैः। भावे विभक्तं तैः। "शकितकि०" ५।१।२९ इति ये भज्यम्। "बहुलम्" ५।१।२ इति घ्यणि भाग्यम्। "भजो विण्" ५।१।१४६ अर्धभाक्। "युजभुज०" ५।२।५० इति घिनणि भजनशीलो भागी, घञि भागः। "गोचर०" ५।३।१३१ इति निपातनात् करणाधारयोर्घञपवादे घे भगः, क्तौ भक्तिः॥

'८९६ रञ्जीं रागे'। "अकट्घिनोश्च०" ४।२।५० इति नस्य लुकि रजते, रजति। "कुषिरञ्जेः०" ३।४।७४ इति कर्मकर्तरि वा श्ये परस्मैपदे च रजति वस्त्रं रजकः, रज्यति वस्त्रं स्वयमेव; पक्षे "एकधातौ०" ३।४।८६ इति क्ये

१. विशेषार्थिना द्र० 'आत्मनेपदमनित्यम्'-न्या० ३७ ॥ २ पाठः पुनः इति मु० ॥

आत्मनेपदे च रज्यते वस्त्रं स्वयमेव । संयोगान्तत्वाद् अवित्परोक्षाया अपि " इन्ध्य-संयोगात्० " ४।३।२१ इति कित्त्वाभावे नलोपाभावाद् ररञ्जे, ररञ्ज । अनुस्वारेत्त्वान्नेट्, रंक्ता, रङ्क्तुम् । " णौ मृगरमणे " ४।२।५१ इति नलुकि " कगेवनू० " ४।२।२५ इति ह्रस्वे च रजयति मृगं व्याधः । मृगरमणादन्यत्र नलोपाभावे रञ्जयति नटः । केचित्तु अन्यत्रापि नलुकमिच्छन्ति " राजर्षिकल्पो रजयति मनुष्यान् ।" " नृत्खन्० " ५।१।६५ इत्यकटि रजकः शिल्पी । " युजभुज० " ५।२।५० इति घिनणि रञ्जनशीलो रागी । " घञि भावकरणे " ४।२।५२ इति नलुकि रञ्जनं रागः । " व्यञ्जनाद् घञ् " ५।३।१३२ इति करणे घञि रागः । आधारे घञि रङ्गो नृत्तस्थानम् । " ऋवर्ण० " ५।१।१७ इति घ्यणि रङ्ग्यः । उणादौ " पृषिरञ्जि० " ( उ० २०८ ) इति किति अते रजतम् । " तुदादिवृजि० " ( उ० २७३ ) इति किति अने रजनम् हरिद्रा, महारजनं कुसुम्भम् । गौरादित्वाद् ङ्याम् रजनी । " रञ्जेः कित् " ( उ० ६८१ ) इत्यनौ रजनिः रात्रिः । " मिथिरञ्ज्युषि० " ( उ० ९७१ ) इति कित्यसि रजः । रञ्जींच् रागे [ ३।१२९ ] रज्यते, रज्यति ॥

## अथ टान्तः सेट् च ॥

' ८९७ रेटृग् परिभाषणयाचनयोः ' । रेटते, रेटति, रिरेटे, रिरेट, रेटिता, रेटितुम् । क्ते रेटितम् । ऋदित्त्वाद् डे न ह्रस्वः, अरिरेटत् ॥

## अथ णान्तः सेट् ॥

' ८९८ वेणृग् गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु ' । वादित्रस्य वाद्यभाण्डस्य वादनाय ग्रहणं वादित्रग्रहणम् । वेणते, वेणति, विवेणे, विवेण, वेणिता, वेणितुम् । ऋदित्त्वाद् ङे न ह्रस्वः, अविवेणत् । अचि वेणः, णके स्त्रियाम् वेणिका । उणादौ " इणुर्विशा० " ( उ० १८२ ) इति णे वेण्णा नाम नदी । वीणेति तु " घृवीह्वा० " ( उ० १८३ ) इति किति णे वेतेः । वेणिरित्यपि " कावावी० " ( उ० ६३४ ) इति णावस्यैव ॥

## अथ तान्तः सेट् ॥

' ८९९ चतेग् याचने ' । चतते, चतति, चेते, चचात, चतिता, चतितुम् । एदित्त्वाद् " व्यञ्जनादे० " ४।३।४७ इति वा वृद्धेः " न श्विजागृ० " ४।३।४९ इति प्रतिषेधे अचतीत् । क्ते चतितम् । उणादौ " कृ-गृ-शृ " ( उ० ४४१ )

इति वरटि चत्वरम् । "वाश्यसि०" ( उ० ४२३ ) इत्युरे चतुरः । "चतेरल्" ( उ० ९४८ ) चत्वारः ॥

## अथ थान्तास्त्रयः सेटश्च ॥

'९०० प्रोथृग्[१] पर्याप्तौ' । पर्याप्तिः पूर्णता । प्रोथते, प्रोथति, पुप्रोथे, पुप्रोथ, प्रोथिता, प्रोथितुम् । ऋदित्त्वाद् ङे अपुप्रोथत् । अचि प्रोथः अश्वघोणाधः[२] प्रियश्च युवा । 'प्रियं प्रोथमनुव्रजेत्' ॥

'९०१ मिथृग् मेधाहिंसयोः' । मेथते, मेथति, मिमिथे, मिमेथ, मेथिता, मेथितुम् । क्ते मिथितम् । ऋदित्त्वाद् ङे न ह्रस्वः, अमिमेथत् । क्ये मिथ्यते । लिहाद्यचि मेथः । गौरादित्वाद् ङ्याम् मेथी ।

'मेथीबद्धोऽपि हि भ्राम्यन् घासग्रासं करोति गौः' [ सुभाषितावली, २९५८ ]

उणादौ "किलिपिलि०" ( उ० ६०८ ) इति इः, मेथिः खलमध्यस्थूणा ॥

'९०२ मेथृग् संगमे च' । चकारान्मेधाहिंसयोः । मेथते, मेथति, मिमेथे, मिमेथ, मेथिता, मेथितुम् । क्ते मेथितम् । ऋदित्त्वाद् ङे न ह्रस्वः, अमिमेथत् । क्ये मेथ्यते । अचि मेथः । गौरादित्वाद् ङ्याम् मेथी ॥

## अथ दान्ताः षट् सेटश्च ॥

'९०३ चदेग् याचने' । चदते, चदति, चेदे, चचाद, चदिता, चदितुम् । क्ते चदितम् । एदित्त्वाद् "व्यञ्जनादे०" ४।३।४७ इति वा वृद्धेः "न श्विजागृ०" ४।३।४९ इति प्रतिषेधे अचदीत् ॥

'९०४ ऊबुन्दृग् निशामने' । निशामनमालोचनम् । बुन्दते, बुन्दति, क्ये बुद्यते, बुबुन्दे, बुबुन्द, बुन्दिता, बुन्दितुम् । ऋदित्त्वाद् वाऽङि अबुदत्, अबुन्दीत् । ऊदित्त्वात् क्त्वि वेट्, बुत्त्वा, बुन्दित्वा । वेट्त्वात् क्तयोर्नेट्, बुन्नः, बुन्नवान् । धान्तोऽयमिति नन्दी, बुन्धते, बुन्धति, बुध्यते, अबुधत्, अबुन्धीत्, बुबुन्धे, बुबुन्ध, बुन्धिता, बुन्धितुम्, बुद्ध्वा, बुन्धित्वा, बुद्धः, बुद्धवान् । अयम् ऊचेदृग् इत्येके ॥

'९०५ णिदृग् ९०६ णेदृग् कुत्सासंनिकर्षयोः' । "पाठे०" २।३।९७ इति नत्वे नेदते, नेदति । णोपदेशत्वाद् "अदुरुपसर्गा०" २।३।७७ इति णत्वे

१. "प्रुथृ, पृथृ, पूतृ व्याप्तौ" इति काशकृत्स्न ( का० धा० पृ० १११ ) ॥
२ घोणा अश्वनासिका ॥

प्रणेदते, प्रणेदति । निद्यते, निनिदे, निनेद, नेदिता, नेदितुम् । ऋदित्त्वाद् ङे अनिनेदत् ॥

'९०६ णेदृग्' । "पाठे०" २।३।९७ इति नत्वे नेदते, नेदति, नेद्यते । णोपदेशत्वाद् "अदुरुपसर्गा०" २।३।७७ इति णत्वे प्रणेदते, प्रणेदति, निनेदे, निनेद, नेदिता । क्ते नेदितम् । ऋदित्त्वाद् ङे अनिनेदत् ॥

'९०७ मिदृग् ९०८ मेदृग् मेधाहिंसयोः' । मेदते, मेदति, मिद्यते, मिमिदे, मिमेद, मेदिता, क्ते मिदितः । ऋदित्त्वाद् ङे अमिमेदत् ॥

'९०८ मेदृग्' । मेदते, मेदति, मेद्यते, मिमिदे, मिमेद, मेदिता, क्ते मेदितः । ऋदित्त्वाद् ङे अमिमेदत् । ञिमिदाङ् स्नेहने [ १।९४४ ] मेदते । ञिमिदाच् स्नेहने [ ३।३७ ] मेद्यति । मिदुण् स्नेहने [ ९।९० ] मिन्दयति ॥

## अथ धान्ताश्चत्वारः सेटश्च ॥

'९०९ मेधृग् संगमे च' । चकारान्मेधाहिंसयोः । मेधते, मेधति, मेध्यते, मिमिधे, मिमेध, मेधिता, क्ते मेधितः । ऋदित्त्वाद् ङे अमिमेधत् । "क्तेटो०" ५।३।१०६ इत्यः, मेधा । घ्यणि मेध्यम् । "कर्मणोऽण्" ५।१।७२ इत्यणि अश्वमेधः । "अजातेः०" ५।१।१५४ इति णिनि गृहमेधी । उणादौ "पदिपठि०" ( उ० ६०७ ) इति इः, मेधिः ॥

'९१० शृधूग् ९११ मृधूग् उन्दे' । उन्दः क्लेदनम् । शृधू तालव्यादिः, शर्धते, शर्धति, शशृधे, शशर्ध, शर्धिता । ऊदित्त्वात् क्त्वि वेट्, शृद्ध्वा, शर्धित्वा । वेट्त्वात् क्तयोर्नेट्, शृद्धः, शृद्धवान् । शृधूङ् शब्दकुत्सायाम् [ १।९५८ ] शर्धते ॥

'९११ मृधूग्' । मर्धते, मर्धति, ममृधे, ममर्ध, मर्धिता । ऊदित्त्वात् क्त्वि वेट्, मृद्ध्वा, मर्धित्वा, वेट्त्वात् क्तयोर्नेट्, मृद्धः, मृद्धवान् । "नाम्युपान्त्य०" ५।१।५४ इति के मृधं रणः ॥

'९१२ बुधृग् बोधने' । बोधते, बोधति, बुबुधे, बुबोध, बोधिता । ऋदित्त्वाद् चाऽङि अबुधत्, अबोधीत् । आत्मनेपदे तु अङोऽसत्त्वे अबोधिष्ट, क्ते बुधितः । नायमृदिदित्येके । बुध अवगमने [ १।९६८ ] ज्वलादिः, बोधति । "वा ज्वलादि०" ५।१।६२ इति णे बोधः । "नाम्युपान्त्य०" ५।१।५४ इति के बुधः । बुधिच्

ज्ञाने [ ३।११९ ] बुध्यते । अविवक्षितकर्मत्वेन "गत्यर्था०" ५।१।११ इति कर्तरि क्ते बुद्धः ॥

## अथ नान्तास्त्रयः सेटश्च ॥

'९१३ खनूग् अवदारणे'। खनते, खनति । "गमहन०" ४।२।४४ इत्यल्लुकि चख्ने, चख्नुः, खनिता । ऊदित्त्वात् क्त्वि वेट्, खात्वा, अत्र "आः खनि०" ४।२।६० इति आत्वम्; खनित्वा । "ये नवा" ४।२।६२ इति वाऽऽत्वे खायते, खन्यते । यङि चाखायते चङ्खन्यते । यङ्लुपि चङ्खनीति, चङ्खन्ति । वेट्त्वात् क्तयोर्नेट्, खातः, खातवान् । "खेय०" ५।१।३८ इति क्यपि निपातनात् खेयम् । "नृत्खन्०" ५।१।६५ इति अकटि खनकः, खनकी । "क्वचित्" ५।१।१७१ इति डे खन्यते खम्, परिखाता परिखा । "लूधूसू०" ५।२।८७ इतीत्रे खनन्ति तेन खनित्रम् । "खनो डडरेकेकवकघं च" ५।३।१३७ आखः, आखरः, आखनिकः, आखनिकवकः, आखनः, आखानः । उणादौ "ह्मृखन्यू०" (उ० ४४९) इति किति त्रटि खात्रं चौरकृतं छिद्रम् । "कृशृकुटि०" (उ० ६१९) इति वा णिदिः, खानिः खनिश्च आकरः । "पराङ्भ्याम्०" (उ० ७४२) इति डित्यौ आखुः ॥

'९१४ दानी अवखण्डने'। आर्जवे "शान्दान्०" ३।४।७ इति सनि पूर्वस्येतो दीर्घत्वे च दीदांसते, दीदांसति । अर्थान्तरे तु सनोऽभावे प्रत्ययान्तराण्यपि भवन्ति ॥

'९१५ शानी तेजने'। निशाने "शान्दान्०" ३।४।७ इति सनि पूर्वस्येतो दीर्घत्वे च शीशांसते, शीशांसति शस्त्रम् । अर्थान्तरे तु सनोऽभावे प्रत्ययान्तराण्यपि ॥

## अथ पान्तोऽनिट् च ॥

'९१६ शपीं आक्रोशे'। आक्रोशो विरुद्धानुध्यानम् । शपते, शपति । अनेकार्थत्वादुपलम्भनेऽपि, "शप उपलम्भने" ३।३।३५ इत्यात्मनेपदे चैत्राय शपते, अत्र "श्लाघह्नुस्था०" २।२।६० इति चतुर्थी । शेपे, शशाप रिपुम् । यङि शाशप्यते । यङ्लुपि शाशपीति, शाशप्ति । अनुस्वारेत्त्वान्नेट्, शप्ता, शप्तुम् । "शकितकि०" ५।१।२९ इति घ्यणापवादे ये शप्यः । घञि शापः । उणादौ "भृशीशपि०" (उ० २३२) इति अथे शपथः । "शाशपि०" (उ० २३७)

इति दे शब्दः । शबल इति तु "शमेर्ब च वा" (उ० ४७०) इत्यले शाम्यतेः। शपींच् आक्रोशे [ ३।१४० ] शप्यते, शप्यति ।

## अथ यान्तौ सेटौ च ॥

'९१७ चायृग् पूजानिशामनयोः'। चायते, चायति, चचाये, चचाय । ऋदित्त्वाद् ङे न ह्रस्वः, अचचायत् । चायिता । "चायः, कीः" ४।१।८६ यङि चेकीयते । "अपाच्चायश्चिः क्तौ" ४।२।६६ अपचितिः । "अपचितः" ४।४।७७ इति क्ते वा निपातनाद् अपचितः अपचायितः । उणादौ "चायः केक च" (उ० ३६६) इत्यये केकयो राजा । "चायः के च" (उ० ७७८) इति तुनि केतुः । "चायेर्नो ह्रस्वश्च वा" (उ० ९५७) इत्यसि चणश्चाणश्चान्नम् । बाहुलकाण्णत्वम् । णत्वं नेच्छन्त्येके ॥

'९१८ व्ययी गतौ'। व्ययते, व्ययति, वव्यये, वव्याय । "व्यञ्जनादे०" ४।३।४७ इति वा वृद्धेः "न श्विजागृ०" ४।३।४९ इति प्रतिषेधाद् अव्ययीत्, व्ययिता । णौ व्याययति । अचि व्ययः । व्ययण् वित्तसमुत्सर्गे [ ९।३३२ ] अदन्तः, व्यययति ॥

## अथ लान्तः सेट् च ॥

'९१९ अली भूषणपर्याप्तिवारणेषु'। अलते, अलति, आले, आल । सनि अलिलिषते, अलिलिषति । अचि अलम्, "निषेधेऽलंखल्वोः०" ५।४।४४ इति निर्देशान्मान्तत्वं निपात्यतेऽव्ययश्चायम् । "भूषादर०" ३।१।४ इति भूषायां गतित्वे अलंकृत्य कन्यामुपयच्छते, अत्र "गतिक्व०" ३।१।४२ इति समासे क्त्वो यप् । पर्याप्तौ अलं मल्लो मल्लाय, अत्र "शक्तार्थ०" २।२।६८ इति चतुर्थी । वारणे अलं कृत्वा, अत्र "निषेधेलं०" ५।४।४४ इति क्त्वा । उणादौ "निष्कतुरुष्को०" (उ० २६) इति के निपातनाद् अलर्कः उन्मत्तः श्वा । "दृकृनृ०" (उ० २७) इत्यके अलकं चूर्णकुन्तलः, अलका पुरी । "कीकल्यलि०" (उ० ३८) इतीके अलिकं ललाटम् । "स्यमिकषि०" (उ० ४६) इतीके अलीकं मिथ्या, अलीका पण्यस्त्री; व्यलीकमपराधः, व्यलीका लज्जा । "कल्यलि०" (उ० २४६) इतीन्दकि अलिन्दो द्वाराग्रस्थूणा । "शल्यलेरुच्चातः" (उ० ३१९) इति वे उल्वं कललम् ।

१. शमेर्ब० इति मु० ॥

"कृशृकुटि०" (उ० ६१९) इति वा णिदिः; आलिः सखी, अलिर्भ्रमरः । अलक्त[1] इति तु अरक्तशब्दस्य लत्वे । परस्मैपदिनम् एनम् अन्ये मन्यन्ते ॥

## अथ वान्तौ सेटौ च ॥

'९२० धावूग्[2] गतिशुद्धयोः' । धावते, धावति, दधावे, दधाव, धाविता । ऊदित्त्वात् क्त्वि वेट्, धौत्वा, अत्र "अनुनासिके च०" ४।१।१०८ इति वस्य ऊटि "ऊटा" १।२।१३ इत्यौत्वम्, पक्षे धावित्वा । वेट्त्वात् क्तयोर्नेट्, धौतः, धौतवान् पादौ । कथं धावितः, धावितवान् ? सत्यपि वेट्त्वे गतौ क्तयोरिट्प्रतिषेधस्यानित्यत्वात् । णके धावकः । मनि "अनुनासिके च०" ४।१।१०८ इत्यूटि सुधोमा । वनि "य्वोः०" ४।४।१२१ इति वस्य लुकि सुधावा, विचि सुधाः । क्विप्यूटि सुधौः । क्तौ धौतिः । क्तेऽनिट्त्वात् "क्तेटो०" ५।३।१०६ इति अप्रत्ययो नास्ति ॥

'९२१ चीवृग् झपीवत्' । झपी आदानसंवरणयोर्वक्ष्यते तद्वद् अयमपि आदानसंवरणयोरित्यर्थः । चीवते, चीवति, चिचीवे, चिचीव, चीविता; ऋदित्त्वाद् ङे अचिचीवत् । अनृदिदयम् इत्येके, तन्मते ङे ह्रस्वे अचीचिवत् । उणादौ "जठर०" (उ० ४०३) इति निपातनादरे चीवरं मुनिवासः, चिनोतेर्वा[3] वरटि दीर्घे च ॥

## अथ शान्तः सेट् च ॥

'९२२ दाशृग्[4] दाने' । दाशते, दाशति, ददाशे, ददाश, दाशिता । ऋदित्त्वाद् ङे अददाशत् । "दाश्वत्–साह्वत्०" ४।१।१५ इति निपातनात् फलवत्कर्तर्यपि क्वसौ द्वित्वेटोरभावे दाश्वान् । घञि दाशतेऽस्मै दाशः । पुरो दाश्यते पुरोडाशः । दुःखेन दाश्यते दूडाशः । पृषोदरादित्वात् साधू ॥

## अथ पान्ता नव त्विषींवर्जाः सेटश्च ॥

'९२३ झपी आदानसंवरणयोः' । झपते, झपति, जझपे, जझाप, झपिता । क्ते झपितम् । अचि झपः । झष हिंसायाम् [१।५१०] झषति ।

---

१. अलक्तक इति तु अरक्तक० प० प्रतौ ॥

२. शुद्धौ इति क्षीरस्वामी [क्षी. त. पृ. ८७] ॥

३. "नीमिकृतुचेर्दीर्घश्च" (उ० ४२३) इति सूत्रेण वरटि ॥

४. दाशृ दाने इति कौशिकः (क्षी त. पृ. १२७) ॥

'९२४ भेपृग् भये'। भेपते, भेपति, बिभेपे, बिभेप, भेपिता। ऋदित्त्वाद् ङे न ह्रस्वः, अबिभेपत्। णौ भेपयति॥

'९२५ भ्रेपृग् चलने च'। चकाराद् भये। भ्रेपते, भ्रेपति, बिभ्रेपे, बिभ्रेप, भ्रेपिता। ऋदित्त्वाद् ङे न ह्रस्वः, अबिभ्रेपत्। णौ भ्रेपयति। घञि भ्रेषः॥

'९२६ पषी बाधनस्पर्शनयोः'। स्पर्शनं ग्रन्थनम्। पषते, पषति, पेषे, पपाष, पषिता। क्ते पषितम्। घञि पाषः। उणादौ "पषो णित्" (उ० १९२) इत्याणे पाषाणः। अयं स्पशीत्येके। स्पशते, स्पशति। अचि स्पशः चरः। सेयमुभयतः स्पाशा रज्जुः। स्पाशश्चान्यः। पस्पश उपोद्घातः। पषण् बन्धने [९।१८७] पाषयति। पषण् अनुपसर्गोऽदन्तः [९।३५२] पषयति॥

'९२७ लपी कान्तौ'। कान्तिरिच्छा। "भ्रासम्लास०" ३।४।७३ इति वा श्ये अभिलष्यते, अभिलष्यति, अभिलषते, अभिलषति, लेषे, ललाष, लषिता। "लषपत०" ५।२।४१ इत्युकणि अभिलाषुकः। "भूषाक्रोधार्थ०" ५।२।४२ इत्यने अभिलषणः। "व्यपाभे०" ५।२।६० इति घिनणि विलाषी, अपलाषी, अभिलाषी। घञि अभिलाषः। उणादौ "लषेः श च" (उ० २८९) इत्युने लशुनं कन्दविशेषः॥

'९२८ चषी भक्षणे'। चषते, चषति, चेषे, चचाष, चषिता। क्ते चषितम्। घञि चाषः। उणादौ "दृकृनॄ०" (उ० २७) इत्यके चषकं सरकः। "ऋकृमृ०" (उ० ४७५) इत्याले चषालो यूपवलयः। चष हिंसायाम् [१।५१९] चषति॥

'९२९ छषी हिंसायाम्'। छषते, छषति, चच्छषे, चच्छाष, छषिता, छषितुम्॥

'९३० त्विषीं दीप्तौ'। त्वषते, त्वेषति, तित्विषे, तित्वेष। अनुस्वारेत्त्वान्नेट्, त्वेष्टा, त्वेष्टुम्। "हशिटो०" ३।४।५५ इति सकि अत्विक्षत। "क्रुत्संपदा०" ५।३।११४ इति क्विपि त्विट्। उणादौ "त्वष्टृक्षत्तृ०" (उ० ८६५) इति तृप्रत्यये निपातनात् त्वष्टा अर्कः। अवपूर्वो दाननिरसनयोश्चेत्येके। निरसनम् अपाकरणम् चकारात् दीप्तौ; अवत्वेषते, अवत्वेषति, ददाति, निरस्यति, दीप्यते चेत्यर्थः॥

'९३१ अपी ९३२ असी गत्यादानयोश्च'। चकारादीप्सौ। अपते, अपति, आपे, आप, अपिता, अपित्वा ॥

## अथ सान्तौ सेटौ च ॥

'९३२ असी'। असते, असति, आसे, आस। आस इत्यसतेः इति वामनः [ वामन काव्यालङ्कार, ५।२।२९ ]। असिता। [1] असक् भुवि [ २।४४ ] अस्ति। असूच् क्षेपणे [ ३।७८ ] अस्यति ॥

'९३३ दासृग् दाने'। दासते, दासति, ददासे, ददास, दासिता। क्ते दासितम्। अचि दासः। गौरादित्वाद् ङ्याम् दासी। ग्रहादित्वाण्णिनि उद्दासी। घञि उद्दासः। "णौ दान्त०" ४।४।७४ इति क्ते वा निपातनाद् दस्तः, दासितः ॥

## अथ हान्तौ सेटौ च ॥

'९३४ माहृग् माने'। मानं वर्तनम्। माहते, माहति, ममाहे, ममाह, माहिता। ऋदित्त्वाद् ङे न ह्रस्वः, अममाहत्। अचि माहः। स्त्रियाम् माहा गौः ॥

'९३५ गुहौग् संवरणे'। "गोहः स्वरे" ४।२।४२ इत्यूत्वे गूहते, गूहति, जुगूहे, जुगूह। औदित्त्वाद् वेट्, गोढा, गूहिता। इडभावपक्षे "हशिटो०" ३।४।५५ इति सकि "दुहदिह०" ४।३।७४ इति वा तल्लुकि च अघुक्षत, अगूढ, अगूहिष्ट। परस्मैपदे तु सको लुगभावे अघुक्षत्, अगूहीत्। "स्वरेऽतः" ४।३।७५ इति सकः अल्लुकि अघुक्षाताम्, अघुक्षन्त। "स्वरस्य परे०" ७।४।११० इति प्राचः परस्मिन्नपि विधौ कर्तव्ये स्वरादेशस्य स्थानिवत्त्वम् इष्यते, तेनात्र अल्लुकः परस्मिन् अन्तः अदादेशे स्थानित्वाद् "अनतोऽन्तो०" ४।२।११४ इत्यन्न भवति। वेट्त्वात् क्तयोर्नेट्, गूढः गूढवान्। "ग्रहगुहश्च०" ४।४।५९ इति सनीट्प्रतिषेधात् जुघुक्षति। णौ ङे अजूगुहत्। ये तु ह्रस्वं नेच्छन्ति तन्मते अजुगूहत्। "कृवृषि०" ५।१।४२ इति वा क्यपि गुह्यम्; पक्षे घ्यणि गोह्यम्। "नाम्युपान्त्य०" ५।१।५४ इति के गुहः। गिर्योषध्योः भिदादित्वाद् अङि गुहा; अन्यत्र क्तौ गूढिः। उणादौ "विदनगगन०" (उ० २७५) इत्यने निपातनाद् गहनम्। "तीवरधीवर०" (उ० ४४४) इति वरटि निपातनाद् गह्वरम् ॥

---

१. सते असक् इति मु० ॥

## अथ क्षान्तः सेट् च ॥

'९३६ भ्लक्षी[1] भक्षणे'। भ्लक्षते, भ्लक्षति, बभ्लक्षे, बभ्लक्ष, भ्लक्षिता, क्ते भ्लक्षितम्। घञि भ्लक्षः। अयं भक्षीत्यन्ये, भक्षते, भक्षति, बभक्षे, बभक्ष। भक्षितुम्, क्ते भक्षितम्॥

'अथ द्युतादयः कृपौङ्पर्यन्ता आत्मनेपदिनोऽपि वर्णक्रमेण सेटश्च। पूर्वाचार्यानुवर्तनेन द्युतेः पूर्वं पाठः'॥

'९३७ द्युति दीप्तौ'। इदित्त्वादात्मनेपदम्, द्योतते, दिद्युते। "द्युद्भ्योऽद्यतन्याम्" ३।३।४४ इत्यात्मनेपदिनोऽपि विकल्पनात् पक्षे "शेषात् परस्मै" ३।३।१०० इति परस्मैपदे "लृदिद्द्युतादि०" ३।४।६४ इत्यङि अद्युतत्; पक्षे व्यद्योतिष्ट। णौ ङे "द्युतेरिः" ४।१।४१ इति पूर्वस्येत्वे अदिद्युतत्। "इङितो०" ५।२।४४ इत्यने द्योतनशीलो द्योतनः। क्विपि विद्युत्। "दिद्युद्दद्दत्०" ५।२।८३ इति क्विपि निपातनाद् दिद्युत् आयुधम्। "वौ व्यञ्जनादेः०" ४।३।२५ इति क्त्वासनोर्वा क्त्वे द्युतित्वा, द्योतित्वा, दिद्युतिषते, दिद्योतिषते। उणादौ "द्युतेरादेश्च जः" (उ० ९९१) इति इसि ज्योतिः। स्वार्थे के ज्योतिष्काः सूर्यादयः॥

'९३८ रुचि अभिप्रीत्यां च'। चकारात् दीप्तौ। अभिप्रीतिः अभिलाषः। मैत्राय रोचते दधि; अत्र "रुचिकृप्यर्थ०[2]" २।२।५५ इति चतुर्थी। द्युतादित्वाद् अङि अरुचत्, अरोचिष्ट। फलवत्कर्तरि "ईगितः" ३।३।९५ इत्यात्मनेपदे "अणिगि प्राणि०" ३।३।१०७ इति परस्मैपदेन बाधिते "परिमुहा०" ३।३।९४ इति पुनर्विहिते, परिरोचयते मैत्रं चैत्राय। "रुच्याव्यथ्य०" ५।१।६ इति कर्तरि निपातनात् क्यपि रुच्यम्। भावे घ्यणि क्ते सेट्त्वात् कत्वाभावे[3] रोच्यम्। क्ते रुचितः। "भ्राज्यलंकृग्०" ५।२।२८ इति इष्णौ रोचनशीलो रोचिष्णुः। "इङितो०" ५।२।४४ इत्यने रोचनः। घञि न्यङ्क्वादित्वात् कत्वे रोकः। "करणाधारे" ५।३।१२९ इत्यनटि रोचनी द्रपत्। ण्यन्ताद् नन्द्याद्यने रोचना वर्णजातिः। उणादौ "स्वसिरसि०" (उ० २६९) इत्यने रोचनश्चन्द्रः। विरोचनः सूर्यो दानवश्च। रोचना गोपित्तम्। "रुक्मग्रीष्म०" (उ० ३४६) इति मे

१. प्लक्ष इति दुर्गः (क्षी. त पृ. १२८)॥ २. रुचिक्लृ° इति मु०॥
३. कात्वाभावे इति मु०॥

निपातनाद् रुक्मम् हिरण्यम्, रुक्मो वर्णः, सोऽस्या अस्ति इति रुक्मिणी। "नाम्युपान्त्य०" (उ० ६०९) इति किः, रुचिः। मत्वर्थे रे रुचिरम्[1]। "रुच्यर्चि०" (उ० ९८९) इति इसि रोचिः, वसुभिः रोचते वसुरोचिः आदित्यः ॥

## अथ टान्तास्त्रयः ॥

'९३९ घुटि परिवर्तने'। घोटते, जुघुटे। द्युताद्यङि अघुटत्, अघोटिष्ट। णके घोटकः। "नाम्युपान्त्य०" ५।१।५४ इति के घुटः। स्वार्थिके के घुटिका गुल्फास्थि ॥

'९४० रुटि ९४१ लुटि ९४२ लुठि प्रतीघाते'। आद्यौ दीप्तौ इत्यन्ये। रोटते, रुरुटे। द्युताद्यङि अरुटत्, अरोटिष्ट। "नाम्युपान्त्य०" ५।१।५४ इति के रुटः। ठान्तोऽयमित्यन्ये ॥

'९४१ लुटि'। लोटते, लुलुटे। द्युताद्यङि अलुटत्, अलोटिष्ट। लुट विलोटने [ १।१९० ] लोटति। लुटच् विलोटने [ ३।३४ ] लुट्यति ॥

## अथ ठान्तः ॥

'९४२ लुठि'। लोठते, लुलुठे। द्युताद्यङि अलुठत्, अलोठिष्ट। लुठ उपघाते [ १।२२० ] लोठति। लुठत् संश्लेषणे [ ५।१२८ ] लुठति ॥

## अथ तान्तः ॥

'९४३ श्विताङ् वर्णे'। ङित्त्वाद् आत्मनेपदे श्वेतते, शिश्विते। द्युताद्यङि अश्वितत्, अश्वेतिष्ट। आदित्त्वात् क्तयोर्नेट्, श्वित्तः, श्वित्तवान्। "नवा भावारम्भे" ४।४।७२ श्वेतितमनेन, श्वित्तमनेन, प्रश्वित्तः, प्रश्वेतितः। घञि श्वेतः। उणादौ "ऋज्यजि०" (उ० ३८८) इति किति रे श्वित्रं कुष्ठभेदः ॥

## अथ दान्तास्त्रयः ॥

'९४४ ञिमिदाङ् स्नेहने'। स्नेहनं स्नेहयोगः। मेदते, मिमिदे। द्युताद्यङि अमिदत्, अमेदिष्ट। ञीत्त्वाद् "ज्ञानेच्छा०" ५।२।९२ इति वर्तमाने क्तः, मिन्नः। अत्रादित्त्वाद् नेट्, मिन्नवान्। "नवा भावारम्भे" ४।४।७२

१. "शुषीषि-बन्धि०" (उ० ४१६) इति किति इरेऽपि रुचिरम् भवति ॥

इति वेट्प्रतिषेधे भिन्नमनेन, मेदितमनेन, प्रभिन्नः, प्रमेदितः, अत्रेटि "न डीङ्०" ४।३।२७ इति किच्चप्रतिषेधाद् गुणः । लिहाद्यचि मेदो म्लेच्छः । "भञ्जिभासि०" ५।२।७४ इति घुरे मेदनशीलो मेदुरः । उणादौ "चिमिदि०" (उ० ४५४) इति किति त्रे मित्रम् । "अस" (उ० ९५२) इति असि मेदः वसा । ञिमिदाच् स्नेहने [ ३।३७ ] मेद्यति । मिदुण् स्नेहने [ ९।९० ] मिन्दयति ॥

'९४५ ञिक्ष्विदाङ् ९४६ ञिश्विदाङ् मोचने च'। चकारात् स्नेहने । क्ष्वेदते, चिक्ष्विदे । द्युताद्यङि अक्ष्विदत्, अक्ष्वेदिष्ट । ञीत्त्वाद् वर्तमाने क्तः, क्ष्विण्णः, अत्रादित्त्वान्नेट् । "नवा भावारम्भे" ४।४।७२ इति वेट्प्रतिषेधे क्ष्वेदितमनेन, क्ष्विण्णमनेन, प्रक्ष्वेदितः, प्रक्ष्विण्णः, प्रक्ष्वेदितवान्, प्रक्षिण्णवान् । एण्विटि "नडीङ्०" ४।३।२७ इति किच्चप्रतिषेधाद् "लघो०" ४।३।४ इति गुणः । डान्तोऽयमित्येके । क्ष्वेडः विषः, क्ष्वेडा रवः । ञिक्ष्विदाच् मोचने च [ ३।३८ ] क्ष्विद्यति ॥

'९४६ ञिश्विदाङ्[2]'। "षः सो०" २।३।९८ इति सत्वे स्वेदते । "नाम्यन्तस्था०" २।३।१५ इति षत्वे सिष्विदे । द्युताद्यङि अस्विदत् अस्वेदिष्ट । ञीत्त्वात् सति क्ते स्विन्नः, स्विन्नवान्; अत्रादित्त्वान्नेट् । "नवा भावारम्भे" ४।४।७२ वेडभावे स्विन्नमनेन, स्वेदितमनेन, प्रस्विन्नः, प्रस्वेदितः; अत्रेटि "नडीङ्०" ४।३।२७ इति किच्चाभावाद् गुणः । "वौ व्यञ्जनादेः०" ४।३।२५ इति क्त्वासनोर्वा किच्चे स्विदित्वा, स्वेदित्वा, सिस्विदिषते, सिस्वेदिषते, अत्र "णिस्तोरेवा०" २।३।३७ इति नियमान्न षत्वम् । "णिस्तोरेवा०" २।३।३७ इत्यत्र स्विदेर्वर्जनाद् णौ सनि षत्वाभावे सिस्वेदयिषति । घञि स्वेदः । ष्विदांच् गात्रप्रक्षरणे [ ३।३५ ] स्विद्यति ॥

## अथ भान्ताः पञ्च ॥

'९४७ शुभि दीप्तौ'। शोभते, शुशुभे । द्युताद्यङि अशुभत्, अशोभिष्ट । "नाम्युपान्त्य०" ५।१।५४ इति के शुभम् । णौ नन्द्यादने शोभनः । "इङितो०" ५।२।४४ इत्यने शोभनशीलः शोभनः । भिदादिनिपातनाद् अङि शोभा । उणादौ "ऋज्यजि०" (उ० ३८८) इति किति रे शुभ्रः । शुभत् शोभार्थे [ ५।७३ ] शुम्भति; अत्र "मुचादि०" ४।४।९९ इति नः ॥

१. मज्जि° इति मु० ॥

२. ञिक्ष्विदाङ् इति मु० । नैनं धातुं पठति क्षीरस्वामी ( क्षी. त. पृ. १०१. ॥ )

'९४८ क्षुभि संचलने'। संचलनं रूपान्यथात्वम्। क्षोभते, चुक्षुभे। द्युताद्यङि अक्षुभत्, अक्षोभिष्ट। "क्षुब्धविरिब्ध०" ४।४।७० इति निपातनाद् इडभावे क्षुब्धो मन्थः, क्षुभितोऽन्यः। क्षुभच् संचलने [ ३।५६ ] क्षुभ्यति। क्षुभश् संचलने [ ८।४६ ] क्षुभ्नाति, क्षुभ्नादित्वाद् णत्वाभावः॥

'९४९ णभि ९५० तुभि हिंसायाम्'। "पाठे०" २।३।९७ इति नत्वे नभते। णोपदेशत्वात् "अदुरुपसर्गा०" २।३।७७ इति णत्वे प्रणभते। नेभे। द्युताद्यङि अनभत्, अनभिष्ट। उणादौ "अस्" (उ० ९५२) इत्यसि नभः। अणोपदेशोऽयमित्येके॥

'९५० तुभि'। तोभते, तुतुभे। द्युताद्यङि अतुभत्, अतोभिष्ट। नभ-तुभच् हिंसायाम् [ ३।५७, ५८] नभ्यति, प्रणभ्यति, तुभ्यति। णभ-तुभश् हिंसायाम् [ ८।४७, ४८ ] नभ्नाति प्रणभ्नाति तुभ्नाति॥

'९५१ स्रम्भूङ् विश्वासे'। दन्त्यादिः। स्रम्भते, सस्रम्भे। द्युताद्यङि अस्रभत्, अस्रम्भिष्ट। ऊदित्त्वात् क्त्वि वेट्, स्रब्ध्वा स्रम्भित्वा। "क्त्वा" ४।३।२९ इति सेटः कित्त्वाभावात् "नो व्यञ्जनस्या०" ४।२।४५ इति नलोपाभावः। वेट्त्वात् क्तयोर्नेट्, विस्रब्धः, विस्रब्धवान्। "वेर्विच०" ५।२।५९ इति घिनणि विस्रम्भशीलो विस्रम्भी। घञि विस्रम्भः। हान्तोऽयमिति कौशिकः, स्रंहते॥

## अथ शान्तः॥

'९५२ भ्रंशूङ् ९५३ स्रंसूङ् अवस्रंसने'। "शिड्हे०" १।३।४० इति मस्यानुस्वारे भ्रंशते, बभ्रंशे। द्युताद्यङि अभ्रशत् अभ्रंशिष्ट। ऊदित्त्वात् क्त्वि वेट्, भ्रष्ट्वा, भ्रंशित्वा। वेट्त्वात् क्तयोर्नेट्, भ्रष्टः। संज्ञायां "कुत्सिता०" ७।३।३३ इति कपि भ्रष्टकः, भ्रष्टवान्। यङि "वञ्चस्रंस०" ४।१।५० इति पूर्वस्यान्तो नी बनीभ्रश्यते। क्ते अनिट्त्वात् "क्तेटो०" ५।३।१०६ इत्यप्रत्ययाभावे स्त्रियां क्तौ भ्रष्टिः। घञि भ्रंशः। भ्रंशूच् अधःपतने [ ३।६२ ] भ्रश्यति॥

## अथ सान्तौ॥

'९५३ स्रंसूङ्'। दन्त्यादिः। स्रंसते, सस्रंसे। द्युताद्यङि अस्रसत् अस्रंसिष्ट। सनि सिस्रंसिषते। यङि सनीस्रस्यते। यङ्लुपि सनीस्रंसीति[1]।

---

१. सिस्रंषिते इति मु०॥

ऊदित्त्वात् क्त्वि वेट्, स्रस्त्वा, स्रंसित्वा वेट्त्वात् क्तयोर्नेट्, स्रस्तः, स्रस्तवान् । क्विपि उखेन उखया वा स्रंसते उखास्रत्, अत्र "स्रंसुध्वंसु०" २।१।६८ इति पदान्ते सस्य दः, "घञ्युपसर्ग०" ३।२।८६ इति बाहुलकाद् दीर्घः । स्त्रियां क्तौ स्रस्तिः । स्रम्भुङ् प्रमादे [१।८४४] "वञ्चस्रंस०" ४।१।५० इति अत्र ध्वंसिसह-चरितस्य स्रंसेर्ग्रहणात् न्यभावे यङि सास्रस्यते । अङभावे अस्रंसिष्ट । "स्रंसुध्वंसु०" २।१।६८ इत्यत्र तु उभयोर्ग्रहणात् क्विपि दत्वे उखास्रत् ॥

'९५४ ध्वंसुङ्[1] गतौ च' । चकारादवस्रंसने । ध्वंसते, दध्वंसे । द्युताद्यङि अध्वसत्, अध्वंसिष्ट । यङि "वञ्चस्रंस०" ४।१।५० इति पूर्वस्य नी, दनी-ध्वस्यते । ऊदित्त्वात् क्त्वि वेट्, ध्वस्त्वा, ध्वंसित्वा । वेट्त्वात् क्तयोर्नेट्, ध्वस्तः, ध्वस्तवान् । स्त्रियां क्तौ ध्वस्तिः । घञि ध्वंसः । क्विपि पर्णध्वत् ॥

## अथ द्युताद्यन्तर्गणो वृतादिः पञ्चकः ॥

'९५५ वृतूङ् वर्तने' । वर्तनं स्थितिः । वर्तते, ववृते । द्युताद्यङि अवृतत्, अवर्तिष्ट । "वृद्भ्यः" ३।३।४५ इति स्यसनोर्विषये वाऽऽत्मनेपदम्, आत्मनेपदा-भावे च "न वृद्भ्यः" ४।४।५५ इति नेट्, वर्त्स्यति, वर्तिष्यते; अवर्त्स्यत्, अवर्तिष्यत । सनि विवृत्सति, विवर्तिषते । यङि "ऋमताम्०" ४।१।५५ इति पूर्वस्य री, वरीवृत्यते । णौ ङे "ऋद्वर्णस्य" ४।२।३७ इति गुणापवादे ऋतो वा ऋत्वे अवीवृतत् अववर्तत् । "वर्तेर्वृत्तं०" ४।४।६५ इति निपातनात् क्ते वृत्तस्तर्कः, ग्रन्थादन्यत्र वर्तितं कुङ्कुमम् । ऊदित्त्वात् क्त्वि वेट्, वृत्त्वा, वर्तित्वा । वेट्त्वात् क्तयोर्नेट्, वृत्तः, वृत्तवान् । णके वर्तकः । स्त्रियां "वौ वर्तिका" २।४।११० इति वा इत्वे वर्तिका वर्तका वा शकुनिः । क्विपि "गतिकारकस्य०" ३।२।८५ इति दीर्घे नीवृत्, उपावृत् । स्त्रियां क्तौ वृत्तिः । वृत्तिरस्त्यस्या वार्त्ता । "व्यञ्जनाद्०" ५।३।१३२ घञि रथा अस्मिन् वर्तन्ते रथावर्तो ग्रामो गिरिश्च । "घञ्युपसर्गस्य०" ३।२।८६ इति बाहुलकाद् दीर्घः । "हस्तार्थाद्०" ५।४।६६ इति णमि हस्तवर्तं वर्तते । णौ हस्तवर्तं वर्तयति । उणादौ "दृकृनृ०" (उ० २७) इत्यके वर्तकः, वर्तिका, वर्तका वा शकुनिः । "मवाक–श्यामाक०" (उ० ३७) इत्याके निपातनात् वार्ताकी[2] शाकविशेषः, तत्फलम् वार्ताकम् । वृन्ताकी उच्चबृहती, तत्फलं

१. अवस्रसने च इति क्षीरस्वामी ( क्षी. त. पृ. १०२ ) ॥

२. वार्ताकी–एतस्याः लोके बृहतीगणी 'डोल्हरी' इति प्रसिद्धिः ( नि. शे. टी. पृ० १९५ ) ॥

वृन्ताकम् । " वृतेस्तिकः " ( उ० ७५ ) वर्त्तिका चित्रकरोपकरणम् । "ऋज्यजि० " ( उ० ३८८ ) इति किति रे वृत्रः[1] । " विदिवृतेर्वा " ( उ० ६१० ) इति वा किदिः, वृतिः कण्टकावरणम्[2], निर्वृतिः सुखम्, वर्तिः दीपदशा । "सदिवृत्य०" ( उ० ६८० ) इत्यनौ वर्तनिः पन्थाः । " मन् " ( उ० ९११ ) इति मनि वर्त्म । वृतूचि वरणे [ ३।११३ ] वृत्यते । वृतण् भासार्थः [ ९।२१७ ] वर्तयति ॥

## अथ दान्तः ॥

'९५६ स्यन्दौङ् स्रवणे' । स्यन्दते, सस्यन्दे । द्युताद्यङि अस्यदत्, अस्यन्दिष्ट । " निरभ्यनोश्च० " २।३।५० इति वा षत्वे निःष्यन्दते, निःस्यन्दते, अभिष्यन्दते, अभिस्यन्दते । " वृद्भ्यः० " ३।३।४५ इति स्यसनोर्वात्मनेपदम्, तदभावे च " न वृद्भ्यः " ४।४।५५ इति नेट्, स्यन्त्स्यति । आत्मनेपदे तु औदित्त्वाद् वेट्, स्यन्दिस्यते, स्यन्त्स्यते, सिस्यन्तसते, सिस्यन्दिषते, सिस्यन्त्स्यते । यङि सास्यद्यते । यङ्लुपि सास्यन्दीति, सास्यन्ति । क्त्वीडभावे " स्कन्द-स्यन्दः " ४।३।३० इति कित्त्वाभावे स्यन्त्त्वा । इटि तु " क्त्वा " ४।३।२९ इति कित्त्वाभावे स्यन्दित्वा । यपि प्रस्यन्द्य । तादेरेव क्त्वः कित्त्वाभाव इत्येके, तन्मते कित्त्वे नलुकि प्रस्यद्य । वेट्त्वात् क्तयोर्नेट्, स्यन्नः, स्यन्नवान् । " स्यदो जवे " ४।२।५३ इति घञि निपातनाद् गोस्यदः, अश्वस्यदः । जवादन्यत्र तैलस्यन्दः, घृतस्यन्दः । उणादौ " स्वसिरसि० " (उ० २६९) इत्यने स्यन्दनः । "स्यन्दि-सृजिभ्यां सिन्धरज्जौ च" ( उ० ७१७ ) इत्युः, सिन्धुः ॥

## अथ धान्तौ

'९५७ वृधूङ् वृद्धौ' । वर्धते ववृधे । द्युताद्यङि अवृधत्, अवर्धिष्ट । " वृद्भ्यः स्यसनोः " ३।३।४५ इति वात्मनेपदम्, तदभावे " न वृद्भ्यः " ४।४।५५ इति नेट्, वर्त्स्यति, वर्धिष्यते, विवृत्सति, विवर्धिषते । ऊदित्त्वात् क्त्वि वेट्, वृद्ध्वा, वर्धित्वा, वेट्त्वात् क्तयोर्नेट्, वृद्धः, वृद्धवान् । क्तौ तिकि वा वृद्धिः । णौ नन्द्याद्यने वर्धनः, सुखवर्धनः । " भ्राज्यलंकृग्० " ५।२।२८ इति इष्णौ वर्धिष्णुः । उणादौ " भीवृधि० " ( उ० ३८७ ) इति रे वर्ध्रः । वृधण् भासार्थः [ ९।२२० ] वर्धयति ॥

---

१. वृत्र.-दानव. बलवान् रिपुश्च ( उ. वि. ) ॥

२. कण्टकशाखावरणम् ( उ. वि. ) ॥

'९५८ शृधूङ् शब्दकुत्सायाम्' । तालव्यादिः । शब्दकुत्सा पायुशब्दत्वात् । शर्धते, शशृधे । द्युताद्यङि अशृधत् अशर्धिष्ट । "वृद्भ्यः[1] स्यसनोः" ३।३।४५ इति वात्मनेपदाभावे "न वृद्भ्यः" ४।४।५५ इति नेट्, शर्त्स्यति, शर्धिष्यते, शिशृत्सति, शिशर्धिषते । ऊदित्त्वात् क्त्वि वेट्, शृद्ध्वा, शर्धित्वा । वेट्त्वात् क्तयोर्नेट्, शृद्धः, शृद्धवान् । घञि शर्धः, शर्धञ्जहा माषाः । उणादौ "डीनीबन्धि०" (उ० ३२५) इति डिम्बे शिम्बा[2] बीजकोशी । "नृतिशृधि०" (उ० ८४४) इति किदूः, शृधूः शर्धनः ॥

'९५९ कृपौङ् सामर्थ्ये' । "ऋर०" २।३।९९ इति लत्वे कल्पते । लत्वे चक्लृपे । द्युताद्यङि अक्लृपत्, अकल्पिष्ट । "वृद्भ्यः स्यसनोः" ३।३।४५ इति "कृपः श्वस्तन्याम्" ३।३।४६ इति च वात्मनेपदाभावे "न वृद्भ्यः" ४।४।५५ इति नेट् । आत्मनेपदे तु औदित्त्वात् वेट्, कल्प्स्यति, कल्पिष्यते, कल्प्स्यते, चिक्लृप्सति, चिकल्पिषते, चिक्लृप्सते, कल्प्तासि, कल्पितासे, कल्प्तासे, कल्प्तुम्, कल्पितुम् । वेट्त्वात् क्तयोर्नेट्, क्लृप्तः, क्लृप्तवान् । णौ कल्पयति । "ऋदुपान्त्या०" ५।१।४१ इति अत्र कृपिवर्जनात् "शकि-तकि०" ५।१।२९ इति ये कल्प्यम् । णौ अचि कल्पः । यङि चलीक्लृप्यते । णौ क्ते अवकल्पितः । "व्यञ्जनाद्०" ५।३।१३२ इत्याधारे घञि क्लृप्यन्ते यस्मिन् प्राणिनां भोगोपभोगा वृद्धिहानिभ्यामिति कल्पः कालविशेषः उत्सर्पिण्यवसर्पिणीसमुदायः । उणादौ "तृकृकृपि०" (उ० १५१) इति कीटे कृपीटं हिरण्यं जलं च । कृपण् अवकल्कने [९।१७९] कल्पयति । कृपण् दौर्बल्ये [९।३२३] अदन्तः, कृपयति ॥

'वृत्[3]' । वर्तनम् वृत्, द्युतादिः २३ वृतादिः ५ चान्तर्गणौ वर्तितौ समाप्तौ इत्यर्थः । वृधेः क्विपि वृत्, वर्धितौ पूर्णौ इत्येके ॥

अथ ज्वलादयो यजादेः प्राक् पद्लृं-शद्लृं-क्रुशं-रुहं-रभिं वर्जाः सेटश्च वर्णक्रमेण निर्दिश्यन्ते । तत्रापि पूर्वाचार्यानुरोधेन पूर्वम् ॥

'९६० ज्वल दीप्तौ' । "शेषात् परस्मै" ३।३।१०० इति परस्मैपदे ज्वलति, जज्वाल, ज्वलिता । णौ घटादित्वात् ह्रस्वे प्रज्वलयति । "ज्वलह्वल०" ४।२।३२ इत्यनुपसर्गस्य वा ह्रस्वे ज्वलयति ज्वालयति, "वा ज्वलादि०"

१. वृद्भ्य इति मु० ॥

२. एतस्या लोके खेजडी इति प्रसिद्धिः । (नि. शे. टी. ७३) ॥

३. तुलना, (क्षी. त. पृ. १०४) ॥

५।१।६२ इति णे ज्वालः, ज्वाला । पक्षे अचि ज्वलः । "भूषाक्रोधार्थ०" ५।२।४२ इत्यने ज्वलनशीलो ज्वलनः । उणादौ "निष्कतुरुष्को०" (उ० २६) इति के निपातनाद् उल्का । "कञ्चुकांशुक०" (उ० ५७) इत्युके निपातनाद् उल्मुकम् ॥

## अथ चान्तः ॥

'९६१ कुच संपर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु' । संपर्चनं मिश्रता । प्रतिष्टम्भो रोधनम् । विलेखनं कर्षणम् । कोचति, चुकोच, कोचिता, संकुचितः । णौ क्ते संकोचितः । "वा ज्वलादि०" ५।१।६२ इति णे कोचः । "नाम्युपान्त्य०" ५।१।५४ इति के कुचः । घञि क्ते सेट्त्वात् क्त्वाभावे उत्कोचः, संकोचः ॥

## अथ तान्तः ॥

'९६२ पत्लृ ९६३ पथे गतौ' । पतति, पपात, पेतुः । लृदित्वादङि "श्वयत्य०" ४।३।१०३ इति पप्तादेशे अपप्तत् । "नेर्ङ्मादा०" २।३।७९ इति नेर्णत्वे प्रणिपतति, प्रण्यपतत्, अटो धात्वादित्वात् व्यवधानाभावः । सनि "इवृध०" ४।४।४७ इति वेट्, अनिट्पक्षे "रभलभ०" ४।१।२१ इति स्वरस्येत्वे द्वित्वाभावे च पित्सति । इटि पिपतिषति । यङि "वञ्चस्रंस०" ४।१।५० इति पूर्वस्यान्तो नी, पनीपत्यते । भावकर्मणोरेव प्राप्तस्य घ्यणो "भव्यगेय०" ५।१।७ इति कर्तरि वोत्पत्तौ आपात्यः, पक्षे आपात्यमनेन । "वा ज्वलादि०" ५।१।६२ इति णे पातो राहुः, पक्षे अचि पतः पक्षी । घञि उत्पातः, निपातः । "वेटोऽपतः" ४।४।६२ इति पतो वर्जनादिट्प्रतिषेधाभावे पतितः, पतितवान् । "उदः पचि०" ५।२।२९ इति इष्णौ उत्पतनशीलः उत्पतिष्णुः । "लषपत०" ५।२।४१ इत्युकणि प्रपातुकः । "भूषाक्रोधार्थ०" ५।२।४२ इत्यने पतनः । "नीदाव्०" ५।२।८८ इति त्रटि पत्त्रम् । "विशपत०" ५।४।८१ इति णमि गेहानुप्रपातमास्ते । उणादौ "शलिबलि०" (उ० ३४) इत्याके पताका । "आङः पणि०" (उ० ३९) इति इके आपतिकः श्येनः । "पतितमि०" (उ० ९८) इत्यङ्गे पतङ्गः पक्षी । "वीपतिपटिभ्यस्तनः" (उ० २९२) पत्तनं पुरविशेषः । "वृगुनक्षि०" (उ० ४५६) इत्यत्रे पतत्रं पत्त्रम् । "पतिकुल्भ्यो णित्" (उ० ४७९) इत्याले पातालम् । "पतेः सलः" (उ० ५०४) पत्सलः प्रहारः । "कमिवमि०" (उ० ६१८) इति णिदिः, संपातिः गृध्रराजः । "सात्मन्नात्मन्०" (उ० ९१६)

इति मनि निपातनात् णौ पाप्मा । पतण् गतौ वा [ ९।३१२ ] अदन्तः, "शीङ्श्रद्धा०" ५।२।३७ इत्यालौ पतयालुः ॥

## अथ थान्तास्त्रयः सेटश्च ॥

'९६३ पथे' । पथति, पपाथ, पथिता । एदित्त्वात् "व्यञ्जनादे०" ४।३।४७ इति वा वृद्धेः "न श्विजागृ०" ४।३।४९ इति प्रतिषेधे अपथीत् । "वा ज्वलादि०" ५।१।६२ इति णे पाथः । पक्षे अचि पथः । उणादौ "पथिमन्थिभ्याम्" ( उ० ९२६ ) इति इनि पन्थाः ॥

'९६४ क्वथे निष्पाके' । क्वथति, चक्वाथ, क्वथिता । एदित्त्वात् "व्यञ्जनादे०" ४।३।४७ इति वा वृद्धेः "न श्विजागृ०" ४।३।४९ इति प्रतिषेधे अक्वथीत् । "वा ज्वला०" ५।१।६२ इति णे क्वाथः । अचि क्वथः । घञि क्वाथः । "अतोऽनेकस्वरात्" ७।२।६ इति मत्वर्थीयेके क्वाथिका यवागूः ॥

'९६५ मथे[1] विलोडने' । मथति, ममाथ, मथिता । एदित्त्वात् "व्यञ्जनादे०" ४।३।४७ इति वा वृद्धेः "न श्विजागृ०" ४।३।४९ इति प्रतिषेधे अमथीत् । "वा ज्वला०" ५।१।६२ इति णे माथः; पक्षे अचि मथः । "मथलपः" ५।२।५३ इति घिनणि प्रमथनशीलः प्रमाथी । घञि प्रमाथः अध्वपरिमाणम् । उणादौ "वाश्यसि०" ( उ० ४२३ ) इत्युरे मथुरा । मन्था इति तु मथ्नातेः [ "पथिमन्थिभ्याम्" ( उ० ९२६ ) इति किति इन्प्रत्यये ] ॥

## अथ दान्तौ ॥

'९६६ षद्लृं विशरणगत्यवसादनेषु' । विशरणं शटनम्, अवसादः अनुत्साहः । "श्रौति०" ४।२।१०८ इति सीदादेशे सीदति । "षः सो०" २।३।९८ इति सत्वे ससाद । "सदोऽप्रतेः०" २।३।४४ इति षत्वे निषीदति, विषीदति, निषसाद, विषसाद । सनि निषिषत्सति विषिषत्सति, प्रतेस्तु षत्वाभावे प्रतिसीदति । "नाम्यन्तस्था०" २।३।१५ इति षत्वे सिषत्सति । लृदित्त्वादङि असदत् । अनुस्वारेत्त्वान्नेट्, सन्नः, सन्नवान् । "गॄलुप०" ३।४।१२ इति गर्ह्यार्थे यङि सासद्यते । "वा ज्वलादि०" ५।१।६२ इति णे सादः, बाहुलकात् सोप–

१. मथे विलोडने इति काशकृत्स्नः ( का. धा. पृ. १०७ ) ॥

सर्गादपि णे निषादः, विषादः । अचि सदः । क्विपि भीरुष्ठानादित्वात् षत्वे आदिषत्, उपसत्, पुष्करसत् । संपदादिक्विपि उपनिषत् । परिपीदन्त्यस्याम् इति परिषत् । ग्रहादित्वाण्णिनि सादी, निषादी । "दाद्धेसि०" ५।२।३६ इति रौ सादनशील: सद्रुः । घञि सादः, निषादः, विषादः । स्त्रियां "समज०" ५।३।९९ इति क्यपि निषद्या । आधारे "व्यञ्जनाद्०" ५।३।१३२ इति घञि "घञ्युपसर्ग०" ३।२।८६ इति दीर्घे प्रासादः । उणादौ "हुयामा०" (उ० ४५१) इति त्रे सत्त्रं यज्ञः । "कृगृशृ०" (उ० ४४१) इति वरटि निषद्वरः पङ्कः । "मन्" (उ० ९११) इति मनि सद्म । "कमिवमि०" (उ० ६१८) इति णिदिः, सादिः अश्वारोहः सारथिश्च । "अस्" (उ० ९५२) इत्यसि सदः सभा ॥

'९६७ शद्लृं शातने' । शातनं तनूकरणम् । "शदेः शिति" ३।३।४१ इत्यात्मनेपदे "श्रौति०" ४।२।१०८ इति शीयादेशे शीयते । शितोऽन्यत्र परस्मैपदे शशाद । अनुस्वारेत्त्वान्नेट्, शत्स्यति । लृदित्त्वादङि अशदत् । णौ "शदिरगतौ शात्" ४।२।२३ पुष्पाणि शातयति । गतौ तु गाः शादयति । "वा ज्वला०" ५।१।६२ इति णे शादः तृणपङ्कौ । अचि शदः शटितः, क्षत्रियापशदः, विशदः । णौ "करणाधारे" ५।३।१२९ इत्यनटि पलाशशातनो दण्डः, पलाशशातनी यष्टिः । उणादौ "शदेरूच" (उ० ३९४) इति रे शूद्रः । "तङ्कि-वङ्कि०" (उ० ६९२) इति रिः, शद्रिः वज्रः । "जनिहनि०" (उ० ८०९) इति रौ तादेशे च शत्रुः ॥

## अथ धान्तः ॥

'९६८ बुध अवगमने' । अवगमनं ज्ञापनम् । बोधति, बुबोध, बोधिता । "वा ज्वला०" ५।१।६२ इति णे बोधः । पक्षे "नाम्युपान्त्य०" ५।१।५४ इति के बुधः । णौ "गतिबोधा०" २।२।५ इत्यणिक्कर्तुः कर्मत्वे बोधयति शिष्यं धर्मम् । "अजातेः०" ५।१।१५४ इति "णिन्चावश्यका०" ५।४।३६ इति वा णिनि प्रतिबोधी, गम्यादित्वात् वर्त्स्यति साधुः । घञि बोधः । उणादौ "युयुजि०" (उ० २७७) इति किति आने बुधानः आचार्यः । अनुस्वारेदयमित्येके, तन्मते अभौत्सीत्, बोद्धा, राज्ञाम् बुद्धः । बुधिच् ज्ञाने [ ३।११९ ] बुध्यते ॥

## अथ मान्तौ ॥

'९६९ टुवमू उद्गिरणे'। उद्गिरणं भुक्तस्योर्ध्वगतिः। वमति, ववाम। "अनादेशादे०" ४।१।२४ इति एत्वद्वित्वाभावयोः "न शशददवा०" ४।१।३० इति प्रतिषेधे "जॄभ्रम०" ४।१।२६ इति वा प्रतिप्रसवे वेमतुः, ववमतुः। "वा ज्वला०" ५।१।६२ इति णे "मोऽकमि०" ४।३।५५ इति अत्र वमेर्वर्जनात् वृद्धिप्रतिषेधाभावे वामः, अचि वमः। वमिता। "अमोऽकम्य०" ४।२।२६ इति ह्रस्वे णौ उद्वमयति। "ज्वलह्वल०" ४।२।३२ इत्यनुपसर्गस्य वा ह्रस्वे वमयति, वामयति। णौ नन्द्याद्यने वामनः। णके वामकः, घञि वामः, अभ्रादित्वान्मत्वर्थीये ने वामनः। "जीणॄदक्षि०" ५।२।७२ इति इनि वमनशीलो वमी। टिृत्त्वादथुः, वमथुः। ऊदित्त्वात् क्त्वि वेट्, वान्त्वा, वमित्वा। वेट्त्वात् क्तयोः नित्यमिडभावे प्राप्ते "श्वसजप०" ४।४।७५ इति वेटि वान्तः, वान्तवान्, वमितः, वमितवान्। उणादौ "कमिवमि०" (उ० ६१८) इति णिदिः, वामिः स्त्री। "इतो०" २।४।३२ इति वा ङ्याम् वामी अश्वा। नायमूदिदित्यन्ये ॥

'९७० भ्रमू चलने'। "भ्रासभ्लास०" ३।४।७३ इति वा श्ये भ्रम्यति, भ्रमति, बभ्राम। "जॄभ्रम०" ४।१।२६ इति वैत्वे भ्रेमुः, बभ्रमुः। ऊदित्त्वात् क्त्वि वेट्, भ्रान्त्वा, भ्रमित्वा। वेट्त्वात् क्तयोर्नेट्, भ्रान्तः, भ्रान्तवान्। "वा ज्वला०" ५।१।६२ इति णे ज्वलादिपाठबलात् "मोऽकमि०" ४।३।५५ इति प्रतिषेधाभावे "ञ्णिति" ४।३।५० इति वृद्धौ भ्रामः। अचि भ्रमः। तृचि भ्रमिता। उणादौ "ऋच्छिचटि०" (उ० ३९७) इति अरे भ्रमरः। "तॄभ्रम्य०" (उ० ६११) इति इः भृमश्च, भृमिर्वायुः। बाहुलकाद् भृमादेशाभावे भ्रमिः भ्रमः। "भ्रमिगमि०" (उ० ८४३) इति डिदूः, भ्रूः। भ्रमूच् अनवस्थाने [ ३।९१ ] भ्राम्यति ॥

## अथ रान्तः ॥

'९७१ क्षर संचलने'। सकर्मकश्चायमकर्मकश्च। क्षरति गौः, पयो मुञ्चतीत्यर्थः। क्षरति जलं स्रवतीत्यर्थः। चक्षार, क्षरिता। "वा ज्वला०" ५।१।६२ इति णे क्षारः, गौरादित्वाद् ङ्याम् क्षारी। णे ध्यणि कृतं क्वचिदित्येके। अचि क्षरः, अक्षरः ॥

## अथ लान्ताश्चतुर्दश ॥

'९७२ चल कम्पने[1]' । चलति, चचाल, चलिता । "वा ज्वला०" ५।१।६२ इति णे चालः । अचि चलः । "चराचर०" ४।१।१३ इति निपातनात् चलाचलः । यङ्लुपि चाचलः, चञ्चलः । कम्पने घटादित्वात् णौ ह्रस्वे चलयति शाखाम् । अन्यत्र चालयति सूत्रम् । "चालशब्दा०[2]" ५।२।४३ इत्यने चलनशीलः चलनः । घञि चालः । चलण् भृतौ [ ९।१३४ ] चालयति ॥

'९७३ जल घात्ये' । घात्यं जडत्वम्, अतैक्ष्ण्यम् इत्यर्थः । जलति, जजाल । "वा ज्वला०" ५।१।६२ इति णे जालम् । अचि जलम्, डलयोरैक्यं जडः । व्यवस्थितविभाषत्वाद् भिन्नेऽर्थे प्रत्ययौ । घञि जालम् । घञन्तस्यापि नपुंसकत्वं लोकात् । जलण् अपवारणे [ ९।१२० ] जालयति ॥

'९७४ टल ९७५ ट्वल वैक्लव्ये[3]' । विक्लव एव वैक्लव्यम् । टलति, ट्वलति, टटाल, टट्वाल । "वा ज्वला०" ५।१।६२ इति णे टालः, ट्वालः । अचि टलः, ट्वलः । टलितुम्, ट्वलितुम् ॥

'९७६ ष्ठल स्थाने' । "षः सो०" २।३।९८ इति सत्वे स्थलति, तस्थाल, स्थलिता । "वा ज्वला०" ५।१।६२ इति णे स्थालम् । गौरादित्वाद् ङ्याम् स्थाली । अचि स्थलम् । स्त्रियां "भाजगोण०" २।४।३० इति ङ्याम् स्थली अकृत्रिमा, स्थला अन्या । "विकुशमि०" २।३।२८ इति षत्वे विष्ठलम्, कुष्ठलम्, शमिष्ठलम् । "कपेर्गोत्रे" २।३।२९ कपीनां स्थलमिव स्थलमस्य कपिष्ठलः । षोपदेशत्वात् "नाम्यन्तस्था०" २।३।१५ इति षत्वे तिष्ठालयिषति । अषोपदेशोऽयमित्यन्ये ॥

'९७७ हल विलेखने' । विलेखनं कर्षणम् । हलति, जहाल, हलिता । "वा ज्वला०" ५।१।६२ इति णे हालः । हाला सुरा । अचि हलम्, हलाहलम् । उणादौ "पदिपठि०" ( उ० ६०७ ) इति इः, हलिः, हडिः[4] ॥

---

१. धान्ये इति काशकृत्स्नः ( क्षी. त. टि. पृ. ११६ ) ॥
२. "चलशब्दा०" इति पाठो लघुवृत्त्यादिषु बहुषु ग्रन्थेषु ॥
३. वैप्लव्ये इति क्षीरस्वामी ( क्षी. त. टि. पृ. ११६ ) ॥
४. हडिः काष्ठयन्त्रविशेषः ( शब्दकल्पद्रुम भा. ५ ) ॥

'९७८ णल गन्धे'। गन्धः अर्दनम्। "पाठे०" २।३।९७ इति नत्वे नलति। णोपदेशत्वात् "अदुरुपसर्गा०" २।३।७७ इति णत्वे प्रणलति, परिणलति। ननाल, नलिता। "वा ज्वला०" ५।१।६२ इति णे नालम्, नाला पद्मादीनां वृन्तम्, नाली, नाडी. प्रणालम्, प्रणाली प्रणालिका, प्रणाडिका। अचि नलम्, नलः, नडः। "आतो०" ५।१।७६ इति डे नलदः॥

'९७९ वल प्राणनधान्यावरोधयोः'। प्राणनं जीवनम्, धान्यम् अवरुध्यते यत्र इति धान्यावरोधः कुशूलः। ओष्ठ्यादिः। बलति, बबाल। "अनादेशादे०" ४।१।२४ इति एत्वे द्वित्वाभावे च बेलतुः, बेलुः, बलिता। "वा ज्वला०" ५।१।६२ इति णे बालः। स्त्रियां "वयस्यनन्त्ये" २।४।२१ इति ङ्यपवादे अजादित्वाद् आपि बाला। अचि बलः, बलम्। उणादौ "दृपृभृ०" (उ० २०७) इति अते बलतः[1] कुशूलः। वलि संवरणे [१।८०७] दन्त्यौष्ठ्यादिः। वलते, ववले। वलण् प्राणने घटादिश्च इत्येके, वलयति॥

'९८० पुल महत्त्वे'। पोलति, पुपोल, पोलिता। "वा ज्वला०" ५।१।६२ इति णे पोलः; पक्षे "नाम्युपान्त्य०" ५।१।५४ इति के पुलः, पुलम्, विपुलम्। उणादौ "भ्रुधून्दि०" (उ० २९) इति कित्यके पुलको रोमाञ्चः। "पापुलि०" (उ० ४१) इति किति इके पुलिकः तुच्छधान्यम्। "कल्यलि०" (उ० २४६) इति इन्दकि पुलिन्दः। "वृजितुहि०" (उ० २८३) इति किति इने पुलिनम्। "नाम्युपान्त्य०" (उ० ६०९) इति किदिः, पुलिः। "अगिविलि०" (उ० ६६०) इत्यस्तिकि पुलस्तिः। अयं तुदादिः अपि इत्येके, पुलति। पुलण् समुच्छ्राये [९।१२२] पोलयति॥

'९८१ कुल बन्धुसंस्त्यानयोः'। संस्त्यानं संघातः। कोलति, चुकोल, कोलिता। "वा ज्वला०" ५।१।६२ इति णे कोलः सूकरः, कोलं बदरम्। "नाम्युपान्त्य०" ५।१।५४ इति के कुलम्, नकुलः। कक्कोलमिति तु कचेः "पिञ्छोल०" (उ० ४९५) इत्योले निपातनात्। उणादौ "कुलिपिलि०" (उ० ४७६) इति किति आले कुलालः॥

'९८२ पल ९८३ फल ९८४ शल गतौ'। पलति, पपाल, पलिता। "वा ज्वला०" ५।१।६२ इति णे पालः। अचि पलं मांसम्। कर्मणोऽणि

१. 'वलि संवरणे, वलतः कुशूलः' इत्युणादि विवरणे॥

गोपालः । उणादौ "हृश्या०" (उ० २१०) इति इते पलितं पाण्डुरः केशः केशपाकश्च । अभ्रादित्वाद् अः, पलितमस्यास्ति पलितः । "मृदिकन्दि०" (उ० ४६५) इति अले पललं तिलकल्कः । "ऋकृमृ०" (उ० ४७५) इत्याले पलालम् । "शमिकमि०" (उ० ४९९) इति वले पल्वलम् अखातसरः । पलण् रक्षणे [९।१३२] पालयति ॥

'९८३ फल'। फलति, पफाल । "तॄत्रपफल०" ४।१।२५ इत्येत्वे द्वित्वाभावे च फेलतुः, फेलुः । फलिता, फलिष्यति । "वा ज्वला०" ५।१।६२ इति णे फालः कुशिकः । फाला इव तण्डुलाः । अचि फलम् ॥

'९८४ शल'। शलति, शशाल, शलिता । "वा ज्वला०" ५।१।६२ इति णे शालः, शाला । अचि शलं श्वाविद्रोम । उणादौ "मीणूशलि०" (उ० २१) इति के शल्कः शरणम् । "शलिबलि०" (उ० ३४) इत्याके शलाका । "शल्यणेर्णित्" (उ० ५९) इति ऊके शालूकं कुमुदादिकन्दः । "शल्यलेरुच्चातः" (उ० ३१९) इति वे शुल्वम्[1] । "कृगॄगॄ०" (उ० ३२९) इत्यभे शलभः । "स्या-छा-मा०" (उ० ३५७) इति ये शल्यम् । यावादित्वात् के शल्यकः । "मृदि-कन्दि०" (उ० ४६५) इत्यले शललं श्वावित्सूची । "कमि-वमि०" (उ० ६१८) इति णिदिः, शालिः । "माशालि०" (उ० ७०३) इति ण्यन्ताद् मलौ शाल्मलिः । फलिशल्योः पूर्वमधीतयोः अपीह पाठो ज्वलादिकार्यार्थः शलेः परस्मैपदार्थश्च ॥

'९८५ हुल[2] हिंसासंवरणयोश्च'। चकाराद् गतौ । होलति, जुहोल, होलिता । "वा ज्वला०" ५।१।६२ इति णे होलः, पक्षे "नाम्युपान्त्य०" ५।१।५४ इति के हुलः, हुडः । उणादौ "पॄ-का-हृपि०" (उ० ७२९) इति किदुः, हुडुः मेषः ॥

## अथ शान्तः ॥

'९८६ क्रुश आह्वानरोदनयोः'। क्रोशति, चुक्रोश । "हशिटो०" ३।४।५५ इति सकि अक्रुक्षत् । अनुस्वारेत्त्वान्नेट्, क्रोष्टा, आक्रोष्टा । "वा ज्वला०"

१. शुल्वम् ताम्रम् इत्युणादि विवरणे ॥
२. अयं गतौ पत्र इति क्षीरस्वामी (क्षी. त. पृ. ११७) ॥

५।१।६२ इति णे क्रोशः । बाहुलकात् सोपसर्गादपि णे उत्क्रोशः[1] कुररः; पक्षे "नाम्युपान्त्य०" ५।१।५४ इति के क्रुशः । "उपसर्गाद् देवृ०" ५।२।६९ इति णके आक्रोशनशीलः आक्रोशकः । घञि आक्रोश । क्रुश्यते उच्यते अध्वपरिमाणं यस्मात् क्रोशः । णके उत्क्रोशकः । उणादौ "कृ-सि-कम्य०" (उ० ७७३) इति तुनि क्रोष्टुना[2] । "ऋ-शी-क्रुशि०" (उ० ९०६) इति क्वनिपि क्रुश्वा शिवा ॥

## अथ सान्तः ॥

'९८७ कस गतौ' । कसति, उत्कसति, विकसति, चकास, कसिता । "वा ज्वला०" ५।१।६२ इति णे कासः । अचि कसः । यङि "वञ्चस्रंस०" ४।१।५० इति पूर्वस्यान्तो नी चनीकस्यते । यङ्लुपि चनीकसीति । "स्थेशभास०" ५।२।८१ इति वरे विकसनशीलो विकस्वरः । उणादौ "संश्विभ्याम्०" (उ० ५२) इत्युके संकसत्यस्मात् संकसुकः अस्थिरः, भीमादित्वादपादाने साधुः । विकसुकः गुणवादी । "कसिपद्य०" (उ० ८३५) इति णिदूः, कासूः शक्त्यायुधम् ॥

## अथ हान्तः ॥

'९८८ रुहं जन्मनि' । बीजजन्मनि इत्यन्ये । बीजजन्माऽङ्कुरोत्पत्तिः । रोहति, रुरोह । अनुस्वारेत्त्वान्नेट्, रोढा । "हशिटो०" ३।४।५५ इति सकि अरुक्षत् । णौ "रुहः पः" ४।२।१४ इति वा पादेशे रोपयति, रोहयति । "वा ज्वला०" ५।१।६२ इति णे रोहः । बाहुलकात् सोपसर्गादपि णे प्ररोहः, आरोहः । "नाम्युपान्त्य०" ५।१।५४ इति के रुहो मृगः । छिन्नरुहः, प्ररुहः । स्यादित्वाद् भावाकर्त्रोः मूलविभुजादित्वाद् वा कर्तरि के बीजरुहा । अस्य "साक्षादादिश्च्व्यर्थे" ३।१।१४ इति कृगा योगे वा गतित्वे बीजरुहाकृत्य बीजरुहा कृत्वा गतः । "श्लिषशीङ्०" ५।१।९ इति वा कर्तरि क्ते खट्वाम् आरूढः । क्तौ रूढिः । उणादौ "हृश्या०" (उ० २१०) इति इते रोहितो वर्णः, लत्वे लोहितः । "श्येतै०" २।४।३६ इति ङ्याम् रोहिणी । "रुहिनन्दि०" (उ० २२०) इति टित्यन्ते रोहन्तो द्रुमः, रोहन्ती ओषधिः । "विपिना०" (उ० २८४) इति निपातनाद् इने रोहिणः । स्त्रियां "रेवत०" २।४।२६ इति

---

१. उत्क्रोशो मत्स्यनाशनः कुररः (अ. चि. ४।४०१) ॥

२. क्रोष्टा शृगालः, तस्य तृतीयैकवचनम् ॥

ङ्याम् रोहिणी नक्षत्रम् । "रुहेर्वृद्धिश्च" (उ० ५४८) इति इपे रौहिषं तृणजातिः । ण्यन्तात् "स्वरेभ्य इः" (उ० ६०६) रोहिः[1] मृगः । "हृसृरुहि०" (उ० ८८७) इति इति रोहित् मृगः । "ऋशीकुशि०" (उ० ९०६) इति क्वनिपि रुह्वा वृक्षः ॥

## अथात्मनेपदिनौ ॥

'९८९ रमिं क्रीडायाम्' । इदित्त्वादात्मनेपदे रमते । "व्याङ्परे०" ३।३।१०५ इति परस्मैपदे विरमति, आरमति, परिरमति । "वोपात्" ३।३।१०६ उपरमति, उपरमते वा । संतापो मैत्रमुपरमति, उपरमते वा; अन्तर्भावितण्यर्थोऽयं सकर्मकः । रेमे । "यमिरमि०" ४।२।५५ इति इटि सेऽन्ते च व्यरंसीत्, व्यरंसिष्टाम् । यङि रंरम्यते । यङ्लुपि रंरन्ति । अनुस्वारेत्त्वान्नेट्, रन्ता, रन्तुम् । "भव्यगेय०" ५।१।७ इति कर्तरि निपातनाद्ये रम्यः । नन्द्याद्यने रमणः । "रम्यादिभ्यः०" ५।३।१२६ इति कर्तर्यनटि रमणी । "वा ज्वला०" ५।१।६२ इति णे रामः, रामा । अचि रमः, रमा । "शोकापनुद०" ५।१।१४३ इति निपातनात् के स्तम्बेरमः हस्ती । उणादौ "पुतपित्त०" (उ० २०४) इति निपातनात् सूरतो दमितो हस्ती, अन्यो वा दान्तः । "नीनूरमि०" (उ० २२७) इति किति थे रथः । "पथयूथ०" (उ० २३१) इति निपातनात् सूरथो दान्तः । "रमेस्त च" (उ० २६४) इति ने रत्नम् । "कृशृ०" (उ० ३२९) इति अभे रमभः प्रहर्षः । "चकिरमिविकसेरुच्चास्य" (उ० ३९३) इति रे रुम्रः अरुणः । रक्ष इति तु रह इति च रक्षिरह्योः असि । केचित्तु यमूं उपरमे, रमूङ् क्रीडायाम् इति ऊदितौ ज्वलादौ अधीयते, तन्मते ऊदित्त्वात् क्त्वि वेट्, यत्वा यमित्वा, रत्वा रमित्वा ॥

'९९० षहि मर्षणे' । मर्षणं क्षमा । "षः सो०" २।३।९८ इति सत्वे इदित्त्वादात्मनेपदे सहते । परोक्षायाम् अनादेशादित्वात् "अनादेशादे०" ४।१।२४ इत्येत्वे द्वित्वाभावे च सेहे । षोपदेशत्वात् "नाम्यन्तस्था०" २।३।१५ इति षत्वे णौ ङे असीषहत् । "असोङ०" २।३।४८ इति षत्वे परिषहते, निषहते, विषहते । "स्तुस्वञ्जश्चाटि नवा" २।३।४९ पर्यषहत, पर्यसहत, न्यषहत, न्यसहत, व्यषहत, व्यसहत । "असोङ०" २।३।४८ इति वर्जनात् सोढ्योः षत्वाभावे परिसोढः,

---

१. "किलि-पिलि०" (उ० ६०८) इत्यनेन रुहं बीज जन्मनि इत्यस्माद् धातोः इप्रत्ययेऽपि रोहिः—सस्यं जन्म च भवति ॥

निसोढः, विसोढः । णौ ङे पर्यसीषहत्, अत्र पूर्वस्य न षत्वम्, उत्तरस्य[1] तु "नाम्यन्तस्था०" २।३।१५ इति स्यादेव । सनि षत्वापन्ने "णिस्तोरेवा०" २।३।३७ इति नियमात् षत्वाभावे सिसहिषते । "णिस्तोरेवा०" २।३।३७ इत्यत्र ण्यन्तस्यापि सहेर्वर्जनाद् न षत्वम्, सिसाहयिषति । साक्षादादौ पाठात् षत्वाभावे अनटि गणनिपातनाद् एत्वे च विसहनेकृत्य । "दाश्वत्–साह्वत्०" ४।१।१५ इति निपातनात् क्वसौ साह्वान् । "शकितकि०" ५।१।२९ इति ये सह्यम् । "वा ज्वला०" ५।१।६२ इति णे साहः, अचि सहः । नन्द्याद्यने सहनः । क्विपि 'गतिकारकस्य०" ३।२।८५ इति दीर्घे जलासट् । ग्रहादित्वाद् णिनि उत्साही । "साहिसाति०" ५।१।५९ इति शे साहयः । "सर्वात् सहश्च" ५।१।१११ इति खे सर्वंसहः । "भ्राज्यलंकृग्०" ५।२।२८ इति इष्णौ सहनशीलः सहिष्णुः । "लू–धू–सू०" ५।२।८७ इति इत्रे सहित्रम् । "सहलुभे०" ४।४।४६ इति तादौ अशिति वेटि सोढा, सहिता । वेट्त्वात् क्तयोर्नेट्, सोढः, सोढवान् । "शकधृष०" ५।४।९० इति तुमि सहते भोक्तुम् । उणादौ "ऋञ्जि–रञ्जि०" (उ० २७९) इति असाने सहसानः दृढः । "मस्यसि०" (उ० ६९९) इत्युरौ सहुरिः भूः । "सहेः षष् च" (उ० ९५१) इति क्विपि षट् । "अस्" (उ० ९५२) इत्यसि सहः बलम् । षहण् मर्पणे [ ९।४१५ ], "युजादेर्नवा" ३।४।१८ इति वा णिचि साहयति । 'सहति कलभेभ्यः परिभवम्' ॥

"वृत् ज्वलादिः" । ज्वलादयो वृत्ताः, समाप्ता इत्यर्थः ॥

अथ यजादयो नव श्विवदवर्जा अनिटश्च वर्णक्रमेण दर्श्यन्ते, तत्रापि पूर्वाचार्यानुरोधेनादौ—

'९९१ यजीं देवपूजासंगतिकरणदानेषु' । ईदित्त्वाद् "ईगितः" ३।३।९५ इति फलवत्कर्तर्यात्मनेपदम् । अन्यत्र "शेषात् परस्मै" ३।३।१०० इति परस्मैपदम् । यजते, यजति । "यजादिवश्०" ४।१।७२ इति पूर्वस्य य्वृति इयाज । "यजादि वचेः०" ४।१।७९ इति य्वृति इज्यते, ईजे, ईजुः । यङि यायज्यते । यङ्लुपि यायजीति, यायष्टि । अनुस्वारेत्त्वान्नेट्, यष्टा, यष्टुम् । "यजेर्यज्ञाङ्गे" ४।१।११४ इति गत्वप्रतिषेधाद् घञि प्रयाजः, अनुयाजः । यज्ञाङ्गादन्यत्र गत्वे यागः ।

१. निस्तो° इति मु० ॥

"त्यजयज०"[1] ४।१।११८ इति घ्यणि गत्वप्रतिषेधाद् याज्यम्, अत एव वचनाद् घ्यण् अपि, "शकितकि०" ५।१।२९ इति ये यज्यम्, णके याजकः। "कर्मजा तृचा च" ३।१।८३ इति निषिद्धोऽपि याजकादित्वात् षष्ठीसमासः, नृपयाजकः। क्विपि "यजसृज०" २।१।८७ इति षापवादे "ऋत्विज्दिश्०"[2] २।१।६९ इति गे ऋतौ यजति ऋत्विक्। "करणाद्यजो भूते" ५।१।१५८ इति णिनि अग्निष्टोमयाजी। "सुयजो०" ५।१।१७२ इति ङ्वनिपि यज्वा। "पूङ्यजः०" ५।२।२३ इति शाने यजमानः। "यजिजपि०" ५।२।४७ इति यङन्ताद् ऊके यायजनशीलो यायजूकः। "यजिस्वपि०" ५।३।८५ इति ने यज्ञः। "आस्यटि०" ५।३।९७ इति स्त्रियां भावे क्यपि इज्या। "श्वादिभ्यः" ५।३।९२ इति क्तौ इज्यतेऽनया इष्टिः। उणादौ "प्लुञ्ज्ञा०" (उ० ६४६) इति तौ यष्टिः। "स्यर्ति०" (उ० ९९७) इत्युसि यजुः अच्छन्दाः श्रुतिः॥

## अथैदन्तास्त्रयः॥

'९९२ वेंग् तन्तुसन्ताने'। गित्त्वात् "ईगितः" ३।३।९५ इति फलवत्कर्तर्यात्मनेपदम्। अन्यत्र "शेषात् परस्म" ३।३।१०० इति परस्मैपदम्; वयते, वयति। "वेर्वय्" ४।४।१९ इति वा वयादेशे "यजादिवश्०" ४।१।७२ इति पूर्वस्य य्वृति उवाय, उवयिथ। "यजादिवचेः०" ४।१।७९ इति य्वृति "न वयो य्" ४।१।७३ इति यस्य प्रतिषेधे ऊयतुः, ऊयुः। वयादेशाभावपक्षे "वेरयः" ४।१।७४ इति पूर्वस्य य्वृत्प्रतिषेधे ववौ। थवि "सृजिदृशि०" ४।४।७८ इति वा नेटि वविथ, ववाथ। "अविति वा" ४।१।७५ इति वा य्वृति द्वित्वे "वार्णात् प्राकृतं बलीयः" [ तु० न्याय० ४४ ] इति पूर्वमुवादेशे समानदीर्घे च ऊवतुः, ऊवुः; पक्षे ववतुः, ववुः। अनुस्वारेत्त्वान्नेट्, वाता, वातुम्, वातव्यम्। णौ "पाशाछा०" ४।२।२० इति ये वाययति। "ज्यश्च यपि" ४।१।७६ इति य्वृन्निषेधे प्रवाय, उपवाय। "य एच्चातः" ५।१।२८ इति ये वेयः पटः। "उपसर्गादातो०" ५।१।५६ इति डे प्रवः। "तन्व्यधी०" ५।१।६४ इति णे वायः। "आतो डो०" ५।१।७६ इत्यत्र वावर्जनात् कर्मणोऽणि तन्तुवायः मनि सुवामा। वनि सुवावा। क्वनिपि "यजादि०" ४।१।७९ इति य्वृति "दीर्घमवो०" ४।१।१०३ इत्यत्र वेगो वर्जनाद् दीर्घाभावे "ह्रस्वस्य०" ४।४।११३ इति तागमे सुत्वा [ सु+उत्वा ], विचि

१. "त्यज्यज०" इति मुद्रिते सर्वासु प्रतिषु च, अत्रापि अग्रेऽपि॥

२. "ऋत्विग्दिग्०" इति मुद्रिते सर्वासु प्रतिषु च, अत्रापि अग्रेऽपि॥

सुवाः, क्विपि ऊत् । क्ते "यजादि०" ४।१।७९ इति य्वृति "दीर्घमवोऽन्त्यम्" ४।१।१०३ इत्यत्र वावर्जनात् दीर्घाभावे उतः, उतवान् । ऊयते इत्यत्र तु य्वृति "दीर्घश्च्वियङ्०" ४।३।१०८ इति दीर्घः । क्तौ उतिः । ऊतिरिति तु ऊयैङ् तन्तुसन्ताने [१८००] इत्यस्य क्तौ । उणादौ "वेगो डित्" (उ० ६२८) इति इचौ वीचिः । "सात्मन्नात्मन्०" (उ० ९१६) इति मनि निपातनाद् वेमा, वेम तन्तुवायोपकरणम् । विः इति तु वेतेः डौ [" नीवीप्रह्वभ्यो डित् " (उ० ६१६ ) ॥

'९९३ व्येंग् संवरणे' । संवरणम् आच्छादनम् । व्ययते, व्ययति । "व्यस्थव्णवि" ४।२।३ इति आत्वाभावे "ज्याव्ये०" ४।१।७१ इति पूर्वस्य इत्वे संविव्याय । "सृजिदृशि०" ४।४।७८ इति थवि विकल्पापवादे "ऋवृ०" ४।४।८० इति इटि संविव्ययिथ, अत्र परोक्षाश्रयत्वेन "बहिरङ्गमित्वमन्तरङ्गे दीर्घे असिद्धम्" [तु० न्याय० २०] इति "भ्वादे०" २।१।६३ इति पूर्वस्य दीर्घाभावः । "यजादिवचेः०" ४।१।७९ इति य्वृति "योऽनेकस्वरस्य" २।१।५६ इति यत्वे च संविव्यतुः, संविव्युः । "यमिरमि०" ४।२।५५ इति इटि सेऽन्ते च अव्यासीत्, अव्यासिष्टाम् । यङि "व्येस्यमो०" ४।१।८५ इति य्वृति संवेवीयते । यपि "व्यः" ४।१।७७ इति य्वृन्निषेधे उपव्याय । "संपरेर्वा" ४।१।७८ संव्याय, संवीय; परिव्याय, परिवीय । क्ये वीयते । णौ "पाशाछा०" ४।२।२० इति ये व्याययति । अनुस्वारेत्त्वान्नेट्, संव्याता, संव्यातुम् । "य एच्चातः" ५।१।२८ इति ये व्येयम् । नीविः इति तु नयतेः औणादिके ङ्वौ [ जॄशॄ० (उ० ७०५)] ॥

'९९४ ह्वेंग् स्पर्धाशब्दयोः' । ह्वयते, ह्वयति । "ह्वः स्पर्धे" ३।३।५६ इत्यात्मनेपदे मल्लो मल्लम् आह्वयते । "संनिवेः" ३।३।५७ संह्वयते, निह्वयते, विह्वयते । "उपात्" ३।३।५८ उपह्वयते । क्ये "यजादिवचेः०" ४।१।७९ इति य्वृति आहूयते । "द्वित्वे ह्वः" ४ १।८७ इति य्वृति जुहाव, जुहुवतुः । थवि "सृजिदृशि०" ४।४।७८ इति वा नेटि जुहोथ, जुहविथ । सनि जुहूषति । यङि जोहूयते । "णौ ङसनि" ४।१।८८ इति य्वृति अजूहवत्, जुहावयिषति । अत्र णौ विषये य्वृद् इति "पाशाछासा०" ४।२।२० इति योऽन्तो न भवति । "पाशा०" ४।२।२० इति ये आह्वाययति । अनुस्वारेत्त्वान्नेट्, आह्वाता, आह्वातुम् । अद्यतन्यां "ह्वालिप्०" ३।४।६२ इत्यङि आह्वत् । "वाऽऽत्मने" ३।४।६३ आह्वत, आह्वास्त । "उपसर्गादातो०" ५।१।५६ इति डे आह्वः ।

१. सात्मना° इति मु० ॥

" तनूव्यधी० " ५।१।६४ इति णे ह्वायः । " आतो डो० " ५।१।७६ इत्यत्र ह्वावर्जनात् कर्मणोऽणि स्वर्गह्वायः । " ह्वः समाह्वयाह्वयौ द्यूतनाम्नोः " ५।३।४१ इत्यलि निपातनात् समाह्वयः प्राणिद्यूतम्, आह्वयः संज्ञा । " न्यभ्युपवेर्वाश्चोत् " ५।३।४२ इत्यलि निहवः, अभिहवः, उपहवः । यङ्लुपि निजोहवः । "आङो युद्धे" ५।३।४३ आहवो युद्धम्, आह्वायः अन्यः । " आहावो निपानम् " ५।३।४४ आहूयन्ते पानाय गावो यत्रेति आहावो निपानम् । " भावेऽनुपसर्गात् " ५।३।४५ हवः । कर्मणि घञि ह्वायः । उणादौ " तीवरधीवर० " ( उ० ४४४ ) इति वरटि निपातनाद् उपह्वरं सन्धिः ॥

## अथ पान्तः ॥

'९९५ डुवपीं बीजसन्ताने' । बीजानां संतानः क्षेत्रे विस्तारणम् । वपते, वपति । " नेर्ङ्मादा० " २।३।७९ इति नेर्णत्वे प्रणिवपते । " यजादिवशः० " ४।१।७२ इति पूर्वस्य य्वृति उवाप, " यजादिवचेः० " ४।१।७९ इति य्वृति ऊपे । क्ये उप्यते । यङि वावप्यते । यङ्लुपि वावपीति, वावप्ति । " आसुयु० " ५।१।२० इति यापवादे घ्यणि वाप्यम् । अचि वपः । कर्मणोऽणि बीजवापः । अनुस्वारेत्त्वान्नेट्, वप्ता[1], उप्तः, उप्तवान् । ड्वित्त्वात् त्रिमकि उप्त्रिमम् । घञि परिवापः । भिदादित्वाद् अङि वपा मेदः । उप्तिः अन्या । उणादौ "भापाचणि०" ( उ० २९६ ) इति पः, वप्पः पिता । " मीवृधि० " ( उ० ३८७ ) इति रे वप्रः केदारः । " कमिवमि० " ( उ० ६१८ ) इति णिदिः, वापिः । "रुघर्ति०" ( उ० ९९७ ) इति उसि वपुः ॥

## अथ हान्तः ॥

'९९६ वहीं प्रापणे' । वहते, वहति । " नेर्ङ्मादा० " २।३।७९ इति नेर्णत्वे प्रणिवहते । " प्राद्वहः " ३।३।१०३ " परेर्मृषश्च " ३।३।१०४ इति फलवत्कर्तर्यपि परस्मैपदे प्रवहति, परिवहति । " यजादिवशः० " ४।१।७२ इति पूर्वस्य य्वृति उवाह । " यजादिवचेः० " ४।१।७९ इति य्वृति ऊहे, ऊहुः । क्ये उह्यते । यङि वावह्यते । यङ्लुपि वावहीति, वावोढि । अनुस्वारेत्त्वान्नेट्, वोढा, ऊढः, ऊढवान् । घञि प्रवाहः । " गोचरसंचर० " ५।३।१३१ इति निपातनाद् घञपवादे घे वहः वृषस्कन्धः । " वह्यं करणे " ५।१।३४ इति निपातनाद् ये वह्यं शकटम्,

1. वप्ता तु जनकः ( अ. चि ३।२२० ) ॥

वोढम् अन्यद् । ण्यन्तादचि वाहः, उदकस्य वाहः उदवाहः, अत्र "नाम्न्युत्तरपदस्य०" ३।२।१०७ इति उदादेशः । "कूलादुद्रुजोद्वहः" ५।१।१२२ इति खशि कूलमुद्वहः समुद्रः । णौ करणेऽनटि वाहनम्, प्रगतानि वाहनानि यस्य सः प्रवाहणः, अत्र "पूर्वपद-स्थान्नाम्न्यगः" २।३।६४ इति णत्वम् । अजा अस्मिन् उह्यन्ते इति व्यञ्जनाद् घञि "ङ्यापो बहुलं नाम्नि" २।४।९९ इति ह्रस्वे च अजवाहो नाम ग्रामः । "कर्तुर्जीव०" ५।४।६९ इति णमि पुरुषवाहं वहति । उणादौ "वन्धिवहि०" (उ० ४५९) इति इत्रे वहित्रं वाहनं वहनं च । "वीयुसुवह्यगिभ्यो निः" (उ० ६७७) वह्निः । "वहेर्ध च" (उ० ८३२) इत्यूः वधूः ॥

## अथ परस्मैपदिनः त्रयः ॥

'९९७ ट्वोश्वि गतिवृद्ध्योः' । श्वयति, श्वयिता । क्ये "यजादिवचेः०" ४।१।७९ इति य्वृति शूयते । "वा परोक्षा–यङि" ४।१।९० इति वा य्वृति शुशाव, शिश्वाय । यङि शोशूयते, शेश्वीयते । यङ्लुपि शोशवीति, शोशोति, शेश्वयीति, शेश्वेति । णौ ङसनपरे "श्वेर्वा" ४।१।८९ इति वा य्वृति अशूशुवत्, अशिश्वयत्, शुशावयिषति, शिश्वाययिषति । "ऋदिच्छ्वि०" ३।४।६५ इति वाऽङि "श्वयत्यसूवच०" ४।३।१०३ इति श्वादेशे अश्वत् । "ट्धेश्वेर्वा" ३।४।५९ इति वा ङे अशिश्वियत्, पक्षे सिचि "न श्विजागृ०" ४।३।४९ इति वृद्धेः प्रतिषेधाद् गुणे अश्वयीत् । "य एचातः" ५।१।२८ इति ये श्वेयम् । ओदित्त्वात् "सूयत्याद्यो०" ४।२।७० इति क्तयोस्तस्य नत्वे "डीयश्व्यै०" ४।४।६१ इति इडभावे च शूनः, शूनवान् । ट्वित्त्वादथुः, श्वयथुः । स्त्रियां क्तौ शूतिः । क्त्वि श्वयित्वा, "क्त्वा" ४।३।२९ इति क्त्वाभावादत्र गुणः । उणादौ "श्वन्मातरिश्वन्०" (उ० ९०२) इति अनि निपातनात् श्वा मातरिश्वा ॥

'९९८ वद व्यक्तायां वाचि' । वदति । "दीप्तिज्ञान०" ३।३।७८ इति आत्मनेपदे वदते विद्वान् स्याद्वादे, वदन् दीप्यते इत्यर्थः । "व्यक्तवाचां सहोक्तौ" ३।३।७९ संप्रवदन्ते द्विजाः । "विवादे वा" ३।३।८० विप्रवदन्ते, विप्रवदन्ति वा मौहूर्तिकाः । "अनोः कर्मण्यसति" ३।३।८१ अनुवदते कठः कालापस्य । "वदोऽपात्" ३।३।९७ इति फलवत्कर्तरि अपवदते, अन्यत्र अपवदति । "यजादिवचेः०" ४।१।७९ इति य्वृति क्ये उद्यते । "यजादिवश्०" ४।१।७२ इति पूर्वस्य य्वृति उवाद । "स्क्रसृवृ०" ४।४।८१ इति इटि उवदिथ । "वदव्रज०" ४।३।४८ इति वृद्धौ अवादीत् । णौ "ईगितः" ३।३।९५ इति फलवत्कर्तरि

आत्मनेपदे "अणिगि प्राणि०" ३।३।१०७ इति परस्मैपदेनापोदिते "परिमुहा०" ३।३।९४ इति पुनर्विहिते वदति चैत्रः। वादयते चैत्रं मैत्रः, अत्र "गतिबोधा०" २।२।५ इत्यणिक्कर्तुः कर्मत्वम्। फलवतोऽन्यत्र "शेषात् परस्मै" ३।३।१०० इति परस्मैपदे वादयति चैत्रं मैत्रः। वदिता, वदितुम्। "ऋवर्ण०" ५।१।१७ इति घ्यणि वाद्यम्। "वर्योपसर्या०" ५।१।३२ इति निपातनाद् ये अवद्यम् गर्ह्यम्, अनुद्यम् अन्यत्। "नाम्नो वदः क्यप् च" ५।१।३५ ब्रह्मोद्या कथा। ये ब्रह्मवद्या। "खेयमृषोद्ये" ५।१।३८ इति निपातनात् क्यपि मृषोद्यम्। अचि वदः। "चराचर०" ४।१।१३ इति निपातनाद् वदावदः। लिहाद्यचि श्लोकवदः। "प्रियवशाद् वदः" ५।१।१०७ इति खे प्रियंवदः, वशंवदः। "संपरिव्यनुप्राद् वदः" ५।२।५८ इति घिनणि संवदनशीलः संवादी। एवं परिवादी। "वादेश्च णकः" ५।२।६७ इति णौ णके परिवादनशीलः परिवादकः। "यजिजपि०" ५।२।४७ इति यङन्तादूके वावदूकः। घञि वादः। ग्रहादित्वाद् इटि उदितिः। क्त्वि उदित्वा। "गत्यर्थ०" ३।१।८ इति गतित्वे "गतिक्व०" ३।१।४२ इति समासे क्त्वो यपि अच्छोद्य। उणादौ "वदिसहिभ्यामान्यः" (उ० ३८१) वदान्यो दाता प्रियवाक् च। वदन्यः इति तु वदने साधुः इति साधौ ये।[1] "भृमृ०" (उ० ४६०) इति णिति इत्रे वादित्रम् आतोद्यम्। "कमिवमि०" (उ० ६१८) इति णिदिः, वादिः वाग्मी। "मावावद्य०" (उ० ५६४) इति से वत्सः॥

'९९९. वसं निवासे'[2] वसति। "यजादिवशः०" ४।१।७२ इति पूर्वस्य य्वृति उवास। "यजादिवचेः०" ४।१।७९ इति य्वृति "घस्वसः" २।३।३६ इति षत्वे ऊषतुः, ऊषुः। क्ये उष्यते। "उपान्वध्याङ्वसः" २।२।२१ इति आधारस्य कर्मत्वे ग्रामम् उपवसति, अनुवसति, अधिवसति, आवसति, अन्वादिसाहचर्याद् वासार्थस्यैव उपस्य ग्रहणम्; तेन भोजननिवृत्त्यर्थेन उपेन योगे कर्मत्वं न भवति। यद्वा नात्र वसेः उपपूर्वस्य ग्राम आधारः, किन्तु वसेः। "ग्रामे वसन् त्रिरात्रमुपवसति" इत्युपवस्य आधारस्य त्रिरात्रस्य कर्मता स्यादेव। थवि "सृजिदृशि०" ४।४।७८ इति वा नेटि उवस्थ, उवसिथ। णौ "ईंगितः" ३।३।९५ इति आत्मनेपदे 'अणिगि प्राणि०" ३।३।१०७ इति परस्मैपदेनापोदिते "परिमुहा०" ३।३।९४ इति फलवत्कर्तरि पुनर्विहिते वसति चैत्रः, वासयते चैत्रं मैत्रः, अत्र

---

१. इति तु सा° इति मु०॥

२. तुलना, महाभाष्य, १।४।४८॥

"गतिबोधा०" २।२।५ इत्यणिक्कर्तुः कर्मत्वम् । अनुस्वारेत्त्वान्नेट्, निवत्स्यति वस्तुम् । "क्षुधवसस्तेषाम्" ४।४।४३ इति इटि उषितः, उषितवान्, उषित्वा; अत्र "क्षुधक्लिश०" ४।३।३१ इति क्त्वः कित्त्वाद् "यजादि०" ४।१।७९ इति य्वृत् । "रुच्याव्यथ्य०" ५।१।६ इति कर्तरि निपातनात् तव्यणि वास्तव्यः । "वाधारे०" ५।१।२१ इति घ्यणि वा निपातनात् अमावस्या, अमावास्या । "अजातेः शीले" ५।१।१५४ इति णिनि "शयवासि०" ३।२।२५ इति सप्तम्या वा लुपि ग्रामवासी, ग्रामेवासी । "श्रुसद०" ५।२।१ इति भूते वा परोक्षा, अनूवास; पक्षे अन्ववात्सीत्, अन्ववसत् । "तत्र क्वसुकानौ०" ५।२।२ इति क्वसौ "घसेकस्वरा०" ४।४।८२ इति इटि अनूषिवान् गुरुं शिष्यः । "संप्राद् वसात्" ५।२।६१ इति घिनणि संवसनशीलः संवासी । एवं प्रवासी । उणादौ "तॄजि०" (उ० २२१) इत्यन्ते वसन्तः । "उपसर्गाद् वसः" (उ० २३३) इति अथे आवसथः । भेषजादिट्यणि आवसथ्यम् । "प्याधा०" (उ० २५८) इति ने वस्नं वस्त्रम्, मूल्यं च । "ऋज्यजि०" (उ० ३८८) इति किति रे उस्रः रश्मिः, बाहुलकात् पत्वाभावः । णौ "ऋच्छिचटि०" (उ० ३९७) इति अरे वासरः । "मीव्यजि०" (उ० ४३९) इति सरे वत्सरः । "कृशॄकुटि०" (उ० ६१९) इति वा णिदिः, वासिः । ङ्याम् वासी तक्षभाण्डम् । वसिः शय्या । "प्लुञ्ज्ञा०" (उ० ६४६) इति तौ वस्तिः मेढ्रोर्ध्वं वस्त्रदशाः गुदं स्नेहनोपकरणं च । "खल्यमि०" (उ० ६५३) इति अतौ वसतिः । "वस्यर्तिभ्यामातिः" (उ० ६६२) वसातयः राष्ट्रम् । "भृमृतॄ" (उ० ७१६) इति औ वसु द्रव्यम् । "वसेर्णिद् वा" (उ० ७७४) इति तुनि वस्तु पदार्थः । वास्तु गृहं गृहभूमिश्च । उप इति तु उपेः "मिथिरञ्ज्यु०" (उ० ९७१) इति कित्यसि । वसिक् आच्छादने [ २।५९ ], वस्ते । वस्कच् स्तम्भे [ ३।८३ ], वस्यति । उणादौ "दम्यमि०" (उ० २००) इति ते वस्तः छागः, वस्तिण् अर्दने इत्यस्य वाऽचि । वसण् स्नेहच्छेदावहरणेषु [ ९।१९४ ], वासयति ॥

"वृत् यजादिः" । वर्तिताः समापिता यजादय इत्यर्थः ॥

अथ घटादयो वर्णक्रमेणाऽऽभ्रादिसमाप्तेर्वक्ष्यन्ते, तत्र घटेः पूर्वाचार्यप्रसिद्ध्या पूर्वं निर्देशः ॥

'१००० घटिष् चेष्टायाम्' । चेष्टा ईहा । इदित्त्वात् "इङितः०" ३।३।२२ इत्यात्मनेपदे घटते, जघटे । सनि जिघटिषते । यङि जाघट्यते । क्ते घटितम् । णौ "घटादेर्ह्रस्वो०" ४।२।२४ इति ह्रस्वे घटयति । "–दीर्घस्तु वा जिणम्परे" अघाटि, अघटि, घाटिष्यते, घटिष्यते, घाटंघाटम् घटंघटम् । "णिवेत्त्या०" ५।३।१११ इत्यने घटना । षित्त्वाद् अङि घटा । इह घटादीनामनेकार्थत्वेऽपि पठितार्थेषु एव घटादिकार्यविज्ञानम्, तेन उद्घाटयति, "कमलवनोद्घाटनं कुर्वते ये" [ सूर्यशतक, २ ], "प्रविघाटयिता समुत्पतन् हरिदश्वः कमलाकरानिव" [ किरातार्जुनीयम्, २।४६ ], उद्घाटितः कपाटः । श्रापयति, स्मारयति, दारयति, नाटयति, फाणयति, छादयति, प्रमादयति, चालयति इत्यादौ चेष्टाद्यर्थाभावे "घटादेर्ह्रस्वो०" ४।२।२४ इति ह्रस्वो न भवति । विघटयति इति तु अजन्तस्य अङन्तस्य वा "णिज् बहुलं नाम्नः०" ३।४।४२ इति करोत्यर्थे णिचि रूपम् । अन्ये तु ये घटादयोऽन्यत्र पठिताः तेषां योऽर्थ उपात्तः तत्रैव ह्रस्वादिकार्यं, ये तु अत्रैव पठ्यन्ते तेषां सामान्येनाऽनेकार्थत्वाद् इति ब्रुवते; तन्मते विघटयति इति चेष्टाभावे ह्रस्वः स्यादेव । कमलवनोद्घाटनम्, प्रविघाटयिता, समुत्पतन् इत्यादि तु चुरादौ भासार्थस्य घटेः णिचि यमि–ज्ञा–वहिवर्जितस्य घटादिकार्यनिषेधाद् ह्रस्वाभावे रूपम्, यथा शमिणो णिचि निशामयते, चेष्टार्थस्यैव वा घञन्तस्य णिचि । इत्थं च "उन्नामिताखिलमहीधरकन्दरस्य" [ ], चौरस्योत्क्राथयति इत्यादि सिद्धम् । संक्रामयति इति तु संक्रामं करोति इति[1] णिचि । "शकधृष०" ५।४।९० इति तुमि घटते भोक्तुम् । अचि घटः । इह घटादौ केऽप्यत्रैवाधीताः प्रकृत्यादिकार्यभाजो न्याय्यशब्प्रत्ययाश्च । अन्ये तु स्वस्थानोक्तकार्यभाजः षित्त्वह्रस्वाद्यर्थमनूद्यन्ते इति यथायथमुत्प्रेक्ष्यम् ॥

## अथ जान्तः ॥

'१००१ क्षजुङ् गतिदानयोः' । उदित्त्वान्ने क्षञ्जते, चक्षञ्जे, क्षञ्जिता । क्ते क्षञ्जितः । "क्तटो०" ५।३।१०६ इत्यः क्षञ्जा । णौ क्षञ्जयति । घटादिपाठबलाद्

---

१. तुलना, क्षी. त. पृ. १०५ ॥

णौ ञिणम्परे अनेकव्यञ्जनव्यवधानेऽपि वा दीर्घे अक्षाञ्जि, अक्षञ्जि, क्षाञ्जंक्षाञ्जम्, क्षञ्जंक्षञ्जम् । एवं कन्दि–क्रदि–क्लन्दि–दक्षीणां ज्ञेयम्; अत एव णौ ञिणम्परे ह्रस्वमविकल्प्य दीर्घविकल्पः । क्षजुण् कृच्छ्रजीवने [ ९।१८ ], क्षजयति । कौशिकस्तु क्षजौ विपर्ययेणाधीते ॥

## अथ थान्तौ ॥

'१००२ व्यथिप् भयचलनयोः' । दुःखेऽप्यन्ये । व्यथते । "ज्याव्येव्यधि०" ४।१।७१ इति पूर्वस्य इत्वे विव्यथे । व्यथिता । णौ "घटादेः०" ४।२।२४ इति ह्रस्वे व्यथयति । ञिणम्परे तु वा दीर्घे अव्याथि, अव्यथि, व्याथंव्याथम्, व्यथंव्यथम् । "रुच्याव्यथ्य०" ५।१।६ इति कर्तरि निपातनाद् ये अव्यथ्यः । भावे घ्यणि अव्याथ्यम् । ग्रहादित्वाद् णिनि अव्याथी । "जीण्–दृक्षि०" ५।२।७२ इति इनि अव्यथनशीलः अव्यथी । "इङितो०" ५।२।४४ इत्यने व्यथनः । षित्त्वादङि व्यथा । उणादौ "श्वशुर०" ( उ० ४२६ ) इत्युरे निपातनाद् विथुरो राक्षसः । "नञो व्यथेः" ( उ० ५५२ ) इति टिति इपे अव्यथिप सूर्यः, अव्यथिपी भूः ॥

'१००३ प्रथिप् प्रख्याने' । प्रख्यानं प्रसिद्धिः । प्रथते, पप्रथे, प्रथिता । णौ घटादित्वाद् ह्रस्वे प्रथयति । णौ ङे सन्वद्भावापवादे "स्मृदृत्वर०" ४।१।६५ इति पूर्वस्याऽतोऽत्वे अपप्रथत् । ञिणम्परे तु वा दीर्घे अप्राथि, अप्रथि, प्राथंप्राथम्, प्रथंप्रथम् । षित्त्वादङि प्रथा । उणादौ "सृणीकास्तीक०" ( उ० ५० ) इति ईके निपातनात् पृथ्वीका एला । "सृप्रथि०" ( उ० ३४७ ) इत्यमे प्रथमः । "प्रथेरिवट् पृथ् च" ( उ० ५२१ ) पृथिवी । "प्रथेर्लुक् च वा" ( उ० ६४७ ) इति तौ प्रति चादिः, प्रत्तिः प्रथनम् । "रमिपृथिभ्यामृच्च रस्य" ( उ० ७३० ) इत्यौ पृथुः । कुत्सितादौ कपि पृथुकः ॥

## अथ दान्ताः पञ्च ॥

'१००४ म्रदिप् मर्दने' । म्रदते, मम्रदे, म्रदिता । णौ घटादित्वाद् ह्रस्वे म्रदयति । "स्मृदृत्वर०" ४।१।६५ इति सन्वद्भावापवादे पूर्वस्याऽत्वे अमम्रदत् । षित्त्वादङि म्रदा । उणादौ मृद्वीका मृदीका चेति "मृदेर्वोऽन्तश्च वा" (उ० ४९) इति ईके मृद्नातेः । एवं मृदुः [ "पृकाहृषि०" ( उ० ७२९ ) ] ॥

'१००५ स्खदिष् स्खदने'। स्खदनं विदारणम्। स्खदते, चस्खदे, स्खदिता। षित्त्वादङि स्खदा। णौ घटादित्वाद् ह्रस्वे स्खदयति॥

'१००६ कदुङ् १००७ क्रदुङ् १००८ क्लदुङ् वैक्लव्ये'। विक्लवः कातरः, तस्य भावः कर्म वा वैक्लव्यम्। [1]वैकल्ये इति चन्द्रः। उदित्त्वान्ने कन्दते, क्रन्दते, क्लन्दते। "क्तेटो०" ५।३।१०६ इत्यः कन्दा, क्रन्दा, क्लन्दा। णौ कन्दयति, ञिणम्परे तु वा दीर्घः, अकान्दि, अकन्दि, कान्दंकान्दम्, कन्दंकन्दम्। एवं शेषयोरपि। क्रन्देः नन्द्याद्यने संक्रन्दनः। "इङितो०" ५।२।४४ इत्यने आक्रन्दनः। घञि आक्रन्दः। त्रयोऽप्येतेऽनुदितः षितश्च इति नन्दी; कदते, क्रदते, क्लदते, कदा, क्रदा, क्लदा। कदु-क्रदु-क्लदु रोदनाह्वानयोः [ १।३१५-३१६-३१७ ], कन्दति, क्रन्दति, क्लन्दति॥

## अथ पान्तः॥

'१००९ क्रपि कृपायाम्'। क्रपते, चक्रपे, क्रपिता। णौ घटादित्वाद् ह्रस्वे क्रपयति। "मृगयेच्छा०" ५।३।१०१ इति निपातनाद् अङि कृपा। कृपण इति तु "[2]कृपृवृ०" (उ० १८८) इति कित्यणे कृपेः॥

## अथ रान्तः॥

'१०१० ञित्वरिष् संभ्रमे'। संभ्रमः अत्र आशुकारिता। त्वरते, तत्वरे, त्वरिता। यङि तात्वर्यते। यङ्लुपि तात्वरीति। "भ्व्यवि०" ४।१।१०९ इति वस्य उपान्त्येन सहोटि तातूर्ति। षित्त्वादङि त्वरा। णौ घटादित्वाद् ह्रस्वे त्वरयति। डे सन्वद्भावापवादे "स्मृदृत्वर०" ४।१।६५ इति पूर्वस्याऽत्वे अतत्वरत्। ञित्त्वात् "ज्ञानेच्छा०" ५।२।९२ इति सति क्ते "श्वसजप०" ४।४।७५ इति वा नेटि त्वरितः, पक्षे "भ्व्यवि०" ४।१।१०९ इति वस्योपान्त्यस्वेन सहोटि तूर्णः। तूर्णिः इति तु तूरेः "कात्रावी०" (उ० ६३४) इति णौ॥

## अथ षान्तः॥

'१०११ प्रसिष् विस्तारे'। प्रसवे इत्यन्ये। प्रसते, पप्रसे, प्रसिता। षित्त्वादङि प्रसा। णौ घटादित्वाद् ह्रस्वे प्रसयति॥

---

१ मुद्रिते चान्द्रधातुपाठे तु वैक्लव्ये इति पाठः॥

२ "कृपृवृ०" इति मु०॥

## अथ क्षान्तः ॥

'१०१२ दक्षि हिंसागत्योः'। दक्षते, ददक्षे, दक्षिता। "क्तेटो०" ५।३।१०६ इत्यः, दक्षा। दक्षि शैघ्र्ये च इति अस्यैवार्थभेदाद् घटादिकार्यार्थं पुनः पाठः। णौ दक्षयति। ञिणम्परे तु वा दीर्घः; अदाक्षि, अदक्षि, दाक्षंदाक्षम्, दक्षंदक्षम् ॥

## अथ परस्मैपदिनः ॥

'१०१३ श्रां पाके'। श्रैं पाके, श्रांक् पाके इत्यस्य चेह घटादिकार्यार्थं पाठः। श्रायति श्राति वा कश्चित् तमन्यः प्रयुङ्क्ते, श्रपयति। श्रायति श्राति वा हविः स्वयमेव, तदन्येन प्रायुज्यते इति णौ घटादित्वाद् ह्रस्वे क्ते "श्रपेः प्रयोक्त्रैक्ये" ४।१।१०१ इति शृतादेशे शृतं हविः क्षीरं वा चैत्रेण। अन्यत्र श्रापयति धर्मः स्वेदयति इत्यर्थः। अत एव ज्ञापकादनेकार्थत्वं धातूनां सिद्धम् ॥

## अथ ऋदन्तः ॥

'१०१४ स्मृ आध्याने'। आध्यानम् उत्कं वा स्मरति। घटादित्वाद् ह्रस्वे स्मरयति। आध्यानादन्यत्र चित्तं स्मारयति, विस्मारयति। अन्यत्रोक्तस्यार्थविशेषे घटादिकार्यार्थमिह पाठः ॥

## अथ ॠदन्तौ ॥

'१०१५ दॄ भये'। दरति। "युवर्ण०" ५।३।२८ इत्यलि दरः। णौ घटादित्वाद् ह्रस्वे दरयति बलम्। भयादन्यत्र काष्ठं दारयति। उणादौ "शॄदॄ०" (उ० ८९४) इत्यदि दरन्नाम्ना जनपदः। दॄश् विदारणे [ ८।२८ ], दृणाति, दारयति काष्ठम्। अस्यैव घटादिकार्यार्थमिह पाठ इत्यन्ये। दीर्यते इति कर्मकर्तरि दिवादौ अपि अयम् अन्यैः पठ्यते, तन्मते कर्तर्यपि दीर्यते ॥

'१०१६ नॄ नये'। क्र्यादेः घटादिकार्यार्थं विरलोऽस्य पाठः। नृणन्तं प्रयुङ्क्ते, नरयति ॥

## अथ कान्ताश्चत्वारः सेटश्च ॥

'१०१७ ष्टक १०१८ स्तक प्रतीघाते'। "षः सो०" २।३।९८ इति सत्वे स्तकति। णौ घटादित्वाद् ह्रस्वे सनि षोपदेशत्वात् षत्वे तिष्टकयिषति ॥

'१०१८ स्तक'। स्तकति। णौ घटादित्वाद् ह्रस्वे षोपदेशत्वात् षत्वाभावे तिस्तकयिषति ॥

'१०१९ चक तृप्तौ च'। चकारात् प्रतीघाते। चकति। णौ घटादित्वाद् ह्रस्वे चकयति। क्ते चकितः। उणादौ "कठिचकि०" (उ० ४३३) इत्योरे चकोरः। चकि तृप्तिप्रतीघातयोः [ ३।६२१ ], चकते॥

'१०२० अक कुटिलायां गतौ'। अकति। णौ घटादित्वाद् ह्रस्वे अकयति। अनोकह इति तु अनितेः [1]ओकहे॥

## अथ खान्तः॥

'१०२१ कखे हसने'। कखति। एदित्त्वाद् "व्यञ्जनादे०" ४।३।४७ इति वा वृद्धेः "न श्विजागृ०" ४।३।४९ इति प्रतिषेधे अकखीत्। णौ घटादित्वाद् ह्रस्वे कखयति। किखिः इति तु "कोर्डिखिः" (उ० ६२६) इति कौतेः॥

## अथ गान्ता नव सेटश्च॥

'१०२२ अग अकवत्'। अक कुटिलायां गतौ पठितः, अयमपि तदर्थो लाघवार्थं तथा निर्दिश्यते, अगति। णौ घटादित्वाद् ह्रस्वे अगयति। उणादौ "भीवृधि०" (उ० ३८७) इति रे अग्रम्। "वीयुसुवह्य०" (उ० ६७७) इति नौ अग्निः॥

'१०२३ रगे शङ्कायाम्'। रगति। एदित्त्वाद् "व्यञ्जनादे०" ४।३।४७ इति वा वृद्धेः, "न श्विजागृ०" ४।३।४९ इति प्रतिषेधे अरगीत्। णौ घटादित्वाद् ह्रस्वे रगयति॥

'१०२४ लगे सङ्गे'। लगति। एदित्त्वाद् "व्यञ्जनादे०" ४।३।४७ इति वा वृद्धेः, "न श्विजागृ०" ४।३।४९ इति प्रतिषेधे अलगीत्। णौ घटादित्वाद् ह्रस्वे लगयति। "क्षुब्धविरिब्ध०" ४।४।७० इति क्ते निपातनाद् लग्नः सक्तः। लगितः अन्यः॥

'१०२५ ह्रगे १०२६ ह्लगे १०२७ षगे १०२८ सगे १०२९ ष्ठगे १०३० स्थगे संवरणे'। संवरणम् आच्छादनम्। ह्रगति। एदित्त्वाद् "व्यञ्जनादे०" ४।३।४७ इति वा वृद्धेः "न श्विजागृ०" ४।३।४९ इति प्रतिषेधे अह्रगीत। णौ घटादित्वाद् ह्रस्वे ह्रगयति॥

'१०२६ ह्लगे'। ह्लगति, अह्लगीत्, ह्लगयति॥

---

१ "अनेरोकहः" (उ० ५९५) इत्यनेन॥

'१०२७ षगे'। "षः सो०" २।३।९८ इति सत्वे सगति, असगीत्, सगयति। षोपदेशत्वात् षत्वे सिषगयिषति ॥

'१०२८ सगे'। सगति, असगीत्, सगयति, सिसगयिषति ॥

'१०२९ ष्ठगे'। "षः सो०" २।३।९८ इति सत्वे स्थगति, अस्थगीत्, स्थगयति। षोपदेशत्वात् षत्वे तिष्ठगयिषति ॥

'१०३० स्थगे'। स्थगति, अस्थगीत्, स्थगयति। षत्वाभावे तिस्थगयिषति ॥

## अथ टान्तास्त्रयः सेटश्च ॥

'१०३१ वट १०३२ भट परिभाषणे'। वटति, वटयति। भटति, भटयति। वट वेष्टने [ ११७६ ], वाटयति। भट भृतौ [ ११८४ ], भाटयति ॥

'१०३३ णट नतौ'। नटति। घटादित्वाद् ह्रस्वे नटयति शाखाम्। नृतौ तु नाटयति। नटण् अवस्यन्दने [ ९।२६ ], चौरस्योन्नाटयति ॥

## अथ डान्तास्त्रयः सेटश्च ॥

'१०३४ गड सेचने'। गडति। लत्वे गलति। णौ घटादित्वाद् ह्रस्वे गडयति। अचि गडयतीति गडः। "सुखं स्वपिति गौर्गडी" [ ]। उणादौ "तृजिभूवदि०" (उ० २२१) इत्यन्ते गडयन्तः, गडयन्ती। कडार इति तु कडतेः "अग्यङ्गि०" (उ० ४०५) इत्यारे। कडत्रम् कलत्रम् इत्यपि "वृगृनक्षि०" (उ० ४५६) इत्यत्रेऽस्यैव ॥

'१०३५ हेड वेष्टने'। हेडति, जिहेड, हेडिता। णौ घटादित्वाद् ह्रस्वे हिडयति; ह्रस्वविधानबलादेव गुणो नास्ति। ञिणम्परे तु वा दीर्घे अहीडि, अहिडि, हीडंहीडम्, हिडंहिडम्। ये तु णौ ञिणम्परे ह्रस्वमेव विकल्पयन्ति, तन्मते अहिडि, अहेडि, हिडंहिडम्, हेडंहेडम् ॥

'१०३६ लड जिह्वोन्मन्थने'। जिह्वाया उन्मन्थनम् जिह्वोन्मन्थनम्। णौ घटादित्वाद् ह्रस्वे लडयति जिह्वां कुक्कुरः। लत्वे 'जिह्वाशतान्युल्ललयत्यभीक्ष्णम्' [ ]। अन्यत्र लाडयति चित्रम्। लालयति बालम्। लालितः। लालितकः सेवकः। लालना। लाला। जिह्वोन्मन्थनयोः इत्येके, [1]तन्मतसङ्ग्रहार्थं जिह्वा

१ तन्मते इति मु० ॥

## अथ रान्तः सेट् च ॥

'१०५४ ज्वर रोगे'। ज्वरति। णौ ह्रस्वे ज्वरयति। जिणम्परे तु वा दीर्घे अज्वारि, अज्वरि, ज्वारंज्वारम्, ज्वरंज्वरम्। "रुजार्थस्या०" २।२।१३ इत्यत्र ज्वरेर्वर्जनाद् वा कर्मत्वाभावे द्वितीया एव, न तु षष्ठी; चौरं ज्वरयति ज्वरः। यङि जाज्वर्यते। यङ्लुपि जाज्वरीति, जाजूर्ति। क्ते ज्वरितः। क्विपि "मव्यवि०" ४।१।१०९ इति वस्योटि सुजूः। क्तौ जूर्तिः। "समः पृचैप्०" ५।२।५६ इति घिनणि संज्वरणशीलः संज्वारी। उणादौ "कावावी०" (उ० ६३४) इति णौ जूर्णिः ज्वरः॥

## अथ लान्ताश्चत्वारः सेटश्च ॥

'१०५५ चल कम्पने'। चलति। णौ ह्रस्वे चलयति शाखाम्। कम्पनादन्यत्र चालयति सूत्रं पर्यनुयुङ्क्ते। चालयति शीलं हरतीत्यर्थः। ज्वलादौ पठितोऽप्ययं घटादिकार्यार्थमिह पठ्यते॥

'१०५६ ह्वल १०५७ ह्मल चलने'। ह्वलति, ह्वलिता। णौ ह्रस्वे विह्वलयति, प्रह्वलयति। अचि विह्वलः॥

'१०५७ ह्मल'। ह्मलति, ह्मलिता। णौ ह्रस्वे प्रह्मलयति। "ज्वलह्वल०" ४।२।३२ इत्यनुपसर्गस्य वा ह्रस्वे ह्वलयति, ह्वालयति, ह्मलयति, ह्मालयति॥

'१०५८ ज्वल दीप्तौ च'। चकारात् चलने। प्रज्वलयति, संज्वलयति। "ज्वलह्वल०" ४।२।३२ इत्यनुपसर्गस्य वा ह्रस्वे ज्वलयति, ज्वालयति। ज्वलादौ पठितोऽप्ययं घटादिकार्यार्थमिहाधीतः। केचित्तु दलि-वलि-स्खलि-क्षपि-त्रपीणामपि घटादित्वमिच्छन्ति, तन्मते दलयति, वलयति, स्खलयति, क्षपयति, त्रपयति इत्यपि भवति॥

इत्याचार्यश्रीहेमचन्द्रविरचिते स्वोपज्ञशब्दानुशासनधातुपारायणे औत्सर्गिकशब्विकरणो निरनुबन्धो भ्वादिगणः सम्पूर्णः॥



# अथ अदादयः (२)

'१ अदं २ प्सांकू भक्षणे'। इहाविकरणेषु वर्णक्रमेण धातुषु पठितेषु पूर्वाचार्यप्रसिद्ध्यनुसरणेनाऽदेरादावुपन्यासः। कित्करणमदादिज्ञापनार्थं सर्वत्र ज्ञेयम्। "शेषात्परस्मै" ३।३।१०० इति परस्मैपदे "कर्तर्यनद्भ्यः०" ३।४।७१ इत्यदादि वर्जनाच्छवभावे च अत्ति। शतरि अदन्, "ऋदुदितः" १।४।७० इति धुटि नकारः। अदती। "क्रियाव्यतिहारे०" ३।३।२३ इत्यात्मनेपदे व्यत्यत्ते। "घस्लृ सन०" ४।४।१७ इति घस्लादेशे जिघत्सति। लृदित्त्वादङि अघसत्। "परोक्षायां नवा" ४।४।१८ जघास, जक्षतुः, जक्षुः, अत्र "गमहन०" ४।२।४४ इत्युपान्त्यलुकि, "अघोषे०" १।३।५० इति घस्य कत्वे, "नाम्यन्तस्था०" २।३।१५ इति षत्वम्। थवि "स्क्रसृवृ०" ४।४।८१ इति इटि जघसिथ। पक्षे आद, आदतुः, आदुः। थवि "सृजिदृशि०" ४।४।७८ इति विकल्पापवादे "ऋवृव्येऽद०" ४।४।८० इति इटि आदिथ। "अदश्चाट्" ४।४।९० इति दिस्योगादिरट्, आदत्, आदः। अनुस्वारेत्त्वान्नेट्, अत्ता, अत्स्यति। णौ "गतिबोधा०" २।२।५ इत्यत्र अदेर्वर्जनादणिकर्तुः कर्मत्वाभावे, आदयते पिण्डीं चैत्रेण। अत्र "चल्याहारार्थे०" ३।३।१०८ इति फलवत्कर्तर्यपि परस्मैपदापवादः, "परिमुहायमा०" ३।३।९४ इति आत्मनेपदम्। "यपि चादो०" ४।४।१६ इति जग्धादेशे क्त्वि जग्ध्वा प्रजग्ध्य गतः। क्तौ जग्धिः। "अद्यर्थाच्चा०" ५।१।१२ इति वाऽऽधारे क्ते इदमेषां जग्धम्। पक्षे कर्मणि क्ते जग्धमन्नम्। भावे जग्धमनेन। अन्नमिति तु "अदोऽनन्नात्" ५।१।१५० इति निर्देशादनेर्वा "प्याधा०" (उ० २५८) इति ने रूपम्। अचि प्रघसः। "अदोऽनन्नात्" ५।१।१५० इति क्विपि आमात्। कर्मणोऽणि अन्नादः। "क्रव्यात्क्रव्यादावाम-पक्वादौ" ५।१।१५१ क्रव्यात् आममांसादी, क्रव्यादः पक्वमांसादी। "सृघस्यदो०" ५।२।७३ इति मरकि अदनशीलः अद्मरः। "भूश्रूयदोऽल्" ५।३।२३ विघसः। उपसर्गाभावे घञि घासः। "न्यादो नवा" ५।३।२४ न्यादः निघसः, नन्द्यादित्वादने काकादनः। गौरादित्वाद् ङ्याम् काकादनी। तत्रैव पाठात् गवादनः। उणादौ "तङ्किवङ्क्य०" (उ० ६९२) इति रिः, अद्रिः। "शशदि०" (उ० ६९६) इति त्रिः अत्रिः। "अदेस्त्रिन्" (उ० ९२९) अत्त्री ऋषिः, अत्रिणौ।

च जिह्वाविषया क्रिया उन्मन्थनं च इति समाहारः । लडयति जिह्वाम् । ललयति दधि । लडण् उपसेवायाम् [ ९।५५ ], लाडयति । लड विलासे [ १।२५४ ], इत्यस्यैव अर्थविशेषे घटादिकार्यार्थमिह पाठः ॥

## अथ णान्ताः षट् सेटश्च ॥

'१०३७ फण १०३८ कण १०३९ रण गतौ' । फणति । णौ घटादित्वाद् ह्रस्वे फणयति । "जृभ्रम०" ४।१।२६ इति वा एत्वे द्वित्वाभावे च फेणतुः, पफणतुः, फेणुः, पफणुः । थवि "स्क्रसृवृ०" ४।४।८१ इति इटि फेणिथ, पफणिथ । ' क्षुब्धविरिब्ध०" ४।४।७० इति क्ते निपातनाद् अनायासे [1]फाण्टाभिः अद्भिः आचामेत् इति कदुष्णाभिः इति अनायासो गम्यते । आयासे तु फणितम् ॥

'१०३८ कण' । कणति । णौ घटादित्वाद् ह्रस्वे कणयति । णौ अचि कणयतीति कणः । "कणेमनस् तृप्तौ" ३।१।६ इति सूत्रनिर्देशाद् एत्वे कणेहत्य पयः पिबति, श्रद्धाघातं कृत्वा इत्यर्थः । तृप्तेरन्यत्र गतित्वाभावे कणे हत्वा मूषिकां गतः ॥

'१०३९ रण' । रणति । णौ घटादित्वाद् ह्रस्वे रणयति । गतेरन्यत्र फाणयति घटं निःस्नेहयतीत्यर्थः; काणयति राणयति शब्दयतीत्यर्थः । कणिरणी पूर्वाधीतौ घटादिकार्यार्थमिह पठितौ ॥

'१०४० चण हिंसादानयोश्च' । हिंसायां दाने चकाराद् गतौ । चणति । णौ घटादित्वाद् ह्रस्वे चणयति । शब्दे तु चाणयति । उणादौ "दृकृनृ०" ( उ० २७ ) इत्यके चणकः ॥

'१०४१ शण १०४२ श्रण दाने' । शणति । घटादित्वाद् ह्रस्वे शणयति । घञि शाणः ॥

'१०४२ श्रण' । श्रणति । णौ ह्रस्वे श्रणयति । दानादन्यत्र शाणयति, श्राणयति । श्रणण् दाने [ ९।७६ ] विश्राणयति ॥

## अथ थान्ताश्चत्वारः सेटश्च ॥

'१०४३ स्नथ १०४४ क्नथ १०४५ क्रथ १०४६ क्लथ हिंसार्थाः' । स्नथति, स्नथयति । क्नथति, क्नथयति । क्रथति, क्रथयति । चौरस्योत्क्राथयति

१. फाण्टा भिरिद्भरा॰ इति मु० ॥

इति तु यौजादिकस्य घञन्ताद् वा णिचि "जासनाटक्राथ०" २।२।१४ इति निर्देशाद् वा ह्रस्वाभावे ॥

'१०४६ क्लथ'। क्लथति, क्लथयति ॥

## अथ दान्तौ सेटौ च ॥

'१०४७ छद ऊर्जने'। ऊर्जनं प्राणनं बलं च। छदण् संवरणे इति पठिष्यमाणोऽपि ऊर्जने घटादिकार्यार्थमिह पठितः। छदयति अग्निः स्वार्थे णिच्, छादयन्तं प्रयुङ्क्ते इति णिग् वा। ऊर्जनादन्यत्र छादयति गृहं तृणैः ॥

'१०४८ मदै हर्षग्लपनयोः'। मदैच् हर्षे इति अनयोरर्थयोः घटादिकार्यार्थमिह पठितः। मदयति गुरुं शिष्यः। मदयति सुरा चैत्रम्, हर्षयतीत्यर्थः। [1]मदयति शत्रुम्, विमदयति शत्रुम्, ग्लपयतीत्यर्थः। अन्यत्रानेकार्थत्वाद् उन्मादयति, प्रमादयति ॥

## अथ नान्ताः पञ्च सेटश्च ॥

'१०४९ ष्टन १०५० स्तन १०५१ ध्वन शब्दे'। "षः सो०" २।३।९८ इति सत्वे स्तनति, स्तनयति। षोपदेशत्वात् "नाम्यन्तस्था०" २।३।१५ इति षत्वे तिष्टनयिषति ॥

'१०५० स्तन'। स्तनति, स्तनयति। अषोपदेशत्वात् षत्वाभावे तिस्तनयिषति ॥

'१०५१ ध्वन'। ध्वनति, ध्वनयति। दध्वान, ध्वनयन्नाशाः। अन्त्यौ पूर्वपठितौ अपि अर्थविशेषे घटादिकार्यार्थमिहाधीतौ। अनेकार्थत्वाद् अर्थान्तरे, स्तानयति। शब्दे अपि स्तानयति इत्यन्ये, ध्वानयति ॥

'१०५२ स्वन अवतंसने'। स्वनति। णौ ह्रस्वे स्वनयति, अवतंसयतीत्यर्थः। "जृभ्रम०" ४।१।२६ इति वा एत्वे द्वित्वाभावे च स्वेनतुः, सस्वनतुः, स्वेनुः, सस्वनुः। पूर्वपठितस्याप्यस्यार्थविशेषे घटादिकार्यार्थमिह पाठः। शब्दे तु स्वानयति ॥

'१०५३ चन हिंसायाम्'। चनति। णौ ह्रस्वे चनयति। शब्दे तु चानयति। पूर्वपठितोऽप्ययम् अर्थविशेषे घटादिकार्यार्थमिहाधीतः ॥

---

१ अन्यत्र म॰ इति मु० ॥

" अदेरन्ध च वा " ( उ० ९६३ ) इत्यसि अन्धः कूरम् । पक्षे अदः असौ । अध्वा इति तु " अतेर्ध च " ( उ० ९०९ ) इति क्वनिपि अततेः । [1]अर्त्तुः इत्यपि " जनिहनिशद्यर्तेस्त च " ( उ० ८०९ ) इति रुप्रत्यये अर्तेः । क्षीरमित्यपि " घसिवशि० " ( उ० ४१९ ) इति किति इरे घसतेः ॥

## अथाऽऽदन्ताश्चतुर्दशाऽनिटश्च ॥

' २ प्सांक् ' । प्साति । " नेर्ङ्मादा० " २।३।७९ इति नेर्णत्वे प्रणिप्साति । पप्सौ । अनुस्वारेत्त्वान्नेट् , प्साता, प्सातुम् । " य एचातः " ५।१।२८ इति ये प्सेयम् । " उपसर्गादातो० " ५।१।५६ इति डे प्रप्सः । " तन्व्यधी० " ५।१।६४ इति णे प्सायः । उणादौ " श्वन्मातरिश्वन्० " ( उ० ९०२ ) इत्यनि निपातनात् विश्वप्सा अग्निः, कालश्च ॥

' ३ भांक् दीप्तौ ' । भाति, बभौ । अनुस्वारेत्त्वान्नेट् , भाता, भातुम् । अनटि " न ख्यापूग्० " २।३।९० इति प्रतिषेधात् " स्वरात् " २।३।८५ इति " णेर्वा " २।३।८८ इति च णत्वाभावे प्रभानम् , प्रभापना । शतरि ङ्याम् " अवर्णादश्नो० " २।१।११५ इति वा 'अन्त' इत्यादेशे भाती भान्ती स्त्री । क्त्यपवादे " उपसर्गादातः " ५।३।११० इत्यङि प्रभा, विभा । " मृगयेच्छा० " ५।३।१०१ इति निपातनादङि भा । भाः, भासौ इति तु भासेः क्विपि । उणादौ " दाभाभ्यां नुः " ( उ० ७८६ ) भानुः । " भातेर्डवतुः " (उ० ८८६) भवान् । स्त्रियामुदित्त्वात् ङ्याम् भवती ॥

' ४ यांक् प्रापणे ' । याति । " नेर्ङ्मादा० " २।३।७९ इति नेर्णत्वे प्रणियाति । ययौ । " वा द्विषा० " ४।२।९१ इति शिदनो वा पुसि " इडेत्० " ४।३।९४ इति आल्लुकि अयुः । पक्षे अयान् । " यमिरमि० " ४।४।८६ इति इटि सेऽन्ते च अयासीत् , अयासिष्टाम् । " अवर्णादश्नो० " २।१।११५ इति वाऽन्तादेशे याती यान्ती स्त्री कुले वा । अनुस्वारेत्त्वात् नेट् , याता, यातुम् । " यायावरः " ५।२।८२ इति निपातनाद् यङन्ताद् वरे यायायनशीलो यायावरः । " गत्यर्था० " ५।१।११ इति वा कर्तरि क्ते संयातः, उपयातः, वियातः । " अजातेः शीले " ५।१।१५४ इति णिनि प्रयायी । गम्यादित्वात् वर्त्स्यति साधुः । " णिन् चावश्यका० " ५।४।३६ इति णिनि यायी । उणादौ " ह्वयामा० " ( उ० ४५१ )

---

१ अर्त्तुः क्षुद्रजन्तुः [ उ. वि. ] ॥

इति त्रे यात्रा । "यापाभ्यां द्वे च" (उ० ७१४) इति किदीः, ईः, ययीः रविः । "हनिया०" (उ० ७३३) इति कित्यौ द्वित्वे च ययुः अश्वः । "पीमृगमित्रदेवकुमारलोकधर्मविश्वसुम्नाश्मावेभ्यो यः" (उ० ७४१) इति कित्यौ पियुः उलूकः, मृगयुः, व्याधः इत्यादि । "कृसिकम्य०" (उ० ७७३) इति तुनि यातुः राक्षसः । "अर्त्तीरि०" (उ० ३३८) इति मे यामः । "मन्" (उ० ९११) इति मनि यामा । वहुव्रीहौ सुयामा नाम कश्चित् ॥

'५ वांक् गतिगन्धनयोः' । वाति, ववौ । अनुस्वारेत्त्वान्नेट्, वाता, वातुम् । णौ "वो विधूनने०" ४।२।१९ इति जे पक्षेण उपवाजयति । विधूननादन्यत्र "अर्तिरी०" ४।२।२१ इति पौ वापयति केशान् । "निर्वाणमवाते" ४।२।७९ इति निपातनात् क्तस्य नत्वे निर्वाणो भिक्षुः । वाते तु निर्वातो वातः, निर्वातं वातेन । "अवर्णादश्नो०" २।१।११५ इति वाऽन्तादेशे वाती वान्ती स्त्री कुले वा । उणादौ "कृवापाजि०" (उ० १) इति उणि वायुः । "दम्यमि०" (उ० २००) इति ते वातः । "अर्त्तीरि०" (उ० ३३८) इति मे वामः । "मन्" (उ० ९११) इति मनि वामा । मत्वर्थीये ने वामनः ॥

'६ ष्णांक् शौचे' । "षः सो०" २।३।९८ इति सत्वे स्नाति, सस्नौ । षोपदेशत्वात् "नाम्यन्तस्था०" २।३।१५ इति षत्वे सिष्णासति । अनुस्वारेत्त्वान्नेट् स्नाता स्नातुम् । णौ "ज्वलह्वल०" ४।२।३२ इत्यनुपसर्गस्य वा ह्रस्वे स्नपयति स्नापयति । सोपसर्गस्य तु स्वाभावे प्रस्नापयति । णके प्रस्नापकः । "कर्मजा तृचा च" ३।१।८३ इति प्रतिषिद्धोऽपि याजकादित्वात् षष्ठीसमासः, राजस्नापकः । "निनद्याः०" २।३।२० इति षत्वे निष्णातः, निष्णः; नदीष्णातः, नदीष्णः । कौशलादन्यत्र षत्वाभावे नदीस्नः । स्थादित्वात्के प्रस्नाति तत्र इति प्रस्नः । एवं प्रतिस्नः । कुत्सादि कपि भीरुष्ठानादित्वात् षत्वे च प्रतिष्णिका । "प्रतेः स्नातस्य०" २।३।३१ इति षत्वे प्रतिष्णातं सूत्रम् । "स्नानस्य नाम्नि" २।३।२२ प्रतिष्णानं सूत्रम् । उणादौ "स्नामदि०" (उ० ९०४) इति वनि स्नावा सिरा, नदी च । ष्णैं वेष्टने (१४९) स्नायति । "कृवापा०" (उ० १) इत्युणि स्नायुः ॥

'७ श्रांक् पाके' । श्राति, पच्यते स्वयमेवेत्यर्थः । शश्रौ । अनुस्वारेत्त्वान्नेट्, श्राता, श्रातुम् । "श्रः शृतं हविः क्षीरे" ४।१।१०० शृतं हविः क्षीरं वा ।

१. °सुस्नाश्मा° इति मु० ॥

अन्यत्र "व्यञ्जनान्तस्था०" ४।२।७१ इति क्तस्य नत्वे श्राणा यवागूः । पाके घटादित्वाद् णौ ह्रस्वे श्रपयति । "श्रपेः प्रयोक्त्रैक्ये" ४।१।१०१ निपातनात् शृतं क्षीरं हविर्वा । पाकादन्यत्र ह्रस्वाभावे श्रापयति ॥

'८ द्रांक् कुत्सितगतौ' । कुत्सिता गतिः पलायनं स्वप्नश्च । द्राति । "नेर्ङ्मादा०" २।३।७९ इति नेर्णत्वे प्रणिद्राति । अनुस्वारेत्त्वान्नेट्, द्राता द्रातुम् । "व्यञ्जनान्तस्था०" ४।२।७१ इति क्तयोस्तस्य नत्वे विद्राणः, द्राणः, द्राणवान् । तृनि द्राणशीलो द्राता । "शीङ्श्रद्धा०" ५।२।३७ इति आलौ निद्राणशीलो निद्रालुः । द्रायतेः एवाऽऽलु न तु द्रातेः इत्यन्ये । द्रै स्वप्ने ( १।३४ ) द्रायति ॥

'९ पांक् रक्षणे' । पाति, पपौ । "ईर्व्यञ्जने०" ४।३।९७ इत्यत्र गास्थासहचरितस्य पिबतेर्ग्रहणात् क्ये ईत्वाभावे पायते । णौ "पातेः" ४।२।१७ इति ले पालयति । अनुस्वारेत्त्वान्नेट्, पाता, पातुम् । "आतो डो०" ५।१।७६ इति डे नृपः । "स्थापा०" ५।१।१४२ इति के अधिपः । शतरि नखादित्वाद् अदभावे नपात् । उणादौ "भीणूशलि०" ( उ० २१ ) इति के पाकः बालः । स्त्रियां "वयस्यनन्त्ये" २।४।२१ इति ङ्यपवादे "अजादेः" २।४।१६ इति आपि पाका । "भापा०" ( उ० २९६ ) इति पे पान्ति तस्मादात्मानम् इति पापम्, भीमादित्वादपादाने साधुः । त्रटि पात्रम् । "पातेर्वा" ( उ० ६५९ ) इति वा कित्यतौ पतिः, पातिः । "पातेरिच्च" ( उ० ८५८ ) इति तृः, पिता । "खुरक्षुर०" ( उ० ३९६ ) [1]इति निपातनाद् विप्रः । "मन्" ( उ० ९११ ) इति मनि पामा । मत्वर्थीये ने पामनः । "पातेर्जस्थसौ" ( उ० ९७७ ) पाजो बलम्, पाथो जलम् । "पातेर्डुम्सुः" ( उ० १००२ ) पुमान् । पां पाने [१।२] पिबति । पैं शोषणे [ १।४७ ] पायति ॥

'१० लांक् आदाने' । लाति, ललौ । अनुस्वारेत्त्वान्नेट्, लाता, लातुम् । "आतो डो०" ५।१।७६ इति डे बहुलः । णौ "लो लः" ४।२।१६ इति वा ले घृतं विलालयति, पक्षे "अर्तिरी०" ४।२।२१ इति पौ घृतं विलापयति । क्ते विलातः ॥

'११ रांक् दाने' । राति, ररौ । अनुस्वारेत्त्वान्नेट्, राता, रातुम् । आदानेऽपीति कश्चित्, 'रातुं वारणमागतः' । उणादौ "भीण्शलि०" ( उ० २१ ) इति

१. इति रे नि° इति प० प्रतौ ॥

के राका पूर्णिमा । "राशदि०" (उ० ६९६) इति त्रौ रात्रिः । "रातेर्डैः" (उ० ८६६) राः धनम् ॥

'१२ दांवक् लवने'। वकारः "अवौदाधौदा" ३।३।५ इति विशेषणार्थः। दाति क्षेत्रम्, दायन्ते व्रीहयः । अत्र "अवौ०" ३।३।५ इति अत्र वितो वर्जनाद् दासंज्ञाया अभावे "ईर्व्यञ्जने०" ४।३।९७ इति ईर्न भवति । अनुस्वारेत्त्वान्नेट्, दाता, दातुम् । "नीदाव्०" ५।२।८८ इति करणे त्रटि दात्रम् ॥

'१३ ख्यांक् प्रथने'। प्रकथने इत्यन्ये । ख्याति, आचख्यौ । "शास्त्यसूवक्ति०" ३।४।६० इत्यङि आख्यत् । "समः ख्यः" ५।१।७७ इति डे अश्वसंख्यः । "दश्चाङः" ५।१।७८ इति डे स्त्र्याख्यः । "व्यञ्जनान्तस्था०" ४।२।७१ इत्यत्र ख्यावर्जनात् तस्य नत्वाभावे ख्यातः । सखा इति तु "सनेर्डखिः" (उ० ६२५) इति डखौ । अनुस्वारेत्त्वान्नेट्, आख्याता आख्यातुम् ॥

'१४ प्रांक् पूरणे'। प्राति, पप्रौ । अनुस्वारेत्त्वान्नेट्, प्राता । क्ते "व्यञ्जनान्तस्था०" ४।२।७१ इति तस्य नत्वे प्राणः । "आतो डो०" ५।१।७६ इति डे गोष्पदप्रं वृष्टो देवः । एकेन गोष्पदप्रेण ॥

'१५ मांक् माने'। मानं वर्तनम् । माति पात्रे । "नेर्ङ्मादा०" २।३।७९। इत्यत्र ङापलक्षितस्य मो ग्रहणान्नेर्णत्वाभावे प्रनिमाति । अत्राऽपीच्छन्त्येके प्रणिमाति । क्ये "ईर्व्यञ्जने०" ४।३।९७। इति ईत्वे मीयते । मातेः ईत्वं नेच्छन्त्येके; तन्मते मायते, ममौ । अनुस्वारेत्त्वान्नेट्, माता, मातुम् । सनि "मिमी०" ४।१।२०। इति स्वरस्येति मित्सति ये तु अस्य इत्त्वं नेच्छन्ति तन्मते मिमासति । "दोसोमा०" ४।४।११। इति इति मितः, मितवान् । मातेः इत्वं नेच्छन्त्येके, तन्मते मातः, मातवान् । शतरि "अवर्णादश्नो०" २।१।११५। इति वाऽन्तादेशे माती मान्ती स्त्री कुले वा । उणादौ "स्थाछा०" (उ० ३५७) इति ये माया । "हुयामा०" (उ० ४५१) इति त्रे मात्रा । "शामा०" (उ० ४६२) इति ले माला । "मावावद्य०" (उ० ५६४) इति से मासः । मेरुः इति तु [1]मीनातेः "चिनीपी०" (उ० ८०६) इति रौ । चन्द्रमा इत्यपि चन्दो रमसि । [ चन्दो रमस् (उ० ९८६) ] ॥

---

१ "मीनातेर्मीयतेर्वा चिनीपी०" इति प० प्रतौ । उणादि विवरणे तु मीङ्च् हिंसायाम् इत्यस्माद् धातोः मेरुः शब्दः साधितः ॥

## अथेदन्तावनिटौ च ॥

'१६ इंक् स्मरणे'। "स्मृत्यर्थ०" २।२।११। इति वा कर्मणः कर्मत्वे "शेषे" २।२।८१। इति षष्ठ्यां मातुरध्येति[1], मातरमध्येति। "इको वा" ४।३।१६। इति वा यत्वे अधियन्ति। पक्षे इयादेशे अधीयन्ति। "इणिकोर्गाः" ४।४।२३। इति गाऽऽदेशे "पिबैति०" ४।३।६६। इति सिज्लुपि च अध्यगात्। "क्रिया-व्यतिहारे०" ३।३।२३। इत्यात्मनेपदे व्यत्यध्यगास्त। "भावकर्मणोः" ३।४।६८। इति ञिचि अध्यगायि। अधीयाय, अधीयतुः। अनुस्वारेत्त्वान्नेट्, अध्येता, अध्येतुम्। "सनीङश्च" ४।४।२५। इति गमुः, अधिजिगमिषति। "णावज्ञाने गमुः" ४।४।२४। अधिगमयति। क्त्वि अधीत्य। कित्करणम् "इको वा" ४।३।१६। इत्यादौ विशेषणार्थं गणज्ञापनार्थं च। इङिकौ अधिना एव प्रयुज्येते॥

'१७ इंण्क् गतौ'। णित्त्वं "इणः" २।१।५१ इत्यादौ विशेषणार्थम्। एति। "उपसर्गस्यानिणे०" १।२।१९। इत्यत्र इणो वर्जनाद् उपसर्गावर्णस्य लुगभावे उपैति, परैति। "ह्विणो०" ४।३।१५। इति यत्वे यन्ति, यन्तु। "इणिकोर्गाः" ४।४।२३। इति गाऽऽदेशे "पिबैति०" ४।३।६६। इति सिज्लुपि च अगात्। "सिज्विदो०" ४।२।९२। इति अनः पुसि "इडेत्०" ४।३।९४। इति आतो लुकि च अगुः[2]। "योऽनेकस्वर०" २।१।५६ इति यत्वापवादे, "इणः" २।१।५१ इति इयादेशे ईयतुः, ईयुः। "आशिषीणः" ४।३।१०७ इति ह्रस्वे समियात्। "णावज्ञाने गमुः" ४।४।२४ गमयति ग्रामम्। ज्ञाने तु शब्दः अर्थं प्रत्याययति। "सनीङश्च" ४।४।२५ जिगमिषति ग्रामम्। ज्ञाने तु अर्थान् प्रतीषिषति। अनुस्वारेत्त्वान्नेट्, एता, एतुम्। क्ये "दीर्घश्च्वियङ्०" ४।३।१०८ इति दीर्घे ईयते। थवि "सृजिदृशि०" ४।४।७८ इति वेटि इयेथ इययिथ। "दृवृग्०" ५।१।४० इति यापवादे क्यपि इत्यः। "तन्व्यधी०" ५।१।६४ इति णे अत्यायः, प्रत्यायः। लिहाद्यचि अयः, समयः, प्रत्ययः। "गत्यर्था०" ५।१।११ इति वा कर्तरि क्ते मार्गमतीतः। "वेयिवद्०" ५।२।३ इति निपातनाद् भूतमात्रे क्वसौ नित्यत्वाद् द्वित्वात् प्रागेव "घसेकस्वरा०" ४।४।८२ इति इटि ईयिवान्, समीयिवान्, उपेयिवान्। "जीणदृक्षि०" ५।२।७२ इति इनि अत्ययनशीलः अत्ययी। "सृजीण्०" ५।२।७७ इति ट्वरपि इत्वरः,

१. मातुर् इति मु० ॥   २. अयुः इति मु० ॥

इत्वरी । मनि स्वेमा, वनि स्वेवा । क्वनिपि स्वित्वा । विचि स्वेः । क्विपि एति इति इत् । "युवर्ण०" ५।३।२८ इत्यलि अयः, अन्ययः, समयः । "इणोऽभ्रेषे" ५।३।७५ इत्यलपवादे घञि न्यायः । "परेः क्रमे" ५।३।७६ पर्यायः; क्रमादन्यत्रालि विपर्ययो मतेः । "समज०" ५।३।९९ इति क्यपि इत्या । "न्यायावाया०" ५।३।१३४ इति निपातनात् करणे घञि न्यायः । उणादौ "कृवापा०" (उ० १) इत्युणि आयुः नरः, पुरूरवः, पुत्रः, जीवनं च; जरायुः गर्भवेष्टनम्, जटायुः पक्षी । "भीणूशलि०" (उ० २१) इति के एकः । "इणुर्विशा०" (उ० १८२) इति णे एणः । "दम्यमि०" (उ० २००) इति ते एतः वर्णः । "अवभृ०" (उ० २२९) इति किति थे समिथः संगमः । "जीणूशी०" (उ० २६१) इति किति ने एनः । "इणः कित्" (उ० ३२८) इति मे इभः । "इणूत्राग्भ्यां वा" (उ० ३८९) इति वा किति रे इरा सुरा, भूश्च । एरा एडका । "खुरक्षुर०" (उ० ३९६) इति रे निपातनाद् दुःपूर्वस्य [इणः] दूरम् । "समिणू०" (उ० ५९८) इति आः, समया गिरिम् । "अस्" (उ० ९५२) इत्यसि अयः लोहम् । "इणो णित्" (उ० ९९८) इति उसि आयुः, आयुषी । "अर्तीणूभ्यां नस्" (उ० ९७९) एनः पापम् । आग इति तु अगेः "वस्त्यगिभ्यां णित्" (उ० ९७०) इत्यसि ॥

## अथेदन्तोऽनिट् च ॥

'१८ वींक् प्रजन–कान्त्यसनखादने च' । चकाराद् गतौ । प्रजनः प्रथमगर्भग्रहणम्, असनं क्षेपः, अशनं तृप्तिरित्येके । वेति, वीतः, वियन्ति, विवाय, विव्यतुः, विव्युः । अत्र "असिद्धं बहिरङ्गमन्तरङ्गे" [न्याय–२०] इति यत्वस्यासिद्धत्वाद् "भ्वादे०" २।१।६३ इति पूर्वस्य दीर्घाभावः । अनुस्वारेत्त्वान्नेट्, वेता, वेतुम् । "वियः प्रजने" ४।२।१३ इति वात्वे पुरोवातो गाः प्रवापयति, पक्षे "नामिनो०" ४।३।५१ इति वृद्धौ प्रवाययति । क्ते वीतम् असारं हस्त्यश्वम् । "तिक्कृतौ नाम्नि" ५।१।७१ इति तिकि वीतिः अश्वः । उणादौ "वीपतिपटिभ्यस्तनः" (उ० २९२) वेतनं भृतिः । "हुयामा०" (उ० ४५१) इति त्रे वेत्रः । "तसश्च" (दृ० उ० ५८०) इति तसे वेतसः । "कावावी०" (उ० ६३४) इति णौ वेणिः [1]कवरी । "वीयुसु०" (उ० ६७७) इति नौ

१. कबरी इति मु० ॥

वेनिः—व्याधिर्नदी च । वेणुः इति तु "अजिस्था०" (उ० ७६८) इति णौ अजेः । "अस्" (उ० ९५२) इति असि वयः । प्रज्ञाद्यणि वायसः ॥

## अथोदन्ता दश ॥

'१९ द्युंक् अभिगमे' । "उत औः०" ४।३।५९ इति औः, द्यौति, द्युतः, द्युवन्ति, दुद्याव । थवि "सृजि–दृशि०" ४।४।७८ इति वेटि दुद्योथ, दुद्यविथ । अनुस्वारेत्त्वान्नेट्, द्योता, द्योतुम् । यङि दोद्यूयते । यङ्लुपि दोद्योति, दोद्यवीति । वनि सुद्योवा, क्वनिपि सुद्युत्वा, विचि द्योः । "य एच्चातः" ५।१।२८ इति ये, "य्यक्ये" १।२।२५ इत्यवि च द्यव्यः । "उवर्णा०" ५।१।१९ इति घ्यणि द्याव्यम् अवश्यम् । उणादौ "द्युद्रुभ्याम्" (उ० ७४४) इति डिद्रुः, द्युः । "द्युगमिभ्यां डोः" (उ० ८६७) द्यौः ॥

"२० षुंक् प्रसवैश्वर्ययोः' । "षः सो०" २।३।९८ इति सत्वे "उत औ०" ४।३।५९ इत्यौत्वे च सौति, सुतः, सुवन्ति । षोपदेशत्वात् "नाम्यन्तस्था०" २।३।१५ इति षत्वे सुषाव । अनुस्वारेत्त्वान्नेट्, सोता, सोतुम् । अषोपदेशोऽयमित्येके सुसाव । उणादौ "सुसितनि०" (उ० २०३) इति ते वा दीर्घे च सुतः पुत्रः, सूतः सारथिः । "युसुकु०" (उ० २९७) इति पे ऊत्वे च सूपः । षुं प्रसवैश्वर्ययोः (१।१७) सवति । षुंगट् अभिषवे (४।१) सुनोति ॥

'२१ तुंक् वृत्तिहिंसापूरणेषु' । "उत औ०" ४।३।५९ इति औत्वे तौति । "यङ्तुरुस्तो०" ४।३।६४ इति ईति तवीति; तुतः, तुवन्ति, तुताव । अनुस्वारेत्त्वान्नेट्, तोता तोतुम् । उणादौ 'भीणूशलि०" (उ० २१) इति के तोकम् अपत्यम् । "घुयुहि०" (उ० २४) इति के दीर्घे च तूकः उपस्थो गिरिश्च । "युसुकुरु०" (उ० २९७) इति पे ऊत्वे च तूपः आयतनविशेषः ॥

'२२ युक् मिश्रणे' । यौति, युतः, युवन्ति, युयाव । थवि "स्क्रसृवृ०" ४।४।८१ इति इटि युयविथ, यविता, यवितुम् । सनि "ग्रहगुह०" ४।४।५९ इति इडभावे प्राप्ते तदपवादे "इवृध०" ४।४।४७ इति वा इटि "ओर्जान्तस्था०" ४।१।६० इति पूर्वस्येत्वे यियविषति । पक्षे युयूषति । वेट्त्वात् क्तयोर्नेट्, युतः, युतवान् । "आसुयु०" ५।१।२० इति यापवादे घ्यणि याव्यम् । नन्द्याद्यने यवनः । मनि सुयोमा । वनि सुयोवा । विचि सुयौः । क्विपि सुयुत् । "युवर्ण०" ५।३।२८ इत्यलि यवः । प्रज्ञाद्यणि यावः अलक्तकः । स्वार्थे के यावकः ।

"युदुद्रोः" ५।३।५९ इति संपूर्वाद् घञि संयावः गुड गोधूमः। उत्पूर्वात् "युपुद्रोर्घञ्" ५।३।५४ उद्यावः। "सातिहेति" ५।३।९४ इति क्तौ निपातनात् यूतिः सङ्घः, गोयूतिः। पृषोदरादित्वात् गव्यूतिः। क्त्वि "उवर्णात्" ४।४।५८ इति इडभावे युत्वा। उणादौ "घुयुहि०" (उ० २४) इति के दीर्घे च यूका। "पथयूथ०" (उ० २३१) [1]इति निपातनात् यूथः। "युसुकु०" (उ० २९७) इति पे ऊत्वे च यूपः। "योरूच्च वा" (उ० ५४१) इति पे यूषः पेयविशेषः, यूषा छाया, योषा स्त्री। "युजलेराषः" (उ० ५४५) यवापो दुरालभा। "वहियुभ्यां वा" (उ० ५७१) इति वा णित्यसे यावसं भक्तम् तृणं च; यवसं घासः अन्नं च। "युवलिभ्यामासः" (उ० ५७४) [2]यवासो दुरालभा। "योः कित्" (उ० ६५८) इत्यतौ युवतिः। "वीयुसुवह्य०" (उ० ६७७) इति नौ योनिः। "नीसा०" (उ० ६८७) इति मौ योमिः शकुनिः। "लूपूयु०" (उ० ९०१) इति क्वित्यनि युवा। 'अयुतसिद्धानाम्' इत्यादि दर्शनादमिश्रणे युः, इत्यन्ये। युंग्श् बन्धने [ ८।६ ] युनीते, युनाति, योता। युणि जुगुप्सायाम् [ ९।२३७ ] यावयते। अर्थविशेषे चुरादित्वात् जुगुप्साया अन्यत्र यौति॥

'२३ णुक् स्तुतौ'। "पाठे०" २।३।९७ इति णस्य नत्वे नौति, नुतः, नुवन्ति। णोपदेशत्वाद् "अदुरुपसर्गा०" २।३।७७ इति णत्वे प्रणौति, परिणौति। "नुप्रच्छः" ३।३।५४ इत्याङ्पूर्वादात्मनेपदे आनुते सृगालः। सनि "ग्रह गुह०" ४।४।५९ इति नेट्, नुनूषति। नुनाव, नविता, नवितुम्। "उवर्णादा०" ५।१।१९ इति यापवादे घ्यणि नाव्यम् अवश्यम्। अचि नवः, प्रणवः। क्तिति "उवर्णात्" ४।४।५८ इति नेट्, नुत्वा, नुतः, नुतवान्, नुतिः। "उक्षितक्ष्य०" (उ० ९००) इति अनि नव पदार्थाः॥

'२४ क्ष्णुक् तेजने'। क्ष्णौति, क्ष्णुतः, क्ष्णुवन्ति। "समः क्ष्णोः" ३।३।२९ इत्यात्मनेपदे संक्ष्णुते शस्त्रम्। क्ष्णविता। यङि चोक्ष्णूयते, यङ्लुपि चोक्ष्णोति। सनि "ग्रहगुह०" ४।४।५९ इति नेट्, चुक्ष्णूषति॥

---

१. इति थे इति प० प्रतौ॥

२. एतस्या लोके जवासउ इति प्रसिद्धिः। (नि. शे. टी. २।२२८)॥

'२५ स्नुक् प्रस्नवने'। प्रस्नवनं क्षरणम्। स्नौति, स्नुतः, स्नुवन्ति। क्ये "दीर्घश्च्वि०" ४।३।१०८ इति दीर्घे स्नूयते। प्रस्नविता। "स्नोः" ४।४।५२ इत्यात्मनेपदाभावे एव इट्नियमादात्मनेपदे नेट्, प्रस्नोष्यते। कर्मकर्तरि "एकधातौ०" ३।४।८६ इति ञिक्यात्मनेपदेषु प्राप्तेषु "भूषार्थ०" ३।४।९३ इति ञिक्ययोः प्रतिषेधात् प्रास्नोष्ट गौः स्वयमेव, प्रस्नुते गौः स्वयमेव। सुस्नाव, सुस्नुवतुः, सुस्नुवुः। यङि सोस्नूयते। यङ्लुपि सोस्नोति, सोस्नवीति। सनि "ग्रहगुह०" ४।४।५९ इति नेट्, सुस्नूषति। उणादौ "स्नुपूद्भ्यः०" (उ० ५४२) इति किति पे स्नुषा॥

'२६ टुक्षु २७ रु २८ कुंक् शब्दे'। क्षौति, क्षुतः, क्षुवन्ति, चुक्षाव, क्षविता, क्षवितुम्। यङि चोक्षूयते। यङ्लुपि चोक्षोति, चोक्षवीति। "य एच्चा०" ५।१।२८ इति ये क्षव्यम्। "उवर्णादावश्यके" ५।१।१९ इति घ्यणि क्षाव्यम् अवश्यम्। सनि "ग्रहगुह०" ४।४।५९ इति नेट्, चुक्षूषति। किति "उवर्णात्" ४।४।५८ इति नेट्, क्षुत्वा, क्षुतम्, क्षुतः, क्षुतवान्। "युवर्ण०" ५।३।२८ इत्यलि क्षवः। विपूर्वात् "क्षुश्नोः" ५।३।७१ इति घञि विक्षावः। ट्वित्त्वादथुः क्षवथुः। "क्रुत्संपदा०" ५।३।११४ इति क्विपि क्षुत्। उणादौ "स्थाक्षुतोरूच्च" (उ० १८५) इति णे क्षूणम्—अपराधः॥

'२७ रु'। रौति। "यङ्तुरुस्तो०" ४।३।६४ इति ईति रवीति; रुतः, रुवन्ति, रविता, रुराव। सनि "ग्रहगुह०" ४।४।५९ इति नेट्, रुरूषति। यङि रोरूयते। यङ्लुपि रोरवीति रोरोति। किति "उवर्णात्" ४।४।५८ इति नेट्, रुत्वा, रुतम्, रुतः, रुतवान्। "युवर्ण०" ५।३।२८ इत्यलि रवः। अलपवादे "रोरुपसर्गात्" ५।३।२२ इति घञि संरावः। "आङो रुप्लोः" ५।३।४९ इति [1]वाऽलि आरावः आरवः। "चालशब्दार्था०" ५।२।४३ इत्यने रवणशीलो रवणः। "क्वचित्" ५।१।१७१ इति डे मह्यां रौति मयूरः पृषोदरादित्वात्। उणादौ "तृकृशृ०" (उ० १८७) इति अणे रवणः करभः। "रोर्वा" (उ० २३५) इति वा कित्यथे रुवथः शकुनिः, रवथः—आक्रन्दः। "स्वरेभ्य इः" (उ० ६०६) रविः। "रुपूभ्यां कित्" (उ० ८०८) इति रौ रुरुः मृगः। "विहायस्०" (उ० ९७६) इत्यसि निपातनात् पुरु रौति पुरूरवा—राजा। रुंङ् रेषणे च [ १।५९९ ] रवते रोता॥

१. वा घञि इति मु०॥

'२८ कुंङ्' । कौति, कुतः, कुवन्ति, चुकाव । अनुस्वारेत्त्वान्नेट्, कोता कोतुम् । सनि चुकूषति । यङि "न कवते०" ४।१।४७ इति ङ्वादेरेव प्रतिषेधात् "कङश्चञ्" ४।१।४६ इति पूर्वस्य चत्वे चोकूयते । उणादौ "दृकृनृ०" (उ० २७) इत्यके कवकम् अभक्ष्यद्रव्यम् । "दुकूल०" (उ० ४९१) इति ऊले निपातनात् कुकूलम् शङ्कुमद्गर्तः । कुङ् शब्दे [१।५९०] कवते । यङि कोकूयते । कुंङूत् शब्दे [५।१४९] कुवते, चोकूयते । एषां शब्दार्थत्वेऽपि कौतिः शब्दमात्रे, कुवतिः आर्तस्वरे, कवतिः अव्यक्ते शब्दे ॥

## अथान्तर्गणो रुदादिपञ्चकः ॥

'२९ रुदृङ् अश्रुविमोचने' । "रुत्पंचका०" ४।४।८८ इति इटि रोदिति, रुदितः; रुदन्ति; तत्र व्यञ्जनादेरित्यधिकाराद् अत्रेट् नास्ति । रुरोद । "दिस्योरीट्" ४।४।८९ अरोदीत्, अरोदीः । "अदश्चाट्" ४।४।९० अरोदत् अरोदः । "ऋदिच्छ्वि०" ३।४।६५ इति वाऽङि अरुदत्, अरोदीत् । रोदिता, रोदितुम् । "रुदविद०" ४।३।३२ इति क्त्वासनोः कित्त्वे रुदित्वा, रुरुदिषति । उणादौ "ऋज्यजि०" (उ० ३८८) इति किति रे रुद्रः । रोदयतीति वा "खुरक्षुर०" (उ० ३९६) इति निपातनाद् रुद्रः । "रुयर्ति०" (उ० ९९७) इत्युसि रोदुः अश्रुनिपातः ॥

'३० जिष्वपंङ् शये' । "रुत्पंचका०" ४।४।८८ इति इटि स्वपिति, स्वपितः, स्वपन्ति । "भूस्वपो०" ४।१।७० इति पूर्वस्य उत्वे सुष्वाप । षोपदेशत्वात् "नाम्यन्तस्था०" २।३।१५ इति षत्वे, "स्वपेर्यङ्ङे च" ४।१।८० इति य्वृति सुषुपतुः, सुषुपुः । जीत्त्वात् "ज्ञानेच्छार्चा०" ५।२।९२ इति सति क्ते सुप्तः । निर्दुःसुविपूर्वस्य अवः स्वपत्याद्यस्याऽपि सस्य षत्वे निःषुप्तः, दुःषुप्तः, सुषुप्तः, विषुप्तः । अनुस्वारेत्त्वान्नेट्, स्वप्ता, स्वप्तुम् । "रुदविद०" ४।३।३२ इति सनः कित्त्वे सुषुप्सति । यङि सोषुप्यते । णौ सनि "स्वपो णावुः" ४।१।६२ इति पूर्वस्य उत्वे सुष्वापयिषति । ङे असूषुपत् । "दिस्योरीट्" ४।४।८९ अस्वपीत् अस्वपीः । "अदश्चा०" ४।४।९० इत्यटि अस्वपत् अस्वपः । अद्यतन्यां अस्वाप्सीत् । "तृषिधृषि०" ५।२।८० इति नजिङि स्वप्नक् । "यजिस्वपि०" ५।३।८५ इति ने स्वप्नः । असरूपत्वात् पक्षे घञि स्वापः । क्त्वि सुप्त्वा ॥

'३१ अन ३२ श्वसक् प्राणने' । प्राणनं जीवनम् । वर्णक्रमस्य प्रतिज्ञानात् स्वपः प्राग् अनेर्निर्देशे प्राप्ते लाघवार्थमिहपाठः । "रुत्पञ्चका०" ४।४।८८ इति

इटि अनिति । " द्वित्वेऽप्यन्तेऽप्य० " २।३।८१ इति णत्वे प्राणिति, पराणिति, प्राणिणिषति । अन्तेऽपि इति वचनात् क्विपि हे प्राण् ! हे पराण् ! परेस्तु वा पर्यणिति, पर्यनिति । " अस्यादे० " ४।१।६८ इति पूर्वस्य आत्वे आन, आनतुः । " दिस्यो० " ४।४।८९ इति ईटि प्राणीत्, प्राणीः । " अदश्वा० " ४।४।९० इत्यटि प्राणत् । प्राणः, प्राणिता, प्राणितुम् । अचि घञि वा प्राणः । घञि आनः । उणादौ " स्यमिकषि० " ( उ० ४६ ) इति ईके अनीकम् । "प्याधा०" ( उ० २५८ ) इति ने अन्नम् । " स्थाछा० " ( उ० ३५७ ) इति ये अन्यः । " अस् " ( उ० ९५२ ) इत्यसि अनः शकटम् ॥

' ३२ श्वसक् ' । तालव्यादिः दन्त्यान्तः । " रुत्पञ्चका० " ४।४।८८ इति इटि श्वसिति, निःश्वसिति, श्वसितः, श्वसन्ति, शश्वास । " व्यञ्जनादे० " ४।३।४७ इति वा वृद्धौ अश्वासीत्, अश्वसीत् । " दिस्यो० " ४।४।८९ इति ईटि अश्वसीत्, अश्वसीः; " अदश्वा० " ४।४।९० इत्यटि अश्वसत्, अश्वसः । श्वसिता, श्वसितुम् । " श्वसजप० " ४।४।७५ इति क्तयोर्वेट्, आश्वस्तः, आश्वसितः, आश्वस्तवान्, आश्वसितवान् । " तन्व्यधी० " ५।१।६४ इति णे श्वासः ॥

' ३३ जक्षक् भक्ष-हसनयोः ' । अयं रुत्पञ्चकस्य पञ्चमो, जक्षपञ्चकस्य त्वाद्य इत्युभयकार्यभाक् । " रुत्पञ्चका० " ४।४।८८ इति इटि जक्षिति जक्षितः । " द्वयुक्तजक्ष० " ४।२।९३ इति शिदनः पुंसि अजक्षुः । " अन्तो नो लुक् " ४।२।९४ जक्षति, जक्षतु, शतरि जक्षत् । " शौ वा " ४।२।९५ जक्षति, जक्षन्ति कुलानि । " दिस्यो० " ४।४।८९ इति ईटि अजक्षीत्, अजक्षीः । " अदश्वा० " ४।४।९० इत्यटि अजक्षत्, अजक्षः । जक्षिता, जक्षितुम्, जजक्ष, जजक्षतुः ॥

' ३४ दरिद्राक् दुर्गतौ ' । दरिद्राति । " इर्दरिद्रः " ४।२।९८ दरिद्रितः । अन्तो नो लुकि " श्नश्चातः " ४।२।९६ इत्याल्लुकि च दरिद्रति । " दरिद्रोऽद्यतन्यां वा " ४।३।७६ अदरिद्रीत् अदरिद्रासीत् । " अशित्यस्सन्० " ४।३।७७ इत्याल्लुकि दरिद्रयते, [1]स्सन्नादिवर्जनात् दिदरिद्रासति । " इवृध० " ४।४।४७ इति वेटि दिदरिद्रिषति, सादेरेव सनो वर्जनात् इहाल्लुक् । दरिद्रायको व्रजति, अत्र " क्रियायां० " ५।३।१३ इति णकच् । णके दरिद्रायकः । अनटि दरिद्राणम् । शतरि दरिद्रत्, दरिद्रतौ । " धातोरनेकस्वरा० " ३।४।४६ इत्यामि

१. स्सनादि° इति मु० ॥

दरिद्राञ्चकार । "आतो णव०" ४।२।१२० इत्यत्र ओकारेणैव पपौ इत्यादिसिद्धौ औकारविधानं दरिद्रातेर्णवः आमादेशानित्यत्वार्थम् , ददरिद्रौ । क्वसौ दरिद्राञ्चकृवान् । शिवस्तु णवोऽन्यस्य अपि आमादेशमनित्यमिच्छति, ददरिद्रवान् । "द्व्युक्तजक्ष०" ४।२।९३ इति शिदनः पुसि "इडेत्०" ४।३।९४ इत्याल्लुकि अदरिद्रुः । णौ दरिद्रयति । णौ ङे अददरिद्रत् । णौ विषये आल्लुकं नेच्छन्त्यन्ये, दरिद्रापयति । ङे "उपान्त्यस्या०" ४।२।३५ इति ह्रस्वत्वे अददरिद्रपत् । नन्वत्र सन्वद्भावात् पूर्वस्येत्वं प्राप्नोति; नैवम् , 'येन नाव्यवधानं तेन व्यवहितेऽपि स्यात्' [ न्याय० १२ ] इत्येकवर्णव्यवहिते लघौ लघोः परेण चैकवर्णेन व्यवहिते ङपरे णौ सन्वद्भावो भवति यथा अपीपचत् इत्यादौ । अवीव्रजत् इत्यादौ तु "स्मृदृत्वर०" ४।१।६५ इत्यत्वविधानाद् अनेकव्यञ्जनव्यवहितेऽपि लघुनि इष्यते । इह तु लघोरव्यवधानेऽपि लघोः परेण वर्णसमुदायेन णेर्व्यवधेति न भवति । दरिद्रिता, दरिद्रितुम् । वेट्त्वेऽप्यनेकस्वरत्वात् क्तयोरिट्, दरिद्रितः दरिद्रितवान् । अचि घञि वा दरिद्रः । दर्दूः इति तु "तृदृभ्यां दूः" ( उ० ८४६ ) इति दुणातेः ॥

'३५ जागृक् निद्राक्षये' । जागर्ति, जागृतः । अन्तो नो लुकि जाग्रति । शतरि जाग्रत् , जाग्रती । "द्व्युक्तजक्ष०" ४।२।९३ इति शिदनः पुसि "पुस्पौ" ४।३।३ इति गुणे अजागरुः । जजागार । "जागुः किति" ४।३।६ इति गुणे जजागरतुः, जजागरुः । पक्षे "जागुप०" ३।४।४९ इति परोक्षाया आमि जागराञ्चक्रतुः, जागराञ्चक्रुः । "सिचि परस्मै०" ४।३।४४ इति वृद्धेः "नश्विजागृ०" ४।३।४९ इति प्रतिषेधे अजागरीत् । "जागुर्ञिणवि" ४।३।५२ इति वृद्धेः ञिणवोरेव नियमात् , "नामिनो०" ४।३।५१ इति वृद्ध्यभावे णौ गुणे जागरयति, जागरिता, जागरितुम् । क्तयोः जागरितः जागरितवान् । "जागुः" ५।२।४८ इत्यूके जागरणशीलो जागरूकः । स्त्रियां क्त्यपवादौ "जागुरश्च" ५।३।१०४ इति अ-यौ जागरा, जागर्या । उणादौ "जॄशॄस्तॄ०" ( उ० ७०५ ) इति ङिति वौ जागृविः अग्निः ॥

'३६ चकासृक् दीप्तौ' । चकास्ति, चकास्तः । अन्तो नो लुकि चकासति शतरि चकासत् , चकासती । "द्व्युक्तजक्ष०" ४।२।९३ इति शिदनः पुसि अचकासुः । "व्यञ्जनाद् देः०" ४।३।७८ इति देर्लुकि सस्य दत्वे च, सः अचकात् । "सेः स्द्धां०" ४।३।७९ इति सेर्लुकि सो वा रुत्वे च अचकाः त्वम् , पक्षे "धुट०" २।१।७६ इति सस्य दत्वे अचकात् त्वम् । "धातोरनेक०"

३।४।४६ इति परोक्षाया आमि चकासाञ्चकार । सनि चिचकासिषति । चकासिता, चकासितुम् । ऋदित्त्वात् ङे न ह्रस्वः, अचचकासत् ॥

'३७ शासूक् अनुशिष्टौ'। अनुशिष्टिः नियोगः । शास्ति । "इसासः शासोङ् व्यञ्जने" ४।४।११८ "नाम्यन्तस्थाः०" २।३।१५ इति षत्वे च शिष्टः । "शास्त्यसू०" ३।४।६० इत्यङि अशिषत् । "द्व्युक्तजक्ष०" ४।२।९३ इति शिदनः पुंसि अशासुः । अन्तो नो लुकि शासति । शतरि शासत्, शासतौ । "व्यञ्जनाद् देः०" ४।३।७८ इति देर्लुकि सो दत्वे च, सः अन्वशात् । "सेः सू-द्-धां०" ४।३।७९ इति सेर्लुकि सो रुत्वे च अन्वशाः त्वम्, अन्वशात् त्वम् । "शासस्०" ४।२।८४ इति ह्यन्तस्य शाधौ, शाधि, अनुशाधि । शासिता । ऊदित्त्वात् क्त्वि वेट्, शिष्ट्वा, शासित्वा । वेट्त्वात् क्तयोर्नेट्, शिष्टः, शिष्टवान् । क्विपि मित्रशीः । क्तौ शिष्टिः । "इकिश्तिव्०" ५।३।१३८ इति श्तिवि शास्तिः । "उपान्त्यस्या०" ४।२।३५ इत्यत्र शासेर्वर्जनात् ङे ह्रस्वाभावे अशशासत् । "दृवृग्०" ५।१।४० इति क्यपि शिष्यः । "शास्युधि०" ५।३।१४१ इत्यने दुःशासनः, सुशासनः । उणादौ "शासिशंसि०" (उ० ८५७) इति तृः, शास्ता बुद्धः; प्रशास्ता ऋत्विक् । "तृस्वसृ०" १।४।३८ इत्यारि प्रशास्तारौ । आङः शासूकि इच्छायाम् [ २।६० ] आशास्ते, आशास्यते, आशीशसत्, आशीः ॥ रुजक्षपञ्चके समाप्य प्रकृतो वर्णक्रमोऽनुस्रियते ॥

## अथ चान्तः ॥

'३८ वचंक् भाषणे'। वक्ति, वक्तः, वचन्ति । अन्तौ वचेः प्रयोगं नेच्छन्त्येके । "यजादिवश्०" ४।१।७२ इति पूर्वस्य य्वृति उवाच । "यजादिवचेः०" ४।१।७९ इति य्वृति ऊचतुः ऊचुः । क्ये उच्यते । "शास्त्यसू०" ३।४।६० इत्यङि "श्वयत्य०" ४।३।१०३ इति वोचाऽऽदेशे अवोचत् । अनुस्वारेत्त्वान्नेट्, वक्ता, वक्तुम् । "प्रवचनीया०" ५।१।८ इति वा कर्तर्यनीये प्रवचनीयो गुरुर्धर्मस्य, पक्षे प्रवचनीयो धर्मो गुरुणा । "ऋवर्ण०" ५।१।१७ इति घ्यणि प्रवाच्यः ग्रन्थविशेषः; अत्र "त्यजयज०" ४।१।११८ इति कत्वाऽभावः । "वचोऽशब्दनाम्नि" ४।१।११९ कत्वाभावे वाच्यम् आह । शब्दनाम्नि तु "क्तेऽनिट०" ४।१।१११ इति कत्वे वाक्यम् । "वेयिवद०" ५।२।३ इति भूतमात्रे निपातनाद् वा काने अनूचानः, पक्षे अन्ववोचत् । "भावाकर्त्रोः" ५।३।१८ घञि अनुवाकः, वाकः । "दिद्युद्-दद्द्०" ५।२।८३ इति क्विपि निपातनात् वचनशीलो वाक् ।

" गोचरसंचर० " ५।३।१३१ इति निपातनाद् घे वक्तीति वकः, वते उक्तम् । लिहाद्यचि श्लोकवचः । उणादौ " नीनूरमि० " ( उ० २२७ ) इति किति थे उक्थम् साम । " त्रट् " ( उ० ४४६ ) इति त्रटि [1]वक्त्रम् । " कृकस्थूराद् वचः क च " ( उ० ७२८ ) इत्युणि कृकवाकुः [2]कुकुटः, स्थूरवाकुः उच्चध्वनिः । " अस् " ( उ० ९५२ ) इत्यसि वचः । वचण् भाषणे [ ९।३८७ ] वाचयति, युजादित्वाद् वा णिचि पक्षे वचति ॥

## अथ जान्तः ॥

' ३९ मृजौक् शुद्धौ ' । " मृजोऽस्य० " ४।३।४२ इति वृद्धौ "यजसृज०" २।१।८७ इति षत्वे मार्ष्टि, मृष्टः । " ऋतः स्वरे वा " ४।३।४३ इति वा वृद्धौ परिमार्जन्ति, परिमृजन्ति, ममार्जतुः, ममृजतुः, ममार्जुः, ममृजुः । औदित्वात् वेट् , मार्ष्टा, मार्जिता । वेट्त्वात् क्तयोर्नेट् , मृष्टः, मृष्टवान् । " कृवृषि० " ५।१।४२ इति वा क्यपि परिमृज्यः, पक्षे घ्यणि " क्तेऽनिट० " ४।१।१११ इति गत्वे परिमार्ग्यः । " शोकापनुद० " ५।१।१४३ इति निपातनात् के तुन्दपरिमृजः अलसः, अन्यत्र कर्मणोऽणि तुन्दपरिमार्जः । घञि मार्गः । भिदाद्यङि मृजा शुद्धिः, अन्यत्र स्त्रियां क्तौ मृष्टिः । उणादौ " अग्यङ्गि० " ( उ० ४०५ ) इति आरे मार्जारः, लत्वे मार्जालः । " मृजिखन्या० " ( उ० ४७२ ) इति डित्यले मलः । मृजौण् शौचालङ्कारयोः [ ९।३९० ] युजादित्वात् वा णिचि मार्जयति । " णिवेत्त्या० " ५।३।१११ इत्यने मार्जना, क्ते मार्जितः । [3]मर्जिता रसाला इति रूढेः, पक्षे मार्जति ॥

## अथ तान्तः ॥

' ४० सस्तुक् स्वप्ने ' । उदित्वान्ने " धुटो धुटि स्वे वा " १।३।४८ इति तो लुकि च संस्ति, संस्तः, संस्तन्ति, संस्तिता ॥

## अथ दान्तः ॥

' ४१ विदक् ज्ञाने ' । " तिवां णव० " ४।२।११७ इति वा णवाद्यादेशे वेद, विदतुः, विदुः, पक्षे वेत्ति, वित्तः, विदन्ति । " समो गमृच्छि० " ३।३।८४

१. " हुयामा० " ( उ० ४५१ ) इति त्रप्रत्ययेऽपि वक्त्रम् भवति ॥
२. कुकुट. इति मु० ॥
३. मार्जिता इति मु० । " मार्जिता रसाला मर्जितेति रूढे. " इति चुरादौ [ ३९० ] अत्रैव वक्ष्यते ॥

इति कर्मण्यसति आत्मनेपदे संविचे संविदाते । "वेत्तेर्नवा" ४।२।११६ इत्यन्तो वा रति संविद्रते, पक्षे "अनतोन्तो०" ४।२।११४ इत्यति संविदते । सति आप्ये "शेषात्" ३।३।१०० इति परस्मैपदे संवेत्ति शास्त्रम् । "सिज्विदो०" ४।३।९२ इति शिदनः पुसि अविदुः । "वेत्तेः कित्" ३।४।५१ इति परोक्षाया वा आमि विदाञ्चकार, विवेद "पञ्चम्याः कृगः" ३।४।५२ इति पञ्चम्या वा आमि कृग एव तदन्तस्याऽनुप्रयोगे च विदाङ्करोतु, विदाङ्करवाणि, कित्त्वात् न गुणः; पक्षे वेत्तु, वेदानि । "व्यञ्जनाद् देः०" ४।३।७८ इति देर्लुकि सः अवेत् । "सेः स्द्धां०" ४।३।७९ इति सेर्लुकि दो वा रुत्वे च अवेः त्वम् , अवेत् त्वम् । वेदिता, विदितः, विदितवान् । "वौ व्यञ्जनादे०" ४।३।२५ इति विकल्पाऽपवादे "रुदविद०" ४।३।३२ इति क्त्वासनोः कित्त्वे विदित्वा, विविदिषति । "नाम्युपान्त्य०" ५।१।५४ इति के विदः । णौ "साहिसाति०" ५।१।५९ इति शे वेदयः । क्विपि वित् , वेदवित् । "तत्र क्वसु०" ५।२।२ इति क्वसौ विविद्वान् । "स्क्रसृवृ०" ४।४।८१ इति इटः "घसेकस्वरा०" ४।४।८२ इति नियमादत्राऽभावः । "गमहन०" ४।४।८३ इति वेत्तेः अपि वेट् इत्येके, तन्मते विविदिवान्, विविद्वान् । "वा वेत्तेः क्वसुः" ५।२।२२ विद्वान् , विदन् । "वेत्तिच्छिद०" ५।२।७५ इति किति घुरे वेदनशीलो विदुरः । "विन्द्विच्छ" ५।२।३४ इति निपातनाद् उः, वेदनशीलो विन्दु । घञि वेदः । स्त्रियां भावाकर्त्रोः नाम्नि "समज०" ५।३।९९ इति क्यपि विद्या । "णिवेत्त्या०" ५।३।१११ इत्यने वेदना । करणाधारे पुंनाम्नि "व्यञ्जनाद्०" ५।३।१३२ इति घञि वेदः । "विद्दृगृभ्यः०" ५।४।५४ इति णमि अतिथिवेदं भोजयति । उणादौ "विदिभिदि०" ( उ० २३४ ) इति कित्यथे विदथो ज्ञानी । "विदिवृत्तेर्वा" ( उ० ६१० ) इति वा किद् इः, विदिः शिल्पी, वेदिः इज्यादिस्थानम् । "अस्" ( उ० ९५२ ) इत्यसि नखादित्वात् अदभावे नवेदाः, सर्ववेदाः, सर्वस्वदक्षिणक्रतुयाजी । यस्तु ओष्ठ्यादिः जलकणवाची [१]विन्दुः स विन्देः "भृमृतृ०" ( उ० ७१६ ) इत्यौ । विदिंच् सत्तायाम् [ ३।११५ ] विद्यते । विद्लृन्ती लाभे [ ५।८ ] विन्दते, विन्दति । विदिंप् विचारणे [ ६।२५ ] विन्त्ते । विदिण् चेतनाख्याननिवासेषु [ ९।२४२ ] वेदयते ॥

१. उणादि विवरणे विदु अवयवे, विन्दुः विप्रुट् । अ चि. टीकायां 'बिदु अवयवे बिन्दति, बिन्दुः; पुंलिङ्ग., "भृमृतृ०" ( उणा० ७१६ ) इत्युः [ ४।१५९ ] धातु पाठे १।३१० विदु अवयवे इत्यस्ति ॥

## अथ नान्तोऽनिट् च ॥

'४२ हनंक् हिंसागत्योः' । हन्ति । "नेर्ङ्मादा०" २।३।७९ इति नेर्णत्वे प्रणिहन्ति चौरस्य । अत्र "निप्रेभ्यो०" २।२।१५ इति वा कर्मणः कर्मत्वे "शेषे" २।२।८१ इति षष्ठी । "यमिरमि०" ४।२।५५ इति नस्य लुकि हतः । "गमहन०" ४।४।८३ इत्युपान्त्यलुकि "हनो घ्नो०" २।१।११२ इति घ्नि घ्नन्ति । "हनः" २।३।८२ इति णत्वे प्रहण्यते । "वमि वा" २।३।८३ इति वा णत्वे प्रहण्वः, प्रहन्वः; प्रहण्मि, प्रहन्मि । "हनो घि" २।३।९४ इति णत्वप्रतिषेधे प्रघ्नन्ति । "आङो यमहनः०" ३।३।८६ इति आत्मनेपदे कर्मण्यसति आहते । स्वाङ्गे कर्मणि आहते शिरः । "नेह आहन्ति शिरः शत्रोः" । "क्रियाव्यतिहारे०" ३।३।२३ इत्यत्र गतिहिंसार्थवर्जनात् "शेषात् परस्मै" ३।३।१०० इति परस्मैपदे व्यतिघ्नन्ति । "जिणवि०" ४।३।१०१ इति घनि जघान, जघ्नतुः, जघ्नुः । थवि "सृजिदृशि०" ४।४।७८ इति वेटि "अङे हि०" ४।१।३४ इति हस्य घत्वे जघनिथ, जघन्थ । "गमहन०" ४।४।८३ इति क्वसौ वेटि जघ्निवान्, जघन्वान । अनुस्वारेत्त्वान्नेट् हन्ता, हतः । "हनृतः स्यस्य" ४।४।४९ इति इटि हनिष्यति । "शाशसू०" ४।२।८४ इति घ्नन्तस्य, जहि शत्रून् । यङ्लुप्यपि जहि । यङ्लुपि नेच्छन्त्येके, तन्मते "यमिरमि०" ४।२।५५ इति नलुकि जङ्घहि । ये तु "तिवाशवा०" [ न्याय० १८ ] इति न्यायस्य सूत्रगणनिर्दिष्टेऽपि प्रवृत्त्यभ्युपगमात् "यमिरमि०" ४।२।५५ इति लुगभावं, क्ङिति "अहन्पञ्चम०" ४।१।१०७ इति हन्तेरपि दीर्घत्वं चेच्छन्ति तेषां मते जङ्घांहि । भावकर्मणोः "स्वरग्रह०" ३।४।६९ इति वा ञिटि घानिष्यते त्वया, पक्षे हनिष्यते । "हनो वध०" ४।४।२१ इति वधे वध्यात् । हन्यात् इति तु सप्तम्यां ञिवर्जनात् ञिटि वधाऽभावे घानिषीष्ट । "अद्यतन्यां वा०" ४।४।२२ इति वधे अनुस्वारेत्त्वेऽप्यनेकस्वरत्वात् इटि "स्वरस्य परे०" ७।४।११० इत्यल्लुकः स्थानित्वात् "व्यञ्जनादे०" ४।३।४७ इति वा वृद्ध्यभावे अवधीत् । वा त्वात्मने आवधीष्ट । पक्षे "हनः सिच्" ४।३।३८ इति सिचः क्त्त्वात् "यमिरमि०" ४।२।५५ इति नो लुकि आहत । सनि "स्वरहन०" ४।१।१०४ इति दीर्घे जिघांसति । यङि "हनो घ्नीर्वधे" ४।३।९९ जेघ्नीयते । वधादन्यत्र जङ्घन्यते । "चराचर०" ४।१।१३ इत्यचि वा निपातनात्, घनाघनः; पक्षे हनः "ञ्णिति घात्" ४।३।१०० घातयति । "हत्याभूयं भावे" ५।१।३६ इति

निपातनात् क्यपि हत्या, ब्रह्महत्या । कर्मणि "ऋवर्ण०" ५।१।१७ इति घ्यणि घात्यः । "आशिषि०" ५।१।८० इति डे शत्रुं वध्यात्, शत्रुहः । "क्लेशादिभ्यो ऽपात्" ५।१।८१ क्लेशापहः, तमोपहः । "कुमारशीर्षाण्णिन्" ५।१।८२ कुमारघाती, शीर्षघाती । "अचित्ते टक्" ५।१।८३ पित्तघ्नं घृतम्, वातघ्नं तैलम् । "जायापतेश्चिह्नवति" ५।१।८४ जायाघ्नो द्विजः, पतिघ्नी कन्या । "ब्रह्मादिभ्यः" ५।१।८५ ब्रह्मघ्नः, शत्रुघ्नः । बाहुलकात् संप्रदानेऽपि गां हन्ति यस्मै दातुं स गोघ्नोऽतिथिः । "हस्तिबाहुकपाटाच्छक्तौ" ५।१।८६ हस्तिघ्नः, बाहुघ्नः, कपाटघ्नः मल्लः । शक्तेरन्यत्र हस्तिघातो रसदः, एवं बाहुघातः, कपाटघातः; एषु "कर्मणोऽण्" ५।१।७२ इति अण् । "नगरादगजे" ५।१।८७ नगरघ्नः अरिः । गजे तु नगरघातः । "राजघः" ५।१।८८ राजानं हन्ति राजघः । "पाणिघताडघौ शिल्पिनि" ५।१।८९ पाणिघः, ताडघः शिल्पी चेत्, अन्यत्र कर्मणोऽणि पाणिघातः, ताडघातः । एवं दार्वाघातः, चार्वाघातः, वर्णसंघातः । दार्वाघाटः, चार्वाघाटः, वर्णसंघाट इति तु घटतेर्हन्तेरेव वा पृषोदरादित्वात् । "हनो णिन्" ५।१।१६० पितृघाती, मातुलघाती । "ब्रह्मभ्रूण०" ५।१।१६१ इति भूते क्विपि ब्रह्महा, भ्रूणहा, वृत्रहा । "क्वचित्" ५।१।१७१ इति डे वरमाहन्ति वराहः, पटे हन्यते पटहः, कलं हन्ति कलहः । "युजभुज०" ५।२।५० इति घिनणि अभ्याहननशीलः अभ्याघाती । "शृकम०" ५।२।४० इत्युकणि आघातशीलः आघातुकः । "हनोऽन्तर्घनान्तर्घणौ देशे" ५।३।३४ अन्तर्हन्यते यस्मिन् अन्तर्घनः, अन्तर्घणो वा देशः; अन्तर्घातोऽन्यः । "प्रघणप्रघाणौ गृहांशे" ५।३।३५ प्रघणः, प्रघाणश्च द्वारालिन्दकः । "निघोद्घसंघोद्घनापघनोपघ्नं निमितप्रशस्तगणात्याधानाङ्गाऽऽसन्नम्" ५।३।३६ निघा वृक्षाः, निघाः शालयः, उद्घो मनुष्यः प्रशस्त इत्यर्थः । "मूर्तिनिचिताभ्रे घनः" ५।३।३७ दध्नो घनः काठिन्यमित्यर्थः । घनं दधि इति गुणवचनत्वात् घनं निचितम्, घनः अभ्रम् । "व्ययोद्रोः करणे" ५।३।३८ विघनः, अयोघनः, द्रुघनः । अरीहणादिपाठाद् णत्वे द्रुघणः । "स्तम्बाद् घ्नश्च" ५।३।३९ स्तम्बघ्नो दण्डः, स्तम्बघनः । "परेर्घः" ५।३।४० परिघः । "परेर्घा०" २।३।१०३ इति लत्वे पलिघः । "स्थादिभ्यः०" ५।३।८२ इति के विहन्यते अनेन विघ्नः । "हनो वा वध् च" ५।३।४६ इति वाऽलि वधः घातः । वध्य इति वधे घ्यणि, "न जन०" ४।३।५४ इति वृद्धिप्रतिषेधाद् वधमर्हति इति वा दण्डादेः ये । "सातिहेति०" ५।३।६४ इति क्तौ निपातनात् हेतिः । "हनश्च०" ५।४।६३ इति णमि समूलघातं हन्ति ।

" करणेभ्यः " ५।४।६४ उपलघातं हन्ति । " हिंसार्थादे० " ५।४।७४ इति णमि दण्डोपघातं गाः कालयति । " तृतीयोक्तं वा " ३।१।५० इति वा समासः पक्षे दण्डेनोपघातम् । णौ करणेऽनटि परिघातनः, परिघः । उणादौ " कीचकपेचक० " ( उ० ३३ ) इत्यके निपातनाद् वधकः हन्ता, व्याधिश्च; वधकं पद्मवीजम् । बाहुलकादन्यत्राऽपि वधाऽऽदेशः । लिहाद्यचि वृत्रवधः शक्रः । वधिता, वध्यः, वधनम् । " सीमन्त० " ( उ० २२२ ) इत्यन्ते निपातनात् हेमन्तः । "नीनूरमि०" ( उ० २२७ ) इति किति थे हथः पन्थाः कालश्च । " हनेर्घतजघौ च " ( उ० २७२ ) इति अने घतनः पापः, जघनं श्रोणिः । हिमम् हेमम् इति तु " क्षुहिभ्यां वा " ( उ० ३४१ ) इति वा किति मे हिनोतेः । " कोरचोर० " ( उ० ४३४ ) इति ओरे निपातनात् घोरः भीमः । " मावावद्य० " ( उ० ५६४ ) इति से हंसः । " कमिवमि० " ( उ० ६१८ ) इति णिदिः, घातिः प्रहरणम् । बाहुलकाद् घातादेशाभावे हानिः उच्छित्तिः, तत एव वा [1]णित्त्वे हनिः आयुधम् । " हन्तेरंह् च " ( उ० ६५४ ) इति अतौ अंहतिः व्याधिः, रथश्च । "कृहनेः०" ( उ० ७९१ ) इति तुकि हतुः हिमम्, नुकि बाहुलकात् नलुकि च हनुः कपोलाऽधः । अनेहा इति तु " नञ ईहेरेहेधौ च " ( उ० ९७५ ) इत्यसि ॥

## अथ शान्तः सेट् च ॥

' ४३ वशक् कान्तौ ' । कान्तिः इच्छा । " यजसृज० " २।१।८७ इति षत्वे वष्टिः । " वशेरयङि " ४।१।८३ इति य्वृति उष्टः, उशन्ति । शतरि उशन्, उशती । ऊशतुः, ऊशुः । " यजादिवश० " ४।१।७२ इति पूर्वस्य य्वृति उवाश । यङो वर्जनाद् य्वृदभावे वावश्यते । क्ये उश्यते । वशिता । क्ते उशितः । णौ नन्द्याद्यने वाशनः । " युवर्ण० " ५।३।२८ इत्यलि वशः । " साक्षादादि० " ३।१।१४ इति वा गतित्वे वशेकृत्य वशे कृत्वा गतः; गणनिर्देशात् सप्तम्यलुप् । उणादौ " घसिवशि० " ( उ० ४१९ ) इति किति ईरे उशीरं वरणीमूलम् । " वशेः कित् " ( उ० ८७६ ) इति इजि उशिक् कान्तः, उशीरं च । " वष्टेः कनस् " ( उ० ९८५ ) उशनाः शुक्रः । वशिघसी छान्दसौ इत्यन्ये । भाषायामपि प्रयोगदर्शनादत्रोपात्तौ ॥

---

१. अणिट्कारपक्षे इत्यर्थः ॥

## अथ सान्तौ द्वौ सेटौ च ॥

'४४ असक् भुवि'। भवनं भूः सत्ता । अस्ति, असि । "श्नास्त्योः०" ४।२।९० इत्यल्लुकि स्तः, सन्ति । "प्रादुरुपसर्गाद्०" २।३।५८ इति सस्य षत्वे प्रादुःष्यात्, प्रादुःषन्ति, अभिष्यात्, अभिषन्ति, निषन्ति, विषन्ति । "क्रिया-व्यतिहारे०" ३।३।२३ इति आत्मनेपदे "अस्तेः सि०" ४।३।७३ इति सो लुकि व्यतिसे, हस्त्वेति व्यतिहे । "धातोरनेक०" ३।४।४६ इत्यत्र भ्वस्त्योः एकतरानुप्रयोगेणैव साध्यस्य सिद्धेः उभयोरुपादानात् अस्तेः भ्वादेशाऽभावे चकासामाहे चैत्रेण । "शासस्०" ४।२।८४ इति ह्यन्तस्य एधिः, एधि । दिवि "सः सिजस्तेः०" ४।३।६५ इति ईति आसीत् । अद्यतन्याम् "अस्तिब्रुवोः०" ४।४।१ इति भ्वादेशे "पिबैति०" ४।३।६६ इति सिज्लुपि इडभावे च "भवतेः०" ४।३।१२ इति गुणाभावे अभूत्, अभूताम् । "भुवो वः०" ४।२।४३ इत्युपान्त्यस्य ऊत्वे "सिज्विदो०" ४।२।९२ इत्यत्र भुवो वर्जनाद् अनः पुसभावे च अभूवन् । णवि द्वित्वे "भूस्वपोः०" ४।१।७० इति पूर्वस्य उतः अत्वे "नामिनो०" ४।३।५१ इति वृद्धौ आवादेशे "भुवो वः०" ४।२।४३ इत्युपान्त्यस्य ऊत्वे च बभूव । किति "धातोरिवर्णो०" २।१।५० इत्युवि उपान्त्योत्वे च बभूवतुः, बभूवुः । शतरि सन्, सती । अशिति "अस्तिब्रुवोः०" ४।४।१ इति भूः, भविता, भविष्यति । क्तयोः "ऋवर्णश्र्यू०" ४।४।५७ इत्यधिकृत्य "उवर्णात्" ४।४।५८ इति नेट्, भूतः, भूतवान् । "य एच्चातः" ५।१।२८ इति ये "व्यक्ये" १।२।२५ इत्यवि च भव्यम् । "कृभ्वस्तिभ्यां०" ७।२।१२६ इति च्वौ शुक्लीस्याद् वस्त्रम् । असी गत्यादानयोश्च [ १९३२ ] असते, असति, आस । असूच् क्षेपणे [ ३।७८ ] अस्यति, अपास्थत् ॥

'४५ षसक् स्वप्ने'। "षः सो०" २।३।९८ इति सत्वे सस्ति, सस्तः, ससन्ति, ससास । "अनादेशादेः०" ४।१।२४ इत्येत्वे द्वित्वाभावे च सेसतुः, सेसुः । ससिता, ससितुम् । षोपदेशत्वात् "नाम्यन्तस्था०" २।३।१५ इति षत्वे सिषासयिषति । उणादौ "षसेर्णित्" (उ० २५९) इति ने सास्ना । "स्थाच्छामा०" (उ० ३५७) इति ये सस्यम् ॥

'यङ्लुक् च'। सर्वे धातवो यङ्लुबन्ताः कित्करणाद् अदादौ, परस्मै-पदिनश्च । "कर्तर्यनद्भ्यः०" ३।४।७१ इत्यत्र अदादिवर्जनात् शवभावे "शेषात्०" ३।३।१०० इति परस्मैपदे "यङ्तुरुस्तोर्बहुलम्" ४।३।६४ इति ईति बोभवीति,

वोभोति; पापचीति, पापक्ति; वावदीति, वावत्ति; पास्पर्धीति, पास्पर्द्धि। "क्रियाव्यतिहारे" ३।३।२३ इत्यात्मनेपदे "शीङो रत्" ४।२।११५ इत्यत्र ङित् निर्देशेन यङ्लुबन्तस्याऽग्रहणाद् अन्तो रदाऽऽदेशाऽभावे "अनतो०" ४।२।११४ इत्यति "योऽनेकस्वरस्य" २।१।५६ इति यत्वे च व्यतिशेश्यते। "शीङ एः०" ४।३।१०४ इत्यत्रापि ङित् निर्देशात् "[1]तिवा शवा०" [न्याय० १८] इति यङ्लुबन्तस्याऽग्रहणम्। तेन एर्नास्ति। यङ्लुबन्तमात्मनेपदे न प्रयुज्यत इत्येके। भावकर्मणोः आत्मनेपदे न प्रयुज्यत इत्यन्ये। यङ्लुबन्तस्य चर्करीतं चर्करीतिश्च पूर्वेषां संज्ञा। यङ्लुबन्तं छन्दसि एवेति केचित्॥

## अथाऽऽत्मनेपदिनः॥

'४६ इङ्क् अध्ययने'। इङिकोः अधिना अवश्यंभावी योगः। [2]यदाह "कश्चित्तमनुवर्तते"। ङित्त्वाद् "इङितः०" ३।३।२२ इत्यात्मनेपदे अधीते, अधीयाते, अधीयते। "गाः परोक्षायाम्" ४।४।२६ अधिजगे। अत्र [3]परोक्षाविषये गाः, तेन प्राक् तु स्वरे स्वरविधेः इति प्रागेव द्वित्वं न भवति। "णौ सन्ङे वा" ४।४।२७ अधिजिगापयिषति, अध्यजीगपत्, पक्षे "णौ क्रीजीङः" ४।२।१० इत्यात्वे, "अर्त्तिरी०" ४।२।२१ इति पौ च अध्यापिपयिषति, अध्यापिपत्। "वाद्यतनीक्रियातिपत्योर्गीङ्" ४।४।२८ अध्यगीष्ट, अध्यगीष्यत; पक्षे "स्वरादेस्तासु" ४।४।३१ इति वृद्धौ अध्यैष्ट, अध्यैष्यत। "[4]सनीङश्च" ४।४।२५ इति गमौ "स्वरहन०" ४।१।१०४ इति दीर्घे च अधिजिगांसते। अनुस्वारेत्त्वान्नेट्, अध्येता, अध्येतुम्। "गमोऽनात्मने" ४।४।५१ इति सादेशादिरिट्, अधिजिगमिषितव्यम्। "य एचातः" ५।१।२८ इति ये अध्येयम्। णके अध्यायकः। ण्यन्तात् णके अध्यापकः। "कर्मजा तृचा च" ३।१।८३ इति प्रतिषिद्धोऽपि याजकादित्वात् षष्ठीसमासः साध्वध्यापकः। क्ते अधीतम्। "इष्टादेः"

---

१. तिवा १, शवा २, ऽनुबन्धेन ३, निर्दिष्टं यद्गणेन ४ च। एकस्वरनिमित्तं ५ च पञ्चैतानि न यङ्लुपि॥ (न्याय० १८)॥

२. तु. यदाहुः "धात्वर्थं बाधते कश्चित्, कश्चित्तमनुवर्तते। तमेव विशिनष्ट्यन्योऽनर्थकोऽन्यः प्रयुज्यते"। (हैं. प्र. पृ. ६५३)। अन्यत्र तु इत्थमुत्तरार्धं दृश्यते, "विशिनष्टि तमेवार्थमुपसर्गगतिस्त्रिधा। (क्षी. त. पृ. १७६ टि.)॥

३. परोक्षायां त्रि इति मु०॥ ४. सनीश्च इति मु०॥

७।१।१६८ इति इनि अधीती शास्त्रे, अत्र "न्याय्ये क्तेनः" २।२।९९ इति द्वितीयापवादः सप्तमी । मनि अध्येमा । विचि अध्यैः । क्विपि अधीत् । "धारीङोऽकृच्छ्रेऽतृश्" ५।२।२४ अधीयन् सिद्धान्तम् । अत्र "[1]तृन्नुदन्ता०" २।२।९० इति प्रतिषेधात् "कर्मणि कृतः" २।२।८३ इति षष्ठी नास्ति । "युवर्ण०" ५।३।२८ इत्यलपवादे "इङोऽपादाने तु टिद् वा" ५।३।१९ इति घञि उपाध्यायः, स्त्री चेत् उपाध्याया । टित्त्व पक्षे "अणयेञे०" २।४।२० इति ङ्याम् उपाध्यायी । "पुंनाम्नि०" ५।३।१३० घाऽपवादे "न्यायावाया०" ५।३।१३४ इति घञि अधीयते अस्मिन् इति अध्यायः ॥

'४७ शीङ्क् स्वप्ने' । "शीङ एः शिति" ४।३।१०४ शेते शयाते । "शीङो रत्" ४।२।११५ इत्यन्तो रति शेरते । "अधेः शीङ्०" २।२।२० इत्याधारस्य कर्मत्वे ग्राममधिशेते । "क्ङिति यि शय्" ४।३।१०५ शय्यते अधिशय्य गतः । यङि शाशय्यते । यङ्लुपि शेशेति, शेशयीति । शिश्ये, शयिता, शयितुम् । "य एच्चा०" ५।१।२८ इति ये शेयम् । अचि शयः । "पार्श्वादिभ्यः शीङः" ५।१।१३५ इति अः, पार्श्वशयः । "उर्ध्वादिभ्यः कर्तुः" ५।१।१३६ उर्ध्वशयः, उत्तानशयः । "आधारात्" ५।१।१३७ खशयः, गिरिशयः । गिरिश इति तु लोमादित्वान्मत्वर्थीये शे । "व्रता०" ५।१।१५७ इति णिनि स्थण्डिलशायी । "श्लिषशीङ्०" ५।१।९ इति साप्यादपि वा कर्तरि क्ते "न डीङ्शीङ्" ४।३।२७ इति कित्त्वप्रतिषेधाद् गुणे उपशयितो गुरुं शिष्यः, पक्षे कर्मणि क्ते उपशयितो गुरुः शिष्येण । "शीङ्श्रद्धा०" ५।२।३७ इत्यालौ शयनशीलः शयालुः । "युवर्ण०" ५।३।२८ इति अलि संशयः "व्युपाच्छीङः" ५।३।७७ इति घञि तव विशायः, मम विशायः; तव राजोपशायः, मम राजोपशायः । "समज०" ५।३।९९ इति क्यपि शेरते अस्यामिति शय्या । आधारे अनटि शयनम् । शवानां शयनम् श्मशानमिति पृषोदरादिः । उणादौ "शीभी०" (उ० ७१) इति आनके शयानकः अजगरः शैलश्च । शिखा शाखा इति तु "श्यतेरिच्च वा" (उ० ८५) इति खे श्यतेः । "शीरी०" (उ० २०१) इति किति ते शीतम् । "दृपृभृ०" (उ० २०७) इत्यते शयतः निद्रालुः चन्द्रश्च । "न्युद्भ्यां शीङः" (उ० २२८) इति किति थे निशेरते अस्मिन् इति निशीथः अर्धरात्रः रात्रिः प्रदोषश्च । उच्छीथः स्वप्नः टिट्टिभश्च । "भृशीशपि०"

---

१. तृनु॰ इति मु० ॥

( उ० २३२ ) इति अथे शयथः अजगरः । " जीणूशीदी० " ( उ० २६१ ) इति किति ने शीनः पीलुः । " शीङः सन्वत् " ( उ० २६७ ) इति डिति ने शिश्नम् मेढ्रम् । " भापा० " ( उ० २९६ ) इति पे शेपः पुच्छम् । " रीशीभ्यां फः " ( उ० ३१४ ) शेफः मेढ्रम् । " शुकशीमूभ्यः कित् " ( उ० ४६३ ) इति ले शीलम् । " शीङस्तलकूपालवालणवलणूवलाः " ( उ० ५०१ ) शीतलम् अनुष्णम्, शेपालम्, जपादित्वाद् वत्वे शेवालम्, शैवालम्, शैवलम्, शेवलं च जलमलः । " शीङापो ह्रस्वश्च वा " ( उ० ५०६ ) इति वे शिवम् भद्रम्, शिवा पथ्या, शेवम् धनं सुखं च; शेवः अजगरः, शेवा [1]प्रचला निद्राविशेषः । " भृमृतॄ० " ( उ० ७१६ ) इति उः, शयुः अजगरः । " शीङो धुक् " ( उ० ७८४ ) शीधुः । " शीङः फस् च " ( उ० ९८२ ) इति फसि पसि च शेफः शेपश्च मेढ्रम् । शेखरशिखरौ तु " शाखेरिदेतौ चातः " ( उ० ४०० ) इत्यरे शाखेः ॥

दीधीङ् दीप्तिदेवनयोः । वेवीङ् वीसमानार्थः एतावपि केचित् पठन्ति, छान्दसत्वात्तु उपेक्षितौ ॥

' ४८ ह्नुंङ्क् अपनयने ' । अपनयनम् अपलापः । " मनयवल० " १।३।१५ इति मः अनुनासिकाऽनुस्वारयोः किन्ह्नुते, किं ह्नुते । "श्लाघह्नुस्था०" २।२।६० इति चतुर्थ्यां चैत्राय निह्नुते । [2]जुह्नुवे । यङि जोह्नूयते । अनुस्वारेत्त्वान्नेट्, ह्नोता, ह्नोतव्यम् । " य एचा० " ५।१।२८ इति ये ह्नव्यम् । " उवर्णात्० " इति घ्यणि ह्नाव्यम् अवश्यम् । " युवर्ण० " ५।३।२८ इत्यलि अपह्नवः ॥

## अतः परमूदन्तः सेट् च ॥

' ४९ षूङौक् प्राणिगर्भविमोचने ' । " षः सो० " २।३।९८ इति सत्वे सूते, सुवाते, सुवते । " सूतेः पञ्चम्याम् " ४।३।१३ इति गुणाभावे " धातोरिवर्णो०" २।१।५० इत्युवि सुवै, सुवावहै, सुवामहै । षोपदेशत्वात् "नाम्यन्तस्था०" २।३।१५ इति षत्वे सुषुवे । क्ये सूयते । णौ सनि सुषावयिषति । औदित्वात् वेटि सोता, सविता । किति " उवर्णात् " ४।४।५८ इति नेट्, सूतः, सूतवान् । युवतौ " भोजसूतयोः० " २।४।८१ इत्यन्तस्य ष्ये सूत्या । युवतेरन्यत्र " कुत्सिता० " ७।३।३३ इति कपि " द्वयेष० " २।४।१०९ इत्यतो वेत्वे सूतिका, सूतका । क्तौ

१. प्रवला इति मु० ॥

२. जुह्नुते इति मु० ॥

सूतिः । " निर्दुःसुवेः० " २।३।५६ इति षत्वे निःषूतिः, दुःषूतिः, सुषूतिः । सूत्वा । " संचाय्य० " ५।१।२२ इति घ्यणि निपातनाद् राजसूयः क्रतुः । क्विपि सूः, प्रसूः, अण्डसूः, शतसूः । " प्रात्सुजोरिन् " ५।२।७१ इत्यत्र [1]सूतेरपि ग्रहणमित्येके, प्रसवशीलः प्रसवी । " क्लीबे० " ५।३।१२३ इति क्ते सूतम् । स्वार्थे के सूतकम् । उणादौ " ऋज्यजि० " (उ० ३८८) इति किति रे सूरः । " [2]सुवः कित् " (उ० ७८८) इति नौ सूनुः । पूङौच् प्राणि प्रसवे [३।९९] सूयते । षूत् प्रेरणे [५।१८] सुवति ॥

## अथ चान्तः सेट् च ॥

'५० पृचैङ् ५१ पृजुङ् ५२ पिजुकि संपर्चने' । संपर्चनं मिश्रणम् । पृक्ते संपृक्ते । क्ये संपृच्यते । संपपृचे, संपर्चिता, संपर्चितुम्, ऐदित्त्वात् क्तयोर्नेट्, संपृक्तः संपृक्तवान् । " ऋदुपान्त्या० " ५।१।४१ इति क्यपि संपृच्यः । घञि " क्तेऽनिट० " ४।१।१११ इति कत्वे संपर्कः । संपृक्तेरपि " समः पृचैप्० " ५।२।५६ इति घिनण् इत्येके, तन्मते संपर्चनशीलः संपर्की । अयं पृजैङ् इति [3]कौशिकः, पृक्ते । पृचैप् संपर्के [६।१०] पृणक्ति ॥

## अथ जान्ताः पञ्च सेटश्च ॥

'५१ पृजुङ्' । उदित्त्वान्ने पृङ्क्ते, पृञ्जाते, पृञ्जते, पपृञ्जे, पृञ्जिता, पृञ्जितुम् ॥

'५२ पिजुकि' । उदित्त्वान्ने पिङ्क्ते, पिञ्जाते, पिञ्जते, पिपिञ्जे, पिञ्जिता, पिञ्जितुम् । यङि पेपिञ्ज्यते । यङ्लुपि पेपिङ्क्ति, पेपिञ्जीति । घञि न्यङ्क्वादित्वाद् गत्वे पिङ्गः । उणादौ " ऋच्छिचटि० " (उ० ३९७) इति अरे पिञ्जरः । " पिञ्जिमञ्जि० " (उ० ४८८) इति ऊले पिञ्जूलः हस्तिबन्धनपाशः । वर्णार्थोऽयमित्येके, अव्यक्तशब्दार्थ इति कौशिकः । पिजुण् हिंसादौ भासार्थश्च [९।२०८], पिञ्जयति ॥

'५३ वृजैकि वर्जने' । वृक्ते, वृजाते, वृजते, ववृजे, वर्जिता, वर्जितुम् । ऐदित्त्वात् क्तयोर्नेट्, वृक्तः, वृक्तवान् । वृजैण् वर्जने [९।३८९] युजादित्वाद् वा णिचि वर्जयति वर्जति ॥

---

१. सेतोपि इति मु० ॥
२. " सूङः कित् " इति उणादिसूत्रे पाठः ॥
३. पृचि इति कौशिकः, पृङ्क्ते ( क्षी. त. १७० ) ॥

'५४ णिजुकि शुद्धौ'। "पाठे०" २।३।९७ इति णस्य नत्वे, उदित्त्वान्ने च निङ्क्ते, निञ्जाते। णोपदेशत्वात् "अदुरुपसर्गा०" २।३।७७ इति णे प्रणिङ्क्ते। निनिञ्जे, निञ्जिता, निञ्जितुम्॥

'५५ [1]शिजुकि अव्यक्ते शब्दे'। तालव्यादिः। उदित्त्वान्ने शिङ्क्ते, शिञ्जाते, शिञ्जते। आनशि शिञ्जानः। शिशिञ्जे, शिञ्जिता, शिञ्जितुम्। यङि शेशिञ्ज्यते। यङ्लुपि शेशिञ्जीति, शेशिङ्क्ति। ग्रहादित्वाद् णिनि शिञ्जिनी। क्लीबे क्ते शिञ्जितम्॥

## अथ डान्तः सेट् च॥

'५६ [2]ईडिक् स्तुतौ'। "अघोपे०" १।३।५० इति डस्य प्रथमत्वे, "तवर्गस्य०" १।३।६० इति तस्य टत्वे च ईट्टे, ईडाते, ईडते। "ईशीडः०" ४।४।८७ इति इटि ईडिषे, ईडिध्वे, ईडिष्व, ईडिध्वम्। स्वसहचरितस्य ध्वमो ग्रहणाद् ह्यस्तनीध्वमीडभावे ऐड्ढ्वम्। "गुरुनाम्यादेः०" ३।४।४८ इति परोक्षाया आमि ईडाञ्चक्रे। ईडिता, ईडितुम्। "ऋवर्ण०" ५।१।१७ इति घ्यणि ईड्यः। क्ते ईडितः। "क्तेटो०" ५।३।१०६ इत्यः, ईडा। पृषोदरादित्वाद् ह्रस्वे इडा भूः। उणादौ "म्लेच्छीडेर्ह्रस्वश्च वा" (उ० ३) इत्यः, इडः ईडश्च देवविशेषः; इडा ईडा च भूः॥

## अथ रान्तः सेट् च॥

'५७ [3]ईरिक् गतिकम्पनयोः'। ईर्ते, ईराते, ईरते। क्ये ईर्यते। "गुरुनाम्यादेः०" ३।४।४८ इत्यामि ईराञ्चक्रे। ईरिता, ईरितुम्। "ऋवर्ण०" ५।१।१७ इति घ्यणि ईर्यः। "नाम्युपान्त्य०" ५।१।५४ इति के ईरः। "अजातेः०" ५।१।१५४ इति णिनि, "स्वैरस्वैरी०" १।२।१५ इति स्वस्य अतः ईता सह ऐत्वे स्वैरी। उणादौ "तकृश०" (उ० १८७) इत्यणे समीरणः। "कफादीरेर्ल च" (उ० ८३९) इत्युः, कफेलुः श्लेष्मातकः। ईरण् क्षेपे [९।४०८] युजादित्वाद् वा णिचि ईरयति, ईरति॥

---

१. सिजि इति काशकृत्स्नः। (का. धा. पृ. १२६)॥

२. ईड-ईल स्तुतौ इति काशकृत्स्नः। (का० धा० पृ० १२५)॥

३. ईर गतौ इति क्षीरस्वामी। (क्षी. त. पृ. १६८)॥

## अथ शान्तः सेट् च ॥

'५८ ईशिक् ऐश्वर्ये'। "स्मृत्यर्थ०" २।२।११ इति वा कर्मणः कर्मत्वे, "शेषे०" २।२।८१ इति षष्ठ्यां भुव ईष्टे, भुवमीष्टे। "ईशीड०" ४।४।८७ इति इटि ईशिषे, ईशिध्वे, ईशिष्व, ईशिध्वम्। स्वसाहचर्येण पञ्चमीध्वमो ग्रहणात् ह्यस्तनी-ध्वमीडभावे "यजसृज०" २।१।८७ इति शस्य षत्वे, "तवर्गस्य०" १।३।६० इति धस्य ढत्वे, "तृतीयस्तृतीय०" १।३।४९ इति षस्य डत्वे "स्वगदेस्तासु" ४।४।३१ इति वृद्धौ ऐड्ढ्वम्। "गुरुनाम्यादेः०" ३।४।४८ इति परोक्षाया आमि ईशाञ्चक्रे। ईशिता, ईशितुम्। "नाम्युपान्त्य०" ५।१।५४ इति के ईशः। आनशि ईशानः। "स्थेश०" ५।२।८१ इति वरे इष्टे इत्येवंशीलः ईश्वरः। स्त्रिया-मापि ईश्वरा। ईश्वरी इति तु "अश्नोतेरीचादेः०" (उ० ४४२) इति वरटि ङ्याम्। क्ते ईशितः। "क्तेटो०" ५।३।१०६ इत्यः० ईशा। उणादौ "युयुजि०" (उ० २७७) इति किति आने ईशानः॥

## अथ सान्ताः पञ्च सेटश्च ॥

'५९ वसिक् आच्छादने'। वस्ते पटम्। क्ये वस्यते। "अनादेशादेः०" ४।१।२४ इति एत्वस्य द्वित्वाभावस्य च "न शस०" ४।१।३० इति प्रतिषेधे ववसे, ववसाते, ववसिरे। वसितः, वसितवान्। आनशि वसानः। करणेऽनटि वसनम्। "इङितो०" ५।२।४४ इत्यने वसनशीलो वसनः। वसित्वा। उणादौ "प्लुज्ञा०" (उ० ६४६) इति तौ वस्तिः मूत्राधारश्चर्मपुटः। "त्रट्" (उ० ४४६) इति त्रटि वस्त्रम्। "वस्त्यगिभ्यां णित्" (उ० ९७०) इति असि वासः। वसं निवासे [ १९९९ ] वसति, वस्ता, उषितः, उषित्वा ॥

'६० आङः–शासूकि इच्छायाम्'। आङ इति आङ्पूर्व एवायं प्रयोज्यो न केवलो नाप्यन्योपसर्गपूर्व इत्येवमर्थम्[1]। "क्वौ" ४।४।११९ इत्येव सिद्धे "आङः०" ४।४।१२० इति वचनं क्वावेवाङ्पूर्वस्य शास्तेः आस इसिति नियमार्थम्। तेन "इसासः शासो०" ४।४।११८ इति इसभावे आशास्ते। क्ये आशास्यते। "शास्त्यसूवक्ति०" ३।४।६० इत्यत्र शास्तेः एव ग्रहणात् अङभावे आशासिष्ट। "उपान्त्यस्या०" ४।२।३५ इत्यत्राऽपि शास्तेः एव प्रतिषेधात् णौ ङे ह्रस्वे

१. अन्ये तु आङ्पूर्वकत्वं प्रायिकं, तेन प्रशास्महे इत्यपि सिद्धमित्याहुः (है. प्र. पृ. ६५७)॥

आशीशसत् । अस्यापि ह्रस्वप्रतिषेध इत्यन्ये, तन्मते आशशासत् । आशासिता, आशासितुम् । ऊदित्त्वात् क्त्वि वेट्, अत एव चोत्तरपदान्तस्यापि क्त्वो यबभावः । यपि हि स्ताद्यशिद्भावादिटः प्राप्तिरेव नास्ति आशास्त्वा, आशासित्वा । यपमेव इच्छन्त्येके आशास्य । अनूदिदयमित्यन्ये । वेट्त्वात् क्तयोर्नेट्, आशास्तः, आशास्तवान् । येषां नोदित् तन्मते वेट्त्वाभावाद् इटि आशासितः, आशासितवान् । "इडितो०" ५।२।४४ इत्यने आशासनशीलः आशासनः । "क्रुत्संपदा०" ५।३।११४ इति क्विपि आशीः । "श्रुवादिभ्यः" ५।३।९२ इति क्तौ आशास्तिः । शासूक् अनुशिष्टौ [ २।३७ ] शास्ति, शिष्यते, अशशासत् ॥

'६१ आसिकू उपवेशने' । आस्ते । "कालाध्व०" २।२।२३ इति कर्मत्वे मासमास्ते । "अधेः शीङ्०" २।२।२० इति आधारस्य कर्मत्वे ग्राममध्यास्ते । "दयाया०" ३।४।४७ इति आमि आसाञ्चक्रे । "गत्यर्थाकर्मक०" ५।१।११ इति वा कर्तरि क्ते आसितश्चैत्रः । पक्षे भावे आसितं चैत्रेण । साप्यात् "श्लिष-शीङ्०" ५।१।९ इति वा कर्तरि क्ते उपासितो गुरुं शिष्यः, पक्षे कर्मणि उपासितो गुरुः शिष्येण । आसिता, आसितुम् । आनशि निपातनाद् आसीनः । "आस्यटि०" ५।३।९७ इति क्यपि आस्या । "णिवेत्त्या०" ५।३।१११ इति अने आसना, उपासना । "श्रुवादिभ्यः" ५।३।९२ इति क्तौ उपास्तिः ॥

'६२ कसुकि गतिशातनयोः' । उदित्त्वान्ने कंस्ते, चकंसे, कंसिता । यङि चाकंस्यते । [1]यङ्लुपि चाकंस्ति, चाकंसीति । अचि घञि वा कंसः । "क्तेटो०" ५।३।१०६ इति अः, कंसा ॥

'६३ णिसुकि चुम्बने' । उदित्त्वान्ने, "पाठे०" २।३।९७ इति नत्वे च निंस्ते । णोपदेशत्वाद् "अदुरुपसर्गा०" २।३।७७ इति णत्वे प्रणिंस्ते परिणिंस्ते । "नाम्यन्तस्था०" २।३।१५ इत्यत्र शिटा नकारेण [2]चान्तरेऽपि इति प्रत्येकं वाक्यसमाप्तेः इष्टत्वात् द्वयव्यवधाने षत्वाभावे निंस्से । निनिंसे, निंसिता, निंसितुम् । यङि नेनिंस्यते । यङ्लुपि नेनिंसीति, नेनिंस्ति । "ऋवर्ण०" ५।१।१७ इति घ्यणि निंस्यम् । अचि घञि वा निंसः । "निंसनिक्षनिन्दः कृति वा" २।३।८४ इति वा णत्वे प्रणिंसनीयम्, प्रनिंसनीयम्, प्रणिंसनम्, प्रनिंसनम् । कृतोऽन्यत्राऽपि णत्वविकल्प इत्यन्ये, तन्मते प्रणिंस्ते प्रनिंस्ते, प्रणिंसाते प्रनिंसाते, प्रणिनिंसे प्रनिनिंसे ॥

---

१. यङ्लुपि चाकंसीति इति मु० ॥
२. वाऽन्त° इति मु० ॥

## अथ क्षान्तः सेट् च ॥

'६४ चक्षिक् व्यक्तायां वाचि'। "संयोगस्यादौ०" २।१।८८ इति कस्य लुकि आचष्टे। "नवा परोक्षायाम्" ४।४।५ इति वा क्शांगख्यांगोः ङित्त्वात् फलवत्कर्तर्यात्मनेपदे आचक्शे, आचख्ये। फलवतोऽन्यत्र "शेषात्०" ३।३।१०० इति परस्मैपदे आचक्शौ आचख्यौ पक्षे आचचक्षे। अशिति "चक्षो-वाचि०" ४।४।४ इति क्शांगख्यांगौ। अनुस्वारेत्त्वान्नेट्, आक्शास्यते। "शिट्याद्यस्य०" १।३।५९ इति वा द्वितीये आख्शास्यते आख्यास्यते, आक्शा-स्यति आख्शास्यति आख्यास्यति। "शास्त्यसूवक्ति०" ३।४।६० इति अङि आख्यत्। "य एचा०" ५।१।२८ इति ये आख्येयम्। "उपसर्गादातो०" ५।३।११० इति डे आख्यः, प्रख्यः। "तन्व्यधी०" ५।१।६४ इति णे ख्यायः। "समः ख्यः" ५।१।७७ इति डे गोसङ्ख्यः। "व्यञ्जनान्तस्था०" ४।२।७१ इत्यत्र ख्यावर्जनात् क्तयोस्तस्य नत्वाभावे ख्यातः ख्यातवान्। "पुमोशिट्य०" १।३।९ इत्यत्र ख्यागो वर्जनात् मोऽनुस्वरानुनासिकपूर्वरेफाभावे पुंख्यानं, पुंख्यातिः। वागर्थस्यैव क्शांगख्यांगौ, तेन वर्जनार्थाद् घ्यणि संचक्ष्याः, दुर्जनाः वर्जनीया इत्यर्थः। भक्षणार्थादनटि चक्षणम्। चक्षिता। "स्वरात्" २।३।८५ इति कृतो नस्य [ णत्व संभवे ] "क्षुभ्नादिनाम्" २।३।९६ इति णत्वप्रतिषेधे प्रख्यानम् प्रख्यापनीयम्। उणादौ "तृकृगृ०" (उ० १८७) इति अणे विचक्षणः। ज्ञानार्थत्वादत्र क्शांगख्यांगभावः। "चक्षः शिद्वा" (उ० ९६९) इति असि [1]चक्षाः नृचक्षाः ख्याश्च राक्षसः, अवचक्षाः। "चक्षेः शिद् वा" (उ० १००१) इति किति उसि चक्षुः, परिचक्षुः, अवचक्षु, अवसंचक्षुः, अवख्युः। बाहुलकात् द्वित्वे संचचक्षुः, विचख्युः ॥

## अथोभयपदिनस्तत्राप्युदन्तौ ॥

'६५ ऊर्णुगक् आच्छादने'। "वोर्णोः" ४।३।६० इति वा औत्वे प्रोर्णौति प्रोर्णोति। "न दिस्योः" ४।३।६१ इति औत्वप्रतिषेधे प्रौर्णोत्, प्रौर्णोः। परस्मैपदे सिचि "वोर्णुगः०" ४।३ ४६ इति वा वृद्धौ प्रौर्णावीत्, पक्षे प्रोर्णवीत्। "वोर्णोः" ४ ३।१९ इति इटो वा ङित्वे प्रोर्णुवीत्। "गुरुनाम्यादेः०" ३।४।४८ इत्यत्र ऊर्णोः वर्जनात् परोक्षाया आमभावे प्रोर्णुनाव। ङित्त्वात् फलवत्कर्तर्यात्मनेपदे

---

१. चक्ष., ख्याः, उभे अपि रक्षो नाम्नी।..... नृचक्षाः राक्षसः। इति उणादि-विवरणे। चक्षः इति ष० र० प्रतयो. ॥

प्रोर्णुते । प्रोर्णुनुवे । "अट्यर्ति०" ३।४।१० इति यङि प्रोर्णोनूयते । प्रोर्णविता प्रोर्णुविता, प्रोर्णवितुम् प्रोर्णुवितुम् । सनि "इवृध०" ४।४।४७ इति वेटि प्रोर्णुनविषति प्रोर्णुनुविषति, पक्षे प्रोर्णुनूषति । क्विति "ऋवर्णश्र्यू०" ४।४।५७ इति नेट्, प्रोर्णुतः प्रोर्णुतवान् । उर्णा[1] इति तु "इणुर्विशा०" ( उ० १८२ ) इति णे ऊर्वतेः । ऊरुः [ "अर्तेरुर्च" उ० ७३६ ] उरुः [ "महत्युर्च" उ० ७३७] इत्यपि अर्तेः औ ॥

'६६ ष्टुंग्क् स्तुतौ' । "षः सो०" २।३।९८ इति सत्वे स्तुते । "उत औः०" ४।३।५९ इति औत्वे स्तौति । "यङ्तुरुस्तोः०" ४।३।६४ इति ईति स्तवीति । "उपसर्गात्सुगू०" २।३।३९ इति षत्वे अभिष्टौति, विष्टौति । "नाम्यन्तस्था०" २।३।१५ इति षत्वे तुष्टाव । यङि तोष्टूयते । यङ्लुपि तोष्टोति तोष्टवीति । सनि तुष्टूषति । अनुस्वारेत्त्वान्नेट्, स्तोता प्रस्तोता । सिचि परस्मैपदे "धूगुसुस्तोः०" ४।४।८५ इति इटि अस्तावीत् अस्तावीष्टाम् । "स्क्रसृवृ०" ४।४।८१ इत्यत्र स्तोः वर्जनात् परोक्षायाम् इडभावे तुष्टोथ । "उत औः०" ४।३।५९ इत्यत्र अद्वेः इति वचनात् द्वित्वे औत्वाभावः, तुष्टुव, तुष्टुम । परिनिविपूर्वस्य "स्तुस्वञ्जश्चा०" २।३।४९ इति अड्व्यवाये वा षत्वे पर्यष्टौत् पर्यस्तौत् । "दृवृग्०" ५।१।४० इति क्यपि स्तुत्यः । "दिद्युद्ददृद्०" ५।२।८३ इति क्विपि निपातनात् आयतस्तवनशीलः आयतस्तूः । एवं ग्रावस्तुत् । "नीदाव्०" ५।२।८८ इति त्रटि स्तोत्रम् । क्विपि "उपसर्गात्०" २।३।३९ इति षत्वे परिष्टुत् । "समासेऽग्नेः स्तुतः" २।३।१६ अग्निष्टुत् । "प्रात् स्नुद्रुस्तोः" ५।३।६७ इति घञि प्रस्तावः । "संस्तोः" ५।३।६६ समेत्य स्तुवन्ति अत्र संस्तावः । यज्ञविषयादन्यत्र "युवर्ण०" ५।३।२८ इति अलि संस्तवः । एवं स्तवः । "श्र्वादिभ्यः" ५।३।९२ इति अनडपवादे करणे क्तौ स्तुतिः । उणादौ "भीणूशलि०" ( उ० २१ ) इति के स्तोकम् । "दृकृनृ०" ( उ० २७ ) इति अके स्तवकः गुच्छः । "युसुकु०" ( उ० २९७ ) इति पे ऊत्वे च स्तूपः बोधिसत्वभवनम् । "अर्तीरि०" ( उ० ३३८ ) इति मे स्तोमः समूहः, यज्ञः, स्तोत्रं च । [2]ष्टुभूङ् स्तम्भे [ १।७८१ ] इत्यस्य तु स्तोभः अनर्थकं श्रुतिपूरणं वचः ॥

---

१. उर्वै हिंसायाम् [ १।२७० ] उर्णा मेषादिलोम, भ्रुवोरन्तरावर्तश्च ( उ. वि. ) ॥
२. ष्टुभुङ् इति मु० ॥

## अथोदन्तोऽनिट् च ॥

' ६७ ब्रूंग्क् व्यक्तायां वाचि ' । ब्रूते । किरादित्वात् ञिक्ययोरभावे कर्मकर्तरि अवोचत कथा स्वयमेव, ब्रूते कथा स्वयमेव । " ब्रूतः परादिः " ४।३।६३ इति ईति ब्रवीति । " ब्रूगः पञ्चानाम्० " ४।२।११८ इति ब्रूग आहाऽऽदेशे तिवां णवादौ च आह, आहतुः, आहुः, आत्थ, आहथुः । अशिति " अस्ति ब्रूवोः० " ४।४।१ इति वचादेशे, " यजादिवश्० " ४।१।७२ इति पूर्वस्य य्वृति उवाच । " यजादिवचेः० " ४।१।७९ इति य्वृति ऊचे । क्ये उच्यते । " शास्त्यसूवक्ति० " ३।४।६० इति अङि अवोचत । अनुस्वारेत्त्वान्नेट्, वक्ता, वक्तुम् । "प्रवचनीयादयः" ५।१।८ इति वा कर्तरि अनीये प्रवचनीयो गुरुर्धर्मस्य, पक्षे कर्मणि प्रवचनीयो धर्मो गुरुणा । घ्यणि " वचोऽशब्दनाम्नि " ४।१।११९ इति कत्वप्रतिषेधे वाच्यम् । शब्दसंज्ञायां तु वाक्यम् । " त्यजयज० " ४।१।११८ इति कत्वाभावे प्रवाच्यो ग्रन्थविशेषः । अचि " ब्रुवः " ५।१।५१ इति निपातनात् ब्राह्मणमात्मानं ब्रूते ब्राह्मणब्रुवः । " वेयिवद० " ५।२।३ इति निपातनाद् भूतमात्रे कानः, अनूचानः । " तत्र क्वसु० " ५।२।२ इति क्वसौ ऊचिवान् । " दिद्युद्द० " ५।२।८३ इति क्विपि निपातनात् वचनशीला वाक् । उणादौ " नीनूरमि० " (उ० २२७) इति किति थे उक्थम्-साम ॥

## अथ पान्तोऽनिट् च ॥

' ६८ द्विषींक् अप्रीतौ ' । द्विष्टे, द्वेष्टि । " वा द्विषा० " ४।२।९१ इति शिदनः वा पुसि अद्विषुः, अद्विषन् । " दृशिटो० " ३।४।५५ इति सकि अद्विक्षत् । अनुस्वारेत्त्वान्नेट्, द्वेष्टा द्वेष्टुम् । " ऋवर्ण " ५।१।१७ इति घ्यणि द्वेष्यः । " नाम्युपान्त्य० " ५।१।५४ इति के द्विषः । क्विपि सुद्विट्, मित्रद्विट्, ब्रह्मद्विट् । " सुग्द्विषा० " ५।२।२६ इति अतृशि " द्विषो वाऽतृशः " २।२।८४ इति कर्मणि षष्ठ्यां चौरस्य द्विषन्, चौरं द्विषन् । " युजभुज० " ५।२।५० इति घिनणि द्वेषणशीलो द्वेषी । घञि द्वेषः ॥

## अथ हान्तास्त्रयोऽनिटश्च ॥

' ६९ दुहींक् क्षरणे ' । दुग्धे गौः, दोग्धि । कर्मकर्तरि " एक धातौ० " ३।४।८६ इति ञिक्यात्मनेपदेषु प्राप्तेषु " भूषार्थ० " ३।४।९३ इति किरादित्वात् क्यनिषेधे दुग्धे गौः स्वयमेव । " स्वरदुहो वा " ३।४।९० इति वा ञिच्निषेधे

अदुग्ध गौः स्वयमेव, अदोहि गौः स्वयमेव । "हशिटो०" ३।४।५५ इति सकि अधुक्षत् । वतवर्गादावात्मनेपदे "दुहदिह०" ४।३।७४ इति सको वा लुकि अदुह्वहि, अधुक्षावहि, अदुग्ध, अधुक्षत, अदुग्धाः, अधुक्षथाः । अनुस्वारेत्त्वान्नेट्, दोग्धा दोग्धुम् । "कृवृषि०" ५।१।४२ इति वा क्यपि दुह्या गौः, पक्षे "ऋवर्ण०" ५।१।१७ इति घ्यणि दोह्या । क्विपि गोधुक् । "दुहेर्डुघः" ५।१।१४५ कामदुघो धर्मः । "युजभुज०" ५।२।५० इति घिनणि दोही । बाहुलकात् खलपवादेने सुदोहनः । घञि दोहः । उणादौ "कुमुद०" (उ० २४४) इति अदे निपातनात् दोहदः अभिलापविशेषः । "त्वष्टृ०" (उ० ८६५) इति तृप्रत्यये निपातनाद् दुहिता ॥

'७० दिहींक् लेपे' । दिग्धे देग्धि । "नेर्ङमादा०" २।३।७९ इति नेर्णत्वे प्रणिदेग्धि । "हशिटो०" ३।४।५५ इति सकि अधिक्षत् । वतवर्गादौ आत्मनेपदे वा सको लुकि अधिक्षावहि, आदिह्वहि, अधिक्षत, अदिग्ध । संदिदेहे, संदिदेह । यङि देदिह्यते । यङ्लुपि देदिहीति, देदेग्धि । अनुस्वारेत्त्वान्नेट्, देग्धा, दिग्धः, संदिग्धः । उणादौ "मृदिकन्दि०" (उ० ४६५) इति अले देहली द्वाराऽधोदारु ॥

'७१ लिहींक् आस्वादने' । लीढे, लेढि । "हशिटो०" ३।४।५५ इति सकि अलिक्षत् । वतवर्गादावात्मनेपदे वा सको लुकि अलिह्वहि, अलिक्षावहि, अलीढ, अलिक्षत । लिलिहे, लिलेह । यङि लेलिह्यते । यङ्लुपि लेलिहीति, लेलेढि । अनुस्वारेत्त्वान्नेट्, लेढा, लेढुम् । "ऋवर्ण०" ५।१।१७ इति घ्यणि लेह्यम् । लिहाद्यचि लेहः, आलेहः । बाहुलकात् "नाम्युपान्त्य०" ५।१।५४ इति के लिहः । उणादौ "लिहेर्जिह् च" (उ० ५१३) इति वे जिह्वा ॥

## अथ अदाद्यन्तर्गणो ह्वादयः ॥

'७२ हुंक् दानादनयोः' । दानमत्र हविष्प्रक्षेपः । अदनं भक्षणम् । "ह्वः शिति" ४।१।१२ इति द्वित्वे, "उत औः०" ४।३।५९ इत्यत्र अह्वः इत्युक्तेः औत्वाभावे जुहोति । जुहुतः । "ह्विणोर०" ४।३।१५ इति वत्वे "अन्तो नो लुक्०" ४।२।९४ इति न लुकि च जुह्वति । "ह्वयुक्त०" ४।२।९३ इति शिदनः पुसि, "पुस्पौ" ४।३।३ इति गुणे अजुहवुः । "भीह्री०" ३।४।५०

१. °हे र्डुघः इति मु० ॥

इति परोक्षाया वा आमि जुहवाञ्चकार । अत्र आमस्तिव्वद्भावात् "ह्वः शिति" ४।१।१२ इति द्वित्वम्, पक्षे जुहाव । "हुधुटो हेर्धिः" ४।२।८३ जुहुधि । अनुस्वारेत्त्वान्नेट्, होता, होतुम् । "य एचा०" ५।१।२८ इति ये हव्यम् । "उवर्णादावश्यके" ५।१।१९ घ्यणि हाव्यम् अवश्यम् । अचि हवः । "आशिष्यकन्" ५।१।७० हवकः । "दिद्युद्ददृद्०" ५।२।८३ इति क्विपि निपातनाद् हवनशीलः जुहूः । "युवर्ण०" ५।३।२८ इति अलि हवः । उणादौ "अर्तीरि०" (उ० ३३८) इति मे होम आहुतिः । "हुयामा०" (उ० ४५१) इति त्रे होत्रम् हवनम्, होत्रा ऋचः । "रुच्यर्चि०" (उ० ९८९) इति इसि हविः पुरोडाशादिः । "हुपूद्गो०" (उ० ८६३) इति तृः, होता ऋत्विक् ॥

## अथादन्तोऽनिट् च ॥

'७३ ओहांक् त्यागे' । ककारः अदादित्वज्ञापनार्थः, "न हाको लुपि" ४।१।४९ इत्यादौ विशेषणार्थश्च । जहाति । "हाकः" ४।२।१०० इति वा इत्वे जहितः । पक्षे "एषामी०" ४।२।९७ इति ईत्वे जहीतः । "आ च हौ" ४।२।१०१ जहाहि, जहिहि; पक्षे जहीहि । यि लुकि जह्यात् जह्याताम् । क्ये "ईर्व्यञ्जने" ४।३।९७ इति ईत्वे हीयते । "आतो णव औः" ४।२।१२० जहौ । "गापास्था०" ४।३।९६ इति आशिषि एः, हेयात् । यङि जेहीयते । यङ्लुपि "न हाको०" ४।१।४९ इति पूर्वस्य आत्वाभावे जहाति, पक्षे "यङ्तुरुस्तोः०" ४।३।६४ इति ईति जहेति । "ललाटवात०" ५।१।१२५ इति खशि शर्धंजहा माषाः । अनुस्वारेत्त्वान्नेट्, हाता, हातुम् । ओदित्त्वात् "सूयत्याद्यो०" ४।२।७० इति क्तयोस्तस्य नत्वे हीनः, हीनवान् । "हः काल०" ५।१।६८ इति टनणि जहाति भावान् इति हायनः संवत्सरः । जहति उदकमिति हायना व्रीहयः । "आतो डो०" ५।१।७६ इति डे कलां जहाति कलहः । "ङ्यापो बहुलं नाम्नि०" २।४।९९ इति पूर्वस्य ह्रस्वः । "हाको हिः क्त्वि" ४।४।१४ हित्वा । "ग्लाहा०" ५।३।११८ इति अनौ हानिः । "अहीयरुहो०" ७।२।८८ इत्यत्र हाको वर्जनात् पञ्चम्याः तस्वभावे सार्थात् हीनः । "पापहीयमानेन०" ७।२।८६ इति तृतीयायाः तसौ विद्यातो हीयते । उणादौ "भीणूशली०" (उ० २१) इति के निहाकः निःस्नेहः, निहाका गोधा । "पाहाकृभ्यां पयह्यौ च" (उ० ९५३) इति असि ह्यः अनन्तरातीतदिनम् । अहर् इति तु "श्वन्मातरिश्वन्०" (उ० ९०२) इति अनि निपातनात् अंहतेः ॥

## अथेदन्तावनिटौ च ॥

'७४ ञिभींक् भये'। बुद्धिसंसर्गपूर्वकेऽपायेऽवधित्वात् अपादानत्वे "पञ्चम्यपादाने" २।२।६९ इति पञ्चम्यां चौराद् बिभेति। "भियो नवा" ४।२।९९ इति वा इत्वे बिभितः, पक्षे बिभीतः। बिभ्यति। "द्व्युक्त०" ४।२।९३ इति शिदनः पुास "पुस्पौ" ४।३।३ इति गुणे अबिभयुः। "भीह्री०" ३।४।५० इति परोक्षाया वा आमि बिभयाञ्चकार बिभाय। हेतुकर्तृतो भये वर्तमानस्य णौ "बिभेतेर्भीष् च" ३।३।९२ इति आत्वे भीषादेशे आत्मनेपदे च मुण्डो भापयते, मुण्डो भीषयते। करणाद् भये तु कुञ्चिकयैनं भाययति। "भियो रुरुकलुकम्" ५।२।७६ भयशीलो भीरुः, भीरुकः, भीलुकः; कित्त्वादत्र न गुणः। "वर्षादयः क्लीबे" ५।३।२९ इति अलि भयम्। "स्यादिभ्यो वा" ५।३।११५ इति वा क्विपि भीः, पक्षे क्तौ भीतिः। उणादौ "भीणूशली०" (उ० २१) इति के भेकः मण्डूकः कातरश्च। "शीभी०" (उ० ७१) इति आनके भयानकः। "भियः षोऽन्तश्च वा" (उ० ३४४) इति किति मे भीमः भीष्मः। "भीवृधि०" (उ० ३८७) इति रे भेरः दुन्दुभिः कातरश्च। ऋफिडादित्वात् लत्वे भेलः चिकित्साग्रन्थकारः अप्राज्ञश्च ॥

'७५ ह्रींक् लज्जायाम्'। जिह्रेति, जिह्रीतः "योऽनेकस्वरस्य" २।१।५६ इति यापवादे, "संयोगात्" २।१।५२ इति इयि जिह्रियति। "द्व्युक्त०" ४।२।९३ इति शिदनः पुसि "पुस्पौ" ४।३।३ इति गुणे अजिह्रयुः। "भीह्री०" ३।४।५० इति परोक्षाया वा आमि जिह्रयाञ्चकार जिह्राय। यङि जेह्रीयते। णौ "अर्तिरी०" ४।२।२१ इति पौ "पुस्पौ" ४।३।३ इति गुणे ह्रेपयति। अनुस्वारेत्त्वान्नेट्, ह्रेता, ह्रेतुम्। "ऋह्रीघ्रा०" ४।२।७६ इति क्तयोस्तस्य वा नत्वे ह्रीणः, ह्रीतः, ह्रीणवान्, ह्रीतवान्। "य एचा०" ५।१।२८ इति ये ह्रेयम्। "कृत्संपदा०" ५।३।११४ इति क्विपि ह्रीः। उणादौ "ह्रीयो रश्च लो वा" (उ० २५) इति किति के ह्रीकः ह्लीकश्च सलज्जः। "ह्रियः किद्रो लश्च वा" (उ० ७५०) इति कौ ह्रीकुः ह्लीकुश्च त्रपु जतुनी, लज्जावाँश्च ॥

## अथ ऋदन्तावनिटौ च ॥

'७६ पॄंक् पालनपूरणयोः'। "पॄभृमा०" ४।१।५८ इति पूर्वस्य इत्वे पिपर्ति, पिपृतः, पिप्रति, पपार, पप्रतुः। थवि "ऋतः" ४।४।७९ इति नेट्,

पपर्थ । वे " स्क्रसृवृ० " ४।४।८१ इति इटि पप्रिव । ऋदन्तोऽयं सेट् च, इत्येके । तन्मते [1]तसि " ओष्ठ्याद्० " ४।४।११७ इति उरि, " भ्वादेः " २।१।६३ इति दीर्घे च पिपूर्तः । अन्तौ पिपुरति । परोक्षायां " ऋः शृदृ० " ४।४।२० इति वा ऋः, निपप्रतुः, निपप्रुः; पक्षे " स्कृच्छृतो० " ४।३।८ इति गुणे निपपरतुः निपपरुः । थवि " स्क्रसृवृ० " ४।४।८१ इति इटि निपपरिथ । वे निपप्रिव, निपपरिव । अनुस्वारेत्त्वान्नेट्, पर्ता पर्तुम् । " हनृतः " ४।४।४९ इति इटि परिष्यति । क्तयोः व्यापृतः, व्यापृतवान् । येषां तु दीर्घान्तः तन्मते " ऋवर्णो० " ४।४।५७ इति इडभावे, " ल्वादे० " ४।२।६८ इत्यत्र प्रो वर्जनात् क्तयोस्तस्य नत्वाभावे पूर्तः, पूर्तवान् । णौ " साहिसाति० " ५।१।५९ इति शे पारयः । घञि पारः । " णौ दान्तशान्त० " ४।४।७४ इति क्ते वा पूर्ण इति निपातनमस्याऽपि इत्येके, तन्मते णौ क्ते पूर्णः, पारितः । पूरितः इति तु पूरेचेः ण्यन्तात् क्ते ॥

'७७ ऋं॑क् गतौ' । " ह्वः शिति " ४।१।१२ इति द्वित्वे " पृभृमा० " ४।१।५८ इति पूर्वस्य इत्वे " पूर्वस्यास्वे० " ४।१।३७ इति इयि " नामिनो० " ४।३।१ इति गुणे इयर्ति । इयृतः इय्रति, " श्नौति० " ४।२।१०८ इत्यत्र "अत्यादौ" ४।२।१०४ इत्यधिकारात् अत्र [2]ऋच्छाऽऽदेशाभावः । संपूर्वात् "समो गमृच्छि०" ३।३।८४ इति आत्मनेपदे समियृते । आप्ये तु सति " शेषात् परस्मै " ३।३।१०० इति परस्मैपदे समियर्ति मित्रम् । " अस्यादेः० " ४।१।६८ इति पूर्वस्य आत्वे ऋदादित्वाभावात् " अनातो० " ४।१।६९ इति नन्ताभावे, आर, आरतुः, आरुः । " इन्ध्यसंयोगा० " ४।३।२१ इति अवित्परोक्षायाः कित्वेऽप्यत्र " संयोगात् " २।१।५२ इति गुणः । " क्ययङ० " ४।३।११० इति गुणे अर्यते । "अत्यर्ति०" ३।४।१० इति यङि अरार्यते । आशीर्ये अर्यात् । सप्तम्याम् इयृयात् । अद्यतन्यां " सर्त्यर्तेः० " ३।४।६१ इति वाऽङि आरत्, आर्षीत् । थवि " ऋवृव्येद० " ४।४।८० इति इटि आरिथ । सनि " ऋस्मिपूङ० " ४।४।४८ इति इटि स्वरस्य कार्यित्वाद् द्वित्वं प्रति निमित्तत्वाभाव इति पूर्वं स्वरादेशे गुणे पश्चात् " स्वरादेः० " ४।१।४ इति द्वितीयांशस्य द्वित्वे अरिरिषति । अनुस्वारेत्त्वान्नेट्, अर्ता, अर्तुम् । " ऋह्री० " ४।२।७६ इति क्तयोस्तस्य वा नत्वे ऋणम् ऋतम् । णौ "अर्तिरी०" ४।२।२१ इति पौ अर्पयति । उणादौ " ऋकृवृ० " ( उ० १९६ ) इति उणे

---

१. तस्यौष्ठ्या॰ इति मु० ॥

२. ऋच्छाभाव. इति मु० ॥

अरुणः । "कमिप्रुगा०" (उ० २२५) इति थे अर्थः । "गृदृरमि०" (उ० ३२७) इति भे अर्भः शिशुः । "अर्तीरि०" (उ० ३३८) इति मे अर्मः अक्षिरोगः । "धाग्राजि०" (उ० ३७९) इति अन्ये अरण्यम् । "ऋच्छिचटि०" (उ० ३९७) इति अरे [१]अररम् कवाटः "ऋहृसृ०" (उ० ६३८) इति अणौ अरणिः । "अर्तेरत्निः" (उ० ६८२) अरत्निः उत्कनिष्ठो हस्तः । "स्रर्तेरूच्चातः" (उ० ६८९) इति मौ ऊर्मिः । "नदिवल्लि०" (उ० ६९८) इति अरौ अररिः कपाटः । "अञ्ज्यर्तेः कित्" (उ० ७७७) इति तुनि ऋतुः वसन्तादिः स्त्रीरजः तत्कालश्च । "कटिकुष्य०" (उ० ८१२) इति अरौ अररुः असुरः आयुधं च । "अर्तेर्भुक्षिनक्" (उ० ९२८) ऋभुक्षा इन्द्रः । "स्नामदि०" (उ० ९०४) इति वनि अर्वा अश्वः । "अर्तेरुराशौ च" (उ० ९६७) इति असि उरः वक्षः, अर्शः गुदकीलः । "अर्तीण्भ्याम्०" (उ० ९७९) इति नसि अर्णः जलम् । "रुग्यर्ति०" (उ० ९९७) इति उसि अरुः व्रणः । ऋं प्रापणे च [ १।२६ ] ऋच्छति ॥

## अथात्मनेपदिनावादन्तावनिटौ च ॥

'७८ ओहाङ्क् गतौ' । ङित्वात् "इङितः०" ३।३।२२ इति आत्मनेपदे "ह्वः शिति" ४।१।१२ इति द्वित्वे, "पृभृमा०" ४।१।५८ इति पूर्वस्य इत्वे, "एपामी०" ४।२।९७ इति ईत्वे च जिहीते । जिहाते, जिहते । "ईर्व्यञ्जने०" ४।३।९७ इत्यत्र हाकोऽनुवृत्तेः क्ये ईत्वाभावे हायते । संजहे । अनुस्वारेत्त्वान्नेट्, हाता, हातव्यम् । "य एच्चा०" ५।१।२८ इति ये हेयम् । "हः काल०" ५।१।६८ इति टनणि हायनः वर्षं व्रीहिश्च । ओदित्त्वात् "सूयत्याद्यो०" ४।२।७० इति क्तयोस्तस्य नत्वे हानः, हानवान् । अदुरुपसर्गान्तपूर्वस्य "स्वरात्" २।३।८५ इति नस्य णत्वे प्रहाणः, प्रहाणवान् । ओहांक् त्यागे [ २।७३ ] जहाति हीयते ।

'७९ मांङ्क् मानशब्दयोः' । "ह्वः शिति" ४।१।१२ इति द्वित्वे "पृभृमा०" ४।१।५८ इति पूर्वस्य इत्वे "एपामी०" ४।२।९७ इति ईत्वे च मिमीते । "ईर्व्यञ्जने०" ४।३।९७ इति ईत्वे मीयते । ममे । "नेर्ङ्मादा०" २।३।७९ इति नेर्णत्वे प्रणिममे । आशिषि क्ङित्त्वाभावात् "गापास्था०" ४।३।९६ इति एत्वाभावे मासीष्ट । सनि "मिमीमा०" ४।१।२० इति स्वरस्य इति द्वित्वा-

१ अरर. इति उ वि. । लिङ्गानु० टीकायाम् अभिधानचिन्तामणौ च अररम् ॥

भावे च प्रमित्सते । अनुस्वारेत्त्वान्नेट्, माता, मातव्यम् । " य एचा० " ५।१।२८ इति ये मेयम्, प्रमेयम् । क्ति तादौ " दोसोमास्थ इः " ४।४।११ प्रमितः, प्रमितवान् । " श्र्वादिभ्यः " ५।३।९२ इति क्तौ प्रमितिः । " उपसर्गात्० " ५।३।११० इति अडि प्रमा, करणेऽनटि प्रमाणम् ॥

## अथोभयपदिनः षडनिटश्च ॥ तत्राऽऽदन्तौ—

' ८० डुदांग्क् दाने ' । गित्त्वात् फलवत्कर्तरि " ईगितः " ३।३।९५ इति आत्मनेपदे, " हवः० " ४।१।१२ इति द्वित्वे, " श्नश्चा० " ४।२।९६ इति आल्लुकि च दत्ते । " नेर्ङ्मादा " २।३।७९ इति नेर्णत्वे प्रणिदत्ते । फलवतोऽन्यत्र "शेषात्०" ३।३।१०० इति परस्मैपदे ददाति, प्रणिददाति, दत्तः । आङ्पूर्वात् " दागोऽस्वाऽऽस्य० " ३।३।५३ इति आत्मनेपदे विद्याम् आदत्ते । " एषामी० " ४।२।९७ इत्यत्र दो वर्जनात् अत्र इत्वाभावः । " अन्तो नो लुक् " ४।२।९४ ददति ददतु । शतरि ददत् । " शौ वा " ४।२।९५ ददति ददन्ति कुलानि । " हौ दः " ४।१।३१ इति स्वरस्य एत्वे द्वित्वाभावे च देहि । " द्व्युक्त० " ४।२।९३ इति शिदनः पुसि अददुः । " पिबैति० " ४।३।६६ इति सिचो लुपि अदात् । अद्यतन्यामात्मनेपदे " इश्च स्थादः " ४।३।४१ इति क्त्वे दः इत्वे च अदित । " आतो णव ओः " ४।२।१२० ददौ । आददे । आशिषि " गापास्था० " ४।३।९६ इति एः, देयात्, क्ङितोऽन्यत्र दासीष्ट । सनि " मिमी० " ४।१।२० इति स्वरस्य इति द्वित्वाभावे च दित्सते, अत्र फलवत्कर्तरि " प्राग्वत् " ३।३।७४ इति आत्मनेपदम् । अन्यत्र " शेषात्० " ३।३।१०० इति परस्मैपदे दित्सति । अनुस्वारेत्त्वान्नेट्, दाता दातव्यम् । " य एचा० " ५।१।२८ इति ये देयम् । " तव्यधी० " ५।१।६४ इति णे दायः । दद इति तु ददतेः अचि । " आतो डो० " ५।१।७६ इति अणपवादे डे गोदः । " दश्चाङः " ५।१।७८ दायादः । " प्राज्ज्ञश्च " ५।१।७९ धर्मप्रदः । " प्राद्दाग० " ४।४।७ इति वा त्ते दातुमारब्धं प्रत्तम्, पक्षे " दत् " ४।४।१० इति दति प्रदत्तम् । " निविस्वन्ववात् " ४।४।८ इति वा त्ते, " दस्ति " ३।२।८८ इति दीर्घे च नीत्तम् वीत्तम्, सूत्तम्, अनूत्तम्, अवत्तम्, पक्षे " दत् " ४।४।१० इति दति, निदत्तम् इत्यादि । " स्वरादुपसर्गाद्० " ४।४।९ इति त्ते आत्तः उपात्तः । " दत् " ४।४।१० इति दति, ड्वित्त्वात्त्रिमकि दानेन निर्वृत्तं दत्त्रिमम् । " दाट्धेसि० " ५।२।३६ इति रौ दानशीलो दारुः । " भावाकर्त्रोः ५।३।१८ घञि दायः । " उपसर्गाद् दः किः " ५।३।८७ आदिः ।

" उपसर्गादातोः " ५।३।११० इति अङि उपदा । खलपचादे " शास्युधि० " ५।३।१४१ इति अने सुदानः ॥

' ८१ डुधांग्क् धारणे च ' । चकाराद् दाने । धत्ते, अत्र " धागस्तथोश्च " २।१।७८ इति पूर्वस्य चतुर्थः । चतुर्थान्तत्वाभावे तु पूर्वस्य न चतुर्थः दधाति । " नेर्ङ्मादा० " २।३।७९ इति नेर्णत्वे प्रणिदधाति । " अधश्चतुर्थात्० " २।१।७९ इत्यत्र धो वर्जनात् तथोः धत्वाभावे थतः धत्थः । " अन्तो नो लुक् " ४।२।९४ दधति । शतरि दधत् , " शौ वा " ४।२।९५ दधति दधन्ति कुलानि । "हौ दः" ४।१।३१ इति स्वरस्य एत्वे द्वित्वाभावे च धेहि । " द्व्युक्त० " ४।२।९३ इति शिदनः पुसि अदधुः । " अवौ० " ३।३।५ इति दासंज्ञत्वात् "पिबैति०" ४।३।६६ इति सिचो लुपि अधात् । " सिज्विदो० " ४।२।९२ इति अनः पुसि " इडेत्० " ४।३।९४ इति आल्लुकि अधुः । अद्यतन्यामात्मनेपदे " इश्च स्थादः " ४।३।४१ इति इत्वे क्त्वे च अधित । क्ये " ईर्व्यञ्जने " ४।३।९७ इति ईत्वे धीयते । दधे दधौ । आशिषि " गापा० " ४।३।९६ इति एति धेयात् । क्ङितोऽन्यत्र धासीष्ट । सनि " मिमीमा० " ४।१।२० इति इति द्वित्वाभावे च धित्सति । अनुस्वारेत्वान्नेट् , धाता, धातव्यम् । " धाय्यापाय्य० " ५।१।२४ इति घ्यणि निपातनाद् धाय्या सामिधेनी । ऋचोऽन्यत्र " य एच्चा० " ५।१।२८ इति ये धेयम् । "तन्व्यधी०" ५।१।६४ इति णे धायः । दध इति तु दधतेः अचि । क्तिति तादौ " धागः " ४।४।१५ इति हि', विहितः, विहितवान् । " समस्तत० " ३।२।१३९ इति वा मो लुकि सहितम् , संहितम् । " वावाप्योस्तनि० " ३।२।१५६ इति वा प्यादेशे पिहितम् , अपिहितम् , पिधानम् , अपिधानम् । " आतो डो० " ५।१।७६ इति डे गोधा । " शीङ्श्रद्धा० " ५।२।३७ इति आलौ श्रद्धालुः । " सस्रिचक्रि० " ५।२।३९ इति निपातनात् डौ धानशीलो दधि' । ड्वित्त्वात्त्रिमकि विधानेन निर्वृत्तं विहित्रमम् । " उपसर्गाद् दः किः " ५।३।८७ प्रधिः, विधिः, संधिः, । " निर्दुस्सोः सेध० " २।३।३१ इति षत्वे निःषंधिः, दुःषधिः, सुषंधिः । " व्याप्यादाधारे " ५।३।८८ वालधि', ओपधिः । " अन्तर्द्धिः " ५।३।८९ अन्तर्धानमन्तर्द्धिः । " स्थाऽऽदिभ्यः कः " ५।३।८२ विधः । " उपसर्गादातः " ५।३।११० इति अङि

विधा, उपधा, संधा । "मृगये०" ५।३।१०१ इति निपातनात् अङि श्रद्धा । खलपवादे "शासूयुधि०" ५।३।१४१ इति अने सुधानः । उणादौ "भीणूशलि०" (उ० २१) इति के धाकः ओदनः स्तम्भश्च । "धाल्रू०" (उ० ७०) इति आणके धाणकः दीनारद्वादशभागः । "शीमी०" (उ० ७१) इति आनके [1]धानकः हेमादिपरिमाणम् । "प्याधा०" (उ० २५८) इति ने धाना भृष्टयवः अङ्कुरश्च । "तुदादिवृजि०" (उ० २७३) इति किति अने निधनम् । "अर्तीरि०" (उ० ३३८) इति मे धामं निलयस्तेजश्च । "धाग्राजि०" (उ० ३७९) इति अन्ये धान्यम् । संध्या इति तु "सञ्जेर्ध च" (उ० ३५९) इति ये । "इणू-धागृभ्यां वा" (उ० ३८९) इति वा किति रे धीरः धारा । "कृसिकम्य०" (उ० ७७३) इति तुनि धातुः । धृपेस्तु "धृपेर्दिधिपदिधीपौ च" (उ० ८४२) इति ऊः, दिधिषूः[2] ज्यायस्याः पूर्वमूढा लघ्वी, पुंश्चली च । दिधीषूः ऊढायाः कनिष्ठायाः ज्येष्ठाऽनूढा । "मन्" (उ० ९११) इति मनि धाम । "वयः पयः पुरोरेतोभ्यो०" (उ० ९७४) इति असि वयोधाः युवा, पयोधाः पर्जन्यः, पुरोधाः पुरोहितः, रेतोधाः जनकः । विधाः वेधाः इति तु "विधेर्वा" (उ० ९७२) इति वा किति असि विधतेः ॥

## अथ ऋदन्तः ॥

'८२ डुडुभृंग्क् पोषणे च' । चकाराद् धारणे । "हवः शिति" ४।१।१२ इति द्वित्वे "पृभृमा०" ४।१।५८ इति पूर्वस्य इत्वे विभृते विभर्ति । "द्व्युक्त०" ४।२।९३ इति शिदनः पुसि "पुस्पौ" ४।३।३ इति गुणे च अविभरुः । "भीह्री०" ३।४।५० इति परोक्षाया वा आमि तिव्वद्भावात् द्वित्वेत्वयोः विभरा-ञ्चकार बभार । अनुस्वारेत्त्वान्नेट्, भर्ता, भर्तुम् । "भृगोऽसंज्ञायाम्" ५।१।४५ इति क्यपि भृत्यः । सञ्ज्ञायां तु "ऋवर्ण०" ५।१।१७ इति घ्यणि भार्यो नाम क्षत्रियविशेषः, भार्या वधूः । "समो वा" ५।१।४६ संभृत्यः संभार्यः । "लिहादिभ्यः" ५।१।५० इति अणपवादे अचि जारभरा कन्या । क्ते भृतः । "कुत्सिता०" ७।३।३३ इति कपि भृतकः । "भावाकर्त्रोः" ५।३।१८ घञि

१. धानका इति मु०, उणादिविवरणे तु धानक. ॥

२. दिधिषूस्तु पुनर्भूर्द्विरूढा । (अ. चि. ३।१८९) ॥
मनुस्त्वन्यथाऽऽह—

ज्येष्ठाया यद्यनूढायां कन्यायामुह्यतेऽनुजा ।
सा चाग्रेदिधिषूर्ज्ञेया पूर्वा तु दिधिषूर्मता ॥ (अ. चि टी. ३।१८९) ॥

भारः । भर इति तु भृणातेरलि । "कुक्ष्यात्मोदरा०" ५।१।९० इति खौ कुक्षिंभरिः, आत्मंभरिः उदरंभरिः । "भृवृजि०" ५।१।११२ इति खे विश्वंभरा भूः । "भृगो नाम्नि" ५।३।९८ इति स्त्रियां भावे क्यपि कुमारभृत्या । संज्ञाया अन्यत्र भृतिः । ट्विच्वादथुः । भरथुः । ड्वित्वात्त्रिमक्, भृत्रिमम् । उणादौ "द्वारशृङ्गार०" (उ० ४११) इति आरे निपातनाद् भृङ्गारः । "दृमुषि०" (उ० ६५१) इति किति तौ प्रभृतिः आदिः । भृंग् भरणे [ १।८८६ ] भरते, भरति ॥

## अथ जान्तौ ॥

'८३ णिजृंकी शौचे च' । चकारात् पोषणे । "पाठे०" २।३।९७ इति नत्वे, "हवः शिति" ४।१।१२ इति द्वित्वे, "निजां शित्येत्०" ४।१।५७ इति पूर्वस्य एत्वे च नेनिक्ते, नेनिजाते, नेनिजते, नेनेक्ति, नेनिक्तः, नेनिजति । णोपदेशत्वात् "अदुरुपसर्गा०" २।३।७७ इति प्रणेनेक्ति । "द्व्युक्त०" ४।२।९३ इति शिदनः पुसि अनेनिजुः । "द्व्युक्तोपान्त्यस्य" ४।३।१४ इति गुणनिषेधे नेनिजानि, अनेनिजम् । ऋदित्त्वात् "ऋदिच्छ्वि०" ३।४।६५ इति वाऽङि अनिजत् । पक्षे सिचि "व्यञ्जनानाम्०" ४।३।४५ इति वृद्धौ अनैक्षीत् । निनिजे, निनेज । अनुस्वारेत्त्वान्नेट्, नेक्ता, नेक्तुम् । "नाम्युपान्त्य०" ५।१।५४ इति के निजः । शतरि अन्तो नो लुकि नेनिजत्, नेनिजतौ । घञि "क्तेनिट०" ४।१।१११ इति गत्वे नेगः ॥

'८४ विजृंकी पृथग्भावे' । "निजां शित्ये०" ४।१।५७ इति पूर्वस्य एत्वे वेविक्ते, वेविजाते, वेविजते, वेवेक्ति, वेविक्तः, वेविजति । दिवि अविवेक् । "द्व्युक्त०" ४।२।९३ इति शिदनः पुसि अवेविजुः । "द्व्युक्तोपान्त्य०" ४।३।१४ इति गुणाभावे वेविजानि, अवेविजम् । ऋदित्त्वात् वाऽङि अविजत्, अवैक्षीत् । विविजे, विवेज । अनुस्वारेत्त्वान्नेट्, वेक्ता, वेक्तुम् । "नाम्युपान्त्य०" ५।१।५४ इति के विजः । घञि "क्तेनिट०" ४।१।१११ इति गत्वे वेगः । चान्तोऽयमिति सभ्याः । विवेचनम्, वेविचति, वेविचते, अविचत्, विवेकः ॥

## अथ षान्तः ॥

'८५ विष्लृंकी व्याप्तौ' । "निजां" ४।१।५७ इति पूर्वस्य एत्वे वेविष्टे, वेविषाते, वेविषते, वेवेष्टि, वेविष्टः, वेविषति । "द्व्युक्त०" ४।२।९३ इति शिदनः पुसि अवेविषुः । लृदित्त्वादङि अविषत्, आत्मनेपदे तु अङभावे "हशिटो०"

३।४।५५ इति सकि अविक्षत । " स्वरेतः " ४।३।७५ इति अल्लुकि अविक्षाताम् । " स्वरस्य परे० " ७।४।११० इति अल्लुकः स्थानित्वात् " अनतोऽन्तो० " ४।२।११४ इति अदभावे अविक्षन्त । नायम् लृदित्, ऊदित् इत्येके, तन्मते " हशिटो० " ३।४।५५ इति सकि अविक्षत् । ऊदित्वात् क्त्वि वेटि विष्ट्वा वेपित्वा । अनुस्वारेत्त्वान्नेट्, वेष्टा, वेष्टुम्, विष्टः, विष्टवान् । " नाम्युपान्त्य० " ५।१।५४ इति के विषः, विषम् । णके परिवेषकः । " कर्मजा० " ३।१।८३ इति प्रतिषिद्धोऽपि याजकादित्वात् षष्ठीसमासः, साधुपरिवेषकः । घ्यणि वेष्यः । घञि वेषः, परिवेषः । उणादौ " विषेः कित् " ( उ० ७६९ ) इति णौ विष्णुः ॥

अत्र अन्यैः अन्येऽप्येकादशाऽधीयन्ते । घृ क्षरणदीप्त्योः । हृ प्रसह्यकरणे । सृ गतौ । भस भर्त्सनदीप्त्योः । किकितौ ज्ञाने । तुर त्वरणे । धिष शब्दे । धन धान्ये । जन जनने । गा स्तुतौ इति । ते त्वलौकिकत्वात् अस्माभिः उपेक्षिताः ॥

इत्याचार्यश्रीहेमचन्द्रविरचिते स्वोपज्ञधातुपारायणेऽविकरणः
क्दिदादिगणः संपूर्णः ॥



# अथ दिवादयः ॥

अथ श्यविकरणा दिवादयो वर्णक्रमेण निर्दिश्यन्ते । तत्राऽपि पूर्वाचार्यप्रसिद्ध्यनुरोधेन आदौ—

' १ दिवूच् क्रीडा–जयेच्छा–पणि–द्युति–स्तुति–गतिषु ' । जयेच्छा विजिगीषा, पणिः व्यवहारः क्रयादिः । " दिवादेः० " ३।४।७२ इति श्ये "भ्वादेः०" २।१।६३ इति दीर्घे च दीव्यति । " उपसर्गाद् दिवः " २।२।१७ इति विनिमेय–द्यूतपणयोः कर्मणो वा कर्मत्वे " शेषे " २।२।८१ इति षष्ठ्यां शतस्य प्रदीव्यति, शतं प्रदीव्यति । अनुपसर्गस्य " न " २।२।१८ इति कर्मत्वाभावे शतस्य दीव्यति । " करणं च " २।२।१९ इति करणस्य कर्मत्वकरणत्वयोः अक्षान् दीव्यति, अक्षैः दीव्यति; वा इत्यनुक्त्वा " करणं च " २।२।१९ इत्यत्र चकारकरणं संज्ञाद्वयसमावेशार्थम्, तेन करणत्वात् तृतीया, कर्मत्वाच्च अनाप्यलक्षणम् अणिकर्तुर्णौ कर्मत्वम्, " अणिगि प्राणिकर्तृक० " ३।३।१०७ इति परस्मैपदं च न भवति, अक्षैर्देवयते मैत्रश्चैत्रेण । दिदेव, देविता । सनि " इवृध० " ४।४।४७ इति वेटि इडभावे " अनुनासिके च० " ४।१।१०८ इति वस्य ऊटि दुद्यूषति, दिदेविषति । ऊदित्त्वात् क्त्वि वेट्, द्यूत्वा, देवित्वा, " क्त्वा " ४।३।२९ इति कित्त्वाभावादत्र गुणः । वेट्त्वात् क्तयोर्नेट्, द्यूतः, द्यूतवान् । द्यूतादन्यत्र " पूदिव्यञ्चेः० " ४।२।७२ इति क्तयोस्तस्य नत्वे आद्यूनः, आद्यूनवान् । लिहाद्यचि देवः । गौरादित्वाद् ङ्यां देवी । णके देवकः, देविका नदी । क्विपि अक्षद्यूः । ण्यन्तात् क्विपि द्युः । " उपसर्गाद् देवृ० " ५।२।६९ इति णके आदेवयतीत्येवंशीलः आदेवकः, एवं परिदेवकः । उणादौ " दिव्यवि० " ( उ० १४२ ) इति अटे देवटः देवकुलविशेषः शिल्पी च । देवर इति तु देवतेः " ऋच्छिचटि० " ( उ० ३९७ ) इति अरे । देवल इत्यपि अस्यैव " मृदिकन्दि० " ( उ० ४६५ ) इति अले । "छविछिवि०" ( उ० ७०६ ) इति [१]कि(ङि)ति वौ निपातनाद् दीविः कितवः कालश्च । दिदिविः स्वर्गः । दीदिविः अन्नं स्वर्गश्च । किकीति कुर्वन् दीव्यति किकिदीविः चाषः । " दिव ऋः " ( उ० ८५२ ) देवा देवरः पितृव्य स्त्री च । " लुपूयु० "

---

१. ७०५ तमात् उणादिसूत्रात् ङित्प्रत्ययस्यानुवृत्तिः ॥

( उ० ९०१ ) इति किति अनि दिवा, दिवानौ । प्रतिदिवनः, प्रतिदिवना । " दिवेर्डिव् " ( उ० ९४९ ) इति डिवि द्यौः, दिवौ । चित्करणं दिवादिज्ञापनार्थम् । एवं सर्वत्र ॥

## अथ ॠदन्तौ सेटौ च ॥

' २ जॄष् ३ झॄषच् जरसि ' । जरा वयोहानिः । " दिवादेः श्यः " ३।४।७२ जीर्यति । जजार । " जॄभ्रम० " ४।१।२६ इति अतो वा एत्वे द्वित्वाभावे " स्कृच्छृतो० " ४।३।८ इति गुणे च जेरतुः, जजरतुः । " ऋदिच्छ्वि० " ३।४।६५ इति अङि "ऋवर्ण०" ४।३।७ इति गुणे अजरत् ; पक्षे सिचि " सिचि परस्मै० " ४।३।४४ इति वृद्धौ अजारीत् । " वृतो नवा " ४।४।३५ इति इटो वा दीर्घे जरीता, जरिता । सनि " इवृध० " ४।४।४७ इति वेटि जिजरिषति, जिजरीषति, जिजीर्षति । " इट् सिजाशिषोः० " ४।४।३६ इति वेटि अजरिष्ट, अजरीष्ट स्वयमेव; पक्षे " ऋवर्णात् " ४।३।३५ इति सिचः कित्वे अजीर्ष्ट स्वयमेव । एषु " एकधातौ० " ३।४।८६ इति कर्मकर्तर्यात्मनेपदम्, किरादित्वाच्च "भूषार्थ०" ३।४।९३ इति जिच् नास्ति, जरिषीष्ट, जरीषीष्ट, जीर्षीष्ट । णौ " कगे० " ४।२।२५ इति ह्रस्वे जरयति । किति " ऋवर्णश्रि " ४।४।५७ इति नेट्, " गत्यर्थाकर्मक० " ५।१।११ इति वा कर्तरि क्ते जीर्णः चैत्रः; पक्षे भावे जीर्णं चैत्रेण । साप्यादपि " श्लिषशीङ्० " ५।१।९ इति वा कर्तरि क्ते अनुजीर्णो वृषलीं चैत्रः; पक्षे कर्मणि अनुजीर्णा वृषली चैत्रेण । अकर्मका अपि हि सोपसर्गाः सकर्मका भवन्ति । क्त्वि "जॄव्रश्च०" ४।४।४१ इति इटि जरित्वा जरीत्वा । " सगतेऽजर्यम् " ५।१।५ न जीर्यति [ इति ] अजर्यम् आर्यसंगतम् । अचि जरः । पृषोदरादित्वात् कुञ्जरः । भूते " जॄषोऽतृः " ५।१।१७३ जरन्, जरती । षित्वादङि " ऋवर्ण० " ४।३।७ इति गुणे जरा । करणाधारे " न्यायावाय० " ५।३।१३४ इति घापवादे घञि जारः । उणादौ " ऋतष्टित् " ( उ० ९ ) इति अः, सरूपे च द्वे रूपे, जर्जरः अदृढः, जर्जरी स्त्री । " जॄविशिभ्यामन्त " ( उ० २१९ ) जरन्तः वृद्धः । जॄश् वयोहानौ [८२९] जृणाति जॄण् वयोहानौ [९३८१], युजादित्वाद्वा णिचि जारयति, जरति ॥

' ३ झॄषच् ' । झीर्यति, जझार । " स्कृच्छृतो० " ४।३।८ इति गुणे जझरतुः । झरिता । अचि अलि च झरः निर्झरः । षित्वादङि " ऋवर्ण० " ४।३।७ इति गुणे झरा । अपिदयमित्यन्ये । उणादौ " ऋतष्टित् " ( उ० ९ ) इति अः सरूपे च द्वे रूपे, झर्झरः वाद्यविशेषः, झर्झरी झल्लरिका । " सृणीकास्तीक० " ( उ० ५० ) इति ईके निपातनाद् झर्झरीकः देहः, झर्झरीका वादित्रभाण्डम् ॥

## अथौदन्ताश्चत्वारोऽनिटश्च ॥

'४ शोंच् तक्षणे'। तक्षणं तनूकरणम्। "न शिति" ४।२।२ इति आत्वप्रतिषेधात् "ओतः श्ये" ४।२।१०३ इति लुकि श्यति। "आत् सन्ध्यक्षरस्य" ४।२।१ इति आत्वे शशौ। "ट्धेघ्राशा०" ४।३।६७ इति सिचो वा लुपि अशात्। पक्षे "यमरमि०" ४।४।८६ इति इटि सेऽन्ते च अशासीत्। णौ "पाशा०" ४।२।२० इति ये निशाययति। अनुस्वारेत्त्वान्नेट्, शाता, शातुम्। क्तिति ते "छाशोर्वा" ४।४।१२ इति वा इत्वे निशितः, निशातः, निशितवान्, निशातवान्, शित्वा, शात्वा, शितिः, शातिः। "शो व्रते" ४।४।१३ संशितव्रतः साधुः। "तन्व्यधि०" ५।१।६४ इति णे शायः। स्त्रियां भावाकर्त्रोः "उपसर्गादः०" ५।३।११० इति अङि निशा। उणादौ "शाशपि०" (उ० २२७) इति दे शादः पङ्कः। "शामा०" (उ० ४६२) इति ले शाला। "शः सन्वच्च" (उ० ७४७) इति डौ शिशुः॥

'५ [1]दों ६ छोंच् छेदने'। "ओतः श्ये" ४।२।१०३ इति लुकि द्यति। "पिबैति०" ४।३।६६ इति सिज्लुपि अदात्। ददौ। क्तिति ते "दोसोमा०" ४।४।११ इति इत्वे दितः, दितवान्। स्वरान्तोपसर्गपूर्वस्य तु "स्वराद्०" ४।४।९ इति त्त्वे अवत्तम्। "दस्ति" ३।२।८८ इति नामिनो दीर्घे परीत्तम्। क्ये "ईर्व्यञ्जने०" ४।३।९७ इति ईत्वे दीयते। अनुस्वारेत्त्वान्नेट्, दाता, दातुम्। "तन्व्यधि०" ५।१।६४ इति णे दायः। "य एच्चा०" ५।१।२८ इति ये देयम्। दिनम् इति तु दीव्यतेः "दिननग्न०" (उ० २६८) इति निपातनात्॥

'६ छोंच्'। अवच्छ्यति। "ट्धेघ्रा०" ४।३।६७ इति वा सिज्लुपि अच्छात्, अच्छासीत्। अपचच्छौ। क्तिति ते "छाशोर्वा" ४।४।१२ इति वा इत्वे छितः, छातः, छितवान्, छातवान्, छित्वा, छात्वा। अनुस्वारेत्त्वान्नेट्, छाता, छातुम्। णौ "पाशा०" ४।२।२० इति ये छाययति उणादौ "गम्यमि०" (उ० ९२) इति गे छागः। "स्थाछामा०" (उ० ३५७) इति ये छाया। "[2]छो डग्गादिर्वा" (उ० ४७१) इति क्तिति अले छगलः, छागः, छागलः ऋषिः, छलम् असदुत्तरम्॥

---

१. दो अवखण्डने इति काशकृत्स्नक्षीरस्वामिनौ। (का धा. पृ. १३७, क्षी. त पृ २०४)॥

२. छोर्डे इति उणादिसूत्रे पाठः॥

'७ षोंच् अन्तकर्मणि'। अन्तकर्म विनाशः। "षः सो०" २।३।९८ इति सत्वे अवस्यति। "उपसर्गात्सुग्०" २।३।३९ इति षत्वे "नेर्ङ्मादा०" २।३।७९ इति नेर्णत्वे प्रणिष्यति। अड्व्यवायेऽपि अभ्यष्यत् व्यष्यत्। षोपदेशत्वात् "नाम्यन्तस्था०" २।३।१५ इति षत्वे सिषासति। "ट्धेघ्रा०" ४।३।६७ इति वा सिज्लुपि अवासात्, अवासासीत्। अवससौ। क्ये "ईर्व्यञ्जने०" ४।३।९७ इति ईत्वे अवसीयते। "दोसोमास्थ०" ४।४।११ इति इत्वे अवसितः, अवसितवान्, सित्वा। अवसायः, व्यवसायः। कथम् अध्यवस्य, व्यवस्य इति? अत्र केचित् पारायणिका "ओतः श्ये" ४।२।१०३ इति योगं विभज्य यप्यपि लुकमिच्छन्ति, तदन्ये न मन्यन्ते इति वाचकवार्तिकम्। अनुस्वारेत्त्वान्नेट्, साता, सातुम्। णौ "पाशा०" ४।२।२० इति ये अवसाययति। "अवहृसा०" ५।१।६३ इति णे अवसायः। "सातिहेति०" ५।३।९४ इति क्तौ निपातनात् सातिः। अनटि अवसानम्। उणादौ "स्थाछामा०" (उ० ३५७) इति ये सायम्। "सात्मन्०" (उ० ९१६) इति मनि निपातनात् सात्म अत्यन्ताभ्यस्तं प्रकृतिभूतम्। सात्मनो भावः सात्म्यम्॥

## अथ डान्तः सेट् च॥

'८ व्रीडच् लज्जायाम्'। व्रीड्यति, विव्रीड, व्रीडितः। "क्तेटो०" ५।३।१०६ इति अः व्रीडा। ऋफिडादित्वाल्लत्वे व्रील्यति, व्रीला। पुंभावे घञि व्रीडः॥

## अथ तान्तः सेट् च॥

'९ नृतैच् नर्तने'। नर्तनं नाट्यम्। नृत्यति, ननर्त, नर्तिता, नर्तितुम्। अणोपदेशत्वाद् "अदुरुपसर्ग०" २।३।७७ इति णत्वाभावे प्रनृत्यति। "कृतचृत०" ४।४।५० इति असिचः सादेरादिर्वेट्, नर्तिष्यति, नर्त्स्यति, निनर्तिषति, निनृत्सति। सिचि तु नित्यमिटि अनर्तीत्। वेट्त्वादेव क्तयोरिडभावे सिद्धे ऐदित्करणं यङ्लुबन्तादनेकस्वरादपि इडभावार्थम्, नृत्तः, नृत्तवान्, नरिनृत्तः, नरिनृत्तवान्। "नृतेर्यङि" २।३।९५ इति णत्वप्रतिषेधे नरीनृत्यते। णौ "ईङ्गितः" ३।३।९५ इति फलवत्कर्तर्यात्मनेपदे "अणिगि प्राणिकर्तृकात्०" [३।३।१०७] इति परस्मैपदेनापोदिते "परिमुहायम०" ३।३।९४ इति पुनर्विहिते नृत्यति नटः, नर्तयते नटं चैत्रः। "ऋदुपान्त्याद्०" ५।१।४१ इति क्यपि नृत्यम्। लिहाद्यचि घञि वा नर्तः। "नृत्खन०" ५।१।६५ इति अकटि नर्तकः। अनटि "पूर्वपदस्थाद्०" २।३।६४ इति णत्वस्य क्षुभ्नादित्वादभावे प्रनर्तनम्। "क्लीबे०" ५।३।१२३ क्ते नृत्तम्॥

## अथ थान्तौ सेटौ च ॥

‘१० कुथच् पूतिभावे’। पूतिभावो दुर्गन्धः क्लेदः। कुथ्यति, चुकोथ, कोथिता, कुथितम्। घञि कोथः। उणादौ “उद्वटिकुलि०” (उ० ३५१) इति कुमे कुथुमः ऋषिः, कुथुमं मृगाजिनम्। “कुथिगुधेरूमः” (उ० ३५३) कोथूमः चरणकृदृषिः ॥

‘११ पुथच् हिंसायाम्’। पुथ्यति, पुपोथ, पोथिता, पोथितुम्, पुथितः। पुथण् भासार्थः [ ९।२१८ ], पोथयति ॥

## अथ धान्तास्त्रयः ॥

‘१२ गुधच् परिवेष्टने’। गुध्यति, जुगोध, गोधिता, गोधितुम्। “क्षुध-क्लिश०” ४।३।३१ इति क्त्वः किन्वे गुधित्वा। गुधितः। लिहाद्यचि भिदाद्यङि वा गोधा। उणादौ “कुथिगुधेरूमः” (उ० ३५३) गोधूमः। “गुधिगृधेस्तच” (उ० ५६८) इति किति से गुत्सः तृणजातिः। गुच्छ इति तु गवतेः “तुदि-मदि०” (उ० १२४) इति छकि ॥

‘१३ राधंच् वृद्धौ’। स्वादिषु पठिष्यमाणस्याप्यस्य इह पाठो वृद्धौ एव श्यविकरणार्थः। राध्यति–वर्धते इत्यर्थः। वृद्धेरन्यत्र श्नुः एव राध्नोति–ओदनं पचतीत्यर्थः। मैत्राय राध्नोति–मैत्रस्य शुभाशुभं पर्यालोचयतीत्यर्थः। कथं तर्हि ‘मैत्राय राध्यति’ इत्यत्र श्यः? अत्रापि मैत्रस्य वृद्धिविषयं शुभाशुभपर्यालोचनमिति विवक्षायां वृद्ध्यर्थता एव, इति स्यादेव। अनुस्वारेत्त्वान्नेट्, राद्धा, राद्धुम्। चुरा-देराकृतिगणत्वाद् राधयति। कश्चित्तु राध–साध संसिद्धौ इति पठन् वृद्धेरन्यत्राऽपि राधेः श्यं साधि च धात्वन्तरमिच्छति, राध्यति अन्नम्, साध्यति ॥

‘१४ व्यधंच् ताडने’। “शिदवित्” ४।३।२० इति श्यस्य ङित्त्वाद् “ज्याव्यधः ङिति” ४।१।८१ इति य्वृति विध्यति। “ज्याव्येव्यधि०” ४।१।७१ इति पूर्वस्य इत्वे विव्याध। अनुस्वारेत्त्वान्नेट्, व्यद्धा, व्यद्धुम्, विद्धः। “तन्व्यधि०” ५।१।६४ इति णे व्याधः। क्विपि “गतिकारकस्य०” ३।२।८५ इति दीर्घे मर्मावित्, श्वावित्। अनुपसर्गात् “व्यधजप०” ५।३।४७ इति अलि व्यधः। उपसर्गात्तु घञि आव्याधः। “स्थादिभ्यः कः” ५।३।८२ विध्यन्ति अनेनेति विधः शस्त्रोपकरणम् आविधम्। उणादौ “पृका०” (उ० ७२९) इति किदुः, विधुः चन्द्रः ॥

## अथ पान्तौ ॥

'१५ क्षिपंच प्रेरणे' क्षिप्यति चिक्षेप । अनुस्वारेत्त्वान्नेट्, क्षेप्ता, क्षिप्तः । "त्रसिगृधि०" ५।२।३२ इति क्नौ क्षेपशीलः [1]क्षिप्नुः । क्षिपींत् प्रेरणे [ ५।३ ] क्षिपते, क्षिपति ॥

'१६ पुष्पच् विकसने' । पुष्प्यति, पुपुष्प, पुष्पिता, पुष्पितः । अचि पुष्पम् ॥

## अथ मान्ताश्चत्वारः सेटश्च ॥

'१७ तिम १८ तीम १९ ष्टिम २० ष्टीमच् आर्द्रभावे' । तिम्यति, तितेम, तेमिता, तिमितः । अनटि तेमनम् । उणादौ "शुपीपि०" (उ० ४१६) इति किति इरे तिमिरम् । "नाम्युपान्त्य०" ( उ० ६०९ ) इति किदिः तिमिः[2] मत्स्यः ॥

'१८ तीम' । तीम्यति, तितीम, तीमिता ॥

'१९ ष्टिम' । "षः सो०" २।३।९८ इति सत्वे स्तिम्यति । षोपदेशत्वात् "नाम्यन्तस्था०" २।३।१५ इति षत्वे तिष्टेम । स्तेमिता, स्तिमितः ॥

'२० ष्टीम' । "षः सो०" २।३।९८ इति सत्वे स्तीम्यति । षोपदेशत्वात् "नाम्यन्तस्था०" २।३।१५ इति षत्वे तिष्टीम । स्तीमिता, स्तीमितः ॥

## अथ वान्ताश्चत्वारः सेटश्च ॥

'२१ षिवूच् उतौ' । उतिः—वानम्, तन्तुसन्तान इत्यर्थः । "षः सो०" २।३।९८ इति सत्वे सीव्यति । षोपदेशत्वात् "नाम्यन्तस्था०" २।३।१५ इति षत्वे सिषेव । परि-नि-विपूर्वस्य "असोङसिवूसह०" २।३।४८ इति षत्वे परिषीव्यति, निषीव्यति, विषीव्यति । अड्व्यवाये "स्तुस्वञ्जश्च०" २।३।४९ इति वा षत्वे पर्यषीव्यत्, पर्यसीव्यत्, न्यषीव्यत्, न्यसीव्यत्, व्यषीव्यत्, व्यसीव्यत् । सेविता, सेवितुम् । ऊदित्त्वात् क्त्वि वेट्, "अनुनासिके च०" ४।१।१०८ इति वस्य ऊटि स्यूत्वा । इटि "क्त्वा" ४।३।२९ इति कित्त्वाभावाद् गुणे सेवित्वा । वेट्त्वात् क्तयोर्नेट्, स्यूतः, स्यूतवान् । "ष्ठिवूसिवोऽनटि वा" ४।२।११२ इति वा दीर्घे सेवनम् सीवनम् । लिहाद्यचि स्वार्थे के च, प्रसेवकः । मनि स्योमा । उणादौ "सिवेर्डित्" ( उ० १२१ ) इति ऊचटि सूचः, सूची । सूत्रम् इति तु "स्नामूखन्नि०" ( उ० ४४९ ) इति किति त्रटि सूतेः ॥

१. पाणिनीयतन्त्रे अभिधानचिन्तामणौ [ ३।१४ ]च 'क्षिप्नु' शब्दः दृश्यते ॥
२. 'अस्ति मत्स्यो तिमिर्नाम शतयोजनविस्तरः' इति भरत ॥

'२२ [1]श्रिवूच् गतिशोषणयोः'। श्रीव्यति, शिश्रेव, श्रेविता। ऊदित्त्वात् क्त्वि वेट्, "मव्यवि०" ४।१।१०९ इति वस्य उपान्त्येन सह ऊटि श्रूत्वा। इटि श्रेवित्वा। वेट्त्वात् क्तयोर्नेट्, श्रूतः, श्रूतवान्। क्विपि श्रूः, अणुश्रूः॥

'२३ ष्ठिवू २४ क्षिवूच् निरसने'। "षः सो०" २।३।९८ इत्यत्र ष्ठिवो वर्जनात् सत्वाभावे "भ्वादेः०" २।१।६३ इति दीर्घे ष्ठीव्यति। "अघोषे शिटः" ४।१।४५ इति पूर्वस्य षस्य लुकि "तिर्वा०" ४।१।४३ इति वा तौ टिष्ठेव, तिष्ठेव। ष्ठेविता। ऊदित्त्वात् क्त्वि वेट्, ष्ठ्यूत्वा, ष्ठेवित्वा। वेट्त्वात् क्तयोर्नेट्, निष्ठ्यूतः, निष्ठ्यूतवान्। "ष्ठिवूसिवोऽनटि वा" ४।२।११२ इति वा दीर्घे निष्ठीवनम्, निष्ठेवनम्॥

'२४ क्षिवूच्'। क्षीव्यति, चिक्षेव, क्षेविता। ऊदित्त्वात् क्त्वि वेट्, क्ष्यूत्वा, क्षेवित्वा। वेट्त्वात् क्तयोर्नेट्, क्ष्यूतः, क्ष्यूतवान्। ष्ठिवू–क्षिवू निरसने [ १।४६३, ४६४ ] ष्ठीवति, क्षेवति॥

## अथ षान्तः सेट् च॥

'२५ इषच् गतौ'। इष्यति, इयेष, एषिता, एषित्वा। ऊदिदयमित्यन्ये, तन्मते क्त्वि वेट्, इष्ट्वा, एषित्वा। वेट्त्वात् क्तयोर्नेट्, इष्टः, इष्टवान्॥

"यद्वायुरन्विष्टमृगैः किरातैरासेव्यते भिन्नशिखण्डिबर्हः" [कुमारसंभव १।१५], अन्विष्यः–प्रेषितः। "ऋवर्ण०" ५।१।१७ इति घ्यणि एष्यः। घञि एषः। "प्रस्यैषैष्य०" १।२।१४ इति ऐत्वे प्रैष्यः, प्रैषः। "उपसर्गस्याऽनिणु०" १।२।१९ इति अल्लुकि प्रेषणम्। "इषोऽनिच्छायाम्" ५।३।११२ इति अने एषणा, अन्वेषणा। "पर्यधेर्वा" ५।३।११३ पर्येषणा, [2]परीष्टिः; अध्येषणा,अधीष्टिः। "श्रूवादिभ्यः" ५।३।९२ इति क्तौ इष्टिः। उणादौ "इष्यशि०" (उ० ७७) इति तककि इष्टका। "मस्जीषि०" (उ० ८२६) इति सुकि इक्षुः। इषत् इच्छायाम् [ ५।१०५ ] इच्छति, एष्टा, एषिता। इषश् आभीक्ष्ण्ये [ ८।५२ ] इष्णाति॥

## अथ सान्ताश्चत्वारः सेटश्च॥

'२६ ष्णसूच निरसने'। "षः सो०" २।३।९८ इति सत्वे निमित्ताभावात् णस्य नत्वे स्नस्यति, सस्नास, स्नसिता। ऊदित्वात् क्त्वि वेट्, स्नस्त्वा, स्नसित्वा। वेट्त्वात् क्तयोर्नेट्, स्नस्तः, स्नस्तवान्। षोपदेशत्वात् "नाम्यन्तस्था०"

१. स्रिवु गतिशोषणयोः इति क्षीरस्वामी, ( क्षी. त. १९८ )॥

२. परीष्टि श्राद्धे द्विजशुश्रूषा ( लि टी. २१६ )॥

२।३।१५ इति षत्वे सिष्णासयिषति । घटादिरयमित्यके, तन्मते णौ ह्रस्वे सिष्णसयिषति । [1]ष्णुस अदने इति द्रमिलाः, स्नुष्यति, सुष्णोस ॥

'२७ क्नसूच ह्वृतिदीप्त्योः' । ह्वृतिः-कौटिल्यम् । क्नस्यति, चक्नास, क्नसिता । ऊदित्त्वात् क्त्वि वेट्, क्नसित्वा, क्नस्त्वा । वेट्त्वात् क्तयोर्नेट्, क्नस्तः, क्नस्तवान् । अचि "चिक्लिद०" ४।१।१४ इति निपातनात् चक्नसः ॥

'२८ त्रसैच् भये' । "भ्रास-भ्लास०" ३।४।७३ इति वा श्ये त्रस्यति, पक्षे "कर्तर्यनद्भ्यः०" ३।४।७१ इति शवि त्रसति, तत्रास । "जृभ्रम०" ४।१।२६ इति वा एत्वे द्वित्वाभावे च त्रेसतुः, त्रेसुः । थवि "स्क्रसृवृ०" ४।४।८१ इत इति त्रेसिथ; पक्षे तत्रसतुः, तत्रसुः, तत्रसिथ । त्रसिता, त्रसित्वा । ऐदित्त्वात् क्तयोर्नेट्, त्रस्तः, त्रस्तवान् । "त्रसि-गृधि०" ५।२।३२ इति क्नुः, त्रसनशीलः त्रस्नुः । त्रसण् वारणे [ ९।१९३ ] त्रासयति ॥

'२९ प्युसच् दाहे' । प्युस्यति, पुप्योस, प्योसिता, प्युसितः ॥

## अथ हान्तौ सेटौ च ॥

'३० षह ३१ षुहच् शक्तौ' । "षः सो०" २।३।९८ इति सत्वे सह्यति । परि-नि-विपूर्वस्य "असोङ०" २।३।४८ इति षत्वे परिषह्यति, निषह्यति, विषह्यति । ससाह । "अनादेशादेः०" ४।१।२४ इति एत्वे द्वित्वाभावे च सेहतुः, सेहुः । सहिष्यति ॥

'३१ षुहच्' । "षः सो०" २।३।९८ इति सत्वे सुह्यति । षोपदेशत्वात् "नाम्यन्तस्था०" २।३।१५ इति षत्वे सुषोह । सोहिता, सुहितः, सुहितवान् । "तृप्तार्थ०" ३।१।८५ इति षष्ठीसमासप्रतिषेधात् फलानां सुहितः । तृप्तौ अयमित्येके ॥

## अथ दिवाद्यन्तर्गणः पुषादिः परस्मैपदी एव ।

तत्राऽपि प्रसिद्ध्यनुरोधाद् आदौ—

'३२ पुषंच् पुष्टौ' । अकर्मकोऽयम्, पुष्यति । पुष्यादित्वादङि अपुषत् । पुपोष । अनुस्वारेत्त्वान्नेट्, पोष्टा, पुष्टः, पुष्ट्वा । "कुप्यभिद्योध्य०" ५।१।३९ इति निपातनात् क्यपि पुष्यन्त्यस्मिन्नर्थाः इति पुष्यः । "स्वस्नेहन०" ५।४।६५ इति णमि स्वपोषं पुष्टः; एवं गोपोषम् । पुष पुष्टौ [ १।५२६ ], पोषति । पुषश्, पुष्टौ [ ८।५७ ] पुष्णाति । पुषण् धारणे [ ९।१८८ ] पोषयति ॥

१. ष्णुस अदर्शने इति द्रमिडाः इति क्षीरतरङ्गिण्याम् ( क्षी. त. १९८ ) ॥

## अथ चान्तः सेट् च ॥

'३३ उचच् समवाये'। समवाय ऐक्यम्। उच्यति, उवोच। पुष्याद्यङि औचत्। उचिता, उचितः, उचित्वा। घञि न्यङ्क्वादित्वात् कत्वे ओकः। उणादौ "कृशि-पिशि०" (उ० २१२) इति किति इते उचितम्। "उच्यञ्चेः क च" (उ० ९६५) इति असि ओकः, ओकसी। द्यौः ओकः येषां ते, पृषोदरादित्वाद्, दिवौकसः। दिवशब्दो वा अकारान्तः ॥

## अथ टान्तः सेट् च ॥

'३४ लुटच् विलोटने'। लुट्यति। लुलोट। पुष्याद्यङि अलुटत्। लोटिता, लुटितः। लुट विलोटने [ १।१९० ], लोटति, अलोटीत्। लुटण् भासार्थः [ ९।२१४ ], लोटयति ॥

## अथ दान्ताश्चत्वारः ॥

'३५ ष्विदांच् गात्रप्रक्षरणे'। गात्रप्रक्षरणम्—घर्मस्रुतिः। "षः सो०" २।३।९८ इति सत्वे स्विद्यति। षोपदेशत्वात् "नाम्यन्तस्था०" २।३।१५ इति षत्वे सिष्वेद। पुष्याद्यङि अस्विदत्। आदित्त्वात् क्तयोर्नेट्, स्विन्नः, स्विन्नवान्। "नवा भावारम्भे" ४।४।७२ इति वा नेटि स्विन्नमनेन प्रस्विन्नः। पक्षे इटि "न डीङ्" ४।३।२७ इति कित्त्वाभावाद् गुणे स्वेदितमनेन प्रस्वेदितः। अनुस्वारेत्त्वान्नेट्, स्वेत्ता, स्वित्त्वा। ञिष्विदाङ् मोचने च [ १।९४६ ], स्वेदते, स्वेदिता ॥

'३६ क्लिदौच् आर्द्रभावे'। क्लिद्यति, चिक्लेद। पुष्याद्यङि अक्लिदत्। औदित्त्वात् वेट्। सनि चिक्लित्सति। क्लित्त्वा। पक्षे इटि "वौ व्यञ्जनादेः०" ४।३।२५ इति वा कित्त्वे चिक्लिदिषति, चिक्लेदिषति, क्लिदित्वा, क्लेदित्वा। वेट्त्वात् क्तयोर्नेट्, क्लिन्नः, क्लिन्नवान्। "नाम्युपान्त्य०" ५।१।५४ इति के "चिक्लिद०" ४।१।१४ इति निपातनात् चिक्लिदः। उणादौ "भृमृतॄ०" (उ० ७१६) इति उः, क्लेदुः योनिः ॥

'३७ ञिमिदाच् स्नेहने'। "मिदः श्ये" ४।३।५ इति गुणे मेद्यति। मिमेद। पुष्याद्यङि अमिदत्। मेदिता। ञीत्त्वात् "ज्ञानेच्छा०" ५।२।९२ इति सति क्ते "आदितः" ४।४।७१ इति नेटि मिन्नः मिन्नवान्। "नवा भावारम्भे" ४।४।७२ इति वा नेट्, मिन्नमनेन, प्रमिन्नः। पक्षे इटि "न डीङ्०" ४।३।२७

इति क्त्वाभावात् गुणे मेदितमनेन प्रमेदितः । लिहाद्यचि मेदः, मेदाख्यो देशः । "भञ्जिभासि०" ५।२।७४ इति घुरे मेदनशीलः मेदुरः । "णिन् चावश्यक०" ५।४।३६ इति णिनि मेदिनी । उणादौ "अस्" ( उ० ९५२ ) इति असि मेदः वपा । ञिमिदाङ् स्नेहने [ १।९४४ ], मेदते, अमेदिष्ट । मिदुण् स्नेहने [ ९।९० ], मिन्दयति ॥

'३८ ञिक्ष्विदाच् मोचने च' । चकारात् स्नेहने । क्ष्विद्यति, चिक्ष्वेद । पुष्याद्यङि अक्ष्विदत् । क्ष्वेदिता । "आदितः" ४।४।७१ इति क्तयोर्नेट्, ञीत्त्वात् "ज्ञानेच्छा०" ५।२।९२ इति सति क्ते क्ष्विण्णः, क्ष्विण्णवान् । "नवा भावारम्भे" ४।४।७२ इति वा नेट्, क्ष्विण्णमनेन प्रक्ष्विण्णः । पक्षे इटि "न डीङ्०" ४।३।२७ इति क्त्वाभावात् गुणे क्ष्वेदितमनेन प्रक्ष्वेदितः । ञिक्ष्विदा अव्यक्ते शब्दे [ १।३०० ], क्ष्वेदति । ञिक्ष्विदाङ् मोचने च [ १।९४५ ], क्ष्वेदते, अक्ष्वेदिष्ट ॥

## अथ धान्ताः सप्त ॥

'३९ क्षुधंच् बुभुक्षायाम्' । क्षुध्यति, चुक्षोध । पुष्याद्यङि अक्षुधत् । अनुस्वारेत्त्वान्नेट्, क्षोद्धा । क्त्वाक्तेषु "क्षुधवसस्तेषाम्" ४।४।४३ इति इटि "क्षुधक्लिश०" ४।३।३१ इति किंत्त्वे क्षुधित्वा, क्षुधितः क्षुधितवान् । ये तु क्षुधेः क्त्वः किंत्त्वं नेच्छन्ति, तन्मते "वौ व्यञ्जनादेः०" ४।३।२५ इति वा किंत्त्वे क्षुधित्वा, क्षोधित्वा । "क्रुत्संपदा०" ५।३।११४ इति क्विपि क्षुत् । बाहुलकात् उकणि क्षोधुकः[1] । उणादौ "पिशिमिथि०" ( उ० २९० ) इति किति उने क्षुधुनः कीटः ॥

'४० शुधंच् शौचे' । शौचं नैर्मल्यम् । शुध्यति, शुशोध । पुष्याद्यङि अशुधत् । अनुस्वारेत्त्वान्नेट्, शोद्धा, शुद्धः ॥

'४१ क्रुधंच् कोपे' । "क्रुद्[2]द्रुह०" २।२।२७ इति संप्रदानत्वे चैत्राय क्रुध्यति । चुक्रोध । पुष्याद्यङि अक्रुधत् । अनुस्वारेत्त्वान्नेट्, क्रोद्धा, क्रुद्धः । "भूषा-क्रोधा०" ५।२।४२ इति अने क्रोधशीलः क्रोधनः । "क्रुत्संपदा०" ५।३।११४ इति क्विपि क्रुत् ॥

'४२ षिधूंच् संराद्धौ' । संराद्धिः निष्पत्तिः । "षः सो०" २।३।९८ इति सत्वे सिध्यति । षोपदेशत्वात् "नाम्यन्तस्था०" २।३।१५ इति षत्वे सिषेध ।

---

१. क्षोधुक. इति मु० ॥

२. क्रुध° इति मु० ॥

पुष्याद्यङि असिधत् । णौ "[1]सिध्यतेरज्ञाने" ४।२।११ इति आत्वे अन्नं साधयति दातुम् । ज्ञाने तु, आचारः कुलं सेधयति, ज्ञापयतीत्यर्थः । अनुस्वारेत्त्वान्नेट् सेद्धा, सेद्धुम्, सिद्धः । ऊदित्त्वात् क्त्वि वेट्, सिद्ध्वा सेधित्वा, सिधित्वा । षिधू गत्याम् [ १।३२० ], षिधौ शास्त्रमाङ्गल्ययोः [ १।३२१ ], सेधति ॥

'४३ ऋधूच् वृद्धौ' । ऋध्यति, समृध्यति । "अनातो०" ४।१।६९ इति पूर्वस्य आत्वे ने च आनर्ध, आनृधतुः । पुष्याद्यङि आर्धत् । 'अमाङ' [४।४।२९] इत्यधिकारात् "स्वरादेः०" ४।४।३१ इति वृद्ध्यभावे मा ऋधत् । अर्धिता, अर्धितुम् । सनि "इवृध०" ४।४।४७ इति वेटि "अयि रः" ४।१।६ इति रस्य द्वित्वाभावे "स्वरादेः०" ४।१।४ इति द्वितीयांशस्य धेः एव द्वित्वे अर्दिधिषति, पक्षे इडभावे सादौ सनि "ऋध ईत्" ४।१।१७ न च द्विः, ईर्त्सति । ऊदित्त्वात् क्त्वि वेट्, ऋद्ध्वा, अर्धित्वा । वेट्त्वात् क्तयोर्नेट्, ऋद्धः, ऋद्धवान् । णौ अर्धयति । ङे आर्दिधत् । "ऋदुपान्त्याद्०" ५।१।४१ इति क्यपि ऋध्यम् । घञि अर्धः । ऋधूट् वृद्धौ [ ४।२१ ], समृध्नोति ॥

'४४ गृधूच् अभिकाङ्क्षायाम्' । गृध्यति, जगर्ध । पुष्याद्यङि अगृधत् । यङ्लुपि सिवि[2] गुणे "सेः सृद्धाम्०" ४।३।७९ इति सेः लुकि धस्य रुत्वे आदिचतुर्थत्वे "रो रे०" १।३।४१ इति रस्य लुकि अतो दीर्घे च, अजर्घाः[3] । दिवि "यङ्तुरुस्तोः०" ४।३।६४ इति इति "द्व्युक्तोपान्त्य०" ४।३।१४ इति गुणाभावे अजर्गृधीत् । गर्धिता, गर्धितुम् । ऊदित्त्वात् क्त्वि वेट्, गृद्ध्वा, गर्धित्वा, "क्त्वा" ४।३।२९ इति कित्त्वाभावात् गुणः । वेट्त्वात् क्तयोर्नेट्, गृद्धः, गृद्धवान् । णौ फलवत्कर्तरि "अणिगि प्राणिकर्तृक०" ३।३।१०७ इति, अफलवति तु "शेषात्परस्मै" ३।३।१०० इति परस्मैपदे प्राप्ते "प्रलम्भे गृधि०" ३।३।८९ इति आत्मनेपदे श्वानं गर्धयते । "त्रसिगृधि०" ५।२।३२ इति क्नुः, गृध्नुः । "भूषाक्रोधा०" ५।२।४२ इति अने गर्धनः । घञि गर्धः । स्त्रियां क्तौ गृद्धिः । उणादौ "ऋज्यजि०" (उ० ३८८) इति किति रे गृध्रः । केचित्तु गृधिं चुरादिमभ्युपगम्य णिचि "प्रलम्भे गृधि०" ३।३।८९ इति आत्मनेपदमिच्छन्ति, गर्धयते ॥

---

१. सिध्यतेराज्ञा° इति मु० ॥

२. सिचि इति मु० ॥ ३. अजघाः इति मु० ॥

'४५ रधौच् हिंसासंराद्ध्योः'। संराद्धिः पाकः। रध्यति। "रध इटि०" ४।४।१०१ इति ने ररन्ध। संयोगान्तत्वात् परोक्षायाः कित्त्वाभावे ररन्धतुः। "स्क्रसृवृ०" ४।४।८१ इति इटि ररन्धिव, ररन्धिम। क्वसौ "अनादेशादेः०" ४।१।२४ इति एत्वे कृते, एकस्वरत्वात् "घसेकस्वरातः०" ४।४।८२ इति इटि "रध इटि०" ४।४।१०१ इति नाऽऽगमे, कित्त्वात् न लुकि च रेधिवान्। पुष्याद्यङि "नो व्यञ्जन०" ४।२।४५ इति न लुकि अरधत्। औदित्त्वात् वेट्, "इटि तु परोक्षायामेव" ४।४।१०१ इति नियमात् नाभावे रधिता, अरधिष्यत्। पक्षे रद्धा, अरत्स्यत्। वेट्त्वात् क्तयोर्नेट्, रद्धः, रद्धवान्। णौ रन्धयति। षिधूंच् संराद्धौ [ ३।४२ ] रधौच् हिंसायां च इत्यकृत्वा अस्याऽत्र निर्देशः संराद्धिभेदज्ञापनार्थः॥

## अथ पान्ता नव सेटश्च॥

'४६ तृपौच् प्रीतौ'। प्रीतिः सौहित्यम्। तृप्यति, ततर्प, पुष्याद्यङि अतृपत्। "स्पृशमृश०" ३।४।५४ इति वा सिचि अताप्र्सीत्। "स्पृशादि०" ४।४।११२ इति स्वरात्परे वाऽति अत्राप्सीत्। इटि अतर्पीत्। औदित्त्वात् वेट्, तर्पिता, तर्प्ता, त्रप्ता। वेट्त्वात् क्तयोर्नेट्, तृप्तः, तृप्तवान्। उणादौ "ऋज्यजि०" (उ० ३८८) इति किति रे तृप्रं दुःखम्। तृपट् प्रीणने [ ४।२३ ] तृप्नोति॥

'४७ दृपौच् हर्षमोहनयोः'। मोहनं गर्वः। दृप्यति, ददर्प। पुष्याद्यङि अदृपत्। "स्पृशमृश०" ३।४।५४ इति वा सिचि अदार्प्सीत्। "स्पृशादि०" ४।४।११२ इति स्वरात्परे वाऽति अद्राप्सीत्। इटि अदर्पीत्। औदित्त्वात् वेट्, दर्पिता, दर्प्ता, द्रप्ता। वेट्त्वात् क्तयोर्नेट्, दृप्तः, दृप्तवान्। उणादौ "ऋज्यजि०" (उ० ३८८) इति किति रे दृप्रम् बलम्, दृप्रा बुद्धिः॥

'४८ कुपच् क्रोधे'। कुप्यति, चुकोप। पुष्यादित्वादङि अकुपत्। कोपिता, कोपितुम्, कुपितः। भूषाक्रोधा०" ५।२।४२ इति अने कोपशीलः कोपनः। लिहाद्यचि घञि च कोपः॥

'४९ गुपच् व्याकुलत्वे'। गुप्यति, जुगोप। पुष्याद्यङि अगुपत्। गोपिता। "कुप्यभिद्य०" ५।१।३९ इति निपातनात् क्यपि कुप्यम् सुवर्णरजताभ्यामन्यत्। "शकितकि०" ५।१।२९ इति ये गोप्यमन्यत्। गुपौ रक्षणे [ १।३३२ ] गोपायति। गुपि गोपनकुत्सनयोः [ १।७६३ ], जुगुप्सते। गुपण् भासार्थः [ ९।२२१ ], गोपयति॥

'५० युप, ५१ रुप, ५२ लुपच् विमोहने'। युप्यति, रुप्यति, लुप्यति। पुष्याद्यङि अयुपत्, अरुपत्, अलुपत्। "वौ व्यञ्जनादेः०" ४।३।२५ इति क्त्वासनोः वा किच्चे युपित्वा, योपित्वा, युयुपिषति, युयोपिषति। एवं रुपलुपोरपि। घञि रोपः–शरः। उणादौ "शिक्यास्याढ्य०" (उ० ३६४) इति ये निपातनात् रुप्यतीति रूप्यं–रजतम्। लुप्लृंती छेदने [५।९], लुम्पते, लुम्पति॥

'५३ डिपच् क्षेपे'। डिप्यति, डिडेप। पुष्याद्यङि अडिपत्। डेपिता। "शकितकि०" ५।१।२९ इति ये डेप्यम्। डिपत् क्षेपे [५।१४४], डिपति। डिपण् क्षेपे [९।१०१] डेपयति॥

'५४ ष्टूपच् समुच्छ्राये'। "षः सो०" २।३।९८ इति सत्वे स्तूप्यति। षोपदेशत्वात् "नाम्यन्तस्था०" २।३।१५ इति षत्वे तुष्टूप। पुष्याद्यङि अस्तूपत्। णौ सनि "णिस्तोरेवा०" २।३।३७ इति षत्वे तुष्टूपयिषति। स्तूपिता, स्तूपितुम्। [1]ष्टूपण् समुच्छ्राये [९।१००], स्तूपयति। अलि स्तूपः॥

## अथ भान्ताश्चत्वारः सेटश्च॥

'५५ लुभच् गार्द्ध्ये'। गार्द्ध्यम्–अभिकाङ्क्षा। लुभ्यति, लुलोभ। पुष्याद्यङि अलुभत्। लोभिष्यति। तादौ "सहलुभ०" ४।४।४६ इति वेटि लोब्धा, लोभिता। वेट्त्वात् क्तयोर्नेट्, लुब्धः, लुब्धवान्। लुभत् विमोहने [५।७६], लुभति। विलुभिताः केशाः॥

'५६ क्षुभच् संचलने'। संचलनं–रूपान्यथात्वम्। क्षुभ्यति, चुक्षोभ। पुष्याद्यङि अक्षुभत्। क्षोभिता। "क्षुब्धविरिब्ध०" ४।४।७० इति क्ते निपातनात् क्षुब्धः मन्थः। क्षुभितः अन्यः। क्षुभि संचलने [१।९४८], क्षोभते। क्षुभश् संचलने [८।४६], क्षुभ्नाति। द्युतादिपठितेनैव अक्षुभत् इति सिद्धम्, श्यविकरणार्थं तु दिवादौ अयमवश्यं पठितव्य इति पुष्यादावपि पठितः॥

'५७ णभ ५८ तुभच् हिंसायाम्'। "पाठे०" २।३।९७ इति नत्वे नभ्यति। णोपदेशत्वात् "अदुरुपसर्ग०" २।३।७७ इति णत्वे प्रणभ्यति। ननाभ। पुष्याद्यङि अनभत्। नभिता। "शकितकि०" ५।१।२९ इति ये नभ्यम्॥

'५८ तुभच्'। तुभ्यति, तुतोभ। पुष्याद्यङि अतुभत्। तोभिता। णभि तुभि हिंसायाम् [१।९४९, ९५०], नभते, तोभते। णभ–तुभश् हिंसायाम् [८।४७, ४८], नभ्नाति, तुभ्नाति॥

---

१. ष्टुपण इति मु०॥

भावे श्लिष्टं मैत्रेण । साप्यादपि "श्लिषशीङ्०" ५।१।९ इति वा कर्तरि क्ते आश्लिष्टो मैत्रः कन्याम्, पक्षे कर्मणि क्ते आश्लिष्टा कन्या मैत्रेण । लिहाद्यचि श्लेषः । उणादौ "भ्रूणतृण०" (उ० १८६) इति णे निपातनात् श्लक्ष्णः । "मन्" (उ० ९११) इति मनि श्लेष्मा । श्लिषू दाहे [ १।५३१ ], श्लेषति, [1]अश्लेषीत् । श्लिषण् श्लेषणे [ ९।१३७ ] श्लेषयति ॥

'६८ प्लुषूच् दाहे' । प्लुष्यति । पुप्लोष । पुष्याद्यङि अप्लुषत् । प्लोषिता । ऊदित्त्वात् क्त्वि वेट्, प्लुष्ट्वा, "वौ व्यञ्जनादेः०" ४।३।२५ इति सेटो वा किंत्त्वे प्लुषित्वा, प्लोषित्वा, वेट्त्वात् क्तयोर्नेट्, प्लुष्टः, प्लुष्टवान् । अनूदिदयमित्येके । उणादौ "प्लुषेः प्लक्ष् च" (उ० ५६६) इति से प्लक्षः । प्लुषू दाहे [१।५३३], प्लोषति । प्रुष-प्लुषश् स्नेह-सेचन-पूरणेषु [ ८।५४, ५५ ] प्लुष्णाति ॥

'६९ ञितृषच् पिपासायाम्' । तृष्यति । ततर्ष । पुष्याद्यङि अतृषत् । तर्षिता । ञीत्त्वात् "ज्ञानेच्छा०" ५।२।९२ इति सति क्ते तृषितः, तृषितवान् । "ऋत्तृष०" ४।३।२४ इति सेटः क्त्वो वा किंत्त्वे तृषित्वा, तर्षित्वा । "तृषि-धृषि०" ५।२।८० इति नजिङि तर्षशीलः तृष्णक् । घञि तर्षः । "क्रुत्संपदा०" ५।३।११४ इति क्विपि तृट् । भिदाद्यङि तृषेत्येके । "कालेन०" ५।४।८२ इति णमि "तृतीयोक्तं वा" ३।१।५० इति वा समासे द्व्यहतर्षम्, द्व्यहं तर्षं गाः पाययति । उणादौ "घृवीह्वा०" (उ० १८३) इति किति णे तृष्णा, "मृगयेच्छा" ५।३।१०१ इति निपातनाद्वा ॥

'७० तुषं, ७१ हृषच् तुष्टौ' । तुष्टिः प्रीतिः । तुष्यति, तुतोष । पुष्याद्यङि अतुषत्, अनुस्वारेत्त्वान्नेट्, तोष्टा, तुष्ट्वा । शील्यादित्वात् सति क्ते तुष्टः, तुष्टिः । "नाम्युपान्त्य०" ५।१।५४ इति के तुषः । उणादौ "तुषिकुठिभ्यां०" (उ० ४०८) किति आरे तुषारः ॥

'७१ हृषच्' । हृष्यति । जहर्ष । पुष्याद्यङि अहृषत् । हर्षिता, हर्षितः, हृषितवान् । "हृषेः केश०" ४।४।७६ इति वा नेटि हृष्टाः, हृषिताः केशाः, हृष्टानि, हृषितानि लोमानि, हृष्टः, हृषितः छात्रः, हृष्टाः, हृषिताः दन्ताः । ऊदिदयमिति [2]नन्दी । अलीकार्थोऽयमित्येके । उणादौ "हृषिवृति०" (उ० ४८५) इति उले हर्षुलः कामी । हृषू अलीके [ १।५३५ ], हर्षति ॥

---

१. अश्लेषीत इति मु० ॥

२. मिश्रनन्दी इति हैमप्रकाशे (पृ. ९९८) ॥

'७२ रुषच् रोषे' । रुष्यति, रुरोष । पुष्याद्यङि अरुषत् । तादौ "सहलुभ०" ४।४।४६ इति वेटि रोष्टा, रोषिता । क्तयोः "श्वसजप०" ४।४।७५ इति वेटि रुष्टः, रुषितः । शील्यादित्वात् सत्यत्र क्तः, रुष्टवान्, रुषितवान् । "भूषाक्रोधा०" ५।२।४२ इति अने रोशणशीलः रोषणः । क्रुत्संपदा०" ५।३।११४ इति क्विपि रुट् । रुष हिंसायाम् [ १।५१४ ], रोषति ।

'७३ प्युष ७४ प्युस ७५ पुसच् विभागे' । प्युष्यति । पुप्योष । पुष्याद्यङि अप्युषत् । प्योषिता, प्युषितः । "वौ व्यञ्जनादेः०" ४।३।२५ इति क्त्वो वा किक्त्वे प्युषित्वा, प्योषित्वा ॥

## अथ सान्तास्त्रयोदश सेटश्च ॥

'७४ प्युस' । प्युस्यति । पुप्योस । पुष्याद्यङि अप्युसत् । प्योसिता, प्युसितः । प्युसित्वा, प्योसित्वा ॥

'७५ पुसच्' । पुस्यति, पुपोस । पुष्याद्यङि अपुसत् । पोसिता, पुसितः । पुसित्वा, पोसित्वा । उणादौ "शीरी०" (उ० २०१) इति किति ते पुस्तं लेप्यादिकर्म, स्वार्थे के पुस्तकम् ॥

'७६ विसच् प्रेरणे' । विस्यति, विवेस । पुष्याद्यङि अविसत् । वेसिता । "नाम्युपान्त्य०" ५।१।५४ इति के विसम् । उणादौ "शीरी०" (उ० २०१) इति किति ते विस्तं परिमाणम् ॥

'७७ कुसच् श्लेषे' । कुस्यति । चुकोस । पुष्याद्यङि अकुसत् । कोसिता, कुसितः । उणादौ "कृशिपिशि०" (उ० २१२) इति किति इते कुसितः— ऋषिः । तस्य भार्या "पूतक्रतु०" २।४।६० इति ङ्याम्, ऐदन्तादेशे च कुसितायी । "उद्वटिकुल्यलि०" (उ० ३५१) इति कुमे कुसुमम् ॥

'७८ असूच् क्षेपणे' । अस्यति । "उपसर्गादस्य०" ३।३।२५ इति वा आत्मनेपदे निरस्यति, निरस्यते । "अकखाद्य०" २।३।८० इति वा नेर्णत्वे प्रण्यस्यते, प्रन्यस्यते, प्रण्यस्यति, प्रन्यस्यति । "अस्यादे०" ४।१।६८ इति पूर्वस्य आत्वे आस, आसतुः । पुष्याद्यङि "श्वयत्य०" ४।३।१०३ इति अस्थादेशे आस्थत् । आत्मनेपदे तु "शास्त्यसूवक्ति०" ३।४।६० इति अङि उदास्थत, उदास्थेताम् । असिता, असितुम् । ऊदित्त्वात् क्त्वि वेट्, अस्त्वा, असित्वा ।

## अथ शान्ताः षट् सेटश्च ॥

'५९ नशौच् अदर्शने'। अदर्शनम्–अनुपलब्धिः। नश्यति। "नशः शः" २।३।७८ इति नस्य णत्वे प्रणश्यति। ननाश, नेशतुः। पुष्याद्यङि "नशेर्नेश्वा[१]०" ४।३।१०२ इति वा नेशाऽऽदेशे अनेशत्, अनशत्। औदित्त्वात् वेट्, "नशो धुटि" ४।४।१०९ इति ने नंष्टा, नशिता। "नशः शः" २।३।७८ इति पान्तस्य न णत्वम्, प्रनङ्क्ष्यति। शान्तस्य णत्वे प्रणशिष्यति। "जनशो नि०" ४।३।२३ इति वा क्त्वे नष्ट्वा, नंष्ट्वा, नशित्वा। वेट्त्वात् क्तयोर्नेट्, नष्टः, नष्टवान्। णत्वाभावे प्रनष्टः। क्विपि "नशो वा" २।१।७० इति वा गत्वे नश्यति इति नक्, पक्षे "यजसृज०" २।१।८७ इति षत्वे नट्। "क्रुत्संपदा०" ५।३।११४ इति क्विपि जीवनक्, जीवनट्। णौ फलवत्कर्तर्यपि "चल्याहारार्थ०" ३।३।१०८ इति परस्मैपदे नाशयति। नन्द्याद्यने नाशयतीति नाशनः। "निन्दहिंस०" ५।२।६८ इति णके विनशनशीलो विनाशकः। "सृजीण्०" ५।२।७७ इति ट्वरपि नश्वरः, नश्वरी। "कर्तुर्जीव०" ५।४।६९ इति णमि जीवनाशं नष्टः। उणादौ "जिभृसृ०" (उ० ४४७) इति त्रटि वृद्धौ च नांष्ट्रा यातुधानाः॥

'६० कुशच् श्लेषणे'। कुश्यति, चुकोश। पुष्याद्यङि अकुशत्। कोशिता। "नाम्युपान्त्य०" ५।१।५४ इति के कुशः। "भाजगोण०" २।४।३० इति ङयाम् कुशी आयसी चेत्। कुशा अन्या। घञि कोशः। गौरादित्वात् ङ्यां कोशी। उणादौ "वृपिवपि०" (उ० ४६८) इति किति अले कुशलम्। "कुशिकमिभ्यां कुलकुमौ च" (उ० ५०३) इति मलकि कुल्मलम्–छेदनम्॥

'६१ भृशू ६२ भ्रंशूच् अधःपतने'। भृश्यति। बभर्श। पुष्याद्यङि अभृशत्। भर्शिता। ऊदित्त्वात् क्त्वि वेट्, भृष्ट्वा, "क्त्वा" ४।३।२९ इति किच्वाभावे भर्शित्वा। वेट्त्वात् क्तयोर्नेट्, भृष्टः, भृष्टवान्। "नाम्युपान्त्य०" ५।१।५४ इति के भृशः॥

'६२ भ्रंशूच्'। भ्रश्यति। बभ्रंश। पुष्याद्यङि अभ्रशत्। भ्रंशिता। ऊदित्त्वात् क्त्वि वेट्, भ्रष्ट्वा, भ्रंशित्वा। वेट्त्वात् क्तयोर्नेट्, भ्रष्टः, भ्रष्टवान्। "वञ्चस्रंस०" ४।१।५० इत्यत्र ध्वंसिसहचरितस्य भ्वादेरेव भ्रंशेर्ग्रहणात् न्यभावे यङि बाभ्रश्यते। भ्रशुङ् अवस्रंसने [ १९५२ ], भ्रंशते, अभ्रंशिष्ट, बनीभ्रश्यते। क्विपि "वञ्चुपसर्गस्य०" ३।२।८६ इति बाहुलकाद् दीर्घे वहाभ्रट्॥

१. घ्वा० इति मु०॥

'६३ वृशच् वरणे'। वृश्यति। ववर्श। पुष्याद्यङि अवृशत्। वर्शिता। वृशितः। "नाम्युपान्त्य०" ५।१।५४ इति के वृशः। घञि वर्शः॥

'६४ कृशच् तनुत्वे'। कृश्यति। चकर्श। पुष्याद्यङि अकृशत्। कर्शिता। "नाम्युपान्त्य०" ५।१।५४ इति के कृशः। "अनुपसर्गाः क्षीब०" ४।२।८० इति क्तयोर्निपातनात् कृशः, कृशवान्, परिकृशः, परिकृशवान्। सोपसर्गस्य तु प्रकृशितः। "ऋत्तृषमृष०" ४।३।२४ इति सेटः क्त्वो वा किच्चे कृशित्वा, कर्शित्वा। उणादौ "कृशेरानुक्" (उ० ७९४) कृशानुः॥

## अथ षान्ता नव॥

'६५ शुषंच् शोषणे'। शुष्यति, शुशोष। पुष्याद्यङि अशुषत्। अनुस्वारेत्त्वान्नेट्, शोष्टा। "क्षैशुषि०" ४।२।७८ इति क्तयोस्तस्य कत्वे शुष्कः, शुष्कवान्। "ऊर्ध्वात् पूः०" ५।४।७० इति णमि ऊर्ध्वशोषं शुष्कः। उणादौ "विलिमिलि०" (उ० ३४०) इति किति मे शुष्मम्—बलम्। "शुपीपि०" (उ० ४१६) इति किति इरे शुषिरम्। "नाम्युपान्त्य०" (उ० ६०९) इति किद् इः, शुषिः छिद्रम्। "सात्मन्०" (उ० ९१६) इति मनि निपातनात् शुष्मा [1]बर्हिःशुष्मा॥

'६६ दुषंच् वैकृत्ये'। वैकृत्यं रूपभङ्गः। दुष्यति। दुदोष। पुष्याद्यङि अदुषत्। अनुस्वारेत्त्वान्नेट्, दोष्टा, दुष्टः। णौ "ऊद् दुषो०" ४।२।४० इति उपान्त्यस्य ऊति दूषयति। "चित्ते वा" ४।२।४१ चित्तं दूषयति, चित्तं दोषयति; प्रज्ञां दूषयति, प्रज्ञां दोषयति। नन्द्याद्यने दूषणः। उणादौ "क्रीकलि०" (उ० ३८) इति इके दूषिका—नेत्रमलः। "स्यमिकषि०" (उ० ४६) इति ईके दूषीका स एव॥

'६७ श्लिषंच् आलिङ्गने'। श्लिष्यति। शिश्लेष। "श्लिषः" ३।४।५६ इति पुष्याद्यङपवादे सकि आश्लिक्षत् कन्यां चैत्रः। "क्रियाव्यतिहारे०" ३।३।२३ इति आत्मनेपदे "हशिटो०" ३।४।५५ इति सकि व्यत्यश्लिक्षत कन्याम्। असत्त्वाश्लेषे तु "नाऽसत्त्वा०" ३।४।५७ इति सको निषेधात् पुष्याद्यङि समाश्लिषत् जतु च काष्ठं च, आश्लिषत्। आत्मनेपदे सिचि व्यत्यश्लिष्ट। अनुस्वारेत्त्वान्नेट्, श्लेष्टा। "गत्यर्थाकर्मक०" ५।१।११ इति वा कर्तरि क्ते श्लिष्टो मैत्रः, पक्षे

---

१. शुक्रो वैश्वानरो बर्हिर्बर्हिः शुष्मा तनूनपात् इति शब्दार्णवाद् बर्हि' शुष्मा इति व्यस्तं समस्तं नाम इति कश्चित्। (अमर कोश, व्याख्यासुधाव्याख्या १।१।५४)॥

वेट्त्वात् क्तयोर्नेट्, अस्तः, अस्तवान्। "ऋवर्ण०" ५।१।१७ इति घ्यणि आस्यम्। "कालेन तृष्य०" ५।४।८२ इति णमि, "तृतीयोक्तं वा" ३।१।५० इति वा समासे द्व्यहात्यासम्, द्व्यहमत्यासं गाः पाययति। "उणादौ "शिक्यास्या०" (उ० ३६४) इति ये निपातनात् आस्यम्। "वाश्यसि०" (उ० ४२३) इति उरे असुरः। "पदिपठि०" (उ० ६०७) इति डः, असिः। "वीसञ्जि०" (उ० ६६९) इति थिकि अस्थि। "मस्यसि०" (उ० ६९९) इति उरौ असुरिः रणः। "भृमृतृ०" (उ० ७१६) इति उः, असवः प्राणाः। "सोरसेः" (उ० ८५३) इति ऋः, स्वसा॥

'७९ यसूच् प्रयत्ने'। प्रयस्यति, आयस्यति। संपूर्वस्य अनुपसर्गस्य च "भ्रास-भ्लास०" ३।४।७३ इति वा श्ये संयस्यति, यस्यति, पक्षे शवि संयसति, यसति। ययास। पुष्याद्यङि अयसत्। यसिता, यसितुम्। ऊदित्त्वात् क्त्वि वेट्, यस्त्वा, यसित्वा। वेट्त्वात् क्तयोर्नेट्, आयस्तः, आयस्तवान्। णौ फलवत्कर्तरि "इङितः०" ३।३।२२ इत्यात्मनेपदे "अणिगि प्राणिकर्तृक०" ३।३।१०७ इति परस्मैपदेनापोदिते "परिमुहायमायम०" ३।३।९४ इति पुनर्विहिते आयासयते शत्रुं मैत्रः। "प्राच्च यम०" ५।२।५२ इति घिनणि प्रयासशीलः प्रयासी॥

'८० जसूच् मोक्षणे'। जस्यति। जजास। पुष्याद्यङि अजसत्। जसिता ऊदित्त्वात् क्त्वि वेट्, जस्त्वा, जसित्वा। वेट्त्वात् क्तयोर्नेट्, जस्तः, जस्तवान्। णौ हिंसार्थत्वाभावात् "जास-नाट०" २।२।१४ इति कर्मणो वा न कर्मत्वम्, तेन द्वितीया एव, चौरं बन्धनात् जासयति, मोचयति इत्यर्थः। हिंसार्थोऽपीत्येके, तन्मते वा कर्मत्वे शेषषष्ठ्यां चौरस्य उज्जासयति, चौरमुज्जासयति। "स्म्यजस०" ५।२।७९ इति रे अजासशीलं अजस्रं पचति। अजस्रः पाकः। धात्वर्थविशेषणत्वात् धात्वर्थकर्तृक एवाऽयं प्रयोज्यः, तेन "अजस्रो घटः" इति प्रयोगोऽसाधुः। जसण् हिंसायाम् [ ९।१४६ ], चौरस्य उज्जासयति॥

'८१ तसू, ८२ दसूच् उपक्षये'। तस्यति। ततास। पुष्याद्यङि अतसत्। तसिता। ऊदित्त्वात् क्त्वि वेट्, तस्त्वा, तसित्वा। वेट्त्वात् क्तयोर्नेट्, तस्तः, तस्तवान्। "तिकृतौ०" ५।१।७१ इति तिकि [1]वितस्तिः। उणादौ "दम्यमि०"

---

१. लोके वहिथी [ वेंत ] इति. (लिं दु. प.)॥

( उ० २०० ) इति ते वितस्ता—नदी । "प्लुज्ञा०" ( उ० ६४६ ) इति तौ वितस्तिः ॥

'८२ दसूच्' । दस्यति । ददास । पुष्याद्यङि अदसत् । दसिता । ऊदित्त्वात् क्त्वि वेट्, दस्त्वा, दसित्वा । वेट्त्वात् क्तयोर्नेट्, दस्तः, दस्तवान् । ण्यन्तस्य क्ते "णौ दान्तशान्त०" ४।४।७४ इति वा निपातनात्, दस्तः, दासितः । उणादौ "भीवृधि०" ( उ० ३८७ ) इति रे दस्रौ—देववैद्यौ । "युजि शुन्धि०" ( उ० ८०१ ) इति युः, दस्युः, चौरः ॥

'८३ वसूच् स्तम्भे' । वस्यति । ववास । पुष्याद्यङि अवसत् । वसिता । ऊदित्त्वात् क्त्वि वेट्, वस्त्वा, वसित्वा । वेट्त्वात् क्तयोर्नेट्, वस्तः, वस्तवान् । उणादौ "दम्यमि०" ( उ० २०० ) इति ते वस्तः छागः । "प्लुज्ञा०" ( उ० ६४६ ) इति तौ वस्तिः मेढ्रोर्ध्वम् । वसं निवासे [ १।९९९ ], वसति, वस्ता । वसिक् आच्छादने [ २.५९ ], वस्ते । वसण् स्नेहच्छेदावहरणेषु [ ९।१९४ ], वासयति ॥

'८४ वुसच् उत्सर्गे' । उत्सर्गः त्यागः । वुस्यति । वुवोस । पुष्याद्यङि अवुसत् । वोसिता, वुसितः । "नाम्युपान्त्य०" ५।१।५४ इति के वुसम् ॥

'८५ मुसच् खण्डने' । मुस्यति । मुमोस । पुष्याद्यङि अमुसत् । मोसिता, मुसितः । उणादौ "शीरी०" ( उ० २०१ ) इति किति ते [1]मुस्ता । "तृपि-वपि०" ( उ० ४६८ ) इति किति अले मुसलम् । पान्तोऽयम् इत्यन्ये ॥

'८६ मसैच् परिणामे' । परिणामः विकारः । परिमाणे इत्यन्ये । मस्यति । ममास । पुष्याद्यङि अमसत् । मसित्वा । ऐदित्त्वात् क्तयोर्नेट्, मस्तः, मस्तवान् । घञि मासः । मास् इति प्रकृत्यन्तरं चन्द्राभिधायी । पूर्णमासा युक्ता साऽस्य पौर्णमासीति निर्देशात् अणि पौर्णमासी । उणादौ "दम्यमि०" (उ० २००) इति ते मस्तः । स्वार्थे के मस्तकः । "पदिपठि०" ( उ० ६०७ ) इति इः, मसिः शस्त्री । "कृसिकमि०" ( उ० ७७३ ) इति तुनि मस्तु दधिमण्डः ॥

अथ शमादीनां सेटां सप्तकं श्ये दीर्घार्थं मदैच् पर्यन्तं, क्लमूपर्यन्तं चाष्टकं घिनणर्थं प्रदर्श्यते । तत्र च बहुत्वान्मान्ताः पडादौ ।

---

१. मुस्यति खण्डयति रोगान् मुस्ता । एतस्या लोके मोथ इति प्रसिद्धिः ।
( निघण्टु शेष, ३८१, टी० ) ॥

'८७ शमू, ८८ दमूच् उपशमे'। "शमूसप्तकस्य०" ४।२।१११ इति श्ये दीर्घे शाम्यति। "नेर्ङ्मादा०" २।३।७९ इति नेर्णत्वे प्रणिशाम्यति। शशाम, शेमतुः। पुष्याद्यङि अशमत्। णौ "शमोऽदर्शने०" ४।२।२८ इति ह्रस्वे शमयति रोगम्। दर्शने तु निशामयति रूपम्। शमिता, शामतुम्। ऊदित्त्वात् क्त्वि वेट्, शान्त्वा, शमित्वा। वेट्त्वात् क्तयोर्नेट्, शान्तः, शान्तवान्। णौ क्ते "णौ दान्तशान्त०" इति वा निपातनात् शान्तः। पक्षे "सेट्क्तयोः" ४।३।८४ इति णेर्लुकि शमितः। "शकितकि०" ५।१।२९ इति ये शम्यम्। क्विपि "अहन्पञ्चम०" ४।१।१०७ इति दीर्घे "मो नो०" २।१।६७ इति मस्य नत्वे तस्य च परेऽसत्वात्, "नाम्नो नो०" २।१।९१ इति लुगभावे "नो प्रशानो०" १।३।८ इत्यत्र प्रशानो वर्जनात्, अनुस्वाराऽनुनासिकपूर्वस्य शस्याऽभावे "तवर्गस्य०" १।३।६० इति नस्य ञत्वे प्रशाञ् चरति। "शमष्टकात् घिनण्" ५।२।४९ "मोऽकमि०" ४।३।५५ इति वृद्ध्यभावे शमशीलः शमी। घञि शमः। गौरादित्वात् ङयाम् शमी। क्तौ शान्तिः। उणादौ "शमिमनिभ्यां खः" (उ० ८४) शङ्खः। "कमितमि०" (उ० १०७) इति डिति उड्गे शुङ्गाः कदल्यः। "पञ्चमात् डः" (उ० १६८) शण्डः उत्सृष्टः पशुः। "शमिपणिभ्यां ढः" (उ० १७९) शण्ढः क्लीबम्। "कैशीशमि०" (उ० ७४९) इति कौ शङ्कुः। शक्ृत् इति तु "[1]शक ऋत्" (उ० ८९१) इति शकेः ऋति॥

'८८ दमूच्'। दाम्यति। ददाम। पुष्याद्यङि अदमत्। दमिता। ऊदित्त्वात् क्त्वि वेट्, दान्त्वा, दमित्वा। वेट्त्वात् क्तयोर्नेट्, दान्तः, दान्तवान्। णौ "अमोकम्यमि०" ४।२।२६ इति ह्रस्वे फलवत्कर्तरि "ईगितः" ३।३।९५ इति आत्मनेपदे, "अणिगि प्राणि०" ३।३।१०७ इति परस्मैपदेनापोदिते, "परिमुहायमा०" ३।३।९४ इति पुनर्विहिते "गतिबोधा०" २।२।५ इति अणिक्कर्तुः कर्मत्वे च दाम्यति अश्वः, दमयते अश्वं चैत्रः। "अकखाद्य०" २।३।८० इति वा नेर्णत्वे प्रणिदमयते, प्रनिदमयते। "शकितकि०" ५।१।२९ इति ये दम्यः। नन्द्याद्यने कुलदमनः। "भृवृजि०" ५।१।११२ इति खे अरिन्दमः। "णौ दान्तशान्त०" ४।४।७४ इति क्ते वा निपातनाद्, दान्तः, दमितः। "शमष्टकाद्०" ५।२।४९ इति घिनणि दमशीलः दमी। घञि दमः। उणादौ "पञ्चमात् डः" (उ० १६८) दण्डः। "दम्यमि०" (उ० २००) इति

१. "शकेर्ऋत्" इत्युणादिसूत्रम्॥

ते दन्तः । "दमेरुनसूनसौ" (उ० ९८७) दमुनाः, दमूनाः च वह्निः । "यमिदमिभ्यां डोसू" (उ० १००५) दोः बाहुः ॥

'८९ तमूच् काङ्क्षायाम्' । ताम्यति । तताम । पुष्याद्यङि अतमत् । तमिता । ऊदित्त्वात् क्त्वि वेट्, तान्त्वा, तमित्वा । वेट्त्वात् क्तयोर्नेट्, तान्तः, नितान्तः, तान्तवान् । "शमष्टकात्०" ५।२।४९ घिनणि, "मोऽकमि०" ४।३।५५ इति वृद्ध्यभावे तमी । घञि तमः । गौरादित्वाद् ङ्यां तमी रात्रिः । उणादौ "चिजिशु०" (उ० ३९२) इति किति रे दीर्घे च ताम्रम् । "तप्यणि०" (उ० ५६९) इति असे तमसा नदी । "क्रमि—तमि०" (उ० ६१३) इति औ उपान्त्येत्वे च तिमिः । "अस" (उ० ९५२) इत्यसि तमः ॥

'९० श्रमूच् खेदतमसोः' । श्राम्यति । शश्राम । पुष्याद्यङि अश्रमत् । श्रमिता । ऊदित्त्वात् क्त्वि वेट्, श्रान्त्वा, श्रमित्वा । वेट्त्वात् क्तयोर्नेट्, श्रान्तः, श्रान्तवान् । "शकितकि०" ५।१।२९ इति ये श्रम्यम् । नन्द्याद्यने श्रमणः । स्त्रियामपि श्रमणा । घञि "विश्रमेर्वा" ४।३।५६ इति वा वृद्ध्यभावे विश्रमः, विश्रामः । "शमष्टकाद्०" ५।२।४९ इति घिनणि श्रमी ॥

'९१ भ्रमूच् अनवस्थाने' । अनवस्थानं देशान्तरगमनम् । "भ्रासभ्लास०" ३।४।७३ इति वा श्ये भ्राम्यति । पक्षे शवि भ्रमति । बभ्राम । पुष्याद्यङि अभ्रमत् । भ्रमिता । ऊदित्त्वात् क्त्वि वेट्, भ्रान्त्वा, भ्रमित्वा । वेट्त्वात् क्तयोर्नेट्, भ्रान्तः, भ्रान्तवान् । "शमष्टकाद्०" ५।२।४९ इति घिनणि भ्रमी । घञि "मोऽकमि०" ४।३।५५ इति वृद्ध्यभावे भ्रमः । गौरादित्वाद् ङ्याम् भ्रमी । उणादौ "तृभ्रम्यद्या०" (उ० ६११) इति औ भृमादेशे च भृमिः वायुः, बाहुलकाद् भृमाऽभावे भ्रमिः, भ्रमः । "भ्रमिगमि०" (उ० ८४३) इति डिद् ऊः, भ्रूः । भ्रमू चलने [ १।९७० ], भ्रमति । "भ्रासभ्लास०" ३।४।७३ इति वा श्ये भ्राम्यति ॥

'९२ क्षमौच् सहने' । क्षाम्यति । चक्षाम । पुष्याद्यङि अक्षमत् । औदित्त्वात् वेट्, क्षन्ता, क्षमिता । वेट्त्वात् क्तयोर्नेट्, क्षान्तः, क्षान्तवान् । "शमष्टकाद्०" ५।२।४९ घिनणि क्षमी । घञि "मोऽकमि०" ४।३।५५ इति वृद्ध्यभावे क्षमः । क्तौ क्षान्तिः । ऊदिदयमित्येके, क्षान्त्वा, क्षमित्वा । क्षमौपि सहने [ १।७८८ ], क्षमते, अक्षमिष्ट, षित्त्वादङि क्षमा ॥

## अथ दान्तः ॥

'९३ मदैच् हर्षे'। माद्यति। ममाद। पुष्याद्यङि अमदत्। मदिता। ऐदित्त्वात् क्तयोर्नेट्, "रदाद०" ४।२।६९ इत्यत्र मदेर्वर्जनाद् नत्वाभावे मत्तः, मत्तवान्। णौ हर्षग्लपनयोः घटादित्वात् ह्रस्वे मदयति। अन्यत्र प्रमादयति, उन्मादयति। अनुपसर्गात् "यममद०" ५।१।३० इति ये मद्यम्। सोपसर्गाद् घ्यणि प्रमाद्यम्। नन्द्याद्यने मदयति इति मदनः। "इरम्मदः" ५।१।१२७ इति खशि निपादनाद् इरया माद्यति इरम्मदः मेघज्योतिः। "उदः पचि०" ५।२।२९ इति इष्णौ उन्मादशीलः उन्मदिष्णुः। "शमष्टकाद्०" ५।२।४९ इति घिनणि मदशीलः मादी, उन्मादी। "व्यधजप०" ५।३।४७ इति अलि मदः। सोपसर्गात्तु घञि प्रमादः। समदप्रमादौ हर्षे, संमदः कन्यानाम्, प्रमदः कोकलानाम्। उणादौ "तुदिमदि०" (उ० १२४) इति छे मच्छः मत्स्यः। "मदेः स्यः" (उ० ३८३) मत्स्यः। गौरादित्वाद् ङ्याम् "मत्सस्य यः" २।४।८७ इति यलुकि मत्सी। "मदिमन्दि०" (उ० ४१२) इति इरे मदिरा। "मीङ्यजि०" (उ० ४३९) इति सरे मत्सरः। मदिण् तृप्तियोगे [ ९।२४१ ], मादयते ॥

'९४ क्लमूच् ग्लानौ'। "भ्रासभ्लास०" ३।४।७३ इति वा श्ये, "ष्ठिवू-क्लम्वा०" ४।२।११० इति दीर्घे क्लाम्यति, पक्षे शवि क्लामति। चक्लाम। पुष्याद्यङि अक्लमत्। क्लमिता। ऊदित्त्वात् [१]क्त्वि वेट्, क्लान्त्वा, क्लमित्वा। वेट्त्वात् क्तयोर्नेट् क्लान्तः, क्लान्तवान्। "शमष्टकाद्०" ५।२।४९ इति घिनणि क्लमी। घञि क्लमः ॥

अवसितं शमादीनां सप्तकमष्टकं च ॥

## अथ प्रकृतवर्णक्रमेण हान्ताश्चत्वारः सेटश्च ॥

'९५ मुहौच् वैचित्त्ये'। वैचित्त्यम् अविवेकः। मुह्यति। मुमोह। पुष्याद्यङि अमुहत्। औदित्वाद् वेट्, धुट्प्रत्यये पदान्ते च "मुहद्रुह०" २।१।८४ इति वा हस्य घत्वे मोग्धा, मोढा, पक्षे मोहिता। उन्मुक्, उन्मुट्। वेट्त्वात् क्तयोर्नेट्, मुग्धः, मूढः, मुग्धवान्, मूढवान्। णौ फलवत्कर्तरि "इङ्गितः" ३।३।९५ इत्यात्मनेपदे, "अणिगि प्राणिकर्तृक०" ३।३।१०७ इति परस्मैपदेनापोदिते, "परिमुहायमा०" ३।३।९४ इति पुनर्विहिते परिमोहयते शत्रुम्।

१. मु० नास्ति ॥

"परेर्देवि०" ५।२।६५ इति घिनणि परिमोहशीलः, परिमोही । घञि मोहः । उणादौ "पूमुहोः पुन्मूरौ च" (उ० ८६) इति खे मूर्खः । "मुहेः कित्" (उ० ७००) इति उरौ मुहुरिः गौः । "मुहिमिथ्यादेः कित्" (उ० १०००) इति उसि मुहुः कालावृत्तिः ॥

'९६ द्रुहौच् जिघांसायाम्' । "क्रुद्द्रुहे०" २।२।२७ इति संप्रदानत्वे मैत्राय द्रुह्यति । दुद्रोह । पुष्याद्यङि अद्रुहत् । औदित्त्वाद् वेट्, "मुह द्रुह०" २।१।८१ इति वा हस्य घत्वे द्रोग्धा, द्रोढा, द्रोहिता । क्विपि मित्रध्रुक्, मित्रध्रुट् । वेट्त्वात् क्तयोर्नेट्, द्रुग्धः, द्रूढः । "युजभुज०" ५।२।५० इति घिनणि द्रोहशीलः, द्रोही । घञि द्रोहः । उणादौ "ऋद्रुहेः कित्" (उ० १९५) इति इणे द्रुहिणः ब्रह्मा ॥

'९७ ष्णुहौच् उद्गिरणे' । "षः सो०" २।३।९८ इति सत्वे स्नुह्यति । षोपदेशत्वात् "नाम्यन्तस्था०" २।३।१५ इति षत्वे सुष्णोह, सुष्णोहयिषति । पुष्याद्यङि अस्नुहत् । औदित्त्वाद् वेट्, "मुहद्रुह०" २।१।८४ इति हस्य वा घत्वे स्नोग्धा, स्नोढा, स्नोहिता । वेट्त्वात् क्तयोर्नेट्, स्नुग्धः, स्नूढः, स्नुग्धवान्, स्नूढवान् उणादौ "नाम्युपान्त्य कॄगॄ०" (उ० ६०९) इति किद् इः, स्नुहिः महावृक्षः ॥

'९८ ष्णिहौच् प्रीतौ' । "षः सो०" २।३।९८ इति सत्वे स्निह्यति । षोपदेशत्वात् "नाम्यन्तस्था०" २।३।१५ इति षत्वे सिष्णेह । पुष्याद्यङि अस्निहत् । औदित्त्वाद् वेट्, "मुहद्रुह०" २।१।८४ इति हस्य वा घत्वे स्नेग्धा, स्नेढा, स्नेहिता । वेट्त्वात् क्तयोर्नेट्, स्निग्धः, स्नीढः, स्निग्धवान्, स्नीढवान् । क्विपि स्निक्, स्निट् । "ऋत्विज्०" २।१।६९ इति हस्य गत्वे, सूत्रनिर्देशादेव उदः दलुकि मस्य षत्वे च उष्णिक् । "अजादेः०" २।४।१६ इति आपि उष्णिहा । घञि स्नेहः । ष्णिहण् स्नेहने [९।१४८], स्नेहयति ॥

केचित्तु शमू—दमू—तमू—श्रमू—भ्रमू—क्षमौ—मदै—असू—यसू—जसू—दसू—वसू—प्युष—प्युस—पुस—प्लुषृ—बिस—कुस—कुश—बुस—मुस—मसै—लुठ—उच—भृशू—भ्रशू—वृश—कृश—ञितृष—हृष—रुष—डिप—ष्टूप—कुप—गुप—युप—रुप—लुप—लुभ—णभ—तुभ—क्लिदौ जिमिदा—ञिक्ष्विदा—ऋधू—गृधूनां पुष्यादित्वं नेच्छन्ति, तन्मते पुष्याद्यङभावे सिचि अशमीत्, अदमीत्, अश्रमीत्, अयसीत्, अलोटित्, अप्लोषीत्, अकोपीत्, अलोपीत्, अहर्षीत् इत्यादि ॥

वृत् पुषादिः । पुषादिः दिवाद्यन्तर्गणो वर्तितः संपूर्ण इत्यर्थः ॥

अथाऽऽत्मनेपदिषु सूयत्यादिर्नवकः क्तयोस्तस्य नत्वार्थं प्रदर्श्यते । तत्र लाघवार्थमादौ ऊदन्तौ सेटौ च ॥

'९९ पूङौच् प्राणिप्रसवे' । "षः सो०" २।३।९८ इति सत्वे "ङ्डित०" ३।३।२२ इत्यात्मनेपदे सूयते । षोपदेशत्वाद्, "नाम्यन्तस्था०" २।३।१५ इति षत्वे सुषुवे । औदित्त्वाद् वेट्, सोता, सविता । क्त्विति "उवर्णात्" ४।४।५८ इति नेट्, सूत्वा । "सूयत्याद्यो०" ४।२।७० इति क्तयोस्तस्य नत्वे सूनः, सूनवान्; प्रसूनम्-कुसुमम् । अत एवाऽयं प्राणिप्रसवे इत्यन्ये । सनि "ग्रहगुहश्च०" ४।४।५९ इति नेट्, "णिस्तोरेवा०" २।३।३७ इति नियमात् षत्वाभावे सुसूषते । "युवर्ण०" ५।३।२८ इति अलि प्रसवः । षूङौक् प्राणिगर्भविमोचने [ २।४९ ], सूते । षूत् प्रेरणे [ ५।१८ ], सुवति ॥

'१०० दूङूच् परितापे' । परितापः खेदः । दूयते । दुदुवे । दविता । क्त्विति "उवर्णात्" ४।४।५८ इति नेट्, दूत्वा । "सूयत्याद्यो०" ४।२।७० इति क्तयोस्तस्य नत्वे दूनः, दूनवान् । उणादौ "शीरी०" ( उ० २०१ ) इति किति ते दूतः ॥

## अथेदन्ताः सप्त डीङोऽन्येऽनिटश्च ॥

'१०१ दींङ्च् क्षये' । दीयते । "दीय् दीङः क्ङिति स्वरे" ४।३।९३ उपदिदीये, उपदिदीयाते । दीङः सनि०" ४।२।६ इति वा आत्वे दिदासते, दिदीसते । "नामिनोऽनिट्" ४।३।३३ इति सनः कित्त्वादत्र न गुणः । "यबक्ङिति" ४।२।७ इति आत्वे उपदाय । दारूपस्य बहिरङ्गत्वाद् दासंज्ञाया अभावे "इश्च स्थादः" ४।३।४१ इति न इत्वम्, उपादास्त, दाता । अक्ङिद्विषये एव आत्वे "तन्व्यधी०" ५।१।६४ इति णे दायः । घञि उपदायः । "सूयत्याद्यो०" ४।२।७० इति क्तयोस्तस्य नत्वे दीनः, दीनवान्, अनुस्वारेत्त्वादत्र नेट् । उणादौ "जीणूशीदी०" ( उ० २६१ ) इति किति ने दीनः ॥

'१०२ धींङ्च् अनादरे' । धीयते । दिध्ये । अनुस्वारेत्त्वान्नेट्, धेता, धेतुम् । "सूयत्याद्यो०" ४।२।७० इति क्तयोस्तस्य नत्वे धीनः, धीनवान् । आधारार्थोऽयमित्यन्ये । "शेषो भुवं धीयते" [ ] ॥

'१०३ मींङच् हिंसायाम्'। मीयते, मिम्ये, अनुस्वारेत्त्वान्नेट्, ङित्त्वात् च "मिग्मीगो०" ४।२।८ इति न आत्वम्, मेता, मेतुम्। अस्याऽपि आत्वमित्येके, माता, मातुम्। सनि "मिमीमा०" ४।१।२० इति स्वरस्य इति द्वित्वाभावे च मित्सते। "सूयत्यादि०" ४।२।७० इति क्तयोस्तस्य नत्वे मीनः, मीनवान्। उणादौ "जीणृशी०" (उ० २६१) इति किति ने मीनः। "मीज्यजि०" (उ० ४३९) इति सरे मेमरः वर्णविशेषः। "चिनीपीम्यशिभ्यो रुः" (उ० ८०६) मेरुः। मींग्श् हिंसायाम् [ ८।५ ] मीनीते, मीनाति ॥

'१०४ रींङच् स्रवणे'। रीयते। रिर्ये। अनुस्वारेत्त्वान्नेट्, रेता, रेतुम्। "सूयत्यादि०" ४।२।७० इति क्तयोस्तस्य नत्वे रीणः, रीणवान्। णौ "अर्तिरी०" ४।२।२१ इति पौ "पुस्पौ" ४।३।३ इति गुणे रेपयति। विचि रेः। मतौ स्त्रियां रेवती। उणादौ "रीशीभ्यां फः" (उ० ३१४) रेफः। "अजिस्था०" (उ० ७६८) इति णौ रेणुः। "सुरीभ्यां तस्" (उ० ९७८) रेतः। "रीवृभ्यां पस्" (उ० ९८१) रेपः पापम्। रींश् गतिरेषणयोः [ ८।१८ ], रिणाति ॥

'१०५ लींङच् श्लेषणे'। लीयते। विलिल्ये। अनुस्वारेत्त्वान्नेट्, यबक्ङिति "लीङ्लिनोर्वा" ४।२।९ इति वा आत्वे विलाता, विलेता, विलास्यते, विलेष्यते। यपि विलाय, विलीय। 'अखलचलि' [४।२।८] इत्यनुवृत्तेः खलि दुर्लयः। अचि निलयः। अलि प्रलयः। णौ "लियो नोऽन्तः स्नेहद्रवे" ४।२।१५ इति ने घृतं विलीनयति। 'लियः' इति इकारप्रश्लेषात् आत्वे नान्ताभावे "लो लः" ४।२।१६ इति वा ले घृतं विलालयति, पक्षे "अर्तिरी०" ४।२।२१ इति पौ विलापयति। लीङ्लीनोऽर्चा०" ३।३।९० इत्यात्मनेपदे आत्वे च जटाभिः आलापयते; श्येनः वर्तिकाम् अपलापयते, मायावी लोकम् उल्लापयते। "तन्व्यधी०" ५।१।६४ इति णे विलायः। "सूयत्यादि०" ४।२।७० इति क्तयोस्तस्य नत्वे लीनः, लीनवान्। लींश् श्लेषणे [ ८।१९ ], लिनाति, लेष्यति। लीण् द्रवीकरणे [ ९।३७६ ], "युजादेर्नवा" ३।४।१८ इति वा णिचि विलाययति, विलयति ॥

'१०६ डीङच् गतौ'। डीयते। डिड्ये। डयिता। "डीयश्व्यै०" ४।४।६१ इति क्तयोर्नेट्, "सूयत्यादि०" ४।२।७० इति क्तयोस्तस्य नत्वे डीनः,

डीनवान् । अयमपि विहायसां गतौ इत्यन्ये । डीङ् विहायसां गतौ [ १।५८८ ], डयते । क्तयोरिटि "न डीङ्०" ४।३।२७ इति किच्वाभावाद् गुणे डयितः, डयितवान् । श्वादेरिवेह श्यार्थं सूयत्यादित्वार्थं च पाठः इत्येके, तन्मते डयतेरपि डीनः, डीनवान् ॥

'१०७ व्रीङ्च् वरणे' । व्रीयते । "योऽनेकस्वरस्य" २।१।५६ इति यापवादे "संयोगात्" २।१।५२ इति इयि विव्रियै । अनुस्वारेत्त्वान्नेट्, व्रेता । "सूयत्यादि०" ४।२।७० इति क्तयोस्तस्य नत्वे व्रीणः, व्रीणवान् । व्रींश् वरणे [ ८।५३ ], व्रीणाति ॥

वृत् स्वादिः । सूयत्यादिः दिवाद्यन्तर्गणो नवकः वर्तितः, संपूर्ण, इत्यर्थः ॥

## अथेदन्तास्त्रयोऽनिटश्च ॥

'१०८ पींङ्च् पाने' । चैत्रो जलं पीयते, पिप्ये । अनुस्वारेत्त्वान्नेट्, पेता, पीतः । आपीयन्त । उणादौ "पीपूडो ह्रस्वश्च" ( उ० १२५ ) इति छे पिछम् । "गुलुञ्छपिलिपिञ्छ०" ( उ० १२६ ) इति छे निपातनात् पिञ्छम् । "पीविशि०" ( उ० १६३ ) इति किति ठे पीठम् । "पीङः कित्" ( उ० ८२१ ) इति लौ पीलुः गजवृक्षौ ॥

मांङ्च् माने इत्यपि कश्चिदधीते, मायते, मितम् । क्ये "ईर्व्यञ्जने०" ४।३।९७ इति ईत्वे मीयते । "नेर्ङ्मादा०" २।३।७९ इति नेर्णत्वे प्रणिमायते, ङित्त्वादत्र न ईत्वम् । माङ्क् माने [ २।१५ ], माति । माङ्क् मानशब्दयोः [ २।७९ ], मिमीते ॥

'१०९ ईङ्च् गतौ' । ईयते, प्रतीयते । "गुरुनाम्यादे०" ३।४।४८ इति परोक्षाया आमि आयांचक्रे । व्यपदेशिवद्भावेन गुरुनाम्यादित्वमामं नेच्छन्त्येके, तन्मते आमभावे ईये, ईयाते, ईयिरे । अनुस्वारेत्त्वान्नेट्, एता, एतुम् । "य एचा०" ५।१।२८ इति ये उपेयम् । अलि प्रत्ययः ॥

'११० प्रींङ्च् प्रीतौ' । प्रीयते । "संयोगात्" २।१।५२ इति इयि पिप्रिये । अनुस्वारेत्त्वान्नेट्, प्रेता, प्रीतः । णौ "नामिनो०" ४।३।५१ इति वृद्धौ प्राययति । "नाम्युपान्त्य०" ५।१।५४ इति के प्रियः । प्रींग्श् तृप्तिकान्त्योः [ ८।३ ], प्रीणीते, प्रीणाति । प्रीगण् तर्पणे [ ९।३७८ ], "युजादे०" ३।४।१८ इति वा णिचि, "धूग्प्रीगो०" ४।२।१८ इति नेऽन्ते प्रीणयति; पक्षे प्रयते, प्रयति ॥

## अथ जान्तावनिटौ च ॥

'१११ युजिच् समाधौ' । समाधिः चित्तवृत्तिनिरोधः । युज्यते । युयुजे । अनुस्वारेत्त्वान्नेट्, योक्ता, योक्तुम् । "कुप्यभिद्य०" ५।१।३९ इति क्यपि निपातनाद् युज्यते अनेनेति युग्यं वाहनम् । घ्यणि योग्यमन्यद् । कर्मणोऽणि '[1]न्यङ्क्वादि' इति गत्वे गोयोगः । घ्यणि "नि-प्राद् युजः०" ४।१।११६ इति गत्वाभावे नियोक्तुं शक्यं नियोज्यम्, प्रयोज्यम् । "नाम्युपान्त्य०" ५।१।५४ इति के, "न्यङ्कूद्ग०" ४।१।११२ इति गत्वे युगम्, संयुगम् । क्विपि "युज्रो०" १।४।७१ इत्यत्र युनक्तेर्ग्रहणात् नान्ताभावे युक्, युजौ, युजः; अश्वयुक् । अस्याऽपि नोऽन्त इत्यन्ये, युङ्, युञ्जौ, युञ्जः । "गत्यर्थाऽकर्मक०" ५।१।११ इति कर्तरि क्त, "कुशलायुक्त०" २।२।९७ इति वा सप्तम्याम् आयुक्तो देवार्चायां देवार्चाया वा । "युजभुज०" ५।२।५० इति घिनणि योगशीलः योगी । "नीदाव्०" ५।२।८८ इति करणे त्रटि योक्त्रम् । घञि योगः । आधारेऽनटि योजनम् । णौ "णिवेत्त्या०" ५।३।१११ इति अने योजना । "क्रुत्संपदा०" ५।३।११४ इति क्विपि युजमापन्ना मुनयः । उणादौ "युयुजि०" (उ० २७७) इति किति आने युजानः सारथिः । "तिजियुजेर्ग् च" (उ० ३४५) इति किति मे युग्मम् । युजृंपी योगे [ ६।४ ] युङ्क्ते, युनक्ति । युजण्, संपर्चने [ ९।३७३ ], "युजादे०" ४।३।१८ इति वा णिचि योजयति, योजति ॥

'११२ सृजिच् विसर्गे' । "इङितः०" ३।३।२२ इत्यात्मनेपदे सृज्यते मालां चैत्रः । कर्मकर्तरि "एकधातौ०" ३।४।८६ इति क्ये सृज्यते माला स्वयमेव । ससृजे । अनुस्वारेत्त्वान्नेट्, "अः सृजिदृशो०" ४।४।१११ इति अति स्रष्टा, सृष्टः, सृष्टवान् । "पाणिसमवाभ्याम्०" ५।१।१८ इति क्यपवादे घ्यणि पाणिसर्ग्या, समवसर्ग्या रज्जुः । "संवेः" ५।२।५७ इति घिनणि संसर्गशीलः संसर्गी, विसर्गी । घञि निसर्गः । "क्रुत्संपदा०" ५।३।११४ इति कर्मणि क्विपि "ऋत्विज्दिश्०" २।१।६९ इति निर्देशाद् ऋतो रत्वे स्रक् । "श्वादिभ्यः" ५।३।९२ इति क्तौ सृष्टिः । उणादौ "स्यन्दिसृजिभ्यां सिन्धरज्जौ च" (उ० ७१७) इति उः, रज्जुः । सृजंत् विसर्गे [ ५।३५ ], सृजति ॥

१. "न्यङ्क्वद्गमेघादय." ४।१।११२ इति सूत्रेण ॥

## अथ तान्तः सेट् च ॥

'११३ वृतूचि वरणे'। वृत्यते। ववृते। वर्तिता। ऊदित्त्वात् क्त्वि वेट्, वृत्वा, वर्तित्वा। वेट्त्वात् क्तयोर्नेट्, वृत्तः, वृत्तवान्। वृतूङ् वर्तने [१९५५], इति अस्यैव वरणे दिवादित्वं विधीयते, तेन वरणे द्युतादित्वाद् "द्युद्भ्योऽद्यतन्याम्०" ३।३।४४ "वृद्भ्यः स्यसनोः" ३।३।४५ इति वा आत्मनेपदं नास्ति, अवर्तिष्ट, वर्तिष्यते, अवर्तिष्यत, विवर्तिषते। वरणादन्यत्र तु अवृतत्, वर्त्स्यति, अवर्त्स्यत्, इत्यपि भवति। अन्ये तु वा वृतूचि वरणे इत्यधीयते वरणे दिवादित्वं वा प्रतिपन्नाः, तन्मते वरणेऽपि पक्षे शवि वर्तते, "द्युद्भ्यो०" ३।३।४४ इति अद्यतन्यां वाऽऽत्मनेपदे अवर्तिष्ट, पक्षे "शेषात् परस्मै" ३।३।१०० इति परस्मैपदे द्युताद्यङि अवृतत्, "वृद्भ्यः स्यसनोः" ३।३।४५ इति वा आत्मनेपदे वर्तिष्यते, "शेषात् परस्मै" ३।३।१०० इति परस्मैपदे "न वृद्भ्यः" ४।४।५५ इति इडभावे वर्त्स्यति, सनि विवर्तिषते; पक्षे "प्राग्वत्" ३।३।७४ इति परस्मैपदे विवृत्सति। केचित्तु वा शब्दादिरनेकस्वरोऽयं धातुरित्याहुः, वावृत्यते। 'ततो वावृत्यमाना सा' [ भट्टीकाव्य, ४।२८ ] ॥

## अथदान्तास्त्रयोऽनिटश्च ॥

'११४ पदिच् गतौ'। गतिः यानं ज्ञानं च। पद्यते। "नेर्ङ्मादा०" २।३।७९ इति नेर्णत्वे प्रणिपद्यते। प्रपेदे। "जिच् ते पदस्तलुक् च" ३।४।६६ उदपादि भैक्षम्। अनुस्वारेत्त्वान्नेट्, पत्ता, संपन्नः। यङि "वञ्चस्रंस०" ४।१।५० इति पूर्वस्य नीः, आपनीपद्यते। सनि "रभलभ०" ४।१।२१ इति स्वरस्य इति द्वित्वाभावे च प्रपित्सते। "लषपत०" ५।२।४१ इति उकणि उपपादशीलः उपपादुकः। "भूषाक्रोधा०" ५।२।४२ इति अने पदनो धर्मस्य। "पदरुज०" ५।३।१६ इति कर्तरि घञि पादः। "समज०" ५।३।९९ इति क्यपि निपद्या। "वर्षादयः क्लीबे" ५।३।२९ इति अलि पदम्। "क्रुत्संपदा०" ५।३।११४ इति क्विपि संपद्, प्रतिपद्। "विशपतपद०" ५।४।८१ इति णमि गेहानुप्रपादमास्ते, गेहं गेहम् अनुप्रपादम्। 'जातेः संपदा च" ७।२।१३१ इति स्मात्ति सर्वं शास्त्रमग्निमात् संपद्यते। उणादौ "अर्तीरी०" (उ० ३३८) इति मे पद्मम्। "मिवृधि०" (उ० ३८७) इति रे पद्रः ग्रामः। "छविछिवि०" (उ० ७०६) इति वौ निपातनात् पदविः; ङ्यां पदवी मार्गः। "प्लुज्ञा०"

( उ० ६४४ ) इति तौ पत्तिः । "कसिपदि०" ( उ० ८३५ ) इति णिद् ऊः, पादूः, कपि पादुका । पदणि गतौ [ ९।३६६ ], अदन्तः उपपदयते ॥

'११५ विदिंचू सत्तायाम्'। सत्ता भावः । विद्यते । विविदे । अनुस्वारेत्त्वान्नेट्, वेत्ता, वित्तः । "किंकिलास्त्यर्थयोर्भविष्यन्ती" ५।४।१६ अस्ति नाम विद्यते नाम तत्र भवान्परदारान् प्रकरिष्यते नावकल्पयामि न श्रद्दधे । "शकधृष०" ५।४।९० इति तुमि विद्यते भोक्तुम् । विदक् ज्ञाने [ २।४१ ] वेत्ति, विदितः । विद्लृंती लाभे [ ५।८ ], विन्दते, विन्दति, वित्तः । वित्तं धनं प्रतीत च । विदिंप् विचारणे [ ६।२५ ], विन्त्ते, "ऋह्री०" ४।२।७६ इति वा क्तयोस्तस्य नत्वे वित्तम्, विन्नम् । यदाह-

'वेत्तेर्विदितं विन्त्तेर्विन्नं वित्तं च विद्यतेर्विन्नम् ।

वित्तं धने प्रतीते च विन्दतेर्विन्नमन्यत्र'[1] ॥

विदिण् चेतनाख्याननिवासेषु [ ९।२४२ ], वेदयते ॥

'११६ खिदिंच् दैन्ये'। खिद्यते । चिखिदे । अनुस्वारेत्त्वान्नेट्, खेत्ता, खिन्नः । खिदंत् परिघाते [ ५।१२ ], खिन्दति । खिदिंप् दैन्ये [ ६।२४ ],खिन्त्ते ॥

## अथ धान्तास्त्रयोऽनिटश्च ॥

'११७ युधिंच् संप्रहारे'। संप्रहारः हननम् । युध्यते । युयुधे । अनुस्वारेत्त्वान्नेट्, योद्धा, युद्धः । णौ फलवत्कर्तरि "इंगितः" ३।३।९५ इति आत्मनेपदापवादे "चल्याहारा०" ३।३।१०८ इति परस्मैपदे योधयति काष्ठं चैत्रः । "नाम्युपान्त्य०" ५।१।५४ इति के युधः । "सहराज०" ५।१।१६७ इति क्वनिपि सहयुद्धवान्, सहयुद्ध्वा, राजयुद्ध्वा । "स्थादिभ्यः०" ५।३।८२ इति के आयुध्यन्ते अनेन आयुधम् । "शासूयुधि०" ५।३।१४१ इति खलपवादे अने दुर्योधनः, सुयोधनः । आधारेऽनटि आयोधनम् ॥

'११८ अनो रुधिंच् कामे'। काम इच्छा । अनुपूर्वो रुधिः कामे दिवादिः । अनुरुध्यते । अनुरुरुधे । अनुस्वारेत्त्वान्नेट्, अनुरोद्धा, अनुरुद्धः । "समनुव्य०" ५।२।६३ इति घिनणि अनुरोधशीलः अनुरोधी । कामादन्यत्र रुधादित्त्वात् "रुधां०" ३।४।८२ इति श्ने अनुरुन्द्धे, अनुरुणद्धि । णौ रोधयति ॥

---

१. तुलना, महाभाष्य ८।२।५८, काशिका ८।२।५६ ॥

'११९ बुधिं १२० मनिंच् ज्ञाने'। बुध्यते। बुबुधे। "दीपजन०" ३।४।६७ इति कर्तर्यद्यतन्यात्मनेपदे ते वा जिचि तलुकि च अबोधि; पक्षे "धुड्ह्रस्वात्०" ४।३।७० इति सिचो लुकि अबुद्ध। अनुस्वारेत्त्वान्नेट्, बोद्धा। "ज्ञानेच्छा०" ५।२।९२ इति सति क्ते राज्ञां बुद्धः। णौ फलवत्कर्तर्यपि "ईंगितः" ३।३।९५ इत्यात्मनेपदापवादे "चल्याहारार्थे०" ३।३।१०८ इति परस्मैपदे बोधयति पद्मं रविः। "नाम्युपान्त्य०" ५।१।५४ इति के बुधः। "अजातेः०" ५।१।१५४ इति णिनि प्रतिबोधशीलः प्रतिबोधी। गम्यादित्वात् "वर्त्स्यति०" ५।३।१ साधुः। उणादौ "जीणूशीदी०" (उ० २६१) इति किति ने बुध्नः मूल रुद्रश्च। "युयुजि०" (उ० २७७) इति किति आने बुधानः सूरिः। "क्रिलिपिलि०" (उ० ६०८) इति औ बोधिः-तत्वज्ञानम्। बुधृग् बोधने [ १।९१२ ]. बोधते, बोधति, अबुधत्। बुध अवगमने [ १।९६८ ], बोधति ॥

## अथ नान्तास्त्रयो मनिंवर्जाः सेटश्च ॥

'१२० मनिंच्'। मन्यते। "मन्यस्या०" २।२।६४ इति अतिकुत्सने कर्मणि वा चतुर्थी न त्वा तृणाय मन्ये, न त्वा तृणं मन्ये। अनुस्वारेत्त्वान्नेट्, मन्ता। "यमिरमि०" ४।२।५५ इति नो लुकि मत्वा। "ज्ञानेच्छा०" ५।२।९२ इति सति क्ते राज्ञां मतः। "मन्याण्णिन्०" ५।१।११६ "क्यङ्मानि०" ३।२।५० इति पुंवत्त्वे दर्शनीयमानी भार्यायाः। "कर्तुः खश्" ५।१।११७ पटुमात्मानं मन्यते पटुमन्यः। "परतः स्त्री०" ३।२।४९ इति पुंस्त्वापवादे "खित्य०" ३।२।१११ इति ह्रस्वे पट्विमन्या, पक्षे "असरूपोऽपवादे०" ५।१।१६ इति णिनि पटुमानी। "समज०" ५।३।९९ इति क्यपि मन्या[1] कृकाटिकासिरा। संज्ञाया अन्यत्र स्त्रियां क्तौ मतिः। उणादौ "कीचकपेचक०" (उ० ३३) इति अके निपातनाद् मेनका। "मनेर्मत्मातौ च०" (उ० १००) इति अङ्गे मतङ्गः मातङ्गश्च हस्ती। "शाशपि०" (उ० २३७) इति दे मन्दः। "मनेरुदेतौ चास्यवा०" (उ० ६१२) इति औ मुनिः, मेनिः संकल्पः, मनिः धूमवर्तिः। "भृमृतृ०" (उ० ७१६) इति उः मनुः। "मनिजनिभ्यां धतौ च" (उ० ७२१) इति उः मधु। "कुसिकमि०" (उ० ७७३) इति तुनि मन्तुः

---

१ कृकाटिका ग्रीवापश्चाद्भाग. (अ. चि. टी. ३।२५०) ॥

आगः । "यजिशुन्धि०" (उ० ८०१) इति युः मन्युः । "असू" (उ० ९५२) इति असि मनः । "स्वर्ति०" (उ० ९९७) इति उसि मनुः प्रजापतिः । मांमम् इति तु मानेः "मावावद्दि०" (उ० ५६४) इति से । मठर इत्यपि मठतेः 'ऋच्छिचटि०" (उ० ३९७) इति अरे । मनूयि बोधने [ ८।९ ], मनुते । मनिण् स्तम्भे [ ९।२४३ ], मानयते, अलि मानः ॥

'१२१ अनिचू प्राणने' । अन्यते । "अस्यादे०" ४।१।६८ इति पूर्वस्य आत्वे आने । अनिता, अनितः । णान्तोऽयमित्येके, अण्यते, आणे । अन श्वसक् [ २।३१, ३२ ], प्राणने, अनिति, "द्वित्वेऽप्यन्तेप्य०" २।३।८१ इति णत्वे प्राणिति ॥

'१२२ जनैचि प्रादुर्भावे' । प्रादुर्भावः उत्पत्तिः । "जा ज्ञा०" ४।२।१०४ इति जाऽऽदाशे, जायते । "गमहन०" ४।४।८३ इति अल्लुकि जज्ञे । "दीप-जन०" ३।४।६७ इति अद्यतन्याः कर्तृविहिते ते वा जिचि "न जन०" ४।३।५३ इति वृद्ध्यभावे अजनि, पक्षे सिचि अजनिष्ट । णौ "कगेवनू०" ४।२।२५ इति ह्रस्वे जनयति । "ये नवा" ४।२।६२ इति इति क्ङिति वा आत्वे जायते, जन्यते, जाजायते, जञ्जन्यते । जनिता । णौ "ईगितः" ३।३।९५ इति फलवत्कर्तरि आत्मनेपदाऽपवादे "चल्याहारार्थे०" ३।३।१०८ इति परस्मैपदे जनयति धर्मम् । करणे घञि अभिजनः गोत्रम् । ऐदित्त्वात् क्तयोर्नेट्, "गत्यर्थाकर्मक०" ५।१।११ इति वा कर्तरि क्ते "आः खनि०" ४।२।६० इति आत्वे जातः, जातवान्, पक्षे भावे क्ते जातं चैत्रेण । साप्यादपि "श्लिषशीङ्०" ५।१।९ इति क्ते अनुजातो माणवकः माणविकाम्, पक्षे कर्मणि क्ते अनुजाता माणविका माणवकेन । "भव्यगेय०" ५।१।७ इति निपादनाद् वा कर्तरि ध्यणि जन्यः चैत्रः, पक्षे भावे जन्यं चैत्रेण । अचि जनः । "वन्याङ् पञ्चमस्य" ४।२।६५ विजावा । "अनोर्जनेर्डः" ५।१।१६८ स्त्र्यनुजः । "सप्तम्याः०" ५।१।१६९ मन्दुरे जातः मन्दुरजः । "अजातेः पञ्चम्याः" ५।१।१७० मुण्डजं भयम् । "क्वचित्" ५।१।१७१ इति डे [1]अनुजः, प्रजाः, पूर्वजः । "भ्राज्यलं०" ५।२।२८ इति इष्णौ प्रजनिष्णुः । क्तौ जातिः । अनटि जायते अस्यामपत्यमिति जननी । उणादौ।

---

१. अनूज. इति मु० ॥

"दृकॄनॄ०" (उ० २७) इति अके जनकः। "स्थार्ति०" (उ० १०९) इति घे जङ्घा। "नमितनि०" (उ० १३९) इति टे नो लुकि च जटा। "जनिपणि०" (उ० १४०) इति टे दीर्घे च जाण्टः पक्षी। "ऋशिजनि०" (उ० ३६१) इति किति ये "ये नवा" ४।२।६२ इति वा आत्वे जाया, जन्यं रणः। "जठरक्रकर०" (उ० ४०३) इति अरे निपातनाद् जठरम्। "पदिपठि०" (उ० ६०७) इति इः जनिः उत्पादः। "कृवापाजि०" (उ० १) इति उणि जानु, [सूत्रे] जानि इति निर्देशाद् वृद्धिः। "मनिजनिभ्यां धतौ च" (उ० ७२१) इति उः, जतु। "कृसि०" (उ० ७७३) इति तुनि जन्तुः। "हृपिपुषि०" (उ० ७९७) इति णौ इत्नुः, जनइत्नुः पिता। "यजिशुन्धि०" (उ० ८०१) इति युः, जन्युः जन्म प्राणी च। "जनिहनि०" (उ० ८०९) इति रौ ताऽऽदेशे च जत्रुः वक्षोऽससन्धिः। "कमिजनिभ्यां वूः" (उ० ८४७) जम्बूः। "मन्" (उ० ९११) इति मनि जन्म। "रुयर्ति०" (उ० ९९७) इति उसि जनुः, जनुषी, जन्म ॥

## अथ पान्तौ ॥

'१२३ दीपैचि दीप्तौ'। दीप्यते। कर्तर्यद्यतन्यास्ते "दीपजन०" ३।४।६७ इति वा जिचि तलुकि च अदीपि, अदीपिष्ट। दिदीपे। णौ ङे "भ्राजभास०" ४।२।३६ इति वा उपान्त्यह्रस्वे अदीदिपत्, अदिदीपत्। दीपिता। ऐदित्वात् क्तयोर्नेट्, दीप्तः, दीप्तवान्। "नाम्युपान्त्य०" ५।१।५४ इति के दीपः, प्रदीपः। "स्म्यजस०" ५।२।७९ इति रे दीपनशीलः दीप्रः। "इङितो०" ५।२।४४ इति अने "न णिङ्य०" ५।२।४५ इति निषिद्धे तृनि दीपिता। क्तौ दीप्तिः ॥

'१२४ तपिंच् ऐश्वर्ये वा'। तपं धूपसंतापे इत्यस्य ऐश्वर्येऽर्थे दिवादित्वमात्मनेपदं च वा विधीयते; तप्यते, तेपे। अनुस्वारेत्त्वान्नेट्, तप्ता, तप्तः; पक्षे ऐश्वर्येऽपि भ्वादित्वात् प्रतपति, प्रतताप। नन्द्याद्यने प्रतपनः। "द्विषन्तप०" ५।१।१०८ इति खे निपातनात् परन्तपः। एके तु 'तपिंच् ऐश्वर्ये' इति धात्वन्तरं दिवादिमाहुः। अन्ये तु भ्वादेरेव ऐश्वर्ये संतापे च श्याऽऽत्मनेपदे वा इच्छन्ति। द्रमिलास्तु तपोः[1] विपर्ययेण पतिंच् ऐश्वर्ये वा इति पेठुः। भ्वादेरेव पतॢ गतौ इत्यस्य ऐश्वर्ये पक्षे दिवादित्वमात्मनेपदित्वं च समुदितं भवतीत्यर्थः, पत्यते, अपतिष्ट,

---

१. पतो. इति मु०। नैरुक्ताः पत्यते इत्यैश्वर्यकर्मसु पठन्ति। (निघण्टु २।२१) क्षी. त. टि. २०७) ॥

पतिष्यते; पक्षे ऐश्वर्येऽपि भ्वादित्वात् पतति, लृदित्वात् अपप्तत्, पतिष्यति; ऐश्वर्यादन्यत्र पतति अपप्तत् इत्याद्येव भवति ॥

## अथ रान्ता अष्टौ सेटश्च ॥

'१२५ पूरैचि आप्यायने'। आप्यायनं वृद्धिः। पूर्यते। पुपूरे। "दीपजन०" ३।४।६७ इति कर्तरि वा जिचि अपूरि, अपूरिष्ट। पूरिता। ऐदित्त्वात् क्तयोर्नेट्, पूर्णः, पूर्णवान्। "णौ दान्तशान्त०" ४।४।७४ इति क्ते वा निपातनात्, पूर्णः, पूरितः। "इङितः०" ५।२।४४ इति अने पूरणशीलः पूरणः। "चर्मोदरात्०" ५।४।५६ इति [1]णमि चर्मपूरं ददाति, उदरपूरं भुङ्क्ते। "वृष्टिमाने ऊलुक् चास्य वा" ५।४।५७ गोष्पदपूरं वृष्टो मेघः, गोष्पदप्रम्। "ऊर्ध्वात् पूः शुषः" ५।४।७० ऊर्ध्वपूरं पूर्णः ॥

'१२६ घूरैङ् १२७ जूरैचि जरायाम्'। जरा वयोहानिः। घूर्यते। जुघूरे। घूरिता। ऐदित्त्वात् क्तयोर्नेट्, "रदाद०" ४।२।६९ इति क्तयोस्तस्य नत्वे घूर्णः, घूर्णवान् ॥

'१२७ जूरैचि'। जूर्यते। जूरिता। ऐदित्त्वात् क्तयोर्नेट्, जूर्णः, जूर्णवान् ॥

'१२८ धूरैङ् १२९ गूरैचि गतौ'। धूर्यते, गूर्यते। दुधूरे, जुगूरे। धूरिता, गूरिता। ऐदित्त्वात् क्तयोर्नेट्, धूर्णः, धूर्णवान्। गूर्णः, गूर्णवान्। "क्रुत्संपदा०" ५।३।११४ इति क्विपि धूर्यते इति धूः। उणादौ "मुदिगूरिभ्यां टिद्गजौ चान्तौ" (उ० ४०४) इति अरे गूर्जरः ॥

'१३० शूरैचि स्तम्भे'। तालव्यादिः। शूर्यते। 'शुशूरेरिशरः' शरैः [ ]। शूरिता। ऐदित्त्वात् क्तयोर्नेट्, शूर्णः, शूर्णवान्। "नाम्युपान्त्य०" ५।१।५४ इति के शूरः ॥

'१३१ तूरैचि त्वरायाम्'। गतित्वरायमित्यन्ये। तूर्यते। तुतूरे। तूरिता। ऐदित्त्वात् क्तयोर्नेट्, तूर्णः, तूर्णवान्। ध्यणि तूर्यम्। "नाम्युपान्त्य०" ५।१।५४ इति के तूरम्। "इङितः०" ५।२।४४ इति अने तूरणशीलः तूरणः। उणादौ "कावावी०" (उ० ६३४) इति णौ तूर्णिः त्वरा। घूरादयो हिंसायां च, घूरादयः षडपि हिंसायां चकारात् यथायथमुक्तेषु जरादिषु। तानि एव उदाहरणानि ॥

---

१. अस्मिन् सूत्रे (५।४।५६) या णम् भवति ॥

'१३२ चूरैचि दाहे'। चूर्यते। चुचूरे। चूरिता। ऐदित्वात् क्तयोर्नेट्, चूर्णः, चूर्णवान्। उणादौ "कावावी०" (उ० ३६४) इति णौ चूर्णिः वृत्तिः॥

## अथ शान्ताश्चत्वारो लिशिंच् वर्जाः सेटश्च॥

'१३३ क्लिशिचु उपतापे'। क्लिश्यते। 'परार्थे क्लिश्यतः सतः' [ ] इति तु लक्ष्यम्। चिक्लिशे। क्लेशिता। "पूङ्क्लिशिभ्यः०" ४।४।४५ इति क्तक्त्वासु वेट्, क्लिष्टः, क्लिशितः; क्लिष्टवान्, क्लिशितवान्. क्लिष्ट्वा। "क्षुधक्लिश०" ४।३।३१ इति किच्वे क्लिशित्वा। "निन्दहिंस०" ५।२।६८ इति णके क्लेशकः। उणादौ "क्लिशः के च" (उ० ५३०) इति शे केशः। कीनाश इति तु "कनेरीश्चातः" (उ० ५३४) इति आशे कनतेः। किशोर इत्यपि "कोरचोर०" (उ० ४३४) इति निपातनाद् ओरे क्लशेः। क्लिशौश् विबाधने [ ८।५० ], क्लिश्नाति॥

'१३४ लिशिंचु अल्पत्वे'। लिश्यते। लिलिशे। अनुस्वारेत्त्वान्नेट्, लेष्टा, लिष्टः। "नाम्युपान्त्य०" ५।१।५४ इति के लिशः। घञि लेशः। लिशंत् गतौ [ ५।१०३ ], लिशति॥

'१३५ काशिचू दीप्तौ'। काश्यते। चकाशे। काशिता। काशितः। णौ ङे "उपान्त्यस्या०" ४।२।३५ इति ह्रस्वे अचीकशत्। ऋदिदयमित्येके, तन्मते ह्रस्वाभावे अचकाशत्। अचि "नामिनः काशे" ३।२।८७ इति दीर्घे नीकाशः, प्रतीकाशः। संकाशः। घञि अवकाशः, काशः। उणादौ "वनिकणि०" (उ० १६२) इति ठे काष्ठम्। काशृङ् दीप्तौ [ १।८३० ], काशते॥

'१३६ वाशिचू शब्दे'। वाश्यते, ववाशे काकः। वाशिता, वाशितम्। णौ ङे अवीवशत्। ऋदिदयमित्येके, तेषां ह्रस्वाभावे अववाशत्। "क्तेटः०" ५।३।१०६ इति अः, वाशा। "नाम्नि पुंसि च" ५।३।१२१ इति णके वाशिका। णौ नन्द्याद्यने वाशनः। उणादौ "वाश्यसि०" (उ० ४२३) इति उरे वाशुरः॥

## अथोभयपदिषु कान्तोऽनिट् च॥

'१३७ शकींच् मर्षणे'। मर्षणं क्षमा। "ईगितः" ३।३।९५ इति फलवत्कर्तरि आत्मनेपदे शक्यते। फलवतोऽन्यत्र "शेषात्०" ३।३।१०० इति परस्मैपदे शक्यति। शशाक, अशक्त, अशाक्षीत्। अनुस्वारेत्त्वान्नेट्, शक्ता, शक्तुम्, शक्तः, शक्तवान्। "शकः कर्मणि" ४।४।७३ इति कर्मणि क्ते वा नेट्, शकितः,

शक्तो वा घटः कर्तुं चैत्रेण । सनि "रभलभ०" ४।१।२१ इति स्वरस्य इत्वे द्वित्वाभावे च शिक्षते, शिक्षति । "शकितकि०" ५।१।२९ इति ये शक्यम् । अचि शकः । वनि शक्वा; "ण्स्वरा०" २।४।४ इति ङ्यां नो रत्वे च शक्वरी । क्तौ शक्तिः । बाहुलकात् घञि शक्यते [1]अनेन भोक्तुम् शाकम् । "शकधृष०" ५।४।९० इति तुमि शक्यते भोक्तुम् । उणादौ "दिव्यवि०" (उ० १४२) इति अटे शकटम् । "कृशकृशाखेरोटः" (उ० १६०) शकोटः बाहुः । "शकेरुन्तः" (उ० २२३) शकुन्तः । "यम्यजि०" (उ० २८८) इति उने शकुनः । "भीवृधि०" (उ० ३८७) इति रे शक्रः । "जठर-क्रकर०" (उ० ४०३) इति अरे करिशकरः हस्तिमल्लः । "शामाश्या०" (उ० ४६२) इति ले शक्लः मधुरवाक् । "मृदिकन्दि०" (उ० ४६५) इति अले शकलम् । "शकेरुन्तिः" (उ० ६६६) शकुन्तिः । "शकेरुनिः" (उ० ६८४) शकुनिः । "कृपिशकिभ्यामटिः" (उ० ६३०) शकटिः । "शक ऋत्" (उ० ८९१) शकृत् । अनीदयं मर्षणे श्यविकरणः, अर्थान्तरे तु श्नुविकरणः स्वादिपठित एव इत्येके, शक्यति मृष्यते इत्यर्थः । पुष्यादित्वाद् अङि अशकत् । मर्षणादन्यत्र स्नौ शक्नोति, लृदित्त्वादङि अशकत् । अन्ये तु शक विभाषितो मर्षणे इति पठन्ति व्याचक्षते च मर्षणे शक्नोतेः परस्मैपदं श्ये विकल्प्यते । अङि टौ च शक्यते, शक्यति, अशकीत्, अशकत्, शक्ता, शकिता; अन्यत्र शक्नोति, अशकत्, शक्ता ॥

## अथ चान्तः सेट् च ॥

'१३८ शुचृगंच् पूतिभावे' । पूतिभावः क्लेदः । गित्त्वात् "ईगितः" ३।३।९५ इति फलवत्कर्तरि आत्मनेपदे शुच्यते । शुच्यति । "ऋदिच्छ्वि०" ३।४।६५ इति वा अङि अशुचत्, अशोचीत्, अशोचिष्ट । शोचिता । ऐदित्त्वात् क्तयोर्नेट्, शुक्तः, शुक्तवान् । शुच शोके [ १।९९ ], शोचति ॥

## अथ जान्तोऽनिट् च ॥

'१३९ रञ्जींच् रागे' । रज्यते, रज्यति । ररञ्जे, ररञ्ज । अनुस्वारेत्त्वान्नेट्, रङ्क्ता, रक्तः । "युजभुज०" ५।२।५० इति घिनणि "अकट्घिनोश्च०" ४।२।५० इति नलुकि रागी । घञि "भावा०" ५।३।१८ इति नलुकि रागः । आधारे घञि रङ्गः । रञ्जी रागे [ १।८९६ ], रजते, रजति ॥

---

१. अनेन इति भो० इति मु० ॥

## अथ पान्तोऽनिट् च ॥

'१४० शपींच् आक्रोशे'। शप्यते, शप्यति। शेपे, शशाप। अनुस्वारेत्त्वान्नेट्, शप्ता, शप्त्वा, शप्तः। घञि शापः। उणादौ "शशपि०" (उ० २३७) इति दे शब्दः। शपीं आक्रोशे [ १।९१६ ], शपते, शपति ॥

## अथ षान्तः सेट् च ॥

'१४१ मृषीच् तितिक्षायाम्'। तितिक्षा क्षमा। मृष्यते, मृष्यति। फलवत्कर्तर्यपि "परेर्मृषश्च" ३।३।१०४ इति परस्मैपदे परिमृष्यति। ममृषे, ममर्ष, मर्षिता। "ऋत्तृष०" ४।३।२४ इति क्त्वो वा क्त्वे मृषित्वा, मर्षित्वा। "मृषः क्षान्तौ" ४।३।२८ इति क्तयोः कित्त्वाभावे मर्षितः, मर्षितवान्, क्षान्तेः अन्यत्र धातूनामनेकार्थत्वाद् भूषणादिषु कित्त्वे मृषितः, मृषितवान्। नन्द्याद्यने मर्षणः। "शासूयुधि०" ५।३।१४१ इति खलपवादे अने दुर्मर्षणः। मृषू सहने च [ १।५२८ ], मर्षति। मृषण् क्षान्तौ [ ९।३५४ ], अदन्तः, मृषयति। मृषिण् तितिक्षायाम् [ ९।४०९ ], "युजादे०" ३।४।१८ इति वा णिचि मर्षयति, मर्षते ॥

## अथ हान्तोऽनिट् च ॥

'१४२ णहींच् बन्धने'। "पाठे०" २।३।९७ इति ने नह्यते, नह्यति। णोपदेशत्वाद् "अदुरुपसर्गा०" २।३।७७ इति णत्वे प्रणह्यते। "वाचाप्यो०" ३।२।१५६ इति पिर्वा अपिनह्यते, पिनह्यते। नेहे, ननाह। अनुस्वारेत्त्वान्नेट्, "नहाहो०" २।१।८५ इति हस्य धे नद्धा, संनद्धः। घञि संनाहः। "नीदाव्०" ५।२।८८ इति त्रटि नद्ध्री। "क्रुत्संपदा०" ५।३।११४ इति क्विपि "गतिकारकस्य०" ३।२।८५ इति दीर्घे उपनह्यते इति उपानत्। उणादौ "ऋपॄनहि०" (उ० ५५७) इति उपे नहुषः—राजा। "नहेर्भ च" (उ० ६२१) इति णिद् इः नाभिः। नभ इति तु नभ्यतेः [ "असू" (उ० ९५२) इति ] असि। नख इति तु नास्य खमस्ति इति बहुव्रीहौ नखादित्वाद् अदभावे ॥

इत्याचार्यश्रीहेमचन्द्रविरचिते स्वोपज्ञधातुपारायणे
चित् दिवादिगणः श्यविकरणः
संपूर्णः ॥



# अथ स्वादय:

अथ स्वादयो वर्णक्रमेण निर्दिश्यन्ते । तत्राऽपि प्रसिद्ध्यनुरोधेनाऽऽदौ—

'१ षुंगूट् अभिषवे'। [1]अभिषवः क्लेदनं [2]संधानाख्यं, पीडनमन्थने वा । "षः सो०" २।३।९८ इति से, गित्त्वात् फलवत्कर्तरि "ईगितः०" ३।३।९५ इत्यात्मनेपदे, "स्वादेः श्नुः" ३।४।७५ इति श्नौ सुनुते । फलवतोऽन्यत्र "शेषात्०" ३।३।१०० इति परस्मैपदे "उश्नोः" ४।३।२ इति गुणे सुनोति । "उपसर्गात् सुगू०" २।३।३९ इति षत्वे अभिषुणोति; अड्व्यवायेऽपि अभ्यषुणोत्, 'अद्वित्वे' इत्युक्तेः पूर्वस्य षत्वाभावे उत्तरस्य तु षोपदेशत्वात् "नाम्यन्तस्था०" २।३।१५ इति षत्वे अभिसुषुवे, अभिसुषाव । "सुगः स्यसनि" २।३।६२ इति षत्वप्रतिषेधे अभिसोष्यते; सनि क्विपि अभिसुषूः । "णिस्तोरेवा०" २।३।३७ इति नियमात् षत्वाभावे अभिसुषूषति । "वम्यविति वा" ४।२।८७ इति वा उलुकि सुन्वः, सुनुवः; सुन्मः, सुनुमः । अनुस्वारेत्त्वान्नेट्, सोता, सुतः, सुतवान् । "धूगसुस्तो०" ४।४।८५ इति सिचि इटि असावीत्; आत्मनेपदे तु इडभावे असोष्ट । "आसुयु०" ५।१।२० इति यापवादे घ्यणि आसाव्यम् । "संचाय्य-कुण्डपाय्य०" ५।१।२२ इति घ्यणि निपातनाद् राजा सोतव्यो राजा वा सूयते अस्मिन्निति राजसूयः क्रतुः । "सोमात् सुगः" ५।१।१६३ इति भूते क्विपि सोमसुत् । "सुयजोर्ङ्वनिप्" ५।१।१७२ सुतवान्, सुत्वा । "णस्वराघोषा०" २।४।४ इति ङ्याम् नो रत्वे सुत्वरी । "सुग् द्विषा०" ५।२।२६ इति अतृशि सुन्वन्तः यजमानाः । "समिणा०" ५।३।९३ इति क्यपपवादे क्तौ आसुतिः । "समज०" ५।३।९९ इति क्यपि सुत्या । उणादौ "विचिपुषि०" (उ० २२) इति किति के सुकः निरामयः । "सुसितनितुसेर्दीर्घश्च वा" (उ० २०३) इति किति ते सुतः, सूतः । "वृतुकुसुभ्यो नोऽन्तश्च" (उ० २४०) इति दे सुन्दः दैत्यः । "सोरू च" (उ० २६३) इति ने सूना घातस्थानम् । "स्वसिरसि०" (उ० २६९) इति अने सवनः । "युसुकु०" (उ० २९७) इति पे ऊत्वे च

---

१. अभिषवः स्नानमिति चान्द्रा', द्र० है. प्र. ॥

२. सन्धान इति अथाणा, द्र० लिं. दुर्गपद० १२ ॥

## अथ ऋदन्तास्त्रयोऽनिटश्च ॥

'७ स्तृंगूट् आच्छादने'। स्तृणुते, स्तृणोति। "संयोगाद्०" ४।३।९ इति गुणे तस्तरे, तस्तरुः। क्ये "क्ययङ्या०" ४।३।१० इति गुणे आस्तार्यते; यङि वास्तर्यते। अनुस्वारेत्त्वान्नेट्, स्तर्ता, विस्तृतः। विस्तीर्ण इति तु स्तृणातेः॥

'८ कृंगूट् हिंसायाम्'। कृणुते, कृणोति; चक्रे, चकार। अनुस्वारेत्त्वान्नेट्, कर्ता, कृतः। डुकृंग् करणे [ १।८८८ ], करोति, करति॥

'९ वृगूट् वरणे'। वृणुते, वृणोति, वव्रे, ववार। थवि "ऋवृ०" ४।४।८० इति इटि ववरिथ। "स्कसृवृ०" ४।४।८१ इत्यत्र अस्य वर्जनाद् इडभावे ववृव, ववृम। "वृतो नवा०" ४।४।३५ इति इटो वा दीर्घे प्रावरिता, प्रावरीता; आशिषि सिच्परस्मैपदे च दीर्घाभावे प्रावरिषीस्ट, प्रावरिष्टाम्। "इट् सिजाशिषो०" ४।४।३६ इति वेटि प्रावरिष्ट, प्रावरीष्ट, प्रावृत; प्रावरिषीष्ट, प्रावृषीष्ट। सनि "इवृध०" ४।४।४७ इति वेट्, विवरिषति विवरीषति, वुवूर्षति। "ऋवर्णश्र्यू०" ४।४।५७ इति किति नेट्, वृत्वा, वृतः, वृतवान्। कर्मणोऽणि "घञ्युपसर्गस्य०" ३।२।८६ इति बाहुलकाद् दीर्घे कुचं वृणोति कूचवारः। "वर्योपसर्या०" ५।१।३२ इति निपातनाद् ये वर्यम् उपेयम् चेत्; स्त्री वर्या, अन्यस्तु "दृ-वृग्०" ५।१।४० इति क्यपि वृत्यः। बाहुलकाद् घ्यणि ण्यन्ताद्वा ये वार्यम्। "भृवृजि०" ५।१।११२ इति खे पतिंवरा कन्या। "युवर्ण०" ५।३।२८ इति अलि वरः। "नेर्वुः" ५।३।७४ इति घञि नीवारः व्रीहिः। "वृगो वस्त्रे" ५।३।५२ इति वाऽलि प्रवरः; पक्षे घञि "घञ्युपसर्गस्य०" ३।२।८६ इति दीर्घे प्रावारः। उणादौ "विचिपुषि०" (उ० २२) इति किति के वृकः। "जृकृतृ०" (उ० १७३) इति अण्डे वरण्डः इक्ष्वादिसंचयः। "तृकृशृ०" (उ० १८७) इति अणे वरणः वृक्षः। "कृगृशृ०" (उ० ४४१) इति वरटि वर्वरः कुञ्चितः केशः। "वृग्नक्षि०" (उ० ४५६) इति अत्रे वरत्रा। ण्यन्तात् "स्वरेभ्य०" (उ० ६०६) इति औ वारिः गजग्रहणगर्ता, वारि जलम्। "अजिस्था०" (उ० ७६८) इति णौ वर्णुः ह्रदः। "वार्द्वारौ" (उ० ९४४) इति निपातनात् क्विपि वाः जलम्। वरूथ इति तु "जॄवृभ्यामूथः" (उ० २३६) इति ऊथे वृणातेः। वर्ण इत्यपि "इणुर्विशा०" (उ० १८२) इति णे वृणातेः॥

## अथ परस्मैपदिषु इदन्तोऽनिट् च ॥

'१० हिंट् गतिवृद्ध्योः'। "शेषात्०" ३।३।१०० इति परस्मैपदे हिनोति। "अदुरुपसर्गा०" २।३।७७ इति णत्वे प्रहिणोति। "अङे हि०" ४।१।३४ इति हो घे प्रजिघाय, सनि जिघीषति। यङि जेघीयते, ङे तु घाऽभावे प्राजीहयत्। अनुस्वारेत्त्वान्नेट्, हेता, प्रहितः। 'सातिहेति०" ५।३।९४ इति क्तौ निपातनाद् हेतिः। अचि अलि वा हयः। गौरादित्वाद् ङ्यां हयी अश्वा। उणादौ "घुयुहि०" (उ० २४) इति किति के हीकः पक्षी। "क्षुहिभ्यां वा" (उ० ३४१) इति वा किति मे हिमम्, हेमम्। मनि हेम। "कृसिकम्मि०" (उ० ७७३) इनि तुनि हेतुः ॥

## अथोदन्तावनिटौ च ॥

'११ श्रुंट् श्रवणे'। गतौ इत्यन्ये। "श्रौतिकृवु०" ४।२।१०८ इति शृः, शृणोति। "समोगमृच्छि०" ३।३।८४ इत्यात्मनेपदे संशृणुते, कर्मणि तु सति परस्मैपदे संशृणोति हितम्। शुश्राव। "स्क्रसृवृ०" ४।४।८१ इत्यत्र श्रोर्वर्जनाद् इडभावे शुश्रोथ। सनि "श्रुवोऽनाङ्०" ३।३।७१ इत्यात्मनेपदे शुश्रूषते धर्मम्, आङ्प्रतेस्तु परस्मैपदे आशुश्रूषति, प्रतिशुश्रूषति। "प्रत्याङः श्रुवा०" २।२।५६ इति चतुर्थ्यां मैत्राय प्रतिशृणोति, मैत्राय आशृणोति। अनुस्वारेत्त्वान्नेट्, श्रोता, श्रुतः, श्रुतवान्। णौ सनि "श्रु-स्रु-द्रु०" ४।१।६१ इति पूर्वस्य उतः वेत्वे शिश्रावयिषति, शुश्रावयिषति। ङे "असमानलोपे०" ४।१।६३ इति सन्वद्भावे अशिश्रवत्, अशुश्रवत्। "ग्रहादिभ्यो०" ५।१।५३ इति णिनि श्रावी। गणनिपातनाद् ह्रस्वे श्रवी इत्येके। "श्रुसद०" ५।२।१ इति भूतमात्रे वा परोक्षा शुश्राव, पक्षे अश्रौषीत्, अशृणोत्। "तत्र क्वसु०" ५।२।२ इति क्वसौ शुश्रुवान्। विपूर्वात् "क्षुश्रो" ५।३।७१ इति घञि विश्रामः। "श्वादिभ्यः" ५।३।९२ इति क्तौ श्रूयतेऽनया इति श्रुतिः। करणे अनटि श्रवणं कर्णः। उणादौ "तृकृशृ०" (उ० १८७) इति अणे श्रवणः अश्वत्थः कर्णश्च। "हुयामा०" (उ० ४५१) इति त्रे श्रोत्रम्। "कावावी०" (उ० ६३४) इति णौ श्रोणिः। "असू" (उ० ९५२) इति असि श्रवः विश्रवाः ॥

'१२ टुदुंट् उपतापे'। दुनोति, दुदाव। अनुस्वारेत्त्वान्नेट्, दोता। "दुगो०" ४।२।७७ इति क्तयोस्तस्य नत्वे ऊत्वे च दूनः, दूनवान्।

सूपः । "अर्त्तीरि०" (उ० ३३८) इति मे सोमः । "ऋज्यजि०" (उ० ३८८) इति किति रे सुरः, सुरा । षुं प्रसवैश्वर्ययोः [ १।१७ ], सवति । षुंक् प्रसवैश्वर्ययोः [ २।२० ], सौति । टित्त्वं स्वादित्वज्ञापनार्थं सर्वत्र ज्ञेयम् ॥

## अथेदन्ताश्चत्वारोऽनिटश्च ॥

'२ षिंगट् बन्धने' । "षः सो०" २।३।९८ इति से सिनुते, सिनोति । षोपदेशत्वाद् "नाम्यन्तस्था०" २।३।१५ इति षत्वे सिष्ये, सिषाय । अनुस्वारेत्त्वान्नेट्, सेता । "सेर्ग्रासे०" ४।२।७३ इति क्तयोस्तस्य नत्वे सिनो ग्रासः स्वयमेव । "प्रसितोत्सुका०" २।२।४९ इति आधारे वा तृतीयायां केशैः प्रसितः, केशेषु प्रसितः । परि–नि–विपूर्वस्य "सयसितस्य" २।३।४७ इति षत्वे परिषितः, निषितः, विषितः; अचि परिषयः, निषयः, विषयः । णके सायकः । "दाद्धेसि०" ५।२।३६ इति रौ सयनशीलः सेरुः । "नीदाव्०" ५।२।८८ इति त्रटि सेत्रम् । उणादौ "सुसि०" (उ० २०३) इति किति ते वा दीर्घे च सीता सस्यम्, सितः शुक्लः । "सेर्वा" (उ० २६२) इति किति ने सिनः कायः; कित्त्वाभावे सेना । "चिजि०" (उ० ३९२) इति रे दीर्घे च सीरं हलम् । "ऋज्यजि०" (उ० ३८८) इति किति रे सीरा । "कृसिकम्मि०" (उ० ७७३) इति तुनि सेतुः ॥

'३ शिंगट् निशाने' । निशानं तनूकरणम् । शिनुते, शिनोति । शिश्ये, शिशाय । अनुस्वारेत्त्वान्नेट्, शेता, शितः ॥

'४ डुमिंगट् प्रक्षेपणे' । मिनुते, मिनोति, प्रमिनोति । मिम्ये, मिमाय । अनुस्वारेत्त्वान्नेट्, मितः । यबक्ङिति "मिग्मीगो०" ४।२।८ इति आत्वे निमाय, प्रमाता; खलचलि तु न आत्वम्, दुर्मयः, मयः, प्रमयः । सनि "मिमीमा०" ४।१।२० इति स्वरस्य इत्वं द्वित्वाभावश्च, प्रमित्सते, प्रमित्सति । ड्वित्त्वात् त्रिमक्रि मानेन निर्वृत्तं मित्रिमम् । उणादौ "मिगः खलश्चैच" (उ० ४९७) मेखला; चात् कले मेकलः ऋषिः । "मिवहि०" (उ० ७२६) इति वा णिद् उः, मायुः पित्तम्; बाहुलकाद् न आत्वम्, मयुः किन्नरः ॥

'५ चिंगट् चयने' । चिनुते, चिनोति । "नेर्ङ्मादा०" २।३।७९ इति नेर्णत्वे प्रणिचिनुते । सन्परोक्षयोः "चेः किर्वा" ४।१।३६ इति वा कित्वे चिकीषति, चिचीषति; चिक्ये, चिच्ये । अनुस्वारेत्त्वान्नेट्, चेता, चितः, आचितम् ।

णौ "चिस्फुरो०" ४।२।१२ इति वा आत्वे "अर्तिरी०" ४।२।२१ इति पौ उच्चापयति, उच्चाययति । "संचाय्य०" ५।१।२२ इति घ्यणि निपातनात् संचाय्यः क्रतुः । "य एच्चा०" ५।१।२८ इति ये संचेयम् अन्यत् । "धाय्यापाय्य०" ५।१।२४ इति निपातनाद् निकाय्यः निवासः, निचेयः अन्यः । "परिचाय्योपचाय्या०" ५।१।२५ इति निपातनात् परिचाय्यः अग्निः; एवमुपचाय्यः, चित्यः । परिचेयः, उपचेयः, चेयश्चान्यः । "अग्निचित्या०" ५।१।३७ इति भावे क्यपि निपातनाद् अग्नेः चयनम् अग्निचित्या । "अग्नेश्चेः" ५।१।१६४ इति क्विपि अग्निचित् । "कमण्यग्न्यर्थे" ५।१।१६५ श्येन इव चीयते स्म श्येनचित्, रथचक्रचित् । "हस्तप्राप्ये०" ५।३।७८ इति अलपवादे घञि पुष्पप्रचायः । "चितिदेहा०" ५।३।७९ इति घञि 'आकायमग्निं चिन्वीत', कायः, निकायः, गोमयनिकायः । "संघेऽनूर्ध्वे" ५।३।८० साधुनिकायः; सोर्ध्वे तु "युवर्ण०" ५।३।२८ इति अलि सूकरनिचयः । स्त्रियां क्तौ चितिः । उणादौ "चिजि०" (उ० ३९२) इति रे दीर्घे च चीरम् । "चिमिदि०" (उ० ४५४) इति किति त्रे चित्रम्, चित्रा । केचित्तु चिगूण् चये इति चुरादौ पठन्ति तस्य च घटादित्वं "चिस्फुरोर्नवा" ४।२।१२ इति आत्वाभावं चेच्छन्ति, तन्मते चययति । आत्वमपि अन्ये चापयति । णिजभावे तु चयते, चयति ॥

## अथोदन्तः सेट् च ॥

'६ धूगूट् कम्पने' । धूनुते, धूनोति; दुधुवे, दुधाव । थवि "स्क्रसृवृ०" ४।४।८१ इति इटि दुधविथ । "धूगौदितः" ४।४।३८ इति वेट्, धोता, धविता । सिचि "धूगुसुस्तोः०" ४।४।८५ इति इटि अधावीत्; आत्मनेपदे तु वेटि अधोष्ट, अधविष्ट । णौ "धूगुप्रीगो०" ४।२।१८ इति ने विधूनयति । "लूधूसू०" ५।२।८७ इति इत्रे धूयतेऽनेन इति धवित्रमित्येके । वेट्त्वात् क्तयोर्नेट्, अवधूतः, धूतः, धूतवान् । "युवर्ण०" ५।३।३८ इति अलि धवः । उणादौ "भ्रुधून्दि०" (उ० २९) इति किति अके क्षिपकादित्वाद् इत्वाभावे धूवका आवपनविशेषः । "विलिमिलि०" (उ० ३४०) इति किति मे धूमः । "कृधूतनि०" (उ० ४४०) इति किति सरे धूसरः । उदन्तोऽनिट् चायमित्यन्ये, धुनुते, धुनोति; धोता, विधुतः । धूत् विधूनने [ ५।११६ ], धुवति । धूगृश् कम्पने [ ८।१३ ], धुनीते, धुनाति । धूगण् कम्पने [ ९।२७९ ], धूनयति, णिजभावे धवते, धवति ॥

" वा ज्वलादि० " ५।१।६२ इति वा णे दावः, पक्षे अचि दवः । ट्विच्चादथौ दवथुः । दुं गतौ [ १।१२ ], दवति ॥

## अथ ऋदन्तावनिटौ च ॥

' १३ पृंट् प्रीतौ ' । पृणोति, पपार । थवि " ऋतः " ४।४।७९ इति नेट्, पपर्थ । अनुस्वारेत्त्वान्नेट्, पर्ता, पृतः । सनि पुपूर्षति । पृंक् पालनपूरणयोः [ २।७६ ], पिपर्ति ॥

' १४ [1]स्मृंट् पालने च ' । चकारात् प्रीतौ । जीवनेऽप्यन्ये । स्मृणोति, सस्मार । अनुस्वारेत्त्वान्नेट्, स्मर्ता, स्मर्तुम् । थवि " ऋतः " ४।४।७९ इति नेट्, सस्मर्थ । पोपान्त्योऽयमित्येके; स्पृणोति, पस्पार, स्पर्ता ॥

## अथ कान्तौ ॥

' १५ शकॢंट् शक्तौ ' । शक्नोति, शशाक, शेकुः । ॡदित्त्वादङि अशकत् । ये तु शक्यतेः पुष्यादित्वं प्रतिपन्नाः तेषां पुष्यादित्वादेव अङि सिद्धे ॡदित्त्वमात्मनेपदेऽपि अङर्थम्, तेन " क्रियाव्यतिहारे० " ३।३।२३ इत्यात्मनेपदे अङि व्यत्यशकत् । अनुस्वारेत्त्वान्नेट्, शक्ष्यति, शक्तः चैत्रः । " शकः कर्मणि " ४।४।७३ इति वा नेट्, शक्तः शकितो वा धर्मः कर्तुं चैत्रेण । सनि " रभलभ० " ४।१।२१ इति स्वरस्य इः द्वित्वाभावश्च शिक्षति । " शको जिज्ञासायाम् " ३।३।७३ इति आत्मनेपदे विद्याः शिक्षते । " शकितकि० " ५।१।२९ इति ये शक्यः । " शकधृष० " ५।४।९० इति तुमि शक्नोति भोक्तुम् । शकींच् मर्षणे [ ३।१३७ ], शक्यते शक्यति ॥

' १६ तिक, १७ तिग, १८ षघट् हिंसायाम् ' । आद्यौ आस्कन्दनेऽपि इत्येके । तिक्नोति, तितेक, तेकिता । " नाम्युपान्त्य० " ५।१।५४ इति के तिकः ॥

## अथ गान्तः सेट् च ॥

' १७ तिग ' । तिग्नोति, तितेग, तेगिता । " नाम्युपान्त्य० " ५।१।५४ इति के तिगः ॥

## अथ घान्तः सेट् च ॥

' १८ षघट् ' । " षः सो० " २।३।९८ इति से सघ्नोति, ससाघ । षोपदेशत्वाद् " णिस्तोरेवा० " २।३।३७ इति षत्वे सिषाघयिषति । अषोपदेशोऽय-

१. स्मृ प्रीतिचलनयोः; चलनं जीवनम ( क्षी. त. १२८ ) ॥

मित्येके, सिसाघयिषति । तिक–तिग–[1]चषघ हिंसायामित्यन्ये पेठुः, तिघ्नोति, [2]चषघ्नोति ॥

## अथ धान्तास्त्रयः ॥

'१९ राधं २० साधंट् संसिद्धौ' । संसिद्धिः फलसंपत्तिः । "यद्वीक्ष्ये०" २।२।५८ इति चतुर्थ्यां मैत्राय राध्नोति । रराध । आरराधुः गुरुम् । वधे तु "अवित्परोक्षा०" ४।१।२३ इति स्वरस्य एत्वे द्वित्वाभावे च प्रतिरेधुः शत्रुम् । अनुस्वारेत्त्वान्नेट्, राद्धा, राद्धः । सनि "राधेर्वधे" ४।१।२२ इति स्वरस्य इः द्वित्वाभावश्च, प्रतिरित्सति । वधादन्यत्र आरिरात्सति गुरुम् । "ग्रहादिभ्यो०" ५।१।५३ इति णिनि अपराधी, उपराधी । घञि राधः । "घञ्युपसर्गस्य०" ३।२।८६ इति वा दीर्घे अनूराधाः, अनुराधाः । क्तौ राद्धिः । राधंच् वृद्धौ [ ३।१३ ], राध्यति ॥

'२० साधंट्' । साध्नोति ससाध । अषोपदेशत्वात् षत्वाभावे सिसात्सति, सिसाधयिषति । षोपदेशोऽयमित्येके तन्मते "नाम्यन्तस्था०" २।३।१५ इति "णिस्तोरेवा०" इति च षत्वे सिषात्सति, सिषाधयिषति । णौ नन्द्याद्यने साधनः । उणादौ "कृवापाजि०" ( उ० १ ) इति उणि साधुः ॥

'२१ ऋधूट् वृद्धौ' । ऋध्नोति । "ऋत्या०" १।२।९ इत्युपसर्गाऽवर्णस्य आरि प्रार्ध्नोति, परार्ध्नोति । "अनातो०" ४।१।६९ इति पूर्वस्य आत्वे नेऽन्ते च आनर्ध, आनृधतुः । अर्धिता । ऊदित्त्वात् क्त्वि वेट् , ऋद्ध्वा, अर्धित्वा । सनि "इवृध०" ४।४।४७ इति वेट् , अर्दिधिषति । "ऋध ईर्त्" ४।१।१७ द्वित्वाभावश्च ईर्त्सति । वेट्त्वात् क्तयोर्नेट् , ऋद्धः, ऋद्धवान् । ऋधूच् वृद्धौ [ ३।४३ ], ऋध्यति ॥

---

१. यथा तु काशकृत्स्नकातन्त्रचान्द्रहैमशाकटायनधातुपाठेषु पाठस्तथा तिक-तिगधात्वोर्हिंसार्थः, न तु स्कन्दनार्थः । प्रतीयते कस्यचित् प्राचीनश्लोकबद्धधातुपाठस्यानुकरणेन मध्ये चकारः पठितः स्यात्–ष्टिघ आस्कन्दने तिक, तिग च षघ हिंसायाम् । इदं रहस्यमविदित्वैव कैश्चिद् वृत्तिकारैश्चकाराद् आस्कन्दनार्थो गृहीत. । अपरैश्च चकार षघ-धातुना संयोज्य चषघ-धातुः स्वीकृतः । ( क्षी त टि. २३० ) । [च] षघ इति मु० ॥

२. [च]षघ्नोति इति मु० ॥

## अथ पान्तौ ॥

'२२ आप्लृंट् व्याप्तौ' । आप्नोति, आप । लृदित्त्वादङि आपत् । अनुस्वारेत्त्वान्नेट्, आप्ता । "गत्यर्था०" ५।१।११ इति वा कर्तरि क्ते प्राप्तो धर्मम्; पक्षे कर्मणि प्राप्तो धर्मोऽनेन; भावे प्राप्तमनेन । सनि "ज्ञप्याप्यो०" ४।१।१६ इति ईपि द्वित्वाभावे च ईप्सति । यपि "वाऽऽप्नोः" ४।३।८७ इति णेर्वा अयि प्रापय्य, प्राप्य । "व्याप्ये क्तेनः" २।२।९९ इति कर्मणि सप्तम्यां समाप्तमनेन श्रुतमिति "इष्टादेः" ७।१।१६८ इति समाप्ती श्रुते । क्तौ प्राप्तिः । उणादौ "आपोऽप् च" (उ० २३८) इति दे अब्दः । "तृभ्रम्मि०" (उ० ६११) इति औ अपादेशे च अपि । "आपोऽप् च" (उ० ७७६) इति तुनि अप्तुः कालः । "आपोऽप् च" (उ० ८२३) इति आलौ अपालुः वायुः । "आपोऽप् च" (उ० ८६१) इति तृः, अप्ता यज्ञः । "आपः क्विप् ह्रस्वश्च" (उ० ९३१) इति क्विपि आपो जलम् । अम्भ इति तु "अमेर्महौ चान्तौ" (उ० ९६२) इति अमेः असि ॥

'२३ तृपट् प्रीणने' । क्षुभ्नादित्वाण्णत्वाभावे तृप्नोति, ततर्प, तर्पिता, तृपितः । तृपौंच् प्रीतौ [ ३।४६ ], तृप्यति, तृप्तः ॥

## अथ भान्तः सेट् च ॥

'२४ दम्भूट् दम्भे' । दभ्नोति, ददम्भ । "दम्भः" ४।१।२८ इति स्वरस्य एत्वे, नलुकि द्वित्वाभावे च देभतुः । "थे वा" ४।१।२९ देभिथ, ददम्भिथ । दम्भिता । सनि "इवृध०" ४।४।४७ इति वेटि दिदम्भिषति; पक्षे "दम्भो धिप् धीप्" ४।१।१८ न च द्विः, धिप्सति, धीप्सति । ऊदित्त्वात् क्त्वि वेट्, दब्ध्वा, दम्भित्वा; वेट्त्वात् क्तयोर्नेट्, दब्धः, दब्धवान् । क्विपि पदान्ते "गडदबादे०" २।१।७७ इति आदेश्चतुर्थे धिप्, धिब् । उणादौ "ऋज्यजि०" (उ० ३८८) इति किति रे दभ्रः ॥

## अथ वान्तो सेटौ च ॥

'२५ कृवुट् हिंसाकरणयोः'। "ऋौतिकृवुधिवु०" ४।२।१०८ इति कृादेशे कृणोति, कृणुतः, कृण्वन्ति। उदित्वान्ने चकृण्व, कृण्विता ॥

'२६ धिवुट् गतौ'। प्रीणनेऽप्यन्ये। "ऋौतिकृवुधिवु०" ४।२।१०८ इति ध्यादेशे धिनोति, धिनुतः, धिन्वन्ति। उदित्वान्ने दिधिन्व, धिन्विता, धिन्वितुम्।

ये तु अन्यैरिह अष्टौ पठिता अड व्याप्तौ, दघ घातने, ऋक्षि-चरि-जरि-दास-द्रु हिंसायामिति, उदाहृताश्च, अड्णोति, दघ्नोति, ऋक्ष्णोति। केचित्तु ऋक्षिं छिन्दन्ति ऋणोति, क्षिणोति, चिरिणोति, जिरिणोत, इति, ते लौकिकाः इति अस्माभिरुपेक्षिताः ॥

## अथ षान्तः सेट् च ॥

'२७ ञिधृषाट् प्रागल्भ्ये'। धृष्णोति, दधर्ष, धर्षिता। "धृषशसः प्रगल्भे" ४।४।६६ इति क्तयोर्नेट्, धृष्टः, धृष्टवान्; ञित्त्वादत्र "ज्ञानेच्छा०" ५।२।९२ इति सति क्तः. प्रागल्भ्यार्थादन्यत्र इटि "न डीङ्०" ४।३।२७ इति किच्चाभावाद् गुणे धर्षितः, धर्षितवान्। आदित्त्वाद् "नवा भावारम्भे" ४।४।७२ इति वा नेट्, धृष्टमनेन, धर्षितमनेन, प्रधृष्टः, प्रधर्षितः। क्विपि "ऋत्विज्-दिशृ०" २।१।६१ इति गत्वे, निर्देशादेव द्वित्वे च दधृक्। "त्रसिगृधि०" ५।२।३२ इति क्नौ धर्षशीलः धृष्णु.। "तृपिधृषि०" ५।२।८० इति नजिङि धृष्णक्। "शास्-युधि०" ५।३।१४१ इति खलपवादेऽने दुर्धर्षणः। "शकधृष०" ५।४।९० इति तुमि धृष्णोति गन्तुम्। धृषण् प्रसहने [ ९।४१२ ], "युजादे०" ३।४।१८ इति वा णिचि धर्षयति, धर्षति ॥

## अथाऽऽत्मनेपदिनौ सेटौ च ॥

'२८ ष्टिघिट् आस्कन्दने'। "षः सो०" २।३।९८ इति से निमित्ता-भावात् टस्य ते "इङितः०" ३।३।२२ इत्यात्मनेपदे स्तिघ्नुते। षोपदेशत्वाद् "नाम्यन्तस्था०" २।३।१५ इति षत्वे तिष्टिघे। स्तेघिता ॥

'२९ अशौटि व्याप्तौ'। संघातेऽप्यन्ये। अश्नुते। "अनातो०" ४।१।६९ इति पूर्वस्य आत्वे नेऽन्ते च आनशे। औदित्त्वाद् वेट्, अष्टा, अशिता। सनि "ऋस्मिपूङ्०" ४।४।८८ इति इटि "स्वरादे०" ४।१।४ इति द्वितीयां-

शस्य द्वित्वे अशिशिषते । "अट्यर्ति०" ३।४।१० इति यङि अशाश्यते । वेट्त्वात् क्तयोर्नेट्, अष्टः, अष्टवान् । उणादौ "कृवापा०" (उ० १) इति उणि आशुः व्रीहिः । "इण्यशि०" (उ० ७७) इति तककि अष्टका पितृदैवत्यं कर्म । [ "अशेर्डित्" (उ० ८७) इति ] अशेर्डिति खे खं नभः । "अशो रश्चादौ" (उ० २७०) इति अने रशना । शुपूर्वस्य अशुपूर्वस्य वा "श्वसुरकुकुन्दुर०" (उ० ४२६) इति उरे निपातनात् श्वसुरः । स्त्रियां "नारीसखी०" २।४।७६ इति निपातनाद् ऊङि श्वश्रूः । "मीञ्यजि०" (उ० ४३९) इति सरे अक्षरम् । "अश्नोरीचादेः" (उ० ४४२) इति वरटि ईश्वरी । "षप्यशौभ्यां तन्" (उ० ९०३) अष्टौ । "लटिखटि०" (उ० ५०५) इति वे अश्वः । "मावावदी०" (उ० ५६४) इति से अक्षः । "अशोरश्चादिः" (उ० ६२२) इति णिदिः, राशिः । "सदिवृति०" (उ० ६८०) इति अनौ अशनिः । "अशोरश्चादिः" (उ० ६८८) इति मौ रश्मिः । "तङ्किवङ्कि०" (उ० ६९२) इति रौ अश्रिः । "प्रुषिप्लुषि०" (उ० ७०७) इति सिकि अक्षि । "अशेर्यश्चादिः" (उ० ९५८) इति असि यशः । अशश् भोजने [ ८।५१ ], अश्नाति ॥

इत्याचार्यश्रीहेमचन्द्रविरचिते स्वोपज्ञधातु-
पारायणे टित्स्वादिगणः श्नुविकरणः
संपूर्णः ॥



# तुदादयः (५)

अथ तुदादयस्तितो वर्णक्रमेण प्रदर्श्यन्ते । तत्र प्रसिद्ध्यनुरोधेनाऽऽदौ—

'१ तुदींत् व्यथने'। तित्त्वं तुदादित्वज्ञापनार्थं सर्वत्र ज्ञेयम् । ईदित्त्वात् "ईगितः" ३।३।९५ इति फलवत्कर्तरि आत्मनेपदे "तुदादेः शः" ३।४।८१ इति शे तस्य "शिदवित्" ४।३।२० इति ङित्त्वाद् गुणाभावे तुदते । फलवतोऽन्यत्र "शेषात्" ३।३।१०० इति परस्मैपदे तुदति, तुतुदे, तुतोद । अनुस्वारेत्त्वान्नेट्, तोत्ता, तुन्नः । "नाम्युपान्त्य०" ५।१।५४ इति के तुदः । "बहुविधु०" ५।१।१२४ इति खशि बहुन्तुदः, विधुन्तुदः, अरुन्तुदः, तिलन्तुदः । शतरि "अवर्णादश्नो०" २।१।११५ इति वाऽन्तादेशे तुदती तुदन्ती स्त्री कुले वा । "अजातेः०" ५।१।१५४ इति णिनि शृङ्खलतोदी । "नीदाव्०" ५।२।८८ इति करणे त्रटि तोत्त्रम् । करणे घञि प्रतोदः । उणादौ 'तुदिमिदि०" (उ० १२४) इति छे तुच्छः । "नाम्युपान्त्य०" (उ० ६०९) इति किद् इः, "तुदीवर्मत्या०" ६।३।२१८ इति सूत्रनिर्देशाद् दीर्घे "इतोऽक्त्यर्थात्" २।४।३२ इति ङ्यां तूदी नाम ग्रामः । "तुदादिविपि०" (उ० ५) इति किद् अः, तुदः । 'नीनूरमि०" (उ० २२७) इति किति थे तुत्थम् । "तुदादिवृजि०" (उ० २७३) इति किति अने तुदनः ॥

## अथ ञान्तोऽनिट् च ॥

'२ भ्रस्जींत् पाके'। "ग्रहव्रश्च०" ४।१।८४ इति य्वृति "सस्य शषौ" १।३।६१ इति शे "तृतीयस्तृतीय०" १।३।४९ इति शस्य जे भृज्जते, भृज्जति । अशिति "भृज्जो भर्ज्" ४।४।६ इति वा भर्जसंयोगान्तत्वाद् "इन्ध्यसंयोगा०" ४।३।२१ इति कित्त्वाभावाद् य्वृदभावे बभर्जे; पक्षे बभ्रज्जे; बभर्ज, बभ्रज्ज । अनुस्वारेत्त्वान्नेट्, भ्रष्टा, भर्ष्टा, भृष्टः, भृष्टवान् । "इवृध०" ४।४।४७ इति सनि वेटि बिभ्रज्जिषति, बिभ्रक्षति । भर्जादेशे बिभर्जिषति; पक्षे "यजसृज०" २।१।८७ इति षत्वे बिभर्क्षति । "ऋवर्ण०" ५।१।१७ इति घ्यणि "क्तेऽनिट०" ४।१।१११७ इति गत्वे "तृतीयस्तृतीय०" १।३।४९ इति सस्य दत्वे भ्रज्ग्यः । भर्ग्यः । कर्मणोऽणि "नाम्न्युत्तर०" ३।२।१०७ इति उदादेशे उदभ्रज्जः । भीमादित्वादपादाने क्तौ भृज्यतेऽस्याः भृष्टिः । उणादौ "सृपृभू०" (उ० २७४)

इति वा क्विति अने भृज्जनं पाकः, भ्रज्जनः पावकः । " जिभृभ्रु० " (उ० ४४७) इति त्रटि वृद्धौ च भ्राष्ट्रम् । " स्पशिभ्रस्जेः स्लुक् च " ( उ० ७३१ ) इति किदुः, भृगुः । " कृषिचमि० " ( उ० ८२९ ) इति ऊः, भर्जूः यवविकारः ॥

## अथ पान्तोऽनिट् च ॥

' ३ क्षिपींत् प्रेरणे ' । क्षिपते, क्षिपति । फलवत्कर्तरि आत्मनेपदापवादे " प्रत्यभ्यतेः " ३।३।१०२ इति परस्मैपदे प्रतिक्षिपति, अभिक्षिपति, अतिक्षिपति, चिक्षिपे, चिक्षेप । अनुस्वारेत्त्वान्नेट् , क्षेप्ता, क्षिप्तः । " नाम्युपान्त्य० " ५।१।५४ इति के क्षिपः । " त्रसिगृधि० " ५।२।३२ इति क्नौ क्षेपशीलः [1]क्षिप्नुः । " क्षिपरटः " ५।२।६६ इति घिनणि परिक्षेपी अम्भसाम् । " वादेश्च० " ५।२।६७ इति णके परिक्षेपकः । उणादौ " भ्रुधून्दि० " ( उ० २९ ) इति क्विति अके क्षिपकः वायुः । क्षिपकादित्वादित्वाभावे क्षिपका आयुधम् । " ऋज्यजि० " ( उ० ३८८ ) इति क्विति रे क्षिप्रम् । " क्षिपेः कित्० " ( उ० ६४२ ) इति अणौ [2]क्षिपणिः हेतिः । " क्षिपेरणुक् " ( उ० ७७० ) क्षिपणुः । क्षिपंच् प्रेरणे [ ३।१५ ], क्षिप्यति ॥

## अथ शान्तोऽनिट् च ॥

' ४ दिशींत् अतिसर्जने ' । अतिसर्जनं त्यागः । दिशते, दिशति, दिदिशे, दिदेश । अनुस्वारेत्त्वान्नेट् , देष्टा, आदिष्टः; दिष्टं दैवम् । " क्रुत्संपदा० " ५।३।११४ इति क्विपि " ऋत्विज्दिश्० " २।१।६९ इति पापवादे गे दिश्यते सा इति दिक् । भिदाद्यङि दिशा । " श्वादिभ्यः " ५।३।९२ इति क्तौ दिष्टिः वितस्तिः । " नाम्ना ग्रहा० " ५।४।८३ इति णमि नामाऽऽदेशं दत्त; " तृतीयोक्तं वा " ३।१।५० इति वा समास, पक्षे नामानि आदेशम् । उणादौ " वृमिथि-दिशिभ्यस्थ-य-ट्याश्चान्ताः " ( उ० ६०१ ) इति आः, दिष्ट्या आनन्दोक्तौ निपातः ॥

## अथ षान्तोऽनिट् च ॥

' ५ कृषींत् विलेखने ' । कृषते, कृषति, चकृषे, चकर्ष । " स्पृशमृश० " ३।४।५४ इति वा सिचि " स्पृशादि० " ४।४।११२ इति वा अकारान्ते अक्राक्षीत् ; पक्षे " हशिटो० " ३।४।५५ इति सकि अकृक्षत् । अनुस्वारेत्त्वान्नेट् , क्रष्टा,

---

१. क्षिप्णुः इति मु० ।
२ लोके गोफणि इति लिं दुर्ग. ४५ ॥

कर्ष्टा, आकृष्टः । क्तौ कृष्टिः । उणादौ "कृषेर्गुणवृद्धी च वा" (उ० ३१) इति अके कर्षकः कृषकः, परशुः, कार्षकः, कृषकः कुटुम्बी। "पापुलि०" (उ० ४१) इति किति इके कृषिकः पामरः । "घृवीह्वा०" (उ० १८३) इति किति णे कृष्णः। "नाम्युपान्त्य०" (उ० ६०९) इति किद् इः, कृषिः । "कृपचमि०" (उ० ८२९) इति ऊः, कर्षूः नदी । कृषं विलेखने [ १।५०६ ], कर्षति ॥

अथ मुचादयोऽष्टौ । तत्राद्याः पञ्चाऽनिट उभयपदिनश्च, त्रयः परस्मैपदिनः खिदिवर्जाः सेटश्च । तत्र चान्तौ—

'६ मुच्लृंती मोक्षणे' । "मुचादि०" ४।४।९९ इति स्वरात्परे नेऽन्ते मुञ्चते, मुञ्चति । मुमुचे, मुमोच । लृदित्त्वादङि अमुचत् । आत्मनेपदे तु "धुड्-ह्रस्वाद्०" ४।३।७० इति सिचो लुकि अमुक्त । अनुस्वारेत्त्वान्नेट्, मोक्ता, मुक्तः । "अव्याप्यस्य०" ४।१।१९ इति सनि वा मोकि द्वित्वाभावे च "एकधातौ०" ३।४।८६ इति क्यस्य "भूषार्थ०" ३।४।९३ इति प्रतिषेधे मोक्षते वत्सः स्वयमेव; पक्षे मुमुक्षते । घञि निर्मोकः । उणादौ "मावावद्दि०" (उ० ५६४) इति से मोक्षः । "नाम्युपान्त्य०" (उ० ६०९) इति किदौ मुचिः, न मुञ्चति, न न मुञ्चति वा नमुचिः; नखादित्वात् साधुः । मूत्रम् इति तु "सूमूखनि०" (उ० ४४९) इति किति त्रटि मवतेः ॥

'७ षिचींत् क्षरणे' । "षः सो०" २।३।९८ इति से "मुचादि०" ४।४।९९ इति ने सिञ्चते, सिञ्चति । षोपदेशत्वात् "नाम्यन्तस्था०" २।३।१५ इति षत्वे सिषिचे, सिषेच । सोपसर्गस्य "स्थासेनि०" २।३।४० इति आदेरपि सस्य षत्वे अभिषिञ्चति, अड्व्यवायेऽपि अभ्यषिञ्चत्, द्वित्वेऽपि अभिषिषेच, अभि-षिषिक्षति; सोपसर्गात् सिञ्चतेः णौ अभ्यषीषिचत् । ण्यन्तस्य उपसर्गयोगे पूर्वस्य न षत्वम्, अभ्यसीषिचत् । "ह्वालिप्सिचः" ३।४।६२ इति अङि असिचत् । "वाऽऽत्मने" ३।४।६३ असिचत, असिक्त । "णिस्तोरेवा०" २।३।३७ इति नियमात् षत्वाभावे सिसिक्षति । यङि "सिचो यङि" २।३।६० इति निषेधे सेसिच्यते, अभिसेसिच्यते । अनुस्वारेत्त्वान्नेट्, सेक्ता, सिक्तः । "नीदाव्०" ५।२।८८ इति करणे त्रटि सेक्त्रम् । सिंह इति तु हिंसेः सिम् च" (उ० ५८८) इति हे हिंसेः ॥

## अथ दान्तः ॥

'८ विद्लृंती लाभे'। "मुचादि०" ४।४।९९ इति ने विन्दते, विन्दति। विविदे, विवेद। "वेत्तेः कित्" ३।४।५१ इति परोक्षाया वा आम् विन्दतेरपि इत्येके, तन्मते विदाञ्चकार, विवेद। अद्यतन्यां लदित्त्वादङि अविदत्; आत्मनेपदे सिचो लुकि अवित्त। अनुस्वारेत्त्वान्नेट्, वेत्ता, वित्तः, वित्तवान्। "वित्तम्०" ४।२।८२ इति निपातनान्नत्वाभावे वित्तं धनं प्रतीतं च। क्वसौ "गमहन०" ४।४।८३ इति वेटि विविदिवान्, विविद्वान्। "लिम्पविन्दः" ५।१।६० इति शे विन्दः। अणपवादे "निगवादे०" ५।१।६१ इति शे गोविन्दः, अरविन्दः। "यावतो विन्द०" ५।४।५५ इति णमि यावद्वेदं भुङ्क्ते॥

## अथ पान्तौ ॥

'लुप्लृंती छेदने'। मुचादित्वान्ने लुम्पते, लुम्पति। लुलुपे, लुलोप। लदित्त्वादङि अलुपत्। आत्मनेपदे तु "धुड्०" ४।३।७० इति सिज्लुकि अलुप्त। "गृलुप०" ३।४।१२ इति गर्ह्यार्थाद् यङि लोलुप्यते। अनुस्वारेत्त्वान्नेट्, लोप्ता, लुप्तः, लुप्तिः। घञि लोपः। उणादौ "हुयामा०" (उ० ४५१) इति त्रे लोप्त्रम् अपहृतं द्रव्यम्॥

'१० लिपींत् उपदेहे'। उपदेहः वृद्धिः। मुचादित्वान्ने लिम्पते, लिम्पति। लिलिपे, लिलेप। "ह्वालिप्०" ३।४।६२ इति अङि अलिपत्। "वाऽऽत्मने" ३।४।६३ अलिपत, अलिप्त। अनुस्वारेत्त्वान्नेट्, लेप्ता, लिप्तः। "लिम्पविन्दः" ५।१।६० इति शे लिम्पः। "निगवादे०" ५।१।६१ इति शे निलिम्पा नाम देवाः। णके स्त्रियामपि विलेपिका, अनुलेपिका॥

## अथ परस्मैपदिषु तान्तः ॥

'११ कृतैत् छेदने'। "शेषात्०" ३।३।१०० इति परस्मैपदे मुचादित्वान्ने कृन्तति। चकर्त, कर्तिता। सादौ अशिति "कृतचृत०" ४।४।५० इति वेटि कर्त्स्यति, कर्तिस्यति, चिकृत्सति, चिकर्तिषति। सिचि तु नित्यमिटि अकर्तीत्। वेट्त्वात् क्तयोर्नेट्, कृत्तः, कृत्तवान्। ऐदित्त्वाद् यङ्लुबन्ताद् अनेकस्वरादपि क्तयोर्नेट्, चरीकृत्तः, चरीकृत्तवान्। क्विपि कृत्। नन्द्याद्यने कर्तनः। उणादौ "कृतिपुति०" (उ० ७६) इति किति तिके कृत्तिका। "कृत्यशौभ्यां स्नक्" (उ० २९६) कृत्स्नम्। "कृतेः क्रूकृच्छ्रौ च" (उ० ३९५) इति रे क्रूरः,

कृच्छ्रम् । "नदीवल्ल०" (उ० ६९८) इति अरौ कर्तरिः । कृतैप् वेष्टने [ ६।१८ ], कृणत्ति ॥

## अथ दान्तः ॥

'१२ खिदंत् परिघाते'। परितापे इत्यन्ये । मुचादित्वान्ने खिन्दति । [1]चिखेद । अनुस्वारेत्त्वान्नेट्, खेत्ता, खिन्नः । भिदाद्यङि खिदा । खिदिंच् दैन्ये [ ३।११६ ], खिद्यते । खिदिंप् दैन्ये [ ६।२४ ], खिन्ते ॥

## अथ शान्तः ॥

'१३ पिशत् अवयवे'। मुचादित्वान्ने पिंशति । पिपेश, पेशिता । उणादौ "पिशेराचक्" (उ० ११६) पिशाचः; प्रज्ञाद्यणि पैशाचः । "कुशिपिशि०" (उ० २१२) इति किति इते पिशितम् । "पिशिमिथि०" (उ० २९०) इति किति उने पिशुनः । "मृदिकन्दि०" (उ० ४६५) इति अले पेशलः । "किलिपिलि०" (उ० ६०८) इति औ पेशिः मांसलेशः ॥

वृत् मुचादिः । मुचादिः तुदाद्यन्तर्गणोऽष्टकः संपूर्णः ॥

## अथ प्रकृतवर्णक्रमेण इदन्ताश्चत्वारोऽनिटश्च

'१४ रिं १५ पिंत् गतौ'। रियति, रिराय । "योऽनेकस्वरस्य" २।१।५६ इति यत्वस्य बहिरङ्गत्वेन अन्तरङ्गे "भ्वादेर्नामिनो०" २।१।६३ इति दीर्घे कर्तव्ये असिद्धत्वात् दीर्घाभावे रियतुः । अनुस्वारेत्त्वान्नेट्, रेता, रितः ॥

'१५ पिंत्'। पियति, पिपाय । अनुस्वारेत्त्वान्नेट्, पेता, पितः । उणादौ "घुयुहि०" (उ० २४) इति के दीर्घे च पीकः उपस्थः, पिक इति तु "पापुलि०" (उ० ४१) इति किति इके पिकतेः ॥

'१६ धिंत् धारणे'। धियति, दिधाय, दिध्यतुः । अनुस्वारेत्त्वान्नेट्, धेता, धितः ॥

'१७ क्षिंत् निवासगत्योः'। क्षियति, चिक्षाय । "योऽनेकस्वरस्य" २।१।५६ इति याऽपवादे "संयोगात्" २।१।५२ इति इयि चिक्षियतुः, चिक्षियुः । अनुस्वारेत्त्वान्नेट्, क्षेता, क्षितः ग्रामः, क्षितमनेन । कर्मभावाभ्यामन्यत्र "क्षेः क्षी चा०" ४।२।७४ इति क्तयोस्तस्य नत्वं क्षेः क्षीः च, क्षीणः, क्षीणवान् ।

१. मु० नास्ति ॥

" वाऽऽक्रोशदैन्ये " ४।२।७५ क्षीताऽऽयुः, क्षिणाऽऽयुः, जाल्मः । क्षितकः क्षीणकः तपस्वी । यपि क्षेः क्षी [ ४।३।८९ ] प्रक्षीय, उपक्षीय । " क्षय्य-जय्यौ शक्तौ " ४।३।९० इति ये निपातनादयि क्षेतुं शक्यं क्षय्यम् ; शक्तेरन्यत्र क्षेयम् । " जीण्-दृ-क्षि० " ५।२।७२ इति इनि क्षयशील: क्षयी । स्त्रियां क्तौ क्षितिः । भिदाद्यङि क्षिया । आधारे " पुन्नाम्नि० " ५।३।१३० इति घे क्षयः गृहम् । उणादौ " अर्तीरि० " ( उ० ३३८ ) इति मे क्षेमम् । " हुयामा० " ( उ० ४५१ ) इति त्रे क्षेत्रम् । क्षि क्षये [ १।१० ], क्षयति । क्षिपूश् हिंसायाम् [ ८।३४ ], क्षिणाति ॥

## अथोदन्तः सेट् च ॥

' १८ षूत् प्रेरणे ' । " षः सो० " २।३।९८ इति से सुवति । षोपदेशत्वाद् " नाम्यन्तस्था० " २।३।१५ इति षत्वे सुषाव, सुषुवतुः । " उपसर्गात् सुग्० " २।३।३९ इति षत्वे अभिषुवति, अड्व्यवायेऽपि अभ्यषुवत् । सविता । क्डिति " उवर्णात् " ४।४।५८ इति नेट्, सूतः, सूतवान्, सूत्वा । सनि " ग्रहगुहश्च० " ४।४।५९ इति नेट्, " णिस्तोरेवा० " २।३।३७ इति नियमात् षत्वाभावे सुसूषति । " प्रात्सूजोरिन् " ५।२।७१ प्रसवशीलः प्रसवी । षूङौक् प्राणिगर्भविमोचने [ २।४९ ], सूते । षूङौच् प्राणिप्रसवे [ ३।९९ ], सूयते ॥

## अथ ऋदन्तोऽनिट् च ॥

' १९ मृंत् प्राणत्यागे ' । " मृयतेरद्यतन्याशिषि च " ३।३।४२ इति आत्मनेपदे " रिः शक्या० " ४।३।११० इति रौ " धातोरिवर्णो० " २।१।५० इति इयि म्रियते । " ऋवर्णात् " ४।३।३६ इति सिजाशिषोरात्मनेपदे क्त्विाद् गुणाभावे अमृत, मृषीष्ट; शिदादेरन्यत्र " शेषात्० " ३।३।१०० इति परस्मैपदे ममार, मम्रतुः । " हनृतः० " ४।४।४९ इति इटि मरिष्यति । सनि मुमूर्षति । अनुस्वारेत्त्वान्नेट्, मर्ता, मृतः । अचि अमरः । अभिमरः तीक्ष्णः । णके मारकः । घञि मारः । उणादौ " अदुपान्त्य० " ( उ० १४ ) इति अः, सरूपे च द्वे रूपे पूर्वस्य चाऽन्ते अः, मरमरः अनुकरणशब्दोऽयम् । " दृकृनृ० " ( उ० २७ ) इति अके मरकः । " जॄपदशॄमृभ्यो द्वेरश्चादौ " ( उ० ४७ ) इति ईके मर्मरीकः अग्निः । " मृमन्यञ्जि० " ( उ० ५८ ) इति ऊके मरूकः निर्दन्तेभः । " मृत्र-

पिभ्यामिचः” (उ० ११७) मरिचम्। “म्रियतेरीचण्” (उ० ११८) मारीचः। “ल्भ्रो वा” (उ० २०२) इति वा किति ते मृतः, मर्तः; स्वार्थे ये मर्त्यः। “मृशीपसि०” (उ० ३६०) इति तादौ ये मर्त्यः। “जठरक्रकर०” (उ० ४०३) इति अरे निपातनाद् [1]मर्मरः शुष्कपत्त्रध्वनिः। “मृश्विकण्यणि०” उ० ६२६) इति ईचौ मरीचिः। “भृमृतॄ०” (उ० ७१६) इति उः, मरुः। “मुस्त्युकू०” (उ० ८०५) मृत्युः। “पलिमृभ्यामाण्डुकण्डुकौ” (उ० ७६७) मृकण्डुः ऋषिः। मनि मर्म। मरुत् इति तु “म्र उत्” (उ० ८८९) इति मृणातेः उति ॥

## अथ ॠदन्तौ सेटौ च ॥

‘२० कॄत् विक्षेपे’। किरति। “अपस्किरः” ३।३।३० इत्यात्मनेपदे “अपाच्चतुष्पात्०” ४।४।९५ इति स्सटि अपस्किरते वृषभो हृष्टः, अपस्किरते कुक्कुटो भक्ष्यार्थी, अपस्किरते श्वा आश्रयार्थी। कर्मकर्तरि “एकधातौ०” ३।४।८६ इति जिक्यात्मनेपदेषु प्राप्तेषु “भूषार्थ०” ३।४।९३ इति क्यञ्योः प्रतिषेधे अवकिरते पांसुः स्वयमेव। “इट्सिजा०” ४।४।३६ इति वेटि “वृतो नवा०” ४।४।३५ इति वेटो दीर्घे, अनिट्सिचः “ऋवर्णात्” ४।३।३६ इति किच्वे अवाकीर्ष्ट पांसुः स्वयमेव; पक्षे अवाकरिष्ट, अवाकरीष्ट; करिता, करीता। किति “ऋवर्णश्र्यू०” ४।४।५७ इति नेट्, कीर्णः, कीर्णवान्, कीर्त्वा। “ऋस्मिपूङ्०” ४।४।४८ इति सनि इटि चिकरिषति, चिकरीषति। अस्य इटो न दीर्घ इत्येके। उपपूर्वस्य “उपात्किरो०” ५।४।७२ इति णमि “किरो लवने” ४।४।९३ इति स्सटि च उपस्कारं मद्रका लुनन्ति। “प्रतेश्च वधे” ४।४।९४ इति स्सटि प्रतिस्कीर्णम्, उपस्कीर्णम् ह ते वृषल भूयात्। “स्कृच्छृतो०” ४।३।८ इति गुणे “प्रतिचस्करे नखैः” [ शिशुपालवध १।४७ ]। “नाम्युपान्त्य०” ५।१।५४ इति के किरः सूकरः। “वौ विष्किरो०” ४।४।९६ इति वा स्सटि विष्किरः, “असोङ०” २।३।४८ इत्यत्र पत्वम्. विकिरश्च पक्षी। “युवर्ण०” ५।३।२८ इति अलि “वर्चस्का०” ३।२।४८ इति निपातनाद् अवस्करः वर्चस्कम्। अवकरः अन्यः। उन्निपूर्वस्य “किरो धान्ये” ५।३।७३ इति घजि उत्कारः, निकारः धान्यस्य। अलि उत्करः निकरोऽन्यस्य। उणादौ “ऋतष्टित्” (उ० ९) इति

---

१. “ऋतष्टित्” [उ० ९] इति सूत्रे मृश् हिंसायाम् इत्यस्माद् धातो. मर्मरशब्दः साधित. ॥

अः स्वरूपे च द्वेरूपे, कर्करः क्षुद्राश्मा, कर्करी गलन्तिका। "दॄकॄनॄ०" (उ० २७) इति अके करकः, करकम्, करका च घनोपलः। "किरोङ्को रो लश्च वा" (उ० ६२), करङ्कः समुद्रः, कलङ्कः। "पतितमि०" (उ० ९८) इति अङ्गे करङ्गः कर्मशीलः। "कूर्चचूर्चा०" (उ० ११३) इति चटि निपातनात् कूर्चम्; कूर्चम् इव कूर्चकः, कूर्चिका इति च। "कल्यवि०" (उ० ११४) इति अचे करचः धान्यावपनम्। "किरो लश्च वा" (उ० १४७) इति किति आटे किलाटः, किराटः। "[1]तॄकॄकृपि०" (उ० १५१) इति कीटे किरीटम्। "विहडकहोड०" (उ० १७२) इति अडे निपातनात् केरडः त्रैराज्ये राजा, क्रोडम् अङ्कः। "जॄकॄतॄ०" (उ० १७३) इति अण्डे करण्डः। "इणुर्विशा०" (उ० १८२) इति णे कर्णः। "कॄगॄपॄ०" इति किति अणे किरणः। "ॠकॄवॄ०" (उ० १९६) इति उणे करुणा। "कॄशॄसृभ्य ऊर् चान्तस्य" (उ० २९८) इति पे कूर्पं भ्रूमध्यम्। "कॄशॄगॄ०" (उ० ३२९) इति अभे करभः। "कॄशॄपॄ०" (उ० ४१८) इति ईरे करीरः; गौरादित्वाद् ङ्यां करीरी। "कॄतॄभ्यामीषः" (उ० ५५३) करीषः। "नाम्युपान्त्य०" (उ० ६०९) इति किदिः, किरिः सूकरः। "कॄग्र ऋत उर् च" (उ० ७३४) इति उः, कुरुः। कॄगूश् हिंसायाम् [ ८।१५ ], कृणीते, कृणाति॥

'२१ गॄत् निगरणे'। निगरणं भोजनम्। "नवा स्वरे" २।३।१०२ इति वा लत्वे गिरति, गिलति। प्रतिज्ञायां "समः" ३।३।६६ इति आत्मनेपदे संगिरते। "अवात्" ३।३।६७ अवगिरते। कर्मकर्तरि "एकधातौ०" ३।४।८६ इति जिक्याऽऽत्मनेपदेषु प्राप्तेषु किरादित्वाद् "भूषार्थ०" ३।४।९३ इति क्यञोः प्रतिषेधे निगिरते ग्रासः स्वयमेव। "इट् सिजा०" ४।४।३६ इति वेटि "वृतो नवा०" ४।४।३५ इति वेटो दीर्घे न्यगीर्ष्ट ग्रासः स्वयमेव। न्यगरिष्ट, न्यगरीष्ट स्वयमेव। णौ फलवत् कर्तरि "ईगितः" ३।३।९५ इति आत्मनेपदापवादे "चल्याहारार्थे०" ३।३।१०८ इति परस्मैपदे निगारयति ग्रासं चैत्रं मैत्रः। "गॄलुप०" ३।४।१२ इति गर्ह्यार्थाद् यङि "ग्रो यङि" २।३।१०१ इति लत्वे निजेगिल्यते। यङ्लुपि निजागलीति। "ॠस्मिपूङ्०" ४।४।४८ इति सनि इटि जिगरिषति, जिगरीषति। अस्य इटो दीर्घं नेच्छन्त्येके। गरिष्यति, गरीष्यति। "ॠवर्णश्र्यूर्णु०" ४।४।५७ इति किति नेट्, "ॠल्वादे०" ४।२।६२ इति तो नत्वे

[1]. तॄकॄपीति इति मु०॥

गीर्णः, गीर्णवान् । क्तौ गिर्णिः । गीर्त्वा । "नाम्युपान्त्य०" ५।१।५४ इति के गिरः, लत्वे गिलः । अणपवादे लिहाद्यचि अजगरः, ओदनगरः । काऽपवादे अचि अलि वा गरः, लत्वे गलः । "न्युदो ग्रः" ५।३।७२ इति घञि निगारः, उद्गारः । बाहुलकाद् घञि णे वा अगारम् । उणादौ "ऋतष्टित्" (उ० ९) इति अः सरूपे च द्वे रूपे गर्गरः राजर्षिः, गर्गरी महाकुम्भः । "गम्यमि०" (उ० ९२) इति गे गर्गः ऋषिः । "दम्यमि०" (उ० २००) इति ते गर्तः । "गृदृरमि०" (उ० ३२७) इति भे गर्भः । "कृशृगृ०" (उ० ३२९) इति अभे गरभः गर्भ एव । "लटिखटि०" (उ० ५०५) इति वे गर्वः । "ग्रहाह्वा०" (उ० ५१४) इति वे निपातनाद् ग्रीवा । "नाम्युपान्त्य०" (उ० ६०९) इति किदिः, गिरिः । "ग्रो मादिर्वा" (उ० ८९०) इति उति गरुत्, गर्मुत्—हेम । गृशृ शब्दे [ ८।३१ ], गृणाति ॥

## अथ खान्तः सेट् च ॥

'२२ लिखत् अक्षरविन्यासे' । लिखति, लिलेख, लेखिता, लिखितः । "नाम्युपान्त्य०" ५।१।५४ इति काऽपवादे लिहाद्यचि लेखः, भिदादिनिपातनादङि लेखा । करणाऽऽधारे "व्यञ्जनात्०" ५।३।३२ इति घञि लेखः । उणादौ "घुघून्दि०" (उ० २९) इति किति अके लिखकः चित्रकारः । कुटादिरय-मित्येके, लिखनीयम् ॥

## अथ चान्ताः पञ्च सेटश्च ॥

'२३ जर्च २४ झर्चत् परिभाषणे' । तर्जनेऽपि इत्येके । जर्चति, जजर्च, जर्चिता, जर्चितः ॥

'२४ झर्चत्' । झर्चति, जझर्च, झर्चिता झर्चितः । चादिरयमित्येके, चर्चति; णके चर्चिका ॥

'२५ त्वचत् संवरणे' । संवरणम्—आच्छादनम् । त्वचति, तत्वाच, त्वचिता । अचि त्वचः । क्विपि सिगमांसादि त्वचति इति त्वक् ॥

'२६ ऋचत् स्तुतौ' । ऋचति । "अनातो०" ४।१।६९ इति पूर्वस्य आत्वे ने च आनर्च, आनृचतुः । अर्चिता, ऋचितः । "ऋदुपान्त्याद०" ५।१।४१ इत्यत्र ऋचो वर्जनाद् "ऋवर्ण०" ५।१।१७ इति घ्यणि क्ते सेट्त्वात्

कत्वाभावे अर्च्यः । बाहुलकात् कर्तरि करणे वा "क्रुत्संपदा०" ५।३।११४ इति क्विपि ऋक् । अर्चिः इति तु "रुच्यर्चि०" (उ० ९८७) इति इसि अर्चेः ॥

'२७ ओव्रश्चौत् छेदने' । दन्त्योपान्त्योऽयम् । "सस्य शषौ" १।३।६१ इति शे "ग्रहव्रश्च०" ४।१।८४ इति य्वृति वृश्चति । वव्रश्च । संयोगान्तत्वाद् "इन्ध्यसंयोगात्०" ४।३।२१ इति कित्वाभावान्न य्वृत्, वव्रश्चतुः, वव्रश्चुः । औदित्त्वाद् वेट्, "संयोगस्यादौ०" २।१।८८ इति शस्य लुकि "यजसृज०" २।१।८७ इति चस्य षत्वे व्रष्टा । पक्षे व्रश्चिता । वेट्त्वात् क्तयोर्नेट्, "सूयत्याद्यो०" ४।२।७० इति तस्य नत्वे "क्तादेशोऽपि" २।१।६१ इति नस्याऽसिद्धत्वेन सस्य लुकि चस्य कत्वे च वृक्णः, वृक्णवान् । 'अपि' इति वचनात् षत्वे कर्तव्ये नत्वं सिद्धमेव इति धुडभावाद् "यजसृज०" २।१।८७ इति न षत्वम् । क्त्वि "जृव्रश्च०" ४।४।४१ इति इटि "क्त्वा" ४।३।२९ इति कित्वाभावान्न य्वृद्, व्रश्चित्वा । क्विपि मूलवृट् । उणादौ "पापुलि०" (उ० ४१) इति किति इके वृश्चिकः । ऋजिरिपि०" (उ० ५६७) इति किति से वृक्षः ॥

## अथ छान्ताः षट् प्रच्छवर्जाः सेटश्च ॥

'२८ ऋछत् इन्द्रियप्रलयमूर्तिभावयोः' । इन्द्रियाणां प्रलये मोहे मूर्तिभावे च । गतावप्यन्ये । "स्वरेभ्यः" १।३।३० इति छस्य द्वित्वे ऋच्छति । "समो गमृच्छि०" ३।३।८४ इति आत्मनेपदे समृच्छते । "गुरुनाम्यादे०" ३।४।४८ इत्यत्र ऋछो वर्जनाद् आमभावे "स्कृच्छ्रतो०" ४।३।८ इति गुणे "अनातो०" ४।१।६९ इति पूर्वस्य आत्वे ने च आनर्च्छ, आनर्च्छतुः, आनर्च्छुः । ऋच्छिता, ऋच्छितः, ऋचिच्छिषति ॥

'२९ विछत् गतौ' । "स्वरेभ्यः" १।३।३० इति छस्य द्वित्वे "अशवि ते वा" ३।४।४ इति वा आये विच्छायति, विच्छति, विच्छिता, विच्छायिता । शतरि "अवर्णादश्नो०" २।१।११५ इति वा अन्तादेशे विच्छती, विच्छन्ती स्त्री कुले वा । द्रमिलास्तु शे नित्यमायं तुदादिपाठबला[1]च्चायव्यवायेऽपि पक्षेऽन्ताभावमिच्छन्ति विच्छायन्ती, विच्छायती; यथा जुगुप्सते इति सना व्यवधानेऽपि आत्मनेपदम् । विच्छो नङ् [५।३।८६], विश्नः । विछण् भासार्थः, विच्छयति ॥

१. च्चाय् इति मु० ॥

'३० उछैत् विवासे'। विवासः अतिक्रमः। "स्वरेभ्यः" १।३।३० इति छस्य द्वित्वे उच्छति। "गुरुनाम्यादेः०" ३।४।४८ इति परोक्षाया आमि उच्छाञ्चकार। उच्छिता। ऐदित्वात् क्तयोर्नेट्, "अनुनासिके च०" ४।१।१०८ इति छस्य शे "यजसृज०" २।१।८७ इति शस्य षे व्युष्टः, व्युष्टवान्; व्युष्टा नाडिः, व्युष्टं प्रातः। सनि उचिच्छिषति। छस्य द्वित्वे पूर्वस्य चस्य तत्वं च इच्छन्त्येके, तन्मते उतिच्छिषति इत्यपि; एवमन्यत्राऽपि। शतरि "अवर्णादश्नो०" २।१।११५ इति वाऽन्तादेशे उच्छती, उच्छन्ती स्त्री कुले वा॥

'३१ मिछत् उत्क्लेशे'। उत्क्लेशो बाधनम्। "स्वरेभ्यः" १।३।३० इति छस्य द्वित्वे मिच्छति, मिमिच्छ, मिच्छिता, मिच्छितः; मिच्छती, मिच्छन्ती स्त्री कुले वा। पिछेति द्रमिलाः, [1]पिच्छा आचामः॥

'३२ उछुत् उञ्छे'। उञ्छः उच्चयः। उदित्त्वान्ने "तवर्गस्य०" १।३।६० इति नस्य ञे उञ्छति। "गुरुनाम्यादेः०" ३।४।४८ इति परोक्षाया आमि उञ्छाञ्चकार। उञ्छिता। घञि उञ्छः। उञ्छती, उञ्छन्ती स्त्री कुले वा॥

'३३ प्रछंत् ज्ञीप्सायाम्'। ज्ञीप्सा जिज्ञासा। "स्वरेभ्यः" १।३।३० इति छस्य द्वित्वे "ग्रहव्रश्च०" ४।१।८४ इति य्वृति पृच्छति। "समो गमृ०" ३।३।८४ इति आत्मनेपदे संपृच्छते। आङ्पूर्वस्य "[2]नुप्रच्छः" ३।३।५४ आपृच्छते गुरुम्। पप्रच्छ। संयोगान्तत्वाद् "इन्ध्यसंयोगा०" ४।३।२१ इति कित्त्वाभावान्न य्वृत्, पप्रच्छतुः, पप्रच्छुः। अनुस्वारेत्त्वान्नेट्, प्रष्टा, पृष्टः। "ऋस्मिपूङ०" ४।४।४८ इति इटि "रुदविद०" ४।३।३२ इति सनः कित्त्वे पिपृच्छिषति। "दिद्युद्द०" ५।२।८३ इति क्विपि निपातनात् प्रश्नशीलः प्राट्, शब्दप्राट्। प्राड्विवाको निर्णेता। "यजिस्वपि०" ५।३।८५ इति ने "अनुनासिके च" ४।१।१०८ इति छस्य शे प्रश्नः। भिदाद्यङि पृच्छा। उणादौ "सृधृप्रच्छिभ्यः कित्" (उ० ६७९) इति नौ पृश्निः रश्मिः॥

## अथ जान्ताः षट्॥

'३४ उब्जत् आर्जवे'। उब्जति। "गुरुनाम्यादेः०" ३।४।४८ इति परोक्षाया आमि उब्जाञ्चकार। उब्जिता, उब्जितः। "न चदनं०" ४।१।५ इति

---

१. पिच्छाः आचाम। (क्षी. त. पृ. २३६)।

२ नुप्र° इति मु०॥

यस्य प्रतिषेधात् "स्वरादेः०" ४।१।४ इति द्वितीयांशस्य जेरेव द्वित्वे उज्जिजिषति । "भावाकर्त्रोः" [५।३।१८] घञि उद्गादित्वात् गत्वे अभ्युद्गः, समुद्गः । आधारे "व्यञ्जनात्०" ५।३।१३२ इति घञि न्युब्जितः; अन्ये अभिमन्यन्ति न्युब्जो रोगः, "भुजन्युब्जं०" ४।१।१२० इति निपातनादत्र न गत्वम् । उब्जती, उब्जन्ती स्त्री कुले वा । ओज इति "उब्जेर्ज च" (उ० ९५९) इति अनि ओजः ॥

'३५ सृजंत् विसर्गे' । सृजति । "सृजः श्राद्धे०" ३।४।८४ इति ञिक्यात्मनेपदेषु असर्जि मालां धार्मिकः, सृज्यते मालां धार्मिकः, स्रक्ष्यते मालां धार्मिकः । कर्मकर्तरि सृज्यते माला स्वयमेव, असर्जि माला स्वयमेव । ससर्ज । थवि "सृजिदृशि०" ४।४।७८ इति वेटि सस्रष्ठ, ससर्जिथ । अनुस्वारेत्त्वान्नेट्, "अः सृजिदृशो०" ४।४।१११ इति स्वरात्परो अः, "यजसृज०" २।१।८७ इति जस्य षः, स्रष्टा । अस्राक्षीत् । सृष्टः । सृजती सृजन्ती स्त्री कुले वा । उणादौ "स्यन्दिसृजिभ्यां सिन्धरज्जौ च" (उ० ७१७) इति उः, रज्जुः ॥

'३६ रुजोंत् भङ्गे' । "रुजार्थस्य०" २।२।१३ इति वा कर्मणः कर्मत्वे "[1]शेषे" २।२।८१ इति षष्ठ्यां चौरस्य रुजति रोगः, चौरं रुजति रोगः । रुरोज । अनुस्वारेत्त्वान्नेट्, रोक्ता । ओदित्त्वात् "सूयत्याद्यो०" ४।२।७० इति क्तयोस्तस्य नत्वे "क्तादेशोऽषि" २।१।६१ इति नस्य असिद्धत्वेन घुटि "चजः०" २।१।८६ इति गे रुग्णः, रुग्णवान् । "कूलादुद्रुजो०" ५।१।१२२ इति खशि कूलमुद्रुजः समुद्रः । क्विपि "गतिकारकस्य०" ३।२।८५ इति नेः दीर्घे नीरुक् इत्येके । "पदरुज०" ५।३।१६ इति कर्तरि घञि रोगः । भिदाद्यङि रुजा । उणादौ "रुक्मग्रीष्म०" (उ० ३४६) इति मकि निपातनात् रुक्मम् ॥

'३७ भुजोंत् कौटिल्ये' । भुजति, निभुजति, बुभोज । अनुस्वारेत्त्वान्नेट्, भोक्ता । ओदित्त्वात् "सूयत्याद्यो०" ४।२।७० इति क्तयोस्तस्य नत्वे भुग्नः, भुग्नवान् । "नाम्युपान्त्य०" ५।१।५४ इति के भुजः । "ऋवर्ण०" ५।१।१७ इति घ्यणि भोग्यम् । "स्थादिभ्यः" ५।३।८२ इति भावे के भुजः कौटिल्यम् । भुजेन गच्छति भुजगः । करणाधारे "व्यञ्जनाद्०" ५।३।१३२ इति घञि भोगः सर्पकायः । भुजंप् पालनाभ्यवहारयोः [६।१५], भुनक्ति, "भुनजोऽत्राणे" ३।३।४७ इति आत्मनेपदे भुङ्क्ते ॥

---

१. शेषषष्ठ्यां इति मु० ॥

'३८ टुमस्जोंत् शुद्धौ'। शुद्धया स्नानं [1]बुडनं च लक्ष्यते। "सस्य शषौ" १।३।६१ इति शे "तृतीयस्तृतीय०" १।३।४९ इति शस्य जे मज्जति, ममज्ज। अनुस्वारेत्त्वान्नेट्, "मस्जेः सः" ४।४।११० इति धुटि सस्य नत्वे मङ्क्ता। [2]ओदित्त्वात् "सूयत्याद्यो०" ४।२।७० इति क्तयोस्तस्य नत्वे "नो व्यञ्जनस्य०" ४।२।४५ इति नलुकि मग्नः, मग्नवान्। "जनशो०" ४।३।२३ इति क्त्वः वा किस्वे मक्त्वा, मङ्क्त्वा। "ऋवर्ण०" ५।१।१७ इति घ्यणि "क्तेऽनिट०" ४।१।१११ इति जस्य गे "तृतीयस्तृतीय०" १।३।४९ इति सस्य दे मद्ग्यः। अचि मज्जः। "नाम्न्युत्तरपदस्य०" ३।२।१०७ इति उदे उदके मज्जः उदमज्जः। ट्वित्त्वादथौ मज्जथुः। अनटि मज्जनम्। भिदाद्यङि मज्जा। उणादौ "[3]भृमृतॄ०" (उ० ७१६) इति उः, उद्गादित्वात् गत्वे मद्गुः। "उक्षितक्षि०" (उ० ९००) इति अनि मज्जा अस्थिसारः, मज्जानौ। मञ्जूषा इति तु मञ्जेः सौत्रस्य "खलिफलि०" (उ० ५६०) इति ऊषे॥

'३९ जर्ज ४० झर्झत् परिभाषणे'। जर्जति, जजर्ज, जर्जिता, जर्जितः, जर्जती, जर्जन्ती स्त्री कुले वा॥

## अथ झान्तौ सेटौ च।

'४० झर्झत्'। झर्झति, जझर्झ, झर्झिता, झर्झितः, झर्झती, झर्झन्ती स्त्री कुले वा। जर्जरझर्झरौ तु जृषझृषो "ऋतष्छित्०" (उ० ९) इति अप्रत्यये सरूपद्वित्वे च। तर्जनेऽप्ययमित्यन्यः॥

'४१ उद्झत् उत्सर्गे'। दोपान्त्योऽयम्। "तवर्गस्य०" १।३।६० इति दस्य जे उज्झति। "गुरुनाम्यादेः०" ३।४।४८ इति परोक्षाया आमि उज्झाञ्चकार। उज्झिता। "न वदनं०" ४।१।५ इति दस्य प्रतिषेधात् "स्वरादेः०" ४।१।४ इति द्वितीयांशस्य झेरेव द्वित्वे उज्झिझिषति। "कुप्यभिद्यो०" ५।१।३९ इति क्यपि निपातनाद् उज्झति उदकमिति उद्ध्यो नदः। क्विपि पदान्ते "पदस्य" २।१।८९ इति संयोगान्तलुकि उत्, उद्। उज्झती, उज्झन्ती स्त्री कुले वा॥

---

१. त्रुडनं इति मु०॥

२. उदि° इति मु०॥

३ भृमृ° इति मु०॥

## अथ डान्ताश्चत्वारः सेटश्च ॥

'४२ जुडत् गतौ'। जुडति, जुजोड, जोडिता, जुडितः। घञि जोडः ॥

'४३ पृड ४४ मृडत् सुखने'। पृडति, पपर्ड, पर्डिता, पृडितः ॥

'४४ मृडत्'। मृडति, ममर्ड, मर्डिता, मृडितः। "क्षुधक्लिश०" ४।३।३१ इति क्त्वः कित्त्वाद् गुणाभावे मृडित्वा। "नाम्युपान्त्य०" ५।१।५४ इति के मृडः; तद्भार्या तु "वरुणेन्द्र०" २।४।६२ इति ङ्यामानन्ते च मृडानी ॥

'४५ कडत् मदे'। भक्षणे इत्यन्ये। कडति, चकाड। अचि कडः, लत्वे कलः। कडिता, कडितः, कडती, कडन्ती स्त्री कुले वा। केचित्तु कुटादिरयम्, कुटादित्वाच्च न वृद्धिरित्याहुः, तन्मते णके कडकः। उणादौ "कृकडी०" (उ० ३२१) इति अम्बे कडम्बः जातिविशेषः। "सृपृप्रथि०" (उ० ३४७) इति अमे कडमः शालिः, लत्वे कलमः। "अग्यङ्गि०" (उ० ४०५) इति आरे कडारः। "वृगुनक्षि०" (उ० ४५६) इति अत्रे कडत्रम्, लत्वे कलत्रं भार्या नितम्बश्च। "वन्धिवहि०" (उ० ४५९) इति इत्रे कडित्रं लेख्यचर्म। "कडेरेवराङ्गरौ" (उ० ४४५) कडेवरं मृतकायः, लत्वे कलेवरम्। कडङ्गरः बुसः। कलह इति तु कलतेः "कृपृकटि०" (उ० ५८९) इति अहे। कलिरित्यपि अस्यैव "पदिपठि०" (उ० ६०७) इति औ ॥

## अथ णान्ता नव सेटश्च ॥

'४६ पृणत् प्रीणने'। पृणति, पपर्ण, पर्णिता, पृणितः। "नाम्युपान्त्य०" ५।१।५४ इति के पृणः। "लोकम्पृण०" ३।२।११३ इति निपातननान्मेऽन्ते लोकस्य पृणः लोकम्पृणः ॥

'४७ तुणत् कौटील्ये'। तुणति, तुतोण, तोणिता, तुणितः। उणादौ "कुगुहु०" (उ० १७०) इति [1]किति डे तुण्डम्। बाहुलकान्न दीर्घः ॥

'४८ मृणत् हिंसायाम्'। मृणति, ममर्ण, मर्णिता, मृणितः। उणादौ "कुलिपुलि०" (उ० ४७६) इति किति आले मृणालं बिसम् ॥

'४९ द्रुणत् गतिकौटिल्ययोश्च'। चकाराद् हिंसायाम्। द्रुणति, दुद्रोण, द्रोणिता, द्रुणितः। "नाम्युपान्त्य०" ५।१।५४ इति के द्रुणः। गौरादित्वाद् ङ्यां द्रुणी। घञि द्रोणः। गौरादित्वाद् ङ्यां द्रोणी ॥

---

१. किङ्डे इति मु० ॥

'५० [1]पुणत् शुभे'। शुभं शुभविषया क्रिया। पुणति, पुपोण, पोणिता, पुणितः। "नाम्युपान्त्य०" ५।१।५४ इति के पुणः निपुणः। उणादौ "सृणीकास्तीक०" (उ० ५०) इति ईके निपातनात् पुण्डरीकम्। "कुगुहुनि०" (उ० १७०) इति किति डे पुण्डः भिन्नवर्णः, बाहुलकान्न दीर्घः। एवं कुण्डादिष्वपि। "ऋशिजनि०" (उ० ३६१) इति किति ये पुण्यम्। "खुरक्षुर०" (उ० ३९६) इति निपातनात् पुण्ड्रः॥

'५१ मुणत् प्रतिज्ञाने'। मुणति, मुमोण, मोणिता, मुणितः। उणादौ "कुगुहुनी०" (उ० १७०) इति डे मुण्डः॥

'५२ कुणत् शब्दोपकरणयोः'। कुणति, चुकोण, कोणिता, कुणितः। "नाम्युपान्त्य०" ५।१।५४ इति के कुणः। घञि कोणः। उणादौ "कुगुहुनी०" (उ० १७०) इति किति डे कुण्डम्। "भाजगोण०" २।४।३० इति ङ्यां कुण्डी अमत्रम्; कुण्डा अन्या। "कल्यलि०" (उ० २४६) इति इन्दकि कुणिन्दः म्लेच्छः। "कुलिपिलि०" (उ० ४७६) इति किति आले कुणालं नगरम्॥

'५३ घुण ५४ घूर्णत् भ्रमणे'। घुणति, जुघोण, घोणिता, घुणितः। "नाम्युपान्त्य०" ५।१।५४ इति के घुणः। लिहाद्यचि घोणा॥

'५४ घूर्णत्'। घूर्णति, जुघूर्ण, घूर्णिता, घूर्णितः; घूर्णती, घूर्णन्ती स्त्री कुले वा। घुणि घूर्णि भ्रमणे [ १।७०८–७०९ ], घोणते, घूर्णते॥

## अथ तान्तः सेट् च॥

'५५ चृतैत् हिंसाग्रन्थयोः'। चृतति, चचर्त, चर्तिता। सादौ "कृतचृत०" ४।४।५० इति वेट्, चर्त्स्यति, चर्तिष्यति, चिचृत्सति, चिचर्तिषति। असिचः इति वचनात् सिचि नित्यमिटि अचर्तीत्। वेट्त्वात्क्तयोर्नेट्, चृत्तः, चृत्तवान्; ऐदित्वाद् यङ्लुपि अनेकस्वरादपि क्तयोर्नेट्, चरीचृत्तः, चरीचृत्तवान्। "ऋदुपान्त्याद०" ५।१।४१ इत्यत्र चृतो वर्जनाद् "ऋवर्ण०" ५।१।१७ इति घ्यणि चर्त्यम्॥

---

१. पुण कर्मणि शब्दे च इति क्षीरस्वामी (क्षी. त. पृ २३९)॥

## अथ दान्तावनिटौ च ॥

'५६ णुदंत् प्रेरणे'। "पाठे०" २।३।९७ इति णस्य ने नुदति। णोपदेशत्वाद् "अदुरुपसर्गा०" २।३।७७ इति णत्वे प्रणुदति। नुनोद। अनुस्वारेत्त्वान्नेट्, नोत्ता। "ऋह्रीघ्रा०" ४।२।७६ इति क्तयोस्तस्य वा नत्वे नुन्नः, नुन्नवान्; नुत्तः, नुत्तवान्। "शोकापनुद०" ५।१।१४३ इति के निपातनात् शोकापनुदः पुत्रः। घञि प्रणोदः नुदती, नुदन्ती स्त्री कुले वा। ईदिदयमित्येके, तन्मते "ईगितः" ३।३।९५ इति फलवत्कर्तरि आत्मनेपदे नुदते, नुनुदे। उणादौ "ग्लानुदिभ्यां डौः" (उ० ८६८) नौः॥

'५७ षद्लृंत् अवसादने'। "श्रौति०" ४।२।१०८ इति सीदादेशे, सीदति, ससाद। लृदित्त्वादङि असदत्। षोपदेशत्वाद् "नाम्यन्तस्था०" २।३।१५ इति षत्वे सिषत्सति। ज्वलादिपठितेनैव सिद्धे इहाऽस्य पाठः "अवर्णादश्नो०" २।१।११५ इति वाऽन्तादेशार्थः, सीदती, सीदन्ती स्त्री कुले वा। ज्वलादिपाठोऽपि "वा ज्वलादि०" ५।१।६२ इति णविकल्पार्थः सादः, सदः। अनुस्वारेत्त्वान्नेट्, सत्ता। शद्लृंत् शातने इति तु न पठितव्य एव, शित्यात्मनेपदित्वेन शतुरभावेऽन्तादेशविकल्पाऽप्राप्तेः, अशदत् इत्यादेस्तु तेनैव सिद्धेः॥

## अथ धान्तः सेट् च ॥

'५८ विधत् विधाने'। विधति, विवेध, विधितः, विधितवान्। "वौ व्यञ्जनादेः०" ४।३।२५ इति क्त्वासनोर्वा कित्त्वे विधित्वा, वेधित्वा; विविधिषति, विवेधिषति। "नाम्युपान्त्य०" ५।१।५४ इति के विधः। उणादौ "विधेर्वा" (उ० ९७२) इति वा किति असि विधाः, वेधाश्च ब्रह्मा॥

## अथ नान्तौ सेटौ च ॥

'५९ जुन ६० शुनत् गतौ'। जुनति, जुजोन, जोनिता, जुनितः॥

'६० शुनत्'। शुनति, शुशोन, शोनिता। "नाम्युपान्त्य०" ५।१।५४ इति के शुनः वायुः। उणादौ "कीचकपेचक०" (उ० ३३) इति अके निपातनात् शुनकः॥

## अथ पान्तोऽनिट् च ॥

'६१ छुपंत् स्पर्शे'। छुपति, चुच्छोप। अनुस्वारेत्त्वान्नेट्, छोप्ता॥

## अथ फान्ता नव सेटश्च ॥

'६२ रिफत् कथन–युद्ध–हिंसादानेषु'। रिफति, रिरेफ, रेफिता, रिफितः। न्युपान्त्य इति व्यावृत्तिबलाद् "ऋत्तृषमृष०" ४।३।२४ इति "वौ व्यञ्जनादेः०" ४।३।२५ इति च वा कित्त्वाभावे "क्त्वा" ४।३।२९ इति नित्यमकित्त्वे रेफित्वा। स्वरादिरयमित्येके, ऋफति; णौ अर्फयति ॥

'६३ तृफ ६४ तृम्फत् तृप्तौ'। "मुचादि०" ४।४।९९ इति ने विधानबलाद् "नो व्यञ्जनस्या०" ४।२।४५ इति नस्याऽलुकि तृम्फति। ततर्फ, तर्फिता, तृफित्वा, तृफितः। "ऋदुपान्त्याद्०" ५।१।४१ इति क्यपि तृफ्यः ॥

'६४ तृम्फत्'। "नो व्यञ्जनस्या०" ४।२।४५ इति नलुकि तृफति। ततृम्फ, तृम्फिता, तृफितः। "ऋत्तृष०" ४।३।२४ इति क्त्वः वा कित्वे तृफित्वा तृम्फित्वा। पान्तौ एतौ इत्यन्ये तृपति; शे नलुक् च नेष्यते तृम्पति ॥

'६५ ऋफ ६६ ऋम्फत् हिंसायाम्'। ऋफति। "अनातो०" ४।१।६९ इति पूर्वस्य आत्वे ने च आनर्फ, आनृफतुः; अर्फिता, ऋफितः। सनि अर्फिफिषति। "क्त्वा" ४।३।२९ इति कित्त्वाभावे अर्फित्वा। "ऋदुपान्त्याद०" ५।१।४१ इति क्यपि ऋफ्यः ॥

'६६ ऋम्फत्'। "नो व्यञ्जनस्या०" ४।२।४५ इति नलुकि ऋफति। नलोपं नेच्छन्ति एके, ऋम्फति। "अनातो०" ४।१।६१ इति पूर्वस्य आत्वे ने च आनृम्फ। ऋम्फिता, ऋफितः। "ऋत्तृष०" ४।३।२४ इति क्त्वः वा किन्त्वे ऋफित्वा, ऋम्फित्वा। इकारोपान्त्यो रादिश्चायमित्यन्यः, तन्मते शे नलोपानिष्टौ रिम्फति, रिरिम्फ ॥

'६७ दृफ ६८ दृम्फत उत्क्लेशे'। "मुचादि०" ४।४।९९ इति ने दृम्फति। ददर्फ, दर्फिता, दृफितः। "क्त्वा" ४।३।२९ इति कित्त्वाभावे दर्फित्वा ॥

'६८ दृम्फत्'। "नो व्यञ्जनस्या०" ४।२।४५ इति नलुकि दृफति। ददृम्फ, दृम्फिता। "ऋत्तृष०" ४।३।२४ इति क्त्वः वा कित्त्वे दृफित्वा, दृम्फित्वा ॥

'६९ गुफ ७० गुम्फत् ग्रन्थने'। "मुचादि०" ४।४।९९ इति ने गुम्फति। जुगोफ, गोफिता, गुफितः। "क्त्वा" ४।३।२९ इति कित्त्वाभावे गोफित्वा। न्युपान्त्य इति व्यावृत्तिबलाद् "ऋत्तृष०" ४।३।२४ इति "वौ व्यञ्जनादेः०" ४।३।२५ इति चात्र वा न कित्त्वम् ॥

'७० गुम्फत्'। "नो व्यञ्जनस्या०" ४।२।४५ इति नलुकि गुफति। जुगुम्फ, गुम्फिता। "ऋत्तृष०" ४।३।२४ इति क्त्वः वा कित्त्वे गुफित्वा, गुम्फित्वा॥

## अथ भान्ताः षट् सेटश्च ॥

'७१ उभ ७२ उम्भत् पूरणे'। "मुचादि०" ४।४।९९ इति ने उम्भति। उवोभ, उभिता, उभितः। "नाम्युपान्त्य०" ५।१।५४ इति के उभौ। उणादौ "उभेर्द्वत्रौ च" (उ० ६१५) इति औ द्वौ, त्रयः॥

'७२ उम्भत्'। "नो व्यञ्जनस्या०" ४।२।४५ इति नलुकि उभति। "गुरुनाम्यादेः०" ३।४।४८ इति परोक्षाया आमि उम्भाञ्चकार। उम्भिता, उम्भित्वा॥

'७३ शुभ ७४ शुम्भत् शोभार्थे'। "मुचादि०" ४।४।९९ इति ने शुम्भति। शुशोभ, अशोभीत्, शोभिता। "नाम्युपान्त्य०" ५।१।५४ इति के शुभम्। भिदाद्यङि निपातनात् शोभा। उणादौ "ऋज्यजि०" (उ० ३८८) इति किति रे शुभ्रम्। शुभि दीप्तौ [ १।९४७ ], शोभते, "द्युद्भ्योऽद्यतन्याम्" ३।३।४४ इति वा आत्मनेपदे अशोभिष्ट; पक्षे "शेषात्०" ३।३।१०० इति परस्मैपदे द्युताद्यङि अशुभत्॥

'७४ शुम्भत्'। "नो व्यञ्जनस्या०" ४।२।४५ इति नलुकि शुभति। शुशुम्भ, शुम्भिता, शुम्भित्वा। शुम्भ भाषणे च [ १।३७७ ], इत्यर्थभेदात्पाठः, शुम्भति। भ्वादौ सुम्भ निशुम्भनाद्यर्थौ दन्त्यादिरित्येके॥

'७५ दृभत् ग्रन्थे'। दृभति, ददर्भ, दर्भिता। "क्त्वा" ४।३।२९ इति कित्त्वाभावाद् गुणे दर्भित्वा। ऐदित्त्वात्क्तयोर्नेट्, दृब्धः, दृब्धवान्। घञि सन्दर्भः। उणादौ "दृभिचपेः स्वरान्नोऽन्तश्च" (उ० ८४१) इति ऊः, दृम्भूः सर्पः॥

'७६ लुभत् विमोहने'। विमोहनं व्याकुलीकरणम्। लुभति, लुलोभ। "सहलुभेच्छ०" ४।४।४६ इति वेटि लोब्धा, लोभिता। "लुभ्यञ्चेः०" ४।४।४४ इति क्तयोरिटि विलुभिताः केशाः, विलुभितवान्। धातूनामनेकार्थत्वाद् विमोहा-दन्यत्र वेटत्वान्नेट्, लुब्धः, लुब्धवान्। लुभच् गार्द्ध्ये [ ३।५५ ], लुभ्यति, अलुभत्॥

## अथ रान्ता अष्टौ सेटश्च ॥

'७७ कुरत् शब्दे'। कुरति, चुकोर, कोरिता, कुरितः। "कुरुच्छुरः" २।१।६६ इत्यत्र कुग एव ग्रहणात् "भ्वादेः०" २।१।६३ इति दीर्घे कूर्यते,

आशिषि कूर्यात् । अस्याऽपि न दीर्घ इत्यके, कुर्यात् । उणादौ "मृग्रुन्दि०" (उ० ३९९) इति किति अरे कुररः जलपक्षी । "कितिकुडिकुरि०" (उ० ५१८) इति किति अवे कुरवः वृक्षः ॥

'७८ क्षुरत् विखनने'। क्षुरति, चुक्षोर, क्षोरिता । "नाम्युपान्त्य०" ५।१।५४ इति के क्षुरः ॥

'७९ खुरत् छेदने च'। छेदनं विलेखनम् । चकारात् विखनने । खुरति, चुखोर, खोरिता । "नाम्युपान्त्य०" ५।१।५४ इति के खुरः । क्रोडादित्वाद् "असहनञ्०" २।४।३८ इति ङ्यभावे कल्याणखुरा ॥

'८० घुरत् भीमार्थशब्दयोः'। घुरति, जुघोर, घोरिता । घञि घोरः । उणादौ "इदुदुपान्त्याभ्यां०" (उ० १७) इति किदः, सरूपद्वित्वं पूर्वस्य चोदन्तः, घुरुघुरः । "जजल०" (उ० १८) इत्यादि निपातनात् पूर्वस्य उदभावे घुर्घुरः अनुकरणशब्दो ॥

'८१ पुरत् अग्रगमने'। पुरति, पुपोर, पोरिता, पुरितः । "नाम्युपान्त्य०" ५।१।५४ इति के पुरम् । क्विपि पूः । पुरुष इति तु "विदिपृभ्यां०" (उ० ५५८) इति किति उषे पृणातेः । पुरुः इत्यपि अस्यैव "पृकाहृषि०" (उ० ७२९) इति किति औ ॥

'८२ मुरत् संवेष्टने'। मुरति, मुमोर, मोरिता, मुरितः । "नाम्युपान्त्य०" ५।१।५४ इति के मुरः । उणादौ "इदुदुपान्त्याभ्यां०" (उ० १७) इति किदः, सरूपद्वित्वं पूर्वस्य चोदन्तः, मुरुमुरः अनुकरणशब्दः । "जजल०" (उ० १८) इत्यादि निपातनात् पूर्वस्य उदभावे मुर्मुरः ॥

'८३ सुरत् ऐश्वर्यदीप्त्योः'। सुरति । अषोपदेशत्वात् षत्वाभावे सुसोर । षोपदेशोऽयमित्यके, तन्मते "नाम्यन्तस्था०" २।३।१५ इति षत्वे सुषोर । सोरिता । "नाम्युपान्त्य०" ५।१।५४ इति के सुरः देवः, सुरा मद्यम् । उणादौ "इदुदुपान्त्याभ्यां" (उ० १७) इति किदः, सरूपद्वित्वं पूर्वस्य चोदन्तः सुरुसुरः अनुकरणशब्दः ॥

'८४ स्फर ८५ स्फलत् स्फुरणे'। चलने इत्येके । स्फरति, पस्फार, स्फरिता । अचि स्फरः । कुटादिरयमित्यन्ये, तत्पाठबलाच्च णके वृद्ध्यभावे स्फरकः । घञि स्फारः ॥

## अथ लान्तास्त्रयोदश सेटश्च ॥

'८५ स्फलत्' । स्फलति, पस्फाल, स्फलिता । णौ क्ते आस्फालितः । अनटि आस्फालनम् । कुटादिरयमित्येके, तत्पाठबलाच्च णके वृद्ध्यभावे स्फलकः ॥

'८६ किलत् श्वैत्यक्रीडनयोः' । किलति, चिकेल, केलिता, किलितः । उणादौ "किलेः कित्" (उ० ५७५) इति आसे किलासः सिध्मम् । किलाट इति तु किरः "किरो लश्च वा" (उ० १४७) इति आटे [1]किरतेः । "इदुदुपान्त्याभ्यां०" (उ० १७) इति किदः, सरूपद्वित्वं पूर्वस्य चेदन्तः, किलिकिलः अनुकरणशब्दः । "बहुलं गुणवृद्धी चादेः" (उ० १९) इति पूर्वस्य गुणवृद्ध्योश्च केलिकिलः, कैलिकिलश्च हासशीलः । "किलिपिलि०" (उ० ६०८) इति औ केलिः ॥

'८७ इलत् गतिस्वप्नक्षेपणेषु' । इलति, इयेल, एलिता । "नाम्युपान्त्य०" ५।१।५४ इति के इला । लिहाद्यचि घञि वा एलः । स्त्रियाम् एला । णौ एलयति ॥

'८८ हिलत् हावकरणे' । हिलति, जिहेल, हेलिता । णौ अचि हेला । उणादौ "इदुदुपान्त्याभ्यां०" (उ० १७) इति किद् अः, स्वरूपद्वित्वं पूर्वस्य चेदन्तः, हिलिहिलः अनुकरणशब्दः । बहुलं "गुणवृद्धी चादेः" (उ० १९) हेलिहिलः, हैलिहिलश्च विलासशीलः ॥

'८९ शिल ९० सिलत् उञ्छे' । शिलति, शिशेल, शेलिता, शिलितः । "नाम्युपान्त्य०" ५।१।५४ इति के शिलम् । स्त्रियामपि शिला । शेलुः इति तु शेतेः लौ ॥

'९० सिलत्' । सिलति । अषोपदेशत्वात् षत्वाभावे सिसेल । षोपदेशोऽयमित्येके, तन्मते "नाम्यन्तस्था०" २।३।१५ इति षत्वे सिषेल । सेलिता, सिलितः । "नाम्युपान्त्य०" ५।१।५४ इति के सिलम् ॥

'९१ तिलत् स्नेहने' । तिलति, तितेल, तेलिता । "नाम्युपान्त्य०" ५।१।५४ इति के तिलः । तिलण् स्नेहने [ ९।११९ ], तेलयति ॥

'९२ चलत् विलसने' । चलति, चचाल, चलिता; चलती, चलन्ती स्त्री कुले वा । णौ कम्पने एव घटादित्वाद् ह्रस्वाभावे चालयती । चल कम्पने

१. किलाटः इति मु० ॥

[ १।९७२ ], ज्वलादित्वाद् वा णे चालः चलः; "श्यशवः" २।१।११६ इति नित्यमन्तादेशे चलन्ती स्त्री कुले वा; णौ घटादित्वाद् ह्रस्वे चलयति । चलण् भृतौ [ ९।१३४ ], चालयति ॥

'९३ चिलत् वसने' । चिलति, चिचेल, चेलिता । लिहाद्यचि चेलम् ॥

'९४ विलत् वरणे' । [1]दन्त्यौष्ठ्यादिः । विलति, विवेल, वेलिता । घञि आवेलः । णौ अचि वेला ॥

'९५ विलत् भेदने' । ओष्ठ्यादिः । विलति, विवेल, वेलिता । "नाम्युपान्त्य०" ५।१।५४ इति के विलम्, आविलम् । उणादौ "विलिभिलि०" ( उ० ३४० ) इति किति ने [2]विलमं प्रकाशम् । "निघृपी०" ( उ० ५११ ) इति किति वे [3]विल्वम् । विलाल इति तु विडालस्य लत्वे ॥

'९६ णिलत् गहने' । "पाठे०" २।३।७७ इति णस्य नत्वे निलति । णोपदेशत्वाद् "अदुरुपसर्गा०" २।३।६७ इति नस्य णत्वे प्रणिलति । निनेल, नेलिता ॥

'९७ मिलत् श्लेषणे' । मिलति, मिमेल, मेलिता, मिलितः । लिहाद्यचि मेला ॥

## अथ शान्ताः षडनिटश्च ॥

'९८ स्पृशंत् संस्पर्शे' । स्पृशति, पस्पर्श । "स्पृशमृश०" ३।४।५४ इति वा सिचि "स्पृशादि०" ४।४।११२ इति वा स्वरात्परः अः, अस्प्राक्षीत्, अस्पार्क्षीत्; पक्षे "हशिटो०" ३।४।५५ इति सकि अस्पृक्षत् । अनुस्वारेत्त्वान्नेट्, स्प्रष्टा, स्पर्ष्टा, स्पृष्टः । "पदरुज०" ५।३।१६ इति कर्तरि घञि स्पर्शः व्याधिः । "स्पृशोऽनुदकात्" ५।१।१४९ इति क्विपि "ऋत्विज्-दिश्०" २।१।६९ इति शस्य पापवादे गे घृतस्पृक्; उदकात्तु "कर्मणोऽण्" ५।१।७२ इति अणि उदकस्पर्शः । उणादौ "स्पृशेः श्वः पार् च" ( उ० ५२३ ) इति श्वे पार्श्वम् । पर्शूः इति तु "प्रः शुः" ( उ० ८२५ ) इति शौ "उतोऽप्राणिनश्चा०" २।४।७३ इति ऊङि च पृणातेः ॥

---

१. दन्त्यो' इति मु० ॥

२. विलत् वरणे, विलमं प्रकाशः इति उ वि. ॥

३. विल्वः मालूरः इति उ. वि. । मालूरः श्रीफलो विल्वः । ( अ. चिं ४।२०१ ) ॥

"९९ रुशं १०० रिशंत् हिंसायाम्'। रुशति, रुरोश। "हशिटो०" ३।४।५५ इति सकि अरुक्षत्। अनुस्वारेत्त्वान्नेट्, रोष्टा, रुष्टः॥

'१०० रिशंत्'। रिशति, रिरेश। "हशिटो०" ३।४।५५ इति सकि अरिक्षत्। अनुस्वारेत्त्वान्नेट्, रेष्टा, रिष्टः॥

'१०१ विशंत् प्रवेशने'। विशति। "निविशः" ३।३।२४ इति आत्मनेपदे "वाऽभिनिविशः" २।२।२२ इति आधारस्य कर्मत्वे ग्राममभिनिविशते। विवेश। "हशिटो०" ३।४।५५ इति सकि अविक्षत्। अनुस्वारेत्त्वान्नेट्, वेष्टा, प्रविष्टः। क्वसौ "गमहन०" ४।४।८३ इति वेटि विविशिवान्, विविश्वान्। "पदरुज०" ५।३।१६ इति घञि वेशः वेश्यावाटः। "अजातेः शीले" ५।१।१५४ इति णिनि संवेशी। "विशपत०" ५।४।८१ इति णमि गेहानुप्रवेशमास्ते, गेहं गेहमनुप्रवेशमास्ते। उणादौ "जृविशिभ्यां०" (उ० २१९) इति अन्ते वेशन्तः पल्वलम्। "विष्टपोलप०" (उ० ३०७) इति अपे निपातनात् विष्टपं जगत्। "विशेरिपकु" (उ० ३०९) विशपः राशिः। "निघृपी०" (उ० ५११) इति किति वे विश्वम्॥

'१०२ मृशंत् आमर्शने'। आमर्शनं स्पर्शः। मृशति, परामृशति, ममर्श। "स्पृशमृश०" ३।४।५४ इति वा सिचि "स्पृशादि०" ४।४।११२ इति स्वरात्परे वा अति "व्यञ्जनानाम्०" ४।३।४५ इति वृद्धौ अम्राक्षीत्, अमार्क्षीत्; पक्षे "हशिटो०" ३।४।५५ इति सकि अमृक्षत्। अनुस्वारेत्त्वान्नेट्, म्रष्टा, मर्ष्टा, मृष्टः। "ऋदुपान्त्याद०" ५।१।४१ इति क्यपि मृश्यम्। उणादौ "युयुजि०" (उ० २७७) इति किति आने मृशानः॥

'१०३ लिशं १०४ ऋषैत् गतौ'। लिशति, लिलेश। "हशिटो०" ३।४।५५ इति सकि अलिक्षत्। अनुस्वारेत्त्वान्नेट्, लेष्टा, लिष्टः। घञि लेशः। लिशिच् अल्पत्वे [३।१३४], लिश्यते॥

## अथ षान्तास्त्रयः सेटश्च॥

'१०४ ऋषैत्'। ऋषति। "ऋत्यारुपसर्गस्य" १।२।९ इति आरि प्रार्षति, परार्षति। "अनातो०" ४।१।६९ इति पूर्वस्य आत्वे नेऽन्ते च आनर्ष, आनृषतुः। अर्षिता। "क्त्वा" ४।३।२९ इति [1]कित्त्वाभावे अर्षित्वा। ऐदित्त्वात्

१. कित्त्वक्त्वाभावे इति मु०॥

क्तयोर्नेट्, ऋष्टः, ऋष्टवान् । "ऋदुपान्त्या०" ५।१।४१ इति क्यपि ऋष्यः । उणादौ "ऋपिवृपि०" (उ० ३२१) इति किति अभे ऋषभः । "ऋजिरिषि०" (उ० ५६७) इति किति से ऋक्षः । "नाम्युपान्त्य०" (उ० ६०९) इति किदिः, ऋषिः । "दृमुषि०" (उ० ६५१) इति किति तौ ऋष्टिः खड्गः ॥

'१०५ इषत् इच्छायाम्' । "गमिषद्य०" ४।२।१०६ इति छे इच्छति । इयेष, एषिष्यति । तादौ "सहलुभे०" ४।४।४६ इति वेटि एष्टा, एषिता, इष्ट्वा । "क्त्वा" ४।३।२९ इति किक्त्वाभावाद् गुणे एषित्वा । वेट्त्वात् क्तयोर्नेट्, इष्टः, इष्टवान् । "ऋवर्ण०" ५।१।१७ इति घ्यणि एष्यः । "प्रस्यै-पैष्यो०" १।२।१४ इति ऐत्वे प्रैष्यः । "विन्द्विच्छू०" ५।२।३४ इति निपातनात् उः, एषणशीलः इच्छुः । "नाम्युपान्त्य०" ५।१।५४ इति के इषः आश्व-युजः । "श्रादिभ्यः" ५।३।९२ इति क्तौ इष्यते अनया इति इष्टिः । "मृगये०" ५।३।१०१ इति निपातनात् शे इच्छा । "करणाधारे" ५।३।१२९ इति अनटि एषणः । स्त्रियां गौरादित्वाद् ङ्याम् एषणी वैद्यशलाका । "क्रुत्संपदा०" ५।३।१२४ इति क्विपि इट् । उणादौ "इण्यशि०" (उ० ७७) इति तककि इष्टका । "मस्जीष्य०" (उ० ८२६) इति सुकि इक्षुः । इषच् गतौ [३।२५], अन्विष्यति । इशप् आभीक्ष्ण्ये [८।५२], इष्णाति ॥

'१०६ मिषत् स्पर्धायाम्' । मिषति, मिमेष, मेषिता, उन्मिषितम् । "नाम्युपान्त्य०" ५।१।५४ इति के अनिमिषः देवः । आमिषम् । लिहाद्यचि मेषः । घञि निमेषः, उन्मेषः ॥

## अथ हान्ताः पञ्च सेटश्च ॥

'१०७ वृहौत् उद्यमे' । उद्यमः उद्धरणम्' । वृहति, ववर्ह । औदित्त्वात् वेट्, वर्हिता, वर्ढा । वेट्त्वात् क्तयोर्नेट्, वृढः, परिवृढः, वृढवान् । घञि उद्वर्हः, वर्हः । वृह वृद्धौ [१।५५८], वर्हति ॥

'१०८ तृहौ १०९ तृंहौ ११० स्तृहौ १११ स्तृंहौत् हिंसायाम्' । तृहति, ततर्ह । औदित्त्वाद् वेट्, अतर्हीत् । "हशिटो०" ३।४।५५ इति सकि अतृक्षत् । तर्हिता, तर्ढा । वेट्त्वात् क्तयोर्नेट्, आतृढः, आतृढवान् ॥

'१०९ तृंहौ' । "नो व्यञ्जनस्या०" ४।२।४५ इति नलुकि तृहति । ततृंह । औदित्त्वाद् वेट्, अतृंहीत्, अताङ्क्षीत् । तृंहिता, तृण्ढा । वेट्त्वात् क्तयोर्नेट्, "नो व्यञ्जनस्या०" ४।२।४५ इति नलुकि तृढः, तृढवान् ॥

'११० स्तृहौ'। स्तृहति, तस्तर्ह। औदित्वाद् वेट्, स्तर्हिता, स्तर्ढा। वेट्त्वात् क्तयोर्नेट्, स्तृढः, स्तृढवान्। पोपदेशोऽयमित्येके, तन्मते "णिस्तोरेवा०" २।३।३७ इति षत्वे तिष्टर्हयिषति ॥

'१११ स्तृंहौत्'। "नो व्यञ्जनस्या०" ४।२।४५ इति नलुकि स्तृहति तस्तृंह। औदित्त्वात् वेट्, स्तृंहिता, स्तृण्ढा। वेट्त्वात् क्तयोर्नेट्, स्तृढः, स्तृढवान्। तृहती, तृहन्ती स्त्री कुले वा। अयमपि पोपदेश इत्यन्ये। तृहप् हिंसायाम् [ ६।२३ ], "तृहः श्नादी०" ४।३।६२ इति तृणेढि ॥

## अथ तुदाद्यन्तर्गणः कुटादिः, तत्र प्रसिद्ध्यनुरोधेनादौ—

'११२ कुटत् कौटिल्ये'। कुटति। "कुटादेः०" ४।३।१७ इति ङित्त्वाद् गुणाभावे कुटिता, कुटितुम्, कुटित्वा। ञ्णिति तु ङित्त्वाभावाद् गुणे उच्चुकोट, उत्कोटयति, उत्कोटकः, उदकोटि, उत्कोटः। "णिद्वान्त्यो णव्" ४।३।५८ अहम् उच्चुकोट, णित्त्वाभावे तु ङित्त्वात् न गुणः, अहम् उच्चुकुट। "नाम्युपान्त्य०" ५।१।५४ इति के कुटः, उत्कुटः। उणादौ "भुजिकुति०" (उ० ३०५) इति किति अपे कुटपः प्रस्थचतुर्भागः, "ऋच्छिचटि०" (उ० ३९७) इति अरे कुटरः मर्कटः, बाहुलकात् गुणे कोटरः छिद्रम्। "घसिवशि०" (उ० ४१९) इति ईरे कुटीरम्। "कल्यनि०" (उ० ४८१) इति इले कुटिलम्। "रुचिकुटि०" (उ० ५०२) इति मलकि कुड्मलः विष्णुः मुकुलं च। "कृशृकुटि०" (उ० ६१९) इति वा णिदिः, कोटिः, कुटिः ॥

## अथोदन्तावनिटौ च ॥

'११३ गुंत् पुरीषोत्सर्गे'। गुवति, जुगाव। अनुस्वारेत्त्वान्नेट्, "कुटादेः०" ४।३।१७ इति ङित्त्वाद् गुणाभावे गुता, गुतम्, गुतव्यम्। "सिचि परस्मै०" ४।३।४४ इति वृद्ध्यभावे न्युगुषीत्। "दुगोरू च" ४।२।७७ इति क्तयोस्तस्य नत्वे गूनः, गूनवान्। उणादौ "पथयूथ०" (उ० २३१) इति [१]थे निपातनाद् गूथम्। दीर्घान्तः सेट् चाऽयमित्यन्ये, तन्मते न्यगुवीत्, गुविता, गुवितव्यम्। गुङ् शब्दे [ १।५९१ ], गवते ॥

'११४ ध्रुंत् गतिस्थैर्ययोः'। ध्रुवति, दुध्राव। अनुस्वारेत्त्वान्नेट्, "कुटादेः०" ४।३।१७ इति ङित्त्वाद् गुणाभावे ध्रुता। "सिचि परस्मै०" ४।४।४४ इति

१ मु० नास्ति ॥

वृद्ध्यभावे अध्रुवीत् । अचि ध्रुवः । "कुत्सिता०" ७।३।३३ इति कपि ध्रुवकः । "गुपिमिथि०" ( उ० ४८३ ) इति इले ध्रुविलः ऋषिः । सेट् अयमित्यन्ये, तन्मते न्यध्रुवीत्, ध्रुविता । किति "उवर्णात्" ४।४।५८ इति नेट्, ध्रुतः । ङित्त्वेन कित्त्वं बाध्यते [ न्या० ७ ], इति [1]नये ध्रुवितः । ध्रुं स्थैर्ये च [१।१६], ध्रवति ॥

## अथोदन्तौ सेटौ च ॥

'११५ णूत् स्तवने' । "पाठे०" २।३।९७ इति ने नुवति, नुनाव, नुविता, नुवितुम् । णोपदेशत्वात् "अदुरुपसर्गा०" २।३।७७ इति णत्वे किति "उवर्णात्" ४।४।५८ इति इडभावे प्रणूतः, प्रणूतवान् । अन्ये तु ङित्त्वेन कित्त्वस्य बाधनात् इट्प्रतिषेधं नेच्छन्ति; नुवितः, प्रणुवितः । एवं धुवित इति उत्तरत्राऽपि दृश्यम् ॥

'११६ धूत् विधूनने' । धुवति, दुधाव, धुविता, धुवितव्यम् । किति "उवर्णात्" ४।४।५८ इति इडभावे धूतः, धूतवान् । अनटि निधुवनम् । उणादौ "ध्रुधून्दि०" ( उ० २९ ) इति अके धुवकं धूननम्, धुवका आवपनविशेषः । धूगूट् कम्पने [ ४।६], धूनुते, धूनोति । धूगूश् कम्पने [ ८।१३ ], धुनीते, धुनाति । धूगूण कम्पने [ ९।३७९ ], "युजादेः०" ३।४।१८ इति वा णिचि धूनयति, पक्षे धवते, धवति ॥

## अथ चान्तौ सेटौ च ॥

'११७ कुचत् संकोचने' । कुचति, चुकोच । "कुटादेः०" ४।३।१७ इति ङित्त्वाद् गुणाभावे कुचिता, कुचितुम्, संकुचितः । "नाम्युपान्त्य०" ५।१।५४ इति के कुचौ । ञ्णिति तु ङित्त्वाभावे णौ कोचयति । घञि क्ते सेट्त्वात् कत्वाभावे संकोचः । कुच संपर्चनादौ [ १।९६१ ], संकोचति ॥

'११८ व्यचत् व्याजीकरणे' । "व्यचोऽनसि" ४।१।८२ इति य्वृति विचति । "ज्याव्येव्यधि०" ४।१।७१ इति पूर्वस्य इत्त्वे विव्याच । "कुटादेः०" ४।३।१७ इति ङित्त्वे विचिता, विचितुम् । उणादौ "अस्" ( उ० ९५२ ) इति असि य्वृदभावे उरुव्यचाः, पितृव्यचाः वृश्चिकः ॥

---

१. न्याये इति प० प्रतौ ।

## अथ जान्तः सेट् च ॥

'११९ गुजत् शब्दे'। गुजति, जुगोज। "कुटादेः०" ४।३।१७ इति ङित्त्वाद् गुणाभावे गुजिता, गुजितुम्, गुजितः, अगुजीत्। ञ्णिति तु ङित्त्वाभावाद् गुणे अगोजि, गोजयति। गुज अव्यक्ते शब्दे [ १।१५२ ], गोजति ॥

## अथ तान्ता अष्टौ सेटश्च ॥

'१२० घुटत् प्रतीघाते'। घुटति, जुघोट। "कुटादेः०" ४।३।१७ इति ङित्त्वाद् गुणाभावे घुटिता, घुटितुम्, घुटितः। "तिकृतौ०" ५।१।७१ इति अके घुटिका गुल्फास्थि। ञ्णिति तु ङित्त्वाभावाद् गुणे अघोटि, घोटकः। गादिः डान्तश्चायमित्यन्ये, गुडति। "नाम्युपान्त्य०" ५।१।५४ इति के अयोगुडः ॥

'१२१ चुट १२२ छुट १२३ त्रुटत् छेदने'। चुटति, चुचोट "कुटादेः०" ४।३।१७ इति ङित्त्वाद् गुणाभावे चुटिता, चुटितम्। ञ्णिति तु ङित्त्वाभावाद् गुणे घञि चोटः। णौ नन्द्याद्यने उच्चोटनः। णके चोटकः ॥

'१२२ छुट'। छुटति, चुच्छोट। "कुटादेः०" ४।३।१७ इति ङित्त्वाद् गुणाभावे छुटिता, छुटितुम्। ञ्णिति तु ङित्त्वाभावाद् गुणे अच्छोटि। भावे इति णके छोटिका। णौ छोटयति ॥

'१२३ त्रुटत्'। "भ्रासभ्लास०" ४।२।३६ इति वा श्ये त्रुट्यति, त्रुटति, तुत्रोट। "कुटादेः०" ४।३।१७ इति ङित्त्वाद् गुणाभावे त्रुटिता, त्रुटितुम्। ञ्णिति तु ङित्त्वाभावाद् गुणे अत्रोटि, त्रोटकः, त्रोटयति। उणादौ "किलिपिलि०" (उ० ६०८) इति णौ इः, त्रोटिः ॥

'१२४ तुटत् कलहकर्मणि'। तुटति, तुतोट। "कुटादेः०" ४।३।१७ इति ङित्त्वाद् गुणाभावे तुटिता, तुटितुम्। ञ्णिति तु गुणे अतोटि। णके तोटकम्। उणादौ "नाम्युपान्त्य०" (उ० ६०९) इति किद् इः, तुटिः ॥

'१२५ मुटत् आक्षेपप्रमर्दनयोः'। मुटति, मुमोट। "कुटादेः०" ४।३।१७ इति ङित्त्वाद् गुणाभावे मुटिता, मुटितुम्। ञ्णिति तु गुणे अमोटि। णौ मोटयति। णके आमोटकः। मुट प्रमर्दने [ १।२०२ ], मोटति। मुटण् संचूर्णने [ ९।३६ ], मोटयति ॥

'१२६ स्फुटत् विकसने'। स्फुटति, पुस्फोट। "कुटादेः०" ४।३।१७ इति ङित्त्वाद् गुणाभावे अस्फुटीत्, स्फुटिता, स्फुटितुम्। ञ्णिति तु गुणे स्फोटः।

णौ स्फोटयति । "नाम्युपान्त्य०" ५।१।५४ इति के स्फुटः । स्फुट् विसरणे [१।२०९], स्फोटति, अस्फुटत्, अस्फोटीत् । स्फुटि विकसने [ १।६६९ ], स्फोटते ॥

'१२७ पुट १२८ लुठत् संश्लेषणे' । पुटति । "कुटादेः०" ४।३।१७ इति ङित्त्वाद् गुणाभावे पुटिता, पुटितुम् । "नाम्युपान्त्य०" ५।१।५४ इति के पुटः । "जातेरयान्त०" २।४।५४ इति ङ्यां पुटी । ञ्णिति तु गुणे घञि पोटा, णौ अचि वा । पुटण् संचूर्णने भासार्थो वा [ ९।३५, २१३ ], पोटयति ॥

## अथ ठान्तः सेट् च ॥

'१२८ लुठत्' । लुठति, लुलोठ । "कुटादेः०" ४।३।१७ इति ङित्त्वाद् न गुणः, लुठिता, लुठितुम् । ञ्णिति तु गुणे अलोठि लोठयति । डान्तोऽयमित्यन्ये, लुडति, लुलोड, लुडिता । लुठ उपघाते [ १।२२० ], लोठति । लुठि प्रतीघाते [ १।९४२ ], लोठते ॥

## अथ डान्ताश्चतुर्दश सेटश्च ॥

'१२९ कृडत् घसने' । घसनं भक्षणम् । घनत्वे इत्यन्ये, घनत्वं सान्द्रत्वम् । कृडति, चकर्ड । "कुटादेः०" ४।३।१७ इति ङित्त्वाद् न गुणः, कृडिता, कृडितुम् । ञ्णिति तु गुणे अकर्डि, कर्डयति ॥

'१३० कुडत् बाल्ये च' । चकाराद् घसने । कुडति, चुकोड । "कुटादेः०" ४।३।१७ इति ङित्त्वाद् न गुणः, कुडिता, कुडितुम् । ञ्णिति तु गुणे अकोडि, कोडयति । उणादौ "पतितमि०" ( उ० ९८ ) इति अङ्गे कुडङ्गः । "किति-कुडि०" ( उ० ५१८ ) इति अवे कुडवः मानम् ; लत्वे कुलवः । कुडुङ् दाहे [ १।६९० ], कुण्डते । कुडुण् रक्षणे [ ९।६३ ], कुण्डयति ॥

'१३१ गुडत् रक्षायाम्' । गुडति, जुगोड । "कुटादेः०" ४।३।१७ इति ङित्त्वाद् न गुणः, गुडिता, गुडितुम् । "नाम्युपान्त्य०" ५।१।५४ इति के गुडः, स्त्रियामपि गुडा हस्तिसंनाहः । "तिकृतौ०" ५।१।७१ इति अके लत्वे च गुलिका, गुडाद् वा ह्रस्वार्थे कपि । ञ्णिति तु गुणे अगोडि । णके गोलकं युग्मम् । घञि भूगोलः । गुडुण् वेष्टने च [ ९।६४ ], गुण्डयति ॥

'१३२ जुडत् बन्धे'। जुडति, जुजोड। "कुटादेः०" ४।३।१७ इति ङिच्चाद् न गुणः, जुडिता, जुडितुम्। ञ्णिति तु गुणे अजोडि, जोडयति। जुडत् गतौ [ ५।४२ ], जोडिता, जोडितुम् ॥

'१३३ तुडत् [1]तोडने'। तोडनं भेदः। तुडति, तुतोड। "कुटादेः०" ४।३।१७ इति ङिच्चाद् गुणाभावे तुडिता, तुडितुम्। ञ्णिति तु गुणे अतोडि, तोडयति। उणादौ "नाम्युपान्त्य०" ( उ० ६०९ ) इति किद् इः, तुडिः ॥

'१३४ लुड १३५ थुड १३६ स्थुडत् संवरणे'। लुडति, लुलोड। थुडति, तुथोड। स्थुडति, तुस्थोड। "कुटादेः०" ४।३।१७ इति ङिच्चाद् न गुणः, लुडिता, लुडितुम्; थुडिता, थुडितुम्; स्थुडिता, स्थुडितुम्। ञ्णिति तु गुणे अलोडि, लोडयति; अथोडि, थोडयति; अस्थोडि, स्थोडयति। "नाम्युपान्त्य०" ५।१।५४ इति के स्थुलं पटकुटी ॥

'१३७ वुडत् उत्सर्गे च'। चकारात् संवरणे। वुडति, वुवोड। "कुटादेः०" ४।३।१७ इति ङिच्चाद् न गुणः, वुडिता, वुडितुम्। ञ्णिति तु गुणे अवोडि, वोडयति ॥

'१३८ व्रुड १३९ भ्रुडत् संघाते'। संवरणेऽप्यन्ये। व्रुडति, वुव्रोड। भ्रुडति, बुभ्रोड। "कुटादेः०" ४।३।१७ इति ङिच्चाद् न गुणः, व्रुडिता, व्रुडितुम्; भ्रुडिता, भ्रुडितुम्। ञ्णिति तु गुणे अव्रोडि, व्रोडयति; अभ्रोडि, भ्रोडयति ॥

'१४० दुड १४१ हुड १४२ त्रुडत् निमज्जने'। दुडति, दुदोड। हुडति, जुहोड। त्रुडति, तुत्रोड। "कुटादेः०" ४।३।१७ इति ङिच्चाद् न गुणः, दुडिता दुडितुम्; हुडिता, हुडितुम्; त्रुडिता, त्रुडितुम्। ञ्णिति तु गुणे अदोडि, दोडयति; अहोडि, होडयति; अत्रोडि, त्रोडयति। घञि दोडः, लत्वे स्त्रियामापि दोला; होडः। उणादौ "नाम्युपान्त्य०" ( उ० ६०९ ) इति किद् इः, हुडिः। "पृकाहृपि०" ( उ० ७२९ ) इति किद् उः, हुडुः मेषः। हुडिः संघातेऽपि इत्यन्ये ॥

## अथ णान्तः सेट् च ॥

'१४३ चुणत् छेदने'। चुणति, चुचोण। "कुटादेः०" ४।३।१७ इति ङिच्चाद् न गुणः, चुणिता, चुणितुम्। ञ्णिति तु गुणे अचोणि, चोणयति ॥

---

१. तोदने इति मु० ॥

## अथ पान्तः सेट् च ॥

'१४४ डिपत् क्षेपे'। डिपति, डिडेप। "कुटादेः०" ४।३।१७ इति ङित्त्वाद् न गुणः, डिपिता, डिपितुम्। ञ्णिति तु गुणे अडेपि, डेपयति। "आसुयु०" ५।१।२० इति घ्यणि डेप्यम्। डिपच् क्षेपे [ ३।५२ ], डिप्यति, डेपिता। डिपण् क्षेपे [ ९।१०१ ], डेपयति। डिपिण् संघाते [९।२६४], डेपयते ॥

## अथ रान्तौ सेटौ च ॥

'१४५ छुरत् छेदने'। छुरति, चुच्छोर। आशिषि "कुरुच्छुरः" २।१।६६ इति दीर्घप्रतिषेधे छुर्यात्। "कुटादेः०" ४।३।१७ इति ङित्त्वाद् न गुणः, छुरिता, छुरितुम्, आच्छुरितुम्। "नाम्युपान्त्य०" ५।१।५४ इति के छुरः। "तिकृतौ०" ५।१।७१ इति अके छुरिका। ञ्णिति तु गुणे अच्छोरि, छोरयति ॥

'१४६ स्फुरत् स्फुरणे'। चलने इत्यन्ये। स्फुरति। "निर्नेः०" २।३।५३ इति वा षत्वे निःष्फुरति, निःस्फुरति; निष्फुरति, निस्फुरति। "वेः" २।३।५४ विष्फुरति, विस्फुरति। विपूर्वात् णौ "चिस्फुरोः०" ४।२।१२ इति वा सन्ध्यक्षरस्य आत्वे विष्फारयति, विष्फोरयति, विस्फारयति, विस्फोरयति। घञि "स्फुरस्फुलोः०" ४।२।४ इति आत्वे विष्फारः, विस्फारः। णवि पुस्फोर। "कुटादेः०" ४।३।१७ इति ञ्णितोऽन्यस्य ङित्त्वाद् न गुणः, स्फुरिता, स्फुरितुम्, स्फुरितः। "नाम्युपान्त्य०" ५।१।५४ इति के स्फुरः, सस्फुरः। क्तौ स्फूर्तिः ॥

## अथ लान्तः सेट् च ॥

'१४७ स्फुलत् संचये च'। चकारात् स्फुरणे। चलने इत्यन्ये। स्फुलति। "निर्नेः०" २।३।५३ इति वा षत्वे निःष्फुलति, निःस्फुलति; निष्फुलति, निस्फुलति। "वेः" २।३।५४ विष्फुलति, विस्फुलति। घञि "स्फुरस्फुलोः०" ४।२।४ इति सन्ध्यक्षरस्य आत्वे विष्फालः, विस्फालः। विपूर्वात् णिगि विष्फोलयति विस्फोलयति। ञ्णितोऽन्यस्य "कुटादेः०" ४।३।१७ इति ङित्त्वात् न गुणः, स्फुलिष्यति, स्फुलितः। उणादौ "स्फुलिकलि०" ( उ० १०२ ) इति इङ्गकि स्फुलिङ्गः ॥

## अथ आत्मनेपदिषु उदन्तोऽनिट् च ॥

'१४८ कुंङ् १४९ कूङत् शब्दे'। कुवते, चुकुवे। यङि चोकूयते। "कुटादेः०" ४।३।१७ इति ञ्णितोऽन्यस्य ङित्त्वाद् न गुणः, अनुस्वारेत्त्वान्नेट्, कुता, कुतम्, कुतः ॥

## अथोदन्तः सेट् च ॥

'१४९ कूङ्त्' । कुवते, चुकुवे । "कुटादेः०" ३।४।१७ इति ञ्णितोऽन्यस्य ङित्त्वाद् न गुणः, कुविता, कुवितुम् । क्तिति "उवर्णात्" ४।४।५८ इति नेट्, कूतः, कूतवान्, कूत्वा, आकूतम् ॥

## अथ रान्तः सेट् च ॥

'१५० गुरैति उद्यमे' । गुरते, जुगुरे । "कुटादेः०" ३।४।१७ इति ङित्त्वाद् न गुणः, गुरिता, गुरितुम् । ऐदित्त्वात् क्तयोर्नेट्, गूर्णः, गूर्णवान् । ञ्णिति तु गुणे "वाऽपगुरो णमि" ४।२।५ इति सन्ध्यक्षरस्य वा आत्वे अपगारमपगारम्, अपगोरमपगोरम् । णौ आगोरयति । आगूरयति इति तु गूर्यतेः ॥

वृत् कुटादिः । कुटादिः तुदाद्यन्तर्गणः वर्तितः संपूर्ण इत्यर्थः ॥

## अथ प्रकृतवर्णक्रमेण ऋदन्तास्त्रयोऽनिटश्च ॥

'१५१ पृंङ्त् व्यायामे' । व्यायाम उद्योगः । "इङितः०" ३।३।२२ इति आत्मनेपदे "रिः शक्या०" ४।३।११० इति रौ इयि व्याप्रियते । व्यापप्रे । अनुस्वारेत्त्वान्नेट्, पर्ता, पर्तुम्, व्यापृतः । "हनृतः०" ४।४।४९ इति इटि व्यापरिष्यते । घञि व्यापारः ॥

'१५२ दृंङ्त् आदरे' । आद्रियते, आदद्रे । अनुस्वारेत्त्वान्नेट्, आदर्ता, आदृतः, प्रदृतः । "हनृतः०" ४।४।४९ इति इटि आदरिष्यते । "ऋस्मिपूङ्०" ४।४।४८ इति सनि इटि दिदरिषते । "दृवृग्०" ५।१।४० इति क्यपि आदृत्यः । "पुरन्दर०" ५।१।११४ इति णौ खे निपातनात् पुरो दारयति पुरन्दरः शक्रः, भगन्दरः रोग । "जीणृ०" ५।२।७२ इति इनि आदरशीलः आदरी । "युवर्ण०" ५।३।२८ इति अलि आदरः । दर्भ इति तु "गृदृरमि०" (उ० ३२७) इति मे दृणातेः । उणादौ "दृमुपि०" (उ० ६५१) इति किति तौ दृतिः भस्त्रा ॥

'१५३ धृंङ्त् स्थाने' । धारणे इत्यन्ये । ध्रियते, दध्रे । अनुस्वारेत्त्वान्नेट्, धर्ता, धृतः । "हनृतः०" ४।४।४९ इति इटि धरिष्यते । "ऋस्मिपूङ्०" ४।४।४९ इति सनि इटि दिधरिषते । "ऋवर्ण०" ५।१।१७ इति घ्यणि धार्यः । "न्यायावाय०" ५।३।१३४ इति आधारे घञि आधारः । धृंग् धारणे [१।८८७], धरते, धरति ॥

## अथ जान्ताश्चत्वारः ॥

'१५४ ओविजैति भयचलनयोः'। उद्विजते, उद्विविजे। "विजेरिट्" ४।३।१८ इति इटः ङित्त्वाद् न गुणः, उद्विजिता, उद्विजितुम्। ऐदित्त्वात् क्तयोर्नेट्, विग्नः, विग्नवान्; ओदित्त्वात् "सूयत्यादि०" ४।२।७० इति क्तयोस्तस्य नत्वम्। णौ क्ते उद्वेजितः। "व्यञ्जनाद्०" ५।३।१३२ इति करणे घञि वेगः ॥

'१५५ ओलजैङ् १५६ ओलस्जैति व्रीडे'। लजते, लेजे, लजिता। ऐदित्त्वात् क्तयोर्नेट्, ओदित्त्वात् "सूयत्यादि०" ४।२।७० इति क्तयोस्तस्य नत्वे लग्नः, लग्नवान्। नादिः अयमिति [1]चन्द्रः, नग्नः ॥

'१५६ ओलस्जैति'। "सस्य शषौ" १।३।६१ इति शे, तस्य "तृतीयस्तृतीय०" १।३।४९ इति जे लज्जते, ललज्जे, लज्जिता, लज्जितुम्। ऐदित्त्वात् क्तयोर्नेट्, ओदित्त्वात् तस्य नत्वे "संयोगस्यादौ०" २।१।८८ इति सलुकि लग्नः, लग्नवान्। भिदाद्यङि लज्जा। उणादौ "लस्जीर्ष्यि०" (उ० ८२२) इति आलौ लज्जालुः। भ्वादौ युक्तपाठौ अप्येतौ प्रसिद्ध्यनुरोधादिह पठितौ ॥

'१५७ ष्वञ्जित् सङ्गे'। "षः सो०" २।३।९८ इति से "स्वञ्जश्च" २।३।४५ इति षत्वे "नो व्यञ्जनस्य०" ४।२।४५ इति नलुकि परिष्वजते। परोक्षायां तु आदेः एव षत्वे "स्वञ्जेर्नवा" ४।३।२२ इति परोक्षाया वा कित्त्वे परिषस्वजे, परिषस्वञ्जे। परि-नि-विपूर्वस्य "स्तुस्वञ्जश्च०" २।३।४९ इति अड्व्यवाये वा षत्वे पर्यष्वजत, पर्यस्वजत; न्यष्वजत, न्यस्वजत; व्यष्वजत, व्यस्वजत। अनुस्वारेत्त्वान्नेट्, स्वङ्क्ता, स्वङ्क्तुम्, परिष्वक्तः। नञा निर्दिष्टस्य अनित्यत्वाद् इटि अस्वञ्जिष्ट। "जनशो०" ४।३।२३ इति क्त्वः वा कित्त्वे स्वक्त्वा, स्वङ्क्त्वा। घञि परिष्वङ्गः, क्तौ स्वक्तिः, परिष्वक्तिः ॥

## अथ षान्तः सेट् च ॥

'१५८ जुषैति प्रीतिसेवनयोः'। जुषते, जुजुषे, जोषिता, जोषितुम्। ऐदित्त्वात् क्तयोर्नेट्, जुष्टः, जुष्टवान्। "दृवृग्०" ५।१।४० इति क्यपि जुष्यः। क्विपि "सजुषः" २।१।७३ इति निर्देशात् सहस्य से, सस्य रुत्वे सजूः सजुषौ। जुषण् परितर्कणे [ ९।४११ ], "युजादेः०" ३।४।१८ इति वा णिचि जोषयति जोषति ॥

इत्याचार्य श्रीहेमचन्द्रविरचिते स्वोपज्ञधातुपारायणे
तिच्छविकरणस्तुदादिगणः सपूर्णः ॥

---

१. मुद्रिते चान्द्रधातुपाठे तु ओलजी (६।१००) इत्येव पट्यते। (क्षी. त. टि. पृ. २३५)॥

# अथ रुधादयः (६) ॥

अथ रुधादयः श्नविकरणा वर्णक्रमेण प्रदर्श्यन्ते ॥

'१ रुधृंपी आवरणे'। आवरणं व्यापित्वम् । पित्त्वं रुधादित्वज्ञापनार्थम् । ईदित्वात् "ईगितः" ३।३।९५ इति फलवत्कर्तर्यात्मनेपदे "रुधां स्वरात्०" ३।४।८२ इति श्ने "श्नास्त्योः०" ४।२।९० इत्यल्लुकि "ग्नां०" १।३।३९ इति बहुवचनाद् णत्वाऽपवादे ने रुन्द्धे । फलवतोऽन्यत्र "शेषात्०" ३।३।१०० इति परस्मैपदे रुणद्धि । रुरुधे, रुरोध । ऋदित्त्वाद् "ऋदिच्छ्वि०" इति वाऽङि अरुधत्, पक्षे सिचि "व्यञ्जनानाम्०" ४।३।४५ इति वृद्धौ अरौत्सीत् । आत्मनेपदे "धुड्-ह्रस्वात्०" ४।३।७० इति सिज्लुकि अरुद्ध । कर्मकर्तरि "रुधः" ३।४।८९ इति ञिच्प्रतिषेधे अरुद्ध गौः स्वयमेव । "सेः सूद्धाम्०" ४।३।७९ इति सिचो लुकि धो वा रुत्वे च अरुणस्त्वम्, अरुणत् त्वम् । अनुस्वारेत्त्वान्नेट्, रोद्धा, रोद्धुम्, रुद्धः । "नाम्युपान्त्य०" ५।१।५४ इति के रुधः, प्ररुधः । "ग्रहादिभ्यो०" ५।१।५३ इति णिनि अपरोधी, उपरोधी । "समनुव्यवा०" ५।२।६३ इति घिनणि संरोधशीलः संरोधी, अनुरोधी । "उपपीड०" ५।४।७५ इति णमि व्रजोपरोधं गाः सादयति; "तृतीयोक्तं वा" ३।१।५० इति वा समासः । पक्षे व्रजेनोपरोधम्, व्रजे उपरोधम् । उणादौ "शुपीपि०" (उ० ४१६) इति किति इरे रुधिरम् ॥

### अथ चान्तावनिटौ च ॥

'२ रिचृंपी विरेचने'। विरेचनं निःसारणम् । रिङ्क्ते, रिणक्ति, रिरिचे, रिरेच । ऋदित्त्वाद् वाऽङि अरिचत्, अरैक्षीत् । अनुस्वारेत्त्वान्नेट्, रेक्ता, रेक्तुम्, रिक्तः । उणादौ "नीनूरमि०" (उ० २२७) इति किति थे रिक्थम् । रिचण् वियोजने च [९।३८६], "युजादेः०" ३।४।१८ इति वा णिचि रेचयति, रेचति ॥

'३ विचृंपी पृथग्भावे'। विङ्क्ते, विनक्ति, विविचे, विवेच । ऋदित्त्वाद् वाऽङि अविचत्, अवैक्षीत् । आत्मनेपदे तु "धुड्०" ४।३।७० इति सिज्लुकि अविक्त । अनुस्वारेत्त्वान्नेट्, वेक्ता, वेक्तुम्, विविक्तः । घञि "क्तेऽनिटः०" ४।१।१११ इति चस्य के विवेकः ॥

## अथ जान्तोऽनिट् च ॥

'४ युजूंपी योगे'। युङ्क्ते, युनक्ति, युयुजे, युयोज। ऋदित्त्वाद् वाऽङि अयुजत्, अयौक्षीत्। आत्मनेपदे तु "धुड्०" ४।३।७० इति सिज्लुकि अयुक्त। "उत्स्वराद्०" ३।३।२६ इत्यात्मनेपदे उद्युङ्क्ते, प्रयुङ्क्ते, नेह, द्वन्द्वं यज्ञपात्राणि प्रयुनक्ति। यज्ञे यद् यज्ञपात्रं तद्विषयस्यैव युज्यर्थस्य वर्जनाद् इह आत्मनेपदम् एव, रन्धने यज्ञपात्रं प्रयुङ्क्ते, यज्ञे रन्धनपात्रं प्रयुङ्क्ते। अनुस्वारेत्त्वान्नेट्, योक्ता, योक्तुम्, वियुक्तः। युजिच् समाधौ [ ३।१११ ], युज्यते ॥

'५ भिदृंपी विदारणे'। भिन्त्ते, भिनत्ति, बिभिदे, बिभेद। ऋदित्त्वाद् वाऽङि अभिदत्, अभैत्सीत्। आत्मनेपदे तु "धुड्०" ४।३।७० इति सिज्लुकि अभित्त। अनुस्वारेत्त्वान्नेट्, भेत्ता, भेत्तुम्। "रदाद्०" ४।२।६९ इति क्तयोस्तस्य नत्वे भिन्नः, भिन्नवान्। भित्तं शकलम् [ ४।२।८१ ], भिन्नम् अन्यत्। "कुप्यभिद्य०" ५।१।३९ इति क्यपि निपातनाद् भिनत्ति कूलानि इति भिद्यो नदः। "कर्मणोऽण्" ५।१।७२ इत्यणि काष्ठभेदः। "असरूपो०" ५।१।१६ इति क्विपि काष्ठभित्। "वेत्ति०" ५।२।७५ इति किति घुरे भिद्यते स्वयमेव भिदुरं काष्ठम्। भिदाद्यङि भिदा विदारणम्, भित्तिः अन्या। उणादौ "कृतिपुति०" ( उ० ७६ ) इति क्किति तिके भित्तिका कुड्यम्। "विहाविशा०" ( उ० ३५४ ) इति कर्मकर्तरि केलिमः, भिदेलिमं काष्ठम्। "ऋज्यजि०" ( उ० ३८८ ) इति किति रे भिद्रम् अदृढम्। "शुपीपि०" ( उ० ४१६ ) इति किति इरे भिदिरः अशनिः। "नाम्युपान्त्य०" ( उ० ६०९ ) इति किद् इः, भिदिः वज्रम् ॥

'६ छिदृंपी द्वैधीकरणे'। अद्वैधस्य पृथक्त्वे। छिन्त्ते, छिनत्ति, चिच्छिदे, चिच्छेद। ऋदित्त्वाद् वाऽङि अच्छिदत्, अच्छैत्सीत्। आत्मनेपदे तु "धुड्०" ४।३।७० इति सिज्लुकि अच्छित्त। अनुस्वारेत्त्वान्नेट्, छेत्ता, छेत्तुम्, छिन्नः। क्विपि रज्जुच्छित्। "वेत्ति०" ५।२।७५ इति किति घुरे छिदुरा रज्जुः। भिदाद्यङि छिदा द्वैधीभावः। छित्तिः विच्छित्तिश्चाऽन्या। उणादौ "ऋज्यजि०" ( उ० ३८८ ) इति किति रे छिद्रम्। "शुपीषि०" ( उ० ४१६ ) इति किति इरे छिदिरः उन्दुरः। छिदिरं शस्त्रम्। "नाम्युपान्त्य०" ( उ० ६०९ ) इति किद् इः, छिदिः छेत्ता परशुश्च ॥

'७ क्षुदृंपी संपेषे'। क्षुन्त्ते, क्षुणत्ति, चुक्षुदे, चुक्षोद। ऋदित्त्वाद् वाऽङि अक्षुदत्, अक्षौत्सीत्। आत्मनेपदे तु "धुड्०" ४।३।७० इति सिज्लुकि अक्षुत्त।

अनुस्वारेत्त्वान्नेट्, क्षोत्ता, क्षोत्तुम्, क्षुण्णः । उणादौ "ऋज्यजि०" (उ० ३८८) इति किति रे क्षुद्रः ॥

'८ ऊछृदृपी दीप्तिदेवनयोः' । वमनेऽप्यन्ये । छृन्त्ते, छृणत्ति, चच्छृदे, चच्छर्द, छर्दिता, छर्दितुम् । ऋदित्त्वाद् वाऽङि अच्छृदत्, अच्छर्दीत् । आत्मनेपदे तु अच्छर्दिष्ट । असिचि सादौ "कृतचृत०" ४।४।५० इति वेट्, छर्त्स्यति, छर्दिष्यति । सिचि तु नित्यम् इटि अच्छर्दीत् । णौ ङे "ऋदृवर्णस्य०" ४।२।३७ इति ऋतो वा ऋत्वे अचिच्छृदत्, अचच्छर्दत् । ऊदित्त्वात् क्त्वि वेट्, छृत्वा, छर्दित्वा । वेट्त्वात् क्तयोर्नेट्, छृण्णः, छृण्णवान् । "ऋदुपान्त्याद्०" ५।१।४१ इति क्यपि छृद्यम् । उणादौ "रुच्यर्चि०" (उ० ९८९) इति इसि छर्दिः वान्तिः ॥

'९ ऊतृदृपी हिंसाऽनादरयोः' । तृन्त्ते, तृणत्ति, ततृदे, ततर्द । ऋदित्त्वाद् वाऽङि अतृदत्, अतर्दीत् । आत्मनेपदे तु अतर्दिष्ट । तर्दिता, तर्दितुम् । असिचि सादौ "कृतचृत०" ४।४।५० इति वेट्, तर्त्स्यति, तर्दिष्यति । सिचि तु अतर्दीत् । ऊदित्त्वात् क्त्वि वेट्, तृत्वा, तर्दित्वा । वेट्त्वात् क्तयोर्नेट्, तृण्णः, तृण्णवान् । उणादौ "पदिपठि०" (उ० ६०७) इत्यौ वितर्दिः; स्वार्थे के वितर्दिका च वेदिः ॥

## अथ परस्मैपदिषु चान्तास्त्रयः सेटश्च ॥

'१० पृचैप् सम्पर्के' । "शेषात्०" ३।३।१०० इति परस्मैपदे पृणक्ति, पपर्च, पपृचुः । "व्यञ्जनाद् देः०" ४।३।७८ इति दिवो लुकि अपृणक् । संपर्चिता । ऐदित्त्वात् क्तयोर्नेट्, संपृक्तः, संपृक्तवान् । "समः पृचै०" ५।२।५६ इति घिनणि संपर्कशीलः संपर्की । घञि "क्तेऽनिटः०" ४।१।१११ इति के पर्कः । मधुना पर्कः मधुपर्कः । संपर्कः । पृचैङ्क् संपर्चने [ २.५० ], पृक्ते । पृचण् संपर्चने [ ९।३८५ ], "युजादेः०" ३।४।१८ इति वा णिचि संपर्चयति, संपर्चति ॥

'११ वृचैप् वरणे' । वृणक्ति, वृङ्क्तः, वृञ्चन्ति । दिवि अवृणक् । ववर्च, ववृचुः, वर्चिता । ऐदित्त्वात् क्तयोर्नेट्, वृक्तः, वृक्तवान् । घञि "क्तेऽनिटः०" ४।१।१११ इति के वर्कः । जान्तोऽयमित्यन्ये । जान्तोऽपि वर्जनार्थ इत्येके । वृञ्जन्ति, ववर्ज । घञि वर्गः ॥

'१२ तन्चू १३ तञ्चौप् सङ्कोचने'। "रुधां०" ३।४।८२ इति श्ने नलुकि च तनक्ति। दिवि अतनक्। ततञ्च, तञ्चिता। ऊदित्त्वात् क्त्वि वेट्, तक्त्वा, तञ्चित्वा। वेट्त्वात् क्तयोर्नेट्, तक्तः, तक्तवान्। उणादौ "ऋज्यजि०" (उ० ३८८) इति किति रे न्यङ्क्वादित्वात् कत्वे तक्रम्। औदिदयमित्येके, तन्मते औदित्त्वाद् वेट्, तङ्क्ता, तञ्चिता ॥

## अथ जान्ताः पञ्च ॥

'१३ तञ्जौप्'। तनक्ति, ततञ्ज। औदित्त्वाद् वेट्, तङ्क्ता, तञ्जिता। वेट्त्वात् क्तयोर्नेट्, तक्तः, तक्तवान्। "जनशो०" ४।३।२३ इति तादेः क्त्वो वा कित्त्वे तक्त्वा, तङ्क्त्वा, इटि तञ्जित्वा; "क्त्वा" ४।३।२९ इति कित्त्वाभावाद् न नो लुक्॥

'१४ भञ्जोंप् आमर्दने'। भनक्ति, बभञ्ज। "भञ्जेर्ञौ वा" ४।२।४८ इति वा नलुकि अभाजि, अभञ्जि। "व्यञ्जनानाम्" ४।३।४५ इति वृद्धौ अभाङ्क्षीत्। यङि "जपजभ०" ४।१।५२ इति पूर्वस्य मौ अन्ते बम्भज्यते। अनुस्वारेत्त्वान्नेट्, भङ्क्ता, भङ्क्तुम्। ओदित्त्वात् "सूयत्यादि०" ४।२।७० इति क्तयोस्तस्य नत्वे भग्नः, भग्नवान्। "जनशो०" ४।३।२३ इति तादेः क्त्वो वा कित्त्वे भक्त्वा, भङ्क्त्वा। "भञ्जिभासि०" ५।२।७४ इति घुरे भङ्गुरं काष्ठम्। घञि भङ्गा धान्यविशेषः, भङ्गोऽन्यः ॥

'१५ भुजंप् पालनाभ्यवहारयोः'। अभ्यवहारो भोजनम्। भुनक्ति भुवम्। बुभोज। दिवि अभुनक्। त्राणादन्यत्र "भुनजो०" ३।३।३७ इत्यात्मनेपदे हविः भुङ्क्ते। बुभुजे, अभुङ्क्त। अनुस्वारेत्त्वान्नेट्, भोक्ता, भोक्तुम्। "गत्यर्था०" ५।१।११ इति वा कर्तरि क्ते भुक्तः चैत्रः अन्नम्, पक्षे कर्मणि भुक्तमन्नं चैत्रेण। भावे भुक्तं चैत्रेण। णौ "गतिबोधा०" २।२।५ इत्यणिक्कर्तुः कर्मत्वे "चल्याहारार्थ०" ३।३।१०८ इति फलवत्कर्तर्यपि परस्मैपदे भोजयति चैत्रं पयो मैत्रः। "ऋवर्ण०" ५।१।१७ इति घ्यणि "क्तेऽनिट०" ४।१।१११ इति गे भोग्या भूः। "भुजो भक्ष्ये" ४।१।११७ इति गत्वाभावे भोज्यम् अन्नम्। "व्यञ्जनाद्०" ५।३।१३२ इति करणे घञि "भुजन्युब्जं" ४।१।१२० इति निपातनाद् भुजः पाणिः, अन्यत्र गत्वे गुणे च भोगः अहिकायः। "लिहादिभ्यः" ५।१।५० इत्यचि भोजः। "युजभुज०" ५।२।५० इति घिनणि भोगी। "शंसि०" ५।३।१०५ इति अः, बुभुक्षा। उणादौ "रुचिभुजिभ्यां किष्यः" (उ० ३८४) भुजिष्यः

दासः । " भुजेः कित् " ( उ० ८०२ ) इति युः भुज्युः ऋषिः । "विश्वाद्विदि०" ( उ० ९५६ ) इत्यसि विश्वभोजा अग्निः । भुजोंत् कौटिल्ये [५।३७], निभुजति ॥

' १६ अञ्जौप् व्यक्ति-म्रक्षण-गतिषु ' । व्यक्तिः प्रकटता, म्रक्षणं घृतादिसेकः । तत्र केवलस्य म्रक्षणे एव वृत्तिः, सोपसर्गविशेषस्य तु शेषयोरिति विवेकः । अनक्ति, व्यनक्ति । " अनातो० " ४।१।६९ इति पूर्वस्याऽऽत्वे नेऽन्ते च आनञ्ज, आनञ्जतुः । औदित्त्वाद् वेट् , अञ्जिता, अङ्क्ता । " सिचोऽञ्जेः " ४।४।८४ इति इटि आञ्जीत् , आञ्जिष्टाम् । " ऋस्मिपूङ्० " ४।४।४८ इति सनि इटि " न वदनं " ४।१।५ इति नस्य द्वित्वाभावे " स्वरादेः० " ४।१।४ इति जेर्द्वित्वे अञ्जिजिषति । " जनशो० " ४।३।२३ इति वा क्त्वः कित्त्वे अक्त्वा, अङ्क्त्वा, इटि अञ्जित्वा । वेट्त्वात् क्तयोर्नेट् , अक्तः, अक्तवान् । " कुप्यभिद्य० " ५।१।३९ इति क्यपि निपातनाद् आज्यं घृतम् । संज्ञाया अन्यत्र " ऋवर्ण० " ५।१।१७ इति घ्यणि " क्तेऽनिट० " ४।१।१११ इति गे अङ्ग्यम् । उणादौ " पाट्यञ्जिभ्यामलिः " ( उ० ७०२ ) अञ्जलिः । " अञ्ज्यवेरिष्ठुः " ( उ० ७६४ ) अञ्जिष्ठुः भानुः । " अञ्जेरिष्णुः " ( उ० ७७१ ) अञ्जिष्णुः तैलादि । " अञ्ज्यर्तेः कित् " (उ० ७७७) इति तुनि अक्तुः इन्द्रः । " अस् " (उ० ९५२) इत्यसि अञ्जः स्नेहः ॥

' १७ ओविजैप् भयचलनयोः ' । विनक्ति, विङ्क्तः, विवेज । " विजेरिट् " ४।३।१८ इति इटो ङित्त्वाद् न गुणः, उद्विजिता, उद्विजितुम् । ऐदित्त्वात् क्तयोर्नेट् । ओदित्त्वात् " सूयत्यादि० " ४।२।७० इति क्तयोस्तस्य नत्वे उद्विग्नः, उद्विग्नवान् । ओविजैति भयचलनयोः [ ५।१५४ ], उद्विजते ॥

## अथ तान्तः सेट् च ॥

' १८ कृतैप् वेष्टने ' । कृणत्ति, कृन्तः, चकर्त, कर्तिता । सादौ असिचि "कृतचृत०" ४।४।५० इति वेटि कर्त्स्यति, कर्तिष्यति । वेट्त्वात् क्तयोर्नेट् . कृत्तः, कृत्तवान् । ऐदित्त्वाद् यङ्लुपि अनेकस्वराद् अपि क्तयोर्नेट् , चरीकृत्तः, चरीकृत्तवान् । " क्त्वा " ४।३।२९ इति कित्त्वाभावाद् गुणे कर्तित्वा । सिचि अकर्तीत् । उणादौ " कृतिपुति० " ( उ० ७६ ) इति किति तिके [1]कृत्तिका । " कृतेस्तर्क च " ( उ० ७२३ ) इत्युः, तर्कुः सूत्रवेष्टनशलाका ॥

## अथ दान्तः सेट् च ॥

' १९ उन्दैप् क्लेदने ' । उनत्ति । " गुरुनाम्यादेः० " ३।४।४८ इति परोक्षाया आमि उन्दाञ्चकार । उन्दिता, उन्दितुम् । सनि " न वदनं० " ४।१।५

१. कृत्तिका. इति मु० ॥

इति नस्य द्वित्वाभावे "स्वरादे:०" ४।१।४ इति देरेव द्वित्वे उन्दिदिषति। ऐदित्त्वात् क्तयोर्नेट्, "ऋह्री०" ४।२।७६ इति क्तयोस्यस्य वा नत्वे समुन्नः, समुन्नवान्, समुत्तः, समुत्तवान्। "दशनावोद०" ४।२।५४ इति निपातनाद् घञि अत्रोदः। मनि औद्म, ओद्मनी। उणादौ "भ्रुवुन्दि०" (उ० २९) इति कित्यके उदकम्। "उन्देर्नलुक् च" (उ० २७१) इत्यने ओदनः। "ऋज्यजि०" (उ० ३८८) इति किति रे उद्रः ऋषिः। समुन्दन्ति[1] आर्द्रीभवन्ति वेलाकाले नद्यः अस्मात् इति समुद्रः। इन्द्र। इति तु "भीवृधि०" (उ० ३८७) इति रे इन्दतेः। "मृद्युन्दि०" (उ० ३९९) इति कित्यरे उदरम्। "वाश्यसि०" (उ० ४२३) इत्युरे उन्दुरः। "ऋजिरिपि०" (उ० ५६७) इति किति से उत्सः प्रस्रवणम्॥

## अथ षान्तावनिटौ च॥

'२० शिष्लृंपू विशेषणे'। विशेषणं गुणान्तरोत्पादनम्। शिनष्टि, विशिनष्टि। क्ये विशिष्यते। विशिशेष। लृदित्त्वाद् अङि अशिषत्। अनुस्वारेत्त्वान्नेट्, शेष्टा, शेष्टुम्, शिष्टः। "ऋवर्ण०" ५।१।१७ इति घ्यणि विशेष्यः। कर्मणि आत्मनेपदे "हशिटो०" ३।४।५५ इति सकि व्यशिक्षन्त। घञि विशेषः। विनयादित्वात् स्वार्थे इकणि वैशेषिकः। शिषण् असर्वोपयोगे [९।४१०], युजादित्वाद् वा णिचि शेषयति। अलि विशेषः। पक्षे शेषति। घञि शेषः॥

'२१ पिष्लृंपू संचूर्णने'। "जासनाट०" २।२।१४ इति वा कर्मणः कर्मत्वे, "शेषे" २।२।८१ इति षष्ठ्यां चौरस्य पिनष्टि, चौरं पिनष्टि। हिंसार्थाद् अन्यत्र धानाः पिनष्टि। षान्तत्वाद् "अकखाद्य०" २।३।८० इति नेर्वा णत्वाभावे प्रनिपिनष्टि। पिपेष। लृदित्त्वादङि अपिषत्। कर्मणि आत्मनेपदे "हशिटो०" ३।४।५५ इति सकि अपिक्षन्त। अनुस्वारेत्त्वान्नेट्, पेष्टा, पेष्टुम्, पिष्टः। घञि निष्पेषः। "शुष्कचूर्ण०" ५।४।६० इति णमि शुष्कपेषं पिनष्टि। एवं चूर्णपेषम्, रूक्षपेषम्। "स्वस्नेहनार्थात्०" ५।४।६५ इति णमि तैलपेषं पिनष्टि। उणादौ "पिषेः पिन्पिण्यौ च" (उ० ३६) इत्याके पिनाकं रुद्रधनुः, पिण्याकः तिलखलः॥

## अथ सान्तः सेट् च॥

'२२ हिसु २३ तृहपू हिंसायाम्'। उदित्त्वाद् ने हिनस्ति, जिहिंस। दिवि "व्यञ्जनाद् दे:०" ४।३।७८ इति दिवो लुकि सस्य दत्वे च अहिनत्।

---

१. न्त्यर्द्री० इति मु०॥

" सेः सद्धां० " ४।३।७९ इति सिचो लुकि सस्य वा रुत्वे च अहिनः त्वम्, अहिनत् त्वम् । " हुधुटो० " ४।२।८३ इति हेः धौ " सो धि वा " ४।३।७२ इति सो वा लुकि हिन्धि, हिन्द्धि । हिंसिता, हिंसितः । अचि हिंसः । " निन्द-हिंस० " ५।२।६८ इति णके हिंसाशीलः हिंसकः । " स्म्यजस० " ५।२।७९ इति रे हिंस्रः । " क्तेटो० " ५।३।१०६ इत्यः, हिंसा । उणादौ " खलिहिंसि-भ्यामीनः " ( उ० २८६ ) हिंसीनः श्वापदः । " कृशपृ० " ( उ० ४१८ ) इति ईरे हिंसीरो हिंस्रः । " हिंसेः सिम् च " ( उ० ५८८ ) इति हे सिंहः ॥

## अथ हान्तः सेट् च ॥

' २३ तृहप् ' । " तृहः श्नादीत् " ४।३।६२ इति तृणेढि । दिवि अतृ-णेट् । ततर्ह, तर्हिता, तृहितः । तृणम् इति तु " भ्रूणतृण० " ( उ० १८६ ) इति निपातनाद् णे तरतेः ॥

## अथ आत्मनेपदिषु दान्तावनिटौ च ॥

' २४ खिदिंप् दैन्ये ' । इदित्वाद् " इङितः० " ३।३।२२ इत्यात्मनेपदे खिन्ते, चिखिदे । अनुस्वारेत्वाद् नेट्, खेत्ता, खिन्नः । खिदिंच् दैन्ये [३।११६], खिद्यते । खिदंत् परिघाते [ ५।१२ ], खिन्दति ॥

' २५ विदिंप् विचारणे ' । विन्ते, विविदे । अनुस्वारेत्वान्नेट्, वेत्ता । "ऋह्री०" ४।२।७६ इति क्तयोस्तस्य वा नत्वे विन्नः, विन्नवान्, वित्तः, वित्तवान् ॥

## अथ धान्तः सेट् च ॥

' २६ जिइन्धैपि दीप्तौ ' । इन्द्धे । " धुटो धुटि स्वे वा " १।३।४८ इति दलुकि इन्धे । " जागुष० " ३।४।४९ इति परोक्षाया वा आमि समिधांचक्रे, समीधे । इन्धिता । ऐदित्वात् क्तयोर्नेट्, जीत्वात् सति क्ते समिद्धः, समिद्धवान् । कर्मणोऽणि " आष्ट्राग्नेः० " ३।२।११४ इति मे आष्ट्रमिन्धः, अग्निमिन्धः । क्विपि अग्नीत् । संपदादिक्विपि समित् । " दशना० " ४।२।५४ इति निपातनाद् नो लुकि घञि एधः । उणादौ " ऋज्यजि० " ( उ० ३८८ ) इति किति रे वीध्रं विमलम् । " येन्धिभ्यां० " ( उ० ९६८ ) इत्यसि, एधादेशे च एधः ॥

इत्याचार्यश्रीहेमचन्द्रविरचिते स्वोपज्ञधातुपारायणे
श्नविकरणः पिद् रुधादिगणः
सम्पूर्णः ॥

# अथ तनादयः (७) ॥

अथ तनादयः उविकरणा वर्णक्रमेण प्रदर्श्यन्ते, तत्र उभयपदिष्वादौ नान्ताः सप्त सेटश्च ॥

'१ तनूयी विस्तारे'। यित्त्वं तनादित्वज्ञापनार्थम्। ईदित्त्वाद् 'ईगितः" ३।३।९५ इति फलवत्कर्तयात्मनेपदे "कृग्तनादेः०" ३।४।८३ इत्यौ च तनुते। फलवतोऽन्यत्र "शेषात्०" ३।३।१०० इति परस्मैपदे तनोति। "वम्यविति०" ४।२।८७ इति वा उतो लुकि तन्वः, तन्मः; तनुवः, तनुमः। तथासोः "तन्भ्यो वा०" ४।३।६८ इति वा सिज्लुनयोः लुप् न चेट्, अतत, अतनिष्ट, अतथाः, अतनिष्ठाः। "तनः क्ये" ४।२।६३ इति नस्य वाऽऽत्वे तायते, तन्यते। तेने, तवान, तनिता, तनितव्यम्। "इवृध०" ४।४।४७ इति सनि वेट्, "तनो वा" ४।१।१०५ इति वा दीर्घे तितांसति, तितंसति, पक्षे तितनिषति। ऊदित्त्वात् क्त्वि वेट्, "यमिरमि०" ४।२।५५ इति नलुकि तत्वा; इटि तनित्वा। वेट्त्वात् क्तयोर्नेट, ततः, ततवान्। "तन्व्यधी०" ५।१।६४ इति णे तानः, अवतानः, वितानः। "तिकृतौ०" ५।१।७१ इति तिकि "न तिकि०" ४।२।५९ इति दीर्घनलुकोरभावे तन्तिः तन्त्रीः। क्विपि "गतिकारकस्य०" ३।२।८५ इति दीर्घे "गमां०" ४।२.५८ इति नलुकि परीतत्। घञि वितानः, संतानः, एकतानः। स्त्रियां क्तौ ततिः पङ्क्तिः। "यपि" ४।२।५६ इति नलुकि प्रतत्य, वितत्य। उणादौ "सुसि–तनि–तुसेर्दीर्घश्च वा" (उ० २०३) इति वा क्तिति ते तातः पिता, ततं वाद्यविशेषः। "कृधूतनि०" (उ० ४४०) इति किति सरे तसरः कौशेयसूत्रम्, [1]तसरः सूत्रवेष्टनम्। त्रसरस्तु पट्टसूत्रम् इत्येके। "त्रट्" (उ० ४४६) इति त्रटि तन्त्रं प्रधानम्। "कुगुवलि०" (उ० ३६५) इत्यन्ये तनयः पुत्रः। "भृमृतॄ०" (उ० ७१६) इत्युः तनुः। "कृसिकम्मि०" (उ० ७७३) इति तुनि तन्तुः। "कृपिचमि०" (उ० ८२९) इत्यूः, तनूः कायः। "तनेर्डउः" (उ० ७४८) सन्वत् च, तितउः परिवपनम्। "तनेर्ड्व च" (उ० ८७२) त्वक्। तोकं तुकू इति च तौतेः के किकि च। तण्डुल इत्यपि तण्डेः उले ॥

---

१. त्रसरः सूत्रवेष्टनम्, अ. चि. ३।५७७, तसरः सूत्रवेष्टनम्, त्रसरस्तु पट्टसूत्रम्। (क्षी. त. २६१) ॥

'२ षणूयी दाने'। "षः सो०" २।३।९८ इति से निमित्ताभावाद् णस्य ने सनुते सनोति। "व्यञ्जनादेः" ४।३।४७ इति वाऽतो वृद्धौ असानीत्, असनीत्। "तन्भ्यो वा०" ४।३।६८ इति सिज्नयोः वा लुपि "सनस्तत्रा०" ४।३।६९ इति वाऽऽत्वे असात, असत, असनिष्ट; असाथाः, असथाः, असनिष्ठाः। सेने, ससान, सनिता, सनितुम्। "इवृध०" ४।४।४७ इति सनि वेट्, "नाम्यन्तस्था०" २।३।१५ इति षत्वे "सनि" ४।२।६१ इत्यात्वे सिषासति, पक्षे सनि षत्वभूते "णिस्तोरेवा०" २।३।३७ इति नियमाद् न षत्वम्, सिसनिषति। ऊदित्त्वात् क्त्वि वेट्, "आः खनि०" ४।२।६० इत्यात्वे सात्वा, पक्षे सनित्वा। वेट्त्वात् क्तयोर्नेट्, सातः, सातवान्। "ये नवा" ४।२।६२ इत्यात्वे सायते, सन्यते। "तिक्कृतौ०" ५।१।७१ इति तिकि "न तिकि०" ४।२।५९ इति दीर्घनलुगभावे सन्तिः। "तौ सन०" ४।२।६४ इति वाऽऽत्वनलुकोः, सातिः, सतिः। "सातिहेति०" ५।३।९४ इति क्तौ सातिः उणादौ "कृवापा०" (उ० १) इत्युणि सानुः प्रस्थः॥

'३ क्षणूग् ४ क्षिणूयी हिंसायाम्'। "रषृवर्णात्०" २।३।६३ इति नस्य णत्वे क्षणुते, क्षणोति, चक्षणे, चक्षाण। "व्यञ्जनादेः०" ४।३।४७ इति वा वृद्धेः "न श्विजागृ०" ४।३।४९ इति प्रतिषेधे अक्षणीत्। क्षणिता। ऊदित्त्वात् क्त्वि वेट्, "यमिरमि०" ४।२।५५ इति नलुकि क्षत्वा, इटि क्षणित्वा। वेट्त्वात् क्तयोर्नेट्, क्षतः, क्षतवान्। "न तिकि०" ४।२।५९ इति दीर्घनलुकोः प्रतिषेधे "म्नां" १।३।३९ इति णत्वापवादे नस्य ने क्षणुतात् क्षन्तिः। स्त्रियां क्तौ क्षतिः॥

'४ क्षिणूयी'। "रषृवर्णात्०" २।३।६३ इति नस्य णे गुणं नेच्छन्त्येके; क्षिणुते, क्षिणोति; चिक्षिणे, चिक्षेण; क्षेणिता, क्षेणितुम्। ऊदित्त्वात् क्त्वि वेट्, "यमिरमि०" ४।२।५५ इति नलुकि क्षित्वा। इटि "वौ व्यञ्जनादेः०" ४।३।२५ इति वा कित्त्वे क्षिणित्वा क्षेणित्वा। वेट्त्वात् क्तयोर्नेट्, क्षितः, क्षितवान्। "तिक्कृतौ०" ५।१।७१ इति तिकि "न तिकि०" ४।२।५९ इति दीर्घनलुकोः अभावे "म्नां०" १।३।६९ इति णत्वापवादे नस्य ने क्षिन्तिः, क्तौ क्षितिः। अमुं न पठन्त्येके॥

'५ ऋणूयी गतौ'। "रषृवर्णात्०" २।३।६३ इति नस्य णे "लघोः०" ४।३।४ इति गुणे अर्णुते, अर्णोति। "अनातो०" ४।१।६९ इति पूर्वस्य आत्वे ऽन्ते च आनृणे, आनर्ण। अर्णिता, अर्णितुम्। सनि "अयि रः" ४।१।६

इति रस्य प्रतिषेधे " स्वरादेः० " ४।१।४ इति नेः एव द्वित्वे अर्णिनिषति । ऊदित्त्वात् क्त्वि वेट्, " यमिरमि० " ४।२।५५ इति नलुकि ऋत्वा । इटि " क्त्वा " ४।३।२९ इति क्त्वाभावाद् गुणे अर्णित्वा । वेट्त्वात् क्तयोर्नेट्, ऋतः, ऋतवान् । क्तौ ऋतिः ॥

' ६ तृणूयी अदने ' । अदाने इत्यन्ये । " रषृवर्णात्० " २।३।६३ इति नस्य णत्वे तर्णुते, तर्णोति, ततृणे, ततर्ण, तर्णिता, तर्णितुम् । ऊदित्त्वाद् क्त्वि वेट्, " यमिरमि० " ४।२।५५ इति नलुकि तृत्वा । इटि " क्त्वा " ४।३।२९ इति क्त्वाभावे तर्णित्वा । वेट्त्वात् क्तयोर्नेट्, तृतः, तृतवान् । " तिकृतौ० " ५।१।७१ इति तिकि " न तिकि० " ४।२।५९ इति दीर्घनलुकोः अभावे " म्नां० " १।३।३९ इति णत्वापवादे नस्य ने तृन्तिः । क्तौ तृतिः ॥

' ७ घृणूयी दीप्तौ ' । " लघोः० " ४।३।४ इति गुणे " रषृवर्णात्० " २।३।६३ इति नस्य णे घर्णुते, घर्णोति, जघृणे, जघर्ण, घर्णिता, घर्णितुम् । ऊदित्त्वात् क्त्वि वेट्, " यमिरमि० " ४।२।५५ इति नलुकि घृत्वा । इटि " क्त्वा " ४।३।२९ इति क्त्वाभावे घर्णित्वा । वेट्त्वात् क्तयोर्नेट्, घृतः, घृतवान् घृतम् । " तिकृतौ० " ५।१।७१ इति तिकि " न तिकि० " ४।२।५५ इति दीर्घनलुकोरभावे " म्नां० " १।३।३९ इति नस्य णापवादे ने घृन्तिः । णान्तोऽयमित्येके, तन्मते " तवर्गस्य० " १।३।६० इति तस्य टे घृण्टिः । " नाम्युपान्त्य० " ५।१।५४ इति के घृणा । क्तौ घृतिः । उणादौ " नाम्युपान्त्य० " ( उ० ६०९ ) इति किद् इः, घृणिः । उविकरणे ऋणू-तृणू घृणूधातूनां गुणं नेच्छन्त्येके; ऋणुते, ऋणोति; तृणुते, तृणोति; घृणुते, घृणोति । अकारोपान्त्यो णान्तश्चायमिति शिवः; घणोति, जघाण; घतः, घतवान् । तिकि घण्टिः ॥

## अथात्मनेपदिनौ नान्तौ सेटौ च ॥

' ८ वनूयि याचने ' । इदित्त्वाद् " इङितः० " ३।३।२२ इत्यात्मनेपदे वनुते । " अनादेशादेः० " ४।१।२४ इति एत्वस्य " न शस-दद० " ४।१।३० इति प्रतिषेधे ववने । वनिता, वनितुम् । ऊदित्त्वात् क्त्वि वेट्, " यमिरमि० " ४।२।५५ इति नलुकि वत्वा, इटि वनित्वा । वेट्त्वात् क्तयोर्नेट्, वतः, वतवान् । णौ " कगेवनू० " ४।२।२५ इति ह्रस्वे अववनयति, संवनयति । अनुपसर्गस्य तु " ज्वल-ह्वल० " ४।२।३३ इति वा ह्रस्वे वानयति, वनयति । " तिकृतौ० " ५।१।७१ इति तिकि " न तिकि० " ४।२।५५ इति दीर्घनलुकोः अभावे वन्तिः ।

नञ्समासे अवन्तिः राजा । क्तौ वतिः । उणादौ "वनिकणि०" (उ० १६२) इति ठे वण्ठः [1]अभिनिविष्टः । "वनिवपिभ्यां णित्" (उ० ४२१) इति ईरे वानीरः वेतसः । वनिष्ठुः इति तु वनिपूर्वस्य तिष्ठतेः कित्यौ । वन पन भक्तौ [ १।३२९-३३० ], वनति ॥

'९ मनूयि बोधने'। मनुते, मेने । "तन्भ्यो वा०" ४।३।६८ इति नसिचोः वा लुप्, न चेट्, अमत, अमनिष्ट; अमथाः, अमनिष्ठाः । मनिता, मनितुम् । ऊदित्त्वात् क्त्वि वेट्, "यमिरमि०" ४।२।५५ इति नलुकि 'मत्वा । इटि मनित्वा । वेट्त्वात् क्तयोर्नेट्, मतः, मतवान् । मनिच् ज्ञाने [ ३।१२० ], मन्यते ॥

इत्याचार्यश्रीहेमचन्द्रविरचिते स्वोपज्ञधातुपारायणे
उविकरणो यित्तनादिगणः
सम्पूर्णः ॥



१. अनभिनि° इति मु०, सं० प्रतौ च । अनिविष्टः इत्युणादिविवरणे ॥

# अथ क्र्यादयः (८)॥

अथ क्र्यादयः श्नाविकरणा वर्णक्रमेण प्रस्तूयन्ते, तत्राऽऽदौ—

'१ डुक्रींगूश् द्रव्यविनिमये'। विनिमयः परिवर्तः। शित्त्वं क्र्यादित्वज्ञापनार्थम्। गित्त्वाद् "ईगितः" ३।३।९५ इति फलवत्कर्तर्यात्मनेपदे "क्र्यादेः" ३।४।७९ इति श्ना, "एषामी०" ४।२।९७ इति तस्य ईत्वे क्रीणीते। फलवतोऽन्यत्र "शेषात्०" ३।३।१०० इति परस्मैपदे, क्रीणाति। "परिव्यवात्०" ३।३।२७ इत्यात्मनेपदे परिक्रीणीते, विक्रीणीते, अवक्रीणीते। "श्नश्चा०" ४।२।९६ इति श्न आल्लुकि क्रीणन्ति। "संयोगात्" २।१।५२ इति इयि चिक्रिये। "नामिनो०" ४।३।५१ इति वृद्धौ चिक्राय। "णौ क्रीजी०" ४।२।१० इत्यात्वे क्रापयति। अनुस्वारेत्त्वान्नेट्, क्रेता, क्रेतुम्। "परिक्रयणे" २।२।६७ इति वा चतुर्थ्यां शताय परिक्रीतः, पक्षे करणे तृतीयैव, शतेन परिक्रीतः। "क्रीतात् करणादेः" २।४।४४ इति ङ्याम् अश्वक्रीती। "य एचा०" ५।१।२८ इति ये "क्रय्यः क्रयार्थे" ४।३।९१ इति निपातनाद् अयि क्रय्या गौः, तदर्थादन्यत्र क्रेयम्। "निन्द्ये व्याप्याद्०" ५।१।१५९ इतीनि सोमविक्रयी, निन्द्यादन्यत्र, "कर्मणोऽण्" ५।१।७२ धान्यविक्रायः। अचि अलि च क्रयः। ड्वित्त्वात् त्रिमकि क्रीत्रिमम्। उणादौ "क्रीकलि०" (उ० ३८) इतीके क्रयिकः क्रेता। "कावावी०" (उ० ६३४) इति णौ क्रेणिः क्रयविशेषः॥

## अथेदन्तोऽनिट् च॥

'२ षिगूश् बन्धने'। "षः सो०" २।३।९८ इति से सिनीते, सिनाति। षोपदेशत्त्वाद् "नाम्यन्तस्था०" २।३।१५ इति षे सिष्ये, सिषाय। "सिचि परस्मै०" ४।३।४४ इति वृद्धौ असैषीत्। "णिस्तोरेवा०" २।३।३७ इति नियमात् सनि न षत्वम्, सिसीषति। अनुस्वारेत्त्वान्नेट् सेता, सेतुम्। "सेर्ग्रासे०" ४।२।७३ इति क्तयोस्तस्य नत्वे सिनो ग्रासः स्वयमेव। सिनोतेरेव नत्वमित्येके, तन्मते सितो ग्रासः स्वयमेव। कर्मकर्तुरन्यत्र सितः पाशेन। षिंगूट् बन्धने [ ४।२ ], सिनुते, सिनोति॥

## अथेदन्तास्त्रयोऽनिटश्च ॥

'३ प्रींग्श् तृप्तिकान्त्योः'। कान्तिः अभिलापः। प्रीणीते, प्रीणाति। पिप्रिये, पिप्राय। अनुस्वारेत्त्वान्नेट्, प्रेता, प्रेतुम्, प्रीतः, प्रीतवान्। णौ "धूग्प्रीगोः०" ४।२।१८ इति ने प्रीणयति। "नाम्युपान्त्य०" ५।१।५४ इति के प्रियः। "स्थादिभ्यः०" ५।३।८२ इति कर्मणि के प्रियः। प्रींङ्च् प्रीतौ [३।११०], प्रीयते। प्रीगूण् तर्पणे [९।३७८], "युजादेः०" ३।४।१८ इति वा णिचि प्रीणयति, प्रयते, प्रयति ॥

'४ श्रींग्श् पाके'। श्रीणीते, श्रीणाति, शिश्रिये, शिश्राय। अनुस्वारेत्त्वान्नेट्, श्रेता, श्रेतुम्, श्रीतः, श्रीतवान्। क्तौ श्रीतिः ॥

'५ मींग्श हिंसायाम्'। मीनीते, मीनाति। "अदुरुपसर्गा०" २।३।७७ इति णे प्रमीणाति। एकदेशविकृतस्याऽनन्यत्वात् प्रमीणीते। मिम्ये, ममौ। यवक्ङिडति "मिग्मीगो०" ४।२।८ इत्यात्वे प्रमाय। णौ प्रमापयति। अनुस्वारेत्त्वान्नेट्, माता, मास्यति खलचलि तु नाऽऽत्वम्, दुर्मयः। अचि अलि च मयः, प्रमयः क्ङिति प्रमीतः, प्रमीतवान्. प्रमेमीयते। "मिमीमा०" ४।१।२० इति सनि स्वरस्येति द्वित्वाभावे च प्रमित्सते, प्रमित्सति। "शाय्युधि०" ५।३।१४१ इति खलपवादेऽने दुर्मानम्, सुमानम्। उणादौ "मीमसि०" (उ० ४२७) इत्यूरे बाहुलकान्नाऽऽत्वम्, मयूरः ॥

## अथोदन्तावनिटौ च ॥

'६ युंग्श बन्धने'। युनीते, युनाति, युयुवे, युयाव। अनुस्वारेत्त्वान्नेट्, योता, योतुम्, युयूषति। "इवृध०" ४।४।४७ इति वेटि यियविषति। "नीदाव्०" ५।२।८८ इति त्रटि योत्रम्। युक् मिश्रणे [२।२२], यौति, यविता। युणि जुगुप्सायाम् [९।२३७], यावयते ॥

'७ स्कुंग्श् आप्रवणे'। आप्रवणम् उद्धरणम्। "स्तम्भू-स्तुम्भू०" ३।४।७८ इति श्नाः श्नुश्च, स्कुनीते, स्कुनाति, स्कुनुते, स्कुनोति। चुस्कुवे, चुस्काव। अनुस्वारेत्त्वान्नेट्, स्कोता, स्कुतः, स्कुतवान् ॥

## अथोदन्तौ सेटौ च ॥

'८ क्नूग्श् शब्दे'। क्नूनीते, क्नूनाति, चुक्नुवे, चुक्नाव, अक्नावीत्। क्नविता। किति "उवर्णात्" ४।४।५८ इति नेट्, क्नूतः, क्नूतवान्, क्नूत्वा ॥

'९ द्रूगृश् हिंसायाम्'। गतावित्यन्ये। द्रुणीते, द्रुणाति, दुद्रुवे, दुद्राव, अद्रावीत्, द्रविता, द्रवितुम् ॥

## अथ हान्तः सेट् च ॥

'१० ग्रहीश् उपादाने'। उपादानं स्वीकारः। "ग्रहव्रश्च०" ४।१।८४ इति य्वृति गृह्णीते, गृह्णाति, जगृहे, जग्राह। "गृह्णो०" ४।४।३४ इति इटो दीर्घे ग्रहीता, ग्रहीतुम्। "व्यञ्जनादेः०" ४।३।४७ इति वा वृद्धेः "न श्विजागृ०" ४।३।४९ इति प्रतिषेधाद् अग्रहीत्। "रुदविद०" ४।३।३२ इति क्त्वासनोः किच्वे गृहीत्वा। "[1]ग्रहगुहश्च०" ४।४।५९ इति सनि नेट्, जिघृक्षति। भावकर्मणोः "स्वरग्रह०" ३।४।६९ इति वा ञिटि ग्राहिष्यते, ग्रहीष्यते, अग्राहिषाताम्, अग्रहीषाताम्, ग्राहिषीष्ट, ग्रहीषीष्ट, ग्राहिता, ग्रहीता। "पदास्वैरि०" ५।१।४४ इति क्यपि प्रगृह्यं पदम्, अवगृह्यं पदम्; गृह्यका इमे परतन्त्रा इत्यर्थः। ग्रामगृह्याः ग्रामाद् बाह्या इत्यर्थः, पक्ष्येऽर्जुनगृह्याः। "गेहे०" ५।१।५५ इति के गृहम्। "वा ज्वलादि०" ५।१।६२ इति णे ग्राहो जलचरः, पक्षेऽचि ग्रहः सूर्यादिः। "ग्रहादिभ्यो०" ५।१।५३ इति णिनि ग्राही। "असरूपो०" ५।१।१६ इति णके ग्राहकः। तृचि ग्रहीता। "धनुर्दण्ड०" ५।१।९२ इत्यणपवादेऽचि धनुर्ग्रहः, दण्डग्रहः, त्सरुग्रहः इत्यादि। "सूत्राद् धारणे" ५।१।९३ सूत्रग्रहः, धारणादन्यत्र "कर्मणोऽण्" ५।१।७२ इत्यणि सूत्रग्राहः। "रजःफले०" ५।१।९८ इत्यौ रजोग्रहिः, सूत्रनिपातनाद् एत्वे फलेग्रहिः, मलग्रहिः। "सृग्लहः०" ५।३।३१ इत्यलि निपातनाद् ग्लहः अक्षाणाम्। "वर्षविघ्ने०" ५।३।५० इति वाऽलि अवग्रहः, पक्षे घञि अवग्राहः। "प्राद् रश्मि०" ५।३।५१ इति वाऽलि प्रग्रहः, प्रग्राहः, रज्जुः तुलासूत्रं च। उत्पूर्वस्य "ग्रहः" ५।३।५५ इति घञि उद्ग्राहः। "न्यवाच्छापे" ५।३।५६ 'निग्राहः ते वृषल भूयात्'। एवम् अवग्राहः। "प्राल्लिप्सायाम्" ५।३।५७ 'पात्रप्रग्राहेण चरति पिण्डपातार्थी'। "समो मुष्टौ" ५।३।५८ संग्राहः मुष्टेर्दार्ढ्यम्। "यज्ञे ग्रहः" ५।३।६५ पूर्वपरिग्राहः, उत्तरपरिग्राहः, वेदेर्यज्ञाङ्गभूताया ग्रहणविशेषः। स्त्रियां क्तौ "तेर्ग्रहादिभ्यः" ४।४।३३ इतीटि गृहीतिः, निगृहीतिः। "कृग्ग्रहो०" ५।४।६१ इति णमि जीवग्राहं ग्रहीतः। "हस्तार्थाद् ग्रह०" ५।४।६६ इति णमि हस्तेन ग्रहणं हस्तग्राहं गृह्णाति। "नाम्ना ग्रहा०" ५।४।८३ इति णमि नामानि ग्रहीत्वा नामग्राहम्,

---

१. ग्रह गृह° इति मु० ॥ २. सनि वेट् जि° इति मु० ॥

नामानि ग्राहम् आह्वयति, " तृतीयोक्तं वा " ३।१।५० इति वा समासः । उणादौ " ऋहृसृ० " ( उ० ६३८ ) इत्यणौ ग्रहणिः प्रवाहिका ॥

अथ क्र्याद्यन्तर्गणः प्वादिः " प्वादेर्ह्रस्वः " ४।२।१०५ इति ह्रस्वप्रयोजनः प्रदर्श्यते ॥

## तत्रोदन्तास्त्रयः सेटश्च ॥

' ११ पूगश् पवने ' । पवनं शुद्धिः । " प्वादेः० " ४।२।१०५ इति ह्रस्वे पुनीते, पुनाति । पुपुवे, पुपाव, पविता, पवितुम् । क्तिति " उवर्णात् " ४।४।५८ इति नेट्, पूतः, पूतवान् । नाशे " पूदिवि० " ४।२।७२ इति क्तयोस्तस्य नत्वे पूना यवाः, नाशादन्यत्र पूतं धान्यम् । " पुव० " ५।२।८५ इति इत्रे पवित्रोऽर्हन् । " ऋषिनाम्नोः करणे " ५।२।८६ पवित्रः ऋषिः, पवित्रं दर्भादि । "हलक्रोडा०" ५।२।८९ इति त्रटि हलसूकरयोः पोत्रं मुखमित्यर्थः । " निरभेः० " ५।३।२१ इति घञि निष्पावः । " न ख्यापूगू० " २।३।९० इति प्रतिषेधात् " स्वरात् " २।३।८५ इति णत्वाभावेऽनटि प्रपवनम् , परिपवनम् । णौ " णेर्वा " २।३।८८ इति णत्वविकल्पाभावे प्रपावनम्, परिपावनम् । उणादौ " हुयूदृग० " (उ० ८६३) इति तृः पोता ऋत्विक् । " पुत्रादयः " ( उ० ४५५ ) इति त्रे निपातनात् पुत्रः । पूङ् पवने [ १।६०० ], पवते ॥

अथ प्वाद्यन्तर्गणो ल्वादिः " ॠल्वादेः० " ४।२।६८ इति नत्वार्थः प्रदर्श्यते॥

' १२ लूगश् छेदने ' । " प्वादेः० " ४।२।१०५ इति ह्रस्वे लुनीते, लुनाति । लुलुवे, लुलाव, लविता, लवितुम् । सनि " ग्रहगुहश्च० " ४।४।५९ इति नेट्, लुलूषति । णौ सनि " ओजन्तस्था० " ४।१।६० इति पूर्वस्योतः इत्वे लिलावयिषति । णौ ङे " असमानलोपे० " ४।१।६३ इति सन्वत्त्वे अलीलवत् । क्तिति " उवर्णात् " ४।४।५८ इति [1]नेट्, " ॠल्वादेः० " ४।२।६८ इति क्त-क्तीनां तो नत्वे लूनः, लूनवान् , लूनिः । " प्रसूल्वो० " ५।१।६९ इत्यके साधु लुनाति लवकः । " लू-धू-सू० " ५।२।८७ इति इत्रे लूयतेऽनेन लवित्रम् । " निरभेः० " ५।३।२१ इत्यलपवादे घञि अभिलावः । उणादौ " घालू० " ( उ० ७० ) इत्याणके लवाणकः कालः । " शीभी० " ( उ० ७१ ) इत्यानके लवानको दात्रम् । " लूञो वा " ( उ० २०२ ) इति वा किति ते लूता क्षुद्र-

१. वेट इति मु० ॥

जन्तुः, लोतः वस्तः । "स्वरेभ्य०" (उ० ६०६) इत्यौ लविः दात्रम् । "लूधू०" (उ० ६७९) इति किति नौ लूनिः लवनः । "मन्" (उ० ९११) इति मनि लोम ॥

'१३ धूगूश् कम्पने'। प्वादित्वाद् ह्रस्वे धुनीते, धुनाति । दुधुवे, दुधाव । "धूगौदितः" ४।४।३८ इति वेट्, धोता, धविता । "धूगुसुस्तोः०" ४।४।८५ इतीटि अधावीत् । णौ "धूगुप्रीगो०" ४।२।१८ इति ने विधूनयति । किति "उवर्णात्" ४।४।५८ इति नेट्, "ॠल्वादेः०" ४।२।६८ इति क्तक्तीनां तो नत्वे धूनः, धूनवान्, धूनिः । धूगट् कम्पने [ ४।६ ], धूनुते, धूनोति । धूव् विधूनने [ ५।११६ ], धूवति । धूगण् कम्पने [ ९।३७९ ], युजादित्वाद् वा णिचि धूनयति, धवते, धवति ॥

## अथ ॠदन्तास्त्रयः सेटश्च ॥

'१४ स्तृगृश् आच्छादने'। प्वादित्वाद् ह्रस्वे स्तृणीते, स्तृणाति । "स्कृच्छ्रृतो०" ४।३।८ इति गुणे तस्तरे । णवि तस्तार । "वृतो नवा०" ४।४।३५ इति वा इटो दीर्घे स्तरिता, स्तरीता; आस्तरितुम्, आस्तरीतुम् । "इट् सिजाशिषोरात्मने" ४।४।३६ इति वेट्, आस्तरिष्ट, आस्तरीष्ट । "ऋवर्णात्" ४।३।३६ इति सिचः कित्त्वे आस्तीर्ष्ट । आस्तरिषीष्ट, आस्तीर्षीष्ट । सनि "इवृध०" ४।४।४७ इति वेट्, आतिस्तरिषति, आतिस्तरीषति, आतिस्तीर्षति । किति "ऋवर्णश्रि०" ४।४।५७ इति नेट्, "ॠल्वादेः०" ४।२।६८ इति क्तक्तीनां तो ने आस्तीर्णः, आस्तीर्णवान्, आस्तीर्णिः । णौ ङे सन्वद्भावापवादे "स्मृदृत्वर०" ४।१।६५ इति पूर्वस्याऽत्वे अतस्तरत् । "ऋवर्ण०" ५।१।१७ इति घ्यणि आस्तार्यः । "अयज्ञे स्त्रः" ५।३।६८ इत्यलपवादे घञि शङ्खप्रस्तारः । यज्ञे तु बर्हिष्प्रस्तरः । "वेरशब्दे०" ५।३।६९ इति घञि पटस्य विस्तारः; शब्दे तु वाक्यविस्तरः । "छन्दोनाम्नि" ५।३।७० विष्टारपङ्क्तिः । [१]वृक्षासनयोः विष्टरः; उभयत्र "वेः स्त्रः" २।३।२३ इति षत्वम् । "अवात् तॄस्तॄभ्याम्" ५।३।१३३ इति करणाधारे घञि अवस्तारः । अलि घे वा स्तरो वस्त्रभेदः । उणादौ "तॄस्तृतन्द्रि०" (उ० ७११) इति ईः स्तरीः शय्या । "सृहृभृ०" (उ० ९१८) इति ईमनि स्तरीमा प्रावारः ॥

---

१. वृक्षासनोर्वि॰ इति मु०, तुलना ।

'१५ कॄगृश् हिंसायाम्'। "प्वादेः०" ४।२।१०५ इति ह्रस्वे कृणीते, कृणाति। "स्कृच्छ्रृतो०" ४।३।८ इति गुणे चकरे, चकार। "वृतो नवा०" ४।४।३५ इति इटो वा दीर्घे करिता, करीता। सनि "इवृध०" ४।४।४७ इति वेटि चिकरिषते, चिकरीषते, चिकीर्षति। किति "ऋवर्णश्रि०" ४।४।५७ इति नेट्, "ॠल्वादेः०" ४।२।६८ इति ने कीर्णः, कीर्णवान्, कीर्णिः। क्ये कीर्यते। उणादौ "कॄगॄशॄ०" (उ० ४४१) इति वरटि कर्वरो व्याघ्रः। कर्वरी भूमिः। "कृपॄकटि०" (उ० ५८९) इत्यहे करहो धान्यावपनम्। ह्रस्वान्तोऽयमित्येके। कॄत् विक्षेपे [ ५१२० ], किरति॥

'१६ वृगृश् वरणे'। "प्वादेः०" ४।२।१०५ इति ह्रस्वे वृणीते, वृणाति। "स्कृच्छ्रृतो०" ४।३।८ इति गुणे ववरे, ववरुः। "वृतो नवा०" ४।४।३५ इति इटो वा दीर्घे वरिता, वरीता। किति "ऋवर्णश्रि०" ४।४।५७ इति नेट्, "ॠल्वादेः०" ४।२।६८ इति ने वूर्णः, वूर्णवान्, वूर्णिः। सनि "इवृध०" ४।४।४७ इति वेटि विवरिषति, विवरीषति, वुवूर्षति। उणादौ "ऋकॄवॄ०" (उ० १९६) इत्युणे वरुणः; तस्य भार्या "वरुणेन्द्र०" २।४।६२ इति ङ्याम् आनि चान्ते वरुणानी। ह्रस्वान्तोऽयमिति नन्दी॥

## अथ परस्मैपदिषु आदन्तोऽनिट् च॥

'१७ ज्यांश् हानौ'। वयोहानौ इत्येके। "शेषात्०" ३।३।१०० इति परस्मैपदे "ज्याव्यध०" ४।१।८१ इति य्वृति "दीर्घमवो०" ४।१।१०३ इति दीर्घे "प्वादेः०" ४।२।१०५ इति ह्रस्वे जिनाति। "ज्याव्येव्यधि०" ४।१।७१ इति पूर्वस्य इत्ये जिज्यौ। थवि "सृजिदृशि०" ४।४।७८ इति वेटि जिज्यिथ, जिज्याथ। अनुस्वारेत्त्वान्नेट्, ज्याता, ज्यातुम्, जीत्वा। "ॠल्वादेः०" ४।२।६८ इति ने जीनः, जीनवान्। स्त्रियां क्तिमपीच्छन्त्येके, जीनिः। "ग्लाहा०" ५।३।११८ इति अनौ ज्यानिः। अणपवादे "आतो डो०" ५।१।७६ इति डे ब्रह्मज्यः। "ज्यश्च यपि" ४।१।७६ इति य्वृदभावे प्रज्याय। जिन इति तु "जीण्०" (उ० २६१) इति किति ने जयतेः॥

## अथेदन्ताश्चत्वारोऽनिटश्च॥

'१८ रींश् गतिरेषणयोः'। रेषणं हिंसा। "प्वादेः०" ४।२।१०५ इति ह्रस्वे रिणाति। रिराय। "योऽनेकस्वरस्य" २।१।५६ इति यत्वस्य बहिरङ्गत्वेन

" य्वादेः० " २।१।६३ इति दीर्घमन्तरङ्गं प्रत्यसिद्धत्वात् पूर्वस्य दीर्घाभावे रिर्यितुः, रिर्युः । णौ " अर्तिरी० " ४।२।२१ इति पौ " पुस्पौ " ४।३।३ इति गुणे रेपयति । अनुस्वारेत्त्वान्नेट् , रेता, रेतुम् । " ॠल्वादेः० " ४।२।६८ इति तो ने रीणः, रीणवान् , रीणिः । रींङ्च् स्रवणे [ ३।१०४ ], रीयते ॥

' १९ लींश् श्लेषणे ' । " प्वादेः० " ४।२।१०५ इति ह्रस्वे लिनाति, लिलाय । णौ " लीङ्लिनो० " ३।३।९० इत्यात्मनेपदे आत्वे च जटाभिरालापयते, श्येनो वर्तिकामुल्लापयते । यबक्ङिति " लीङ्लीनो० " ४।२।९ इति वाऽऽत्वे विलाय, विलीय । अनुस्वारेत्त्वान्नेट् , विलाता, विलेता । " लो लः " ४।२।१६ इति ले विलालयति, पक्षे " अर्तिरी० " ४।२।२१ इति पौ विलापयति । " लियो० " ४।२।१५ इति ने घृतं विलीनयति, पक्षे " नामिनो० " ४।३।५१ इति वृद्धौ घृतं विलाययति । " ॠल्वादेः० " ४।२।६८ इति तो ने लीनः, लीनवान् , लीनिः । लींङ्च् श्लेषणे [ ३।१०५ ], लीयते । लीण् द्रवीकरणे [ ९।३७६ ], युजादित्वाद् वा णिचि घृतं विलीनयति, विलयति ॥

' २० व्लींश् वरणे ' । गतावित्यन्ये । " प्वादेः० " ४।२।१०५ इति ह्रस्वे व्लिनाति । विव्लाय । याऽपवादे " संयोगात् " २।१।५२ इति इयि विव्लियतुः, विव्लियुः । अनुस्वारेत्त्वान्नेट् , व्लेता, व्लेतुम् । " ॠल्वादेः० " ४।२।६८ इति तो ने व्लीनः, व्लीनवान् , व्लीनिः । णौ " अर्तिरी० " ४।२।२१ इति पौ "पुस्पौ" ४।३।३ इति गुणे व्लेपयति ॥

' २१ ल्वींश् गतौ ' । " प्वादेः० " ४।२।१०५ इति ह्रस्वे ल्विनाति, लिल्वाय । याऽपवादे " संयोगात् " २।१।५२ इति इयि लिल्वियतुः । अनुस्वारेत्त्वान्नेट्, ल्वेता, ल्वेतुम् । " ॠल्वादेः० " ४।२।६८ इति तो ने ल्वीनः, ल्वीनवान् , ल्वीनिः । प्वादित्वमस्य नेच्छन्त्येके, तन्मते ह्रस्वाभावे ल्वीनाति । " ॠल्वादेः० " ४।२।६८ इति नत्वाभावे ल्वीतः, ल्वीतवान् , ल्वीतिः । ल्पींश् श्लेषणे इत्यप्येके पठन्ति, " प्वादेः० " ४।२।१०५ इति ह्रस्वे ल्पिनाति । " ॠल्वादेः० " ४।२।६८ इति तो ने ल्पीनः, ल्पीनवान् , ल्पीनिः ॥

## अथ ॠदन्ता एकादश सेटश्च ॥

' २२ कॄ, २३ मॄ, २४ शॄ हिंसायाम् ' । " प्वादेः० " ४।२।१०५ इति ह्रस्वे कृणाति । चकार । " स्कृच्छृतो० " ४।३।८ इति गुणे चकरतुः, चकरुः ।

"वृतो नवा०" ४।४।३५ इति इटो वा दीर्घे, करिता, करीता। किति "ऋवर्णश्रि०" ४।४।५७ इति नेट्, "ॠल्वादेः०" ४।२।६८ इति तो ने कीर्णः, कीर्णवान्, कीर्णिः। "इवृध०" ४।४।४७ इति सनि वेट् चिकरिषति, चिकरीषति, चिकीर्षति, उभयपदिष्वधीतोऽप्ययं फलवत्कर्तरि परस्मैपदार्थमिह पठितः। कॄत् विक्षेपे [ ५।२० ], किरति ॥

'२३ मॄ'। "प्वादेः०" ४।२।१०५ इति ह्रस्वे मृणाति। ममार। "स्कृच्छ्रृतो०" ४।३।८ इति गुणे ममरतुः। "वृतो नवा०" ४।४।३५ इति इटो वा दीर्घे मरिता, मरीता। किति "ऋवर्णश्रि०" ४।४।५७ इति नेट्, "ॠल्वादेः०" ४।२।६८ इति तो ने मूर्णः, मूर्णवान्, मूर्णिः। उणादौ "म्र उत्" (उ० ८८९) [1]मरुत् ॥

'२४ शॄश्'। "प्वादेः०" ४।२।१०५ इति ह्रस्वे शृणाति। क्ये शीर्यते। विशशार। "ऋः शॄदॄप्रः" ४।४।२० विशश्रतुः, विशश्रुः; पक्षे "स्कृच्छ्रृतो०" ४।३।८ इति गुणे विशशरतुः, विशशरुः। "वृतो०" ४।४।३५ इति इटो वा दीर्घे विशरिता, विशरीता। किति "ऋवर्णश्रि०" ४।४।५७ इति नेट्, "ॠल्वादेः०" ४।२।६८ इति तो ने शीर्णः, शीर्णवान्, शीर्णिः। अचि शरः। "शॄवन्देः०" ५।२।३५ इत्यारौ शरणशीलः शरारुः। "शॄकम०" ५।२।४० इति उकणि विशारुकः। "पुंनाम्नि०" ५।३।१३० इति घे शृणन्ति तेन शरः। "श्रो वायु०" ५।३।२० इति घञि शारो वायुः वर्णश्च; नीशारो हिमानिलापहं 'वस्त्रम्। गौरिवाकृतनीशारः, प्रायेण शिशिरे कृशः' ॥

उणादौ "किच्च" (उ० १०) इति किद् अः धातोश्च सरूपद्वित्वम्, शिशिरः। "जॄपॄदॄ०" (उ० ४७) इतीके द्वित्वे रे चाऽऽदौ शर्शरीकः क्रिमिः, शर्शरीका माङ्गल्याभरणम्। "शृङ्ग०" (उ० ९६) इति गे निपातनात् शृङ्गं विषाणम्, शार्ङ्गः पक्षी। "पतितमि०" (उ० ९८) इत्यङ्गे शरङ्गः। "अनिशॄ०" (उ० १४५) इत्याटे शराटः शकुन्तः, शृङ्गाट इति तु "कपाट०" (उ० १४८) इत्याटे निपातनात् श्रयतेः। "मृजॄशॄ०" (उ० १६७) इत्यठे शरठः आयुधम्। "जॄकॄतॄ०" (उ० १७३) इत्यण्डे शरण्डः। "तॄकॄशॄ०" (उ० १८७) इत्यणे शरणं गृहम्। "परात् श्रो डित्" (उ० २५५) इति वधे परश्वधः। "कृशॄसृभ्य

[1] उणादि विवरणे तु मृंत्-प्राणत्यागे इत्यस्माद् धातोः 'मरुत्' शब्दः साधितः ॥

ऊर् चान्तस्य" ( उ० २९८ ) इति पे शूर्पं धान्यपवनभाण्डम् । "कृशॄगॄ०" ( उ० ३२९ ) इत्यभे शरभः । "अर्तीरि०" ( उ० ३३८ ) इति मे शर्म सुखम् । "धाग्राजि०" ( उ० ३७९ ) इत्यन्ये शरण्यः त्राता । "कृशॄपॄ०" ( उ० ४१८ ) इतीरे शरीरम् । "श्वसुरकुकुन्दुर०" ( उ० ४२६ ) इत्युरे निपातनात् शर्कुरः तरुणः । "कृशॄवृभ्यः करः" ( उ० ४३५ ) शर्करः, शर्करा । "कृगॄशॄ०" ( उ० ४४१ ) इति वरटि शर्वरो रुद्रः, शर्वरं तमः, शर्वरी रात्रिः । "श्रो नोऽन्तो ह्रस्वश्च" ( उ० ४९८ ) इति खले शृङ्खला । "लटिखटि०" ( उ० ५०५ ) इति वे शर्वो रुद्रः । "शॄणातेरावः" ( उ० ५२० ) शरावः । "ऋजिशॄ०" ( उ० ५५४ ) इति कितीपे शिरीषः । "नाम्युपान्त्य०" ( उ० ६०९ ) इति किदिः, शिरिः हिंस्रः । "कृशॄकुटि०" ( उ० ६१९ ) इति वा णिदिः, शारिः द्यूतोपकरणं—हस्तिपर्याणं—शारिका च । शरिः हिंसा । "कॄदॄघृसृ०" ( उ० ६३५ ) इति किति णौ शीर्णिः रोगः । "नीसाव्रृ०" ( उ० ६८७ ) इति मौ शर्मिः मृगः । "कुव्द्रि०" ( उ० ६९५ ) इति रौ निपातनात् शरारिः आतिः । "जॄशॄस्तॄ०" ( उ० ७०५ ) इति ङिति वौ शीर्विः हिंस्रः । "भृमृतॄ०" ( उ० ७१६ ) इत्युः, शरुः शरः हिंस्रश्च । "उवर्ण०" ७।१।३० इति ये शरवे हितं शरव्यं वेध्यम् । "किमः श्रो णित्" ( उ० ७२५ ) इत्युः, किंशारुः [1]धान्यशूकम् । "ऋतॄशॄमृश्रादिभ्यो रो लश्च" ( उ० ७२७ ) शालुः कषायः । "पराङ्भ्यां शॄखनिभ्यां डित्" ( उ० ७२४ ) परशुः । शिग्रुः इति तु "शिग्रुगेरु०" ( उ० ८११ ) इति रौ निपातनात् शिनोतेः । कशेरूः इत्यपि "काच्छीडा डेरूः" ( उ० ८५१ ) इति शेतेः । "शॄदॄ०" ( उ० ८९४ ) इत्यदि शरत् । "मन्" ( उ० ९११ ) इति मनि शर्म सुखम् । "मिथिरञ्जी०" ( उ० ९७१ ) इति कित्यसि शिरः ॥

'२५ पॄश् पालनपूरणयोः' । "प्वादेः०" ४।२।१०५ इति ह्रस्वे पृणाति । पपार । "ऋः शॄदॄप्रः" ४।४।२० निपप्रतुः, निपप्रुः; पक्षे "स्कृच्छृतो०" ४।३।८ इति गुणे निपपरतुः, निपपरुः "वृतो नवा०" ४।४।३५ इति इटो वा दीर्घे परिता, परीता । किति "ऋवर्णश्रि०" ४।४।५७ इति नेट्, "ॠल्वादेः०" ४।२।६८ इत्यत्र प्रो वर्जनात् तो नत्वाभावेः पूर्त, पूर्तवान्, पूर्तिः । "णौ दान्तशान्त०" ४।४।७४ इति क्ते वा निपातनमस्याऽपीत्येके, पूर्णः, पारितः । अस्मादेव

१. धान्यशूखम् इति मु० ॥

निपातनात् पूरेर्णौ क्ते पूर्णः, पूरितः । ण्यभावे तु पूर्णः । "युवर्ण०" ५।३।२८ इत्यलि परः । उणादौ "पॄपलिभ्यां टित् पिप् च पूर्वस्य" (उ० ११) पिप्परी वृक्षजातिः । "क्विच" (उ० १०) इति किद् अः सरूपद्वित्वं च पुर्पुरः फेनः । "इणुर्विशा०" (उ० १८२) इति णे पर्णम् । "कॄगॄपॄ०" (उ० १८८) इति कित्यणे पुरणः समुद्रः । "भापा०" (उ० २९६) इति पे पर्पः प्लवः । "सपॄप्रथि०" (उ० ३४७) इत्यमे परमः । "ऋजिशॄ०" (उ० ५५४) इति कितीपे पुरीषम् । "विदिपॄभ्यां०" (उ० ५५८) इति कित्युपे पुरुषः । "पॄकॄ०" (उ० ७२९) इति किदुः, पुरुः महान् राजा च । "स्नामदि०" (उ० ९०४) इति वनि पर्व ग्रन्थिः । "रुयर्ति०" (उ० ९९७) इत्युसि परुः पर्व । "गॄपॄदुर्वि०" (उ० ९४३) इति क्विपि पूः पुरी ॥

'२६ वॄश् भरणे' । वरणे इत्यन्ये । ओष्ठ्यादिः । "प्वादेः०" ४।२।१०५ इति ह्रस्वे वृणाति । ववार । "स्कृच्छॄतो०" ४।३।८ इति गुणे ववरतुः, ववरुः । वॄतो नवा०" ४।४।३५ इति इटो वा दीर्घे वरिता, वरीता । "इवृध०" ४।४।४७ इति सनि वेट्, विवरिषति, विवरीषति । "नामिनोऽनिट्" ४।३।३३ इति सनः कित्वे "ओष्ठ्यादु०" ४।४।११७ इत्युरि वुवूर्षति । किति "ऋवर्णश्रि०" ४।४।५७ इति नेट्, "ऋल्वादेः०" ४।२।६८ इति तो ने वूर्णः, वूर्णवान्, वूर्णिः । उणादौ "ऋतष्टित्" (उ० ९) इत्यः, सरूपद्वित्वं च वर्वरो म्लेच्छः; वर्वरी कुञ्चितः केशः । "वृवॄपॄ०" (उ० ७०९) इति नसौ वर्णसिः भूमिः ॥

'२७ भॄश् भर्जने च' । भर्जनं पाकः । चकाराद् भरणे । भर्त्सने इत्यन्ये । "प्वादेः०" ४।२।१०५ इति ह्रस्वे भृणाति । बभार । "वॄतो नवा०" ४।४।३५ इति इटो वा दीर्घे भरिता, भरीता । "इवृध०" ४।४।४७ इति सनि वेट्, बिभरिषति, बिभरीषति, बुभूर्षति । किति "ऋवर्णश्रि०" ४।४।५७ इति नेट्, "ऋल्वादेः०" ४।२।६८ इति तो ने भूर्णः, भूर्णवान्, भूर्णिः । उणादौ "ऋतष्टित्" (उ० ९) इत्यः सरूपद्वित्वं च भर्भरः छन्नवान् । भर्भरी श्रीः । "क्विच" (उ० १०) भुर्भुरः सञ्चयः ॥

'२८ दॄश् विदारणे' । भये इत्यन्ये । "प्वादेः०" ४।२।१०५ इति ह्रस्वे दृणाति । ददार । "ऋः शॄदॄप्रः" ४।४।२० दद्रतुः, दद्रुः; पक्षे "स्कृच्छॄतो०" ४।३।८ इति गुणे विददरतुः, विददरुः । णौ ङे "स्मॄदॄत्वर०" ४।१।६५ इति पूर्वस्य सन्वद्भावापवादे अत्वे अददरत् । "वॄतो नवा०" ४।४।३५ इति इटो वा

दीर्घे दरिता, दरीता । क्किति "ऋवर्णश्रि०" ४।४।५७ इति नेट्, "ॠल्वादेः०" ४।२।६८ इति तो ने दीर्णः, दीर्णवान्, दीर्णिः । अचि दरः । गौरादित्वाद् ङ्याम् दरी । उणादौ "कृ-वा-पा-जि०" (उ० १) इत्युणि दारु काष्ठं भव्यं च । "ॠतष्टित्" (उ० ९) इत्यः स्वरूपद्वित्वं च दर्दरो वाद्यविशेषः, दर्दरी सस्यलुण्टिः । "दॄकॄनॄ०" (उ० २७) इत्यके दरको भीरुः । "जॄपॄदॄ०" (उ० ४७) इति ईके द्वित्वे रे चादौ दर्दरीकः वादित्रविशेषः । "दुरो द्रः कूटश्च दुर् च" (उ० १५६) दुर्दुरूटः दुर्मुखः; चकारादुटे दुर्दुरुटोऽदेशकालवादी । णौ "ऋकॄवॄ०" (उ० १९६) इत्युणे दारुणः उग्रः । "श्वशुर०" (उ० ४२६) इत्युरे निपातनाद् दर्दुरः मण्डूको मेघश्च । "लटिखटि०" (उ० ५०५) इति वे दर्वः हिंस्रः, दर्वा जनपदः । "स्वरेभ्य इः" (उ० ६०६) दरिः महाभिदा । "दॄपॄवॄभ्यो विः" (उ० ७०४) दर्विः तर्दूः । "तॄदॄभ्यां दूः" (उ० ८४६) दर्दूः कुष्ठभेदः । "शॄदॄभसेरद्" (उ० ८९४) दरत् क्षत्रियः । दरदो जनपदः । [1]दरत् चेषदर्थेऽव्ययम् । प्राकृते दरेत्यर्धाल्पे, स एष संस्कृते कविभिर्भ्रान्त्या प्रयुक्तः, 'दरदलितहरिद्रापिञ्जराण्यङ्गकानि' [विद्धशालभञ्जिका, ३।१७] । "द्रो ह्रस्वश्च" (उ० ८९८) इति सदि दृषत् शिला । दॄ भये [१।१०१५], दरति । णौ घटादित्वाद् ह्रस्वे दरयति । दृणातेः दारयति ॥

'२९ जॄश् वयोहानौ' । "प्वादेः०" ४।२।१०५ इति ह्रस्वे जृणाति । जजार । "स्कृच्छॄतो०" ४।३।८ इति गुणे जजरतुः, जजरुः । "वॄतो नवा०" ४।४।३५ इति इटो वा दीर्घे जरिता, जरीता । क्किति "ऋवर्णश्रि०" ४।४।५७ इति नेट्, "ॠल्वादे०" ४।२।६८ इति तो ने जीर्णः, जीर्णवान्, जीर्णिः । क्त्वि "जॄव्रश्च०" ४।४।४१ इति इटि जरित्वा, जरीत्वा । जॄपूच् जरपि [३।२], जीर्यति । षित्त्वादङि जरा । जॄण् वयोहानौ [९।३८१], "युजादेः०" ३।४।१८ इति वा णिचि जारयति, जरति ॥

'३० नॄश् नये' । "प्वादेः०" ४।२।१०५ इति ह्रस्वे नृणाति । ननार । "स्कृच्छॄतो०" ४।३।८ इति गुणे ननरतुः, ननरुः । क्ये नीर्यते । "वॄतो नवा०" ४।४।३५ इति इटो वा दीर्घे नरिता, नरीता । क्किति "ऋवर्णश्रि०" ४।४।५७ इति नेट्, "ॠल्वादेः०" ४।२।६८ इति तो ने नीर्णः, नीर्णवान्, नीर्णिः ।

---

१. तुलना क्षी. त. पृ. २७० । इषदर्थे त्वव्ययं देश्यपदं च, (लि. टि. पृ. ११३) ॥

अचि नरः । स्त्रियां "नारी-सखी०" २।४।७६ इति निपातनाड् ङ्याम् नारी । णौ घटादित्वाद् ह्रस्वे नरयति ॥

'३१ गॄश् शब्दे'। "प्वादेः०" ४।२।१०५ इति ह्रस्वे गृणाति । जगार । "स्कृच्छृतो०" ४।३।८ इति गुणे जगरतुः, जगरुः । "वृतो नवा०" ४।४।३५ इति इटो वा दीर्घे गरिता, गरीता । क्डिति "ऋवर्णश्रि०" ४।४।५७ इति नेट्, "ॠल्वादेः०" ४।२।६८ इति तो ने गीर्णः, गीर्णवान्, गीर्णिः । "युवर्ण०" ५।३।२८ इत्यलि गरः । उणादौ "कृग्र ॠत उर् च" (उ० ७३४) इति उः, गुरुः । गॄत् निगरणे [ ५।२१ ], गिरति ॥

'३२ ॠश् गतौ'। "प्वादेः०" ४।२।१०५ इति ह्रस्वे ऋणाति । क्ये ईर्यते । आर, आरतुः । "वृतो नवा०" ४।४।३५ इति इटो वा दीर्घे अरिता, अरीता । क्डिति "ऋवर्णश्रि०" ४।४।५७ इति नेट्, "ॠल्वादेः०" ४।२।६८ इति तो ने समीर्णः, समीर्णवान्, समीर्णिः । "इवृध०" ४।४।४७ इति सनि वेट्, अरिरिषति, अरिरीषति । इडभावपक्षे इरादेशे दीर्घत्वे सनो द्वित्वे, पूर्वस्य इत्वे, द्वयोः षत्वे च ईर्षिषति ॥

वृत् प्वादिः । ल्वादिः । प्वादिर्ल्वादिश्च वृत् वर्तितः, संपूर्ण इत्यर्थः ॥

## अथ परस्मैपदिष्वेवाऽऽदन्तोऽनिट् च ।

'३३ ज्ञांश् अवबोधने'। "जा ज्ञा०" ४।२।१०४ इति जाऽऽदेशे जानाति । फलवत्कर्तरि "ज्ञोऽनुपसर्गात्" ३।३।९६ इत्यात्मनेपदे धर्मं जानीते । "पदान्तरगम्ये वा" ३।३।९९ स्वां गां जानीते, जानाति वा । उपसर्गात्तु "शेषात्" ३।३।१०० इति परस्मैपदे अवजानासि माम् । "निह्नवे ज्ञः" ३।३।६८ शतम् अपजानीते । "संप्रतेरस्मृतौ" ३।३।६९ "समो ज्ञो०" २।२।५१ इति व्याप्ये वा तृतीयायां मात्रा संजानीते, मातरं संजानीते, नित्यं शब्दं प्रतिजानीते । "अननोः सनः" ३।३।७० धर्मं जिज्ञासते । अनोस्तु, पुत्रम् अनुजिज्ञासति पाठाय । कर्मण्यसति ज्ञः "अज्ञाने०" २।२।८० इति करणे षष्ठ्यां सर्पिषो जानीते, सर्पिषा करणभूतेन प्रवर्तते इत्यर्थः । जज्ञे, जज्ञौ । "संयोगादेर्वाऽऽशिष्येः" ४।३।९५ ज्ञेयात्, ज्ञायात् अक्ङिति तु ज्ञासीष्ट । अनुस्वारेत्त्वान्नेट्, ज्ञाता, ज्ञातुम् । "ज्ञानेच्छा०" ५।२।९२ इति सति क्ते ज्ञातः । णौ "मारणतोषण०" ४।२।३० इति ह्रस्वे संज्ञपयति पशुम्, विज्ञपयति गुरुम्, ज्ञपयति शस्त्रम् । अन्यत्र ज्ञापयति । "इवृध०" ४।४।४७ इति सनि वेट्, जिज्ञपयिषति; पक्षे

" ङ्यापो० " ४।१।१६ इति ज्ञीप् न च द्विः ज्ञीप्सति । " नाम्युपान्त्य० " ५।१।५४ इति के ज्ञः । " उपसर्गादातो० " ५।१।५६ इति डे प्रज्ञः । प्रज्ञाद्यणि प्राज्ञः । " प्राज्ज्ञश्च " ५।१।७९ इति डे पथिप्रज्ञः । " णौ दान्त० " ४।४।७४ इति क्ते वा निपातनात् संज्ञप्तः पशुः; पक्षे " सेट्क्तयोः " ४।३।८४ इति णेर्लुकि संज्ञपितः । " उपसर्गाद्० " ५।३।११० इत्यङि प्रज्ञा, उपज्ञा । उणादौ " प्लुज्ञायजि० " ( उ० ६४६ ) इति तौ ज्ञातिः बन्धुः; ज्ञायते इति वा स्त्रियां क्तौ ज्ञातिः । ज्ञानं ज्ञातिरिति तु नास्ति, प्रसिद्धेनापह्नवत्वात् ॥

## अथेदन्तोऽनिट् च ॥

' ३४ क्षिपूञ् हिंसायाम् ' । क्षिणाति, चिक्षाय । " संयोगात् " २।१।५२ इति याऽपवादे इयि चिक्षियतुः, चिक्षियुः । अनुस्वारेत्त्वान्नेट्, क्षेता, क्षेतुम् । सानुबन्धत्वात् " क्षेः क्षी चा० " ४।२।७४ इति क्तयोस्तस्य नत्वाऽभावे क्ष्यादेशाभावे च क्षितः, क्षितवान् । पित्त्वादङि क्षिया । " श्वादिभ्यः " ५।३।९२ इति क्तौ क्षितिः । दीर्घान्तोऽयमित्येके, क्षीणाति, क्षीतः, क्षीतवान् । क्षि क्षये [१।१०], क्षयति । क्षित् निवासगत्योः [ ५।१७ ], क्षियति ॥

## अथेदन्तावनिटौ च ॥

' ३५ व्रींश् वरणे ' । व्रीणाति । प्वादिरयमित्येके; तन्मते " प्वादेः० " ४।२।१०५ इति ह्रस्वे व्रिणाति । विव्राय । यापवादे " संयोगात् " २।१।५२ इति इयि विव्रियतुः विव्रियुः । अनुस्वारेत्त्वान्नेट्, व्रेता, व्रेतुम्, व्रीतः, व्रीतवान्, व्रीतिः । उणादौ " व्रियो हिक् " ( उ० ७१० ) व्रीहिः ॥

' ३६ भ्रींश् भरणे ' । भये इत्यन्ये । भ्रीणाति । प्वादिरयमित्येके, तन्मते " प्वादेः " ४।२।१०५ इति ह्रस्वे भ्रिणाति । बिभ्राय । याऽपवादे " संयोगात् " २।१।५२ इति इयि बिभ्रियतुः, बिभ्रियुः । अनुस्वारेत्त्वान्नेट्, भ्रेता, भ्रेतुम्, भ्रीतः, भ्रीतवान्, भ्रीतिः । " युवर्ण० " ५।३।२८ इत्यलि भ्रयः ॥

## अथ ठान्तः सेट् च ॥

' ३७ हेठश् भूतप्रादुर्भावे ' । भूतप्रादुर्भावः अतिक्रान्तोत्पत्तिः । " तवर्गस्य० " १।३।६० इति नस्य णत्वे हेठ्णाति । " व्यञ्जनाच्छ्नाहेरानः " ३।४।८० हेठानः । जिहेठ, हेठिता, हेठितुम्, हेठितः । हेठि विबाधायाम् [ १।६७६ ], हेठते ॥

## अथ डान्तः सेट् च ॥

'३८ मृडश् सुखने'। "तवर्गस्य०" १।३।६० इति नो णे मृड्णाति। "व्यञ्जनात्०" ३।४।८० इति श्नाहेः आने मृडानः। ममर्ड, मर्डिता, मृडितः। "क्षुधक्लिश०" ४।३।३१ इति क्त्वः किञ्चे मृडित्वा। "नाम्युपान्त्य०" ५।१।५४ इति के मृडः। उणादौ "ऋच्यृजि०" (उ० ४८) इति किति ईके [1]मृडीकः सुखकृत्। मृडत् सुखने [ ५१४४ ], मृडति ॥

## अथ थान्ताश्चत्वारः सेटश्च ॥

'३९ श्रन्थश् मोचनप्रतिहर्षयोः'। "नो व्यञ्जनस्या०" ४।२।४५ इति नलुकि श्रथ्नाति, श्रथान। कर्मकर्तरि "एकधातौ०" ३।४।८६ इति जिक्यात्मनेपदेषु प्राप्तेषु किरादित्वात् "भूषार्थ०" ३।४।९३ इति क्यञ्योरभावे श्रथ्नीते माला स्वयमेव। अश्रन्थिष्ट माला स्वयमेव। शश्रन्थ। "वा श्रन्थ०" ४।१।२७ इति अत एत्वे, द्वित्वाभावे नो लुकि च श्रेथतुः, श्रेथुः, श्रेथिथ; पक्षे शश्रन्थतुः, शश्रन्थुः। "स्क्रसृवृ०" ४।४।८१ इति इटि शश्रन्थिथ। श्रन्थिता, श्रन्थितुम्, श्रथितः, श्रथितवान्। "दशनावोद०" ४।२।५४ इति निपातनाद् नलुकि घञि प्रश्रथः, हिमश्रथः। "णिवेत्ति०" ५।३।१११ इत्यने श्रन्थना। "ऋत्तृष०" ४।३।२४ इति क्त्वो वा किञ्चे, श्रथित्वा, श्रन्थित्वा। श्रथुङ् शैथिल्ये [१।७१७], श्रन्थते। श्रन्थण् सन्दर्भे [ ९।३९२ ], "युजादेः०" ३।४।१८ इति वा णिचि श्रन्थयति, श्रन्थति ॥

'४० मन्थश् विलोडने'। मथ्नाति। द्वौ मथान। ममन्थ, मन्थिता, मन्थितुम्, मथितः, मथितवान्। "ऋतृष०" ४।३।२४ इति क्त्वो वा किञ्चे मथित्वा, मन्थित्वा। घञि मन्थः। उणादौ "संस्तुस्पृशिमन्थेरानः" (उ० २७६) मन्थानः खजकः। मन्थ हिंसासंक्लेशयोः [ १।२९२ ], मन्थति ॥

'४१ ग्रन्थश् सन्दर्भे'। सन्दर्भो बन्धनम्। ग्रथ्नाति। द्वौ ग्रथान। कर्मकर्तरि "एकधातौ०" ३।४।८६ इति जिक्याऽऽत्मनेपदेषु प्राप्तेषु "भूषार्थ०" ३।४।९३ इति क्यञ्योरभावे ग्रथ्नीते माला स्वयमेव, अग्रन्थिष्ट माला स्वयमेव। जग्रन्थ। "वा श्रन्थ०" ४।१।२७ इति अत एत्वे द्वित्वाभावे नो लुकि च ग्रेथतुः, ग्रेथुः। "स्क्रसृवृ०" ४।४।८१ इति इटि ग्रेथिथ; पक्षे जग्रन्थतुः, जग्रन्थुः,

१. मृडीकम् इति उणादि विवरणे ॥

जग्रन्थिथ । ग्रन्थिता, ग्रन्थितुम्, ग्रथितः, ग्रथितवान् । "ऋत्तृष०" ४।३।२४ इति क्त्वो वा क्त्वे ग्रथित्वा, ग्रन्थित्वा । घञि ग्रन्थः । उणादौ "पदिपठि०" (उ० ६०७) इति इः, ग्रन्थिः पर्व । ग्रथुङ् कौटिल्ये [ १।७१८ ], ग्रन्थते । ग्रन्थण् सन्दर्भे [ ९।३९३ ], "युजादेः०" ३।४।१८ इति वा णिचि ग्रन्थयति, ग्रन्थति ॥

'४२ कुन्थश् सङ्क्लेशे'। श्लेषणे इत्यन्ये । कुथ्नाति । हौ कुथान । चुकुन्थ, कुन्थिता, कुन्थितुम्, कुथितः, कुथितवान् । "ऋत्तृष०" ४।३।२४ इति क्त्वो वा क्त्वे कुथित्वा, कुन्थित्वा । घञि कुन्थः । स्थादित्वात् के कुथ्यते इति कुथः, कुथा, कुथं वा वर्णकम्बलः । "क्तेटो०" ५।३।१०६ इत्यः, कुन्था । उणादौ "भृमृतॄ०" (उ० ७१६) इत्युः, कुन्थुः सूक्ष्मजन्तुः । "ते लुग्वा" ३।२।१०८ इत्युत्तरपदलुकि कुन्थुदयापरः 'कुन्थुर्भगवांस्तीर्थकरः'। कुथु हिंसा-संक्लेशयोः [ १।२८८ ], उदित्त्वान्ने कुन्थति, कुन्थ्यते ॥

## अथ दान्तः सेट् च ॥

'४३ मृदश् क्षोदे'। मृद्नाति । हौ मृदान । ममर्द, मर्दिता, मृदितः । "अजातेः शीले" ५।१।१५४ इति णिनि नगरमर्दी, प्राकारमर्दी । "क्षुधक्लिश०" ४।३।३१ इति क्त्वः क्त्वे मृदित्वा । "क्रुत्संपदा०" ५।३।११४ इति कर्मणि क्विपि मृद् । उणादौ "मृदेर्वोऽन्तश्च वा" (उ० ४९) इति ईके मृद्वीका, मृदीका च द्राक्षा । "मृद्गुन्दि०" (उ० ३९९) इति कित्यरे मृदरो व्याधिः । "मृदिकन्दि०" (उ० ४६५) इत्यले-मर्दलो मुरजः ॥

## अथ धान्तौ ॥

'४४ गुधश् रोषे'। गुध्नाति । हौ गुधान । जुगोध, गोधिता, गोधितुम्, गुधितः । "क्षुधक्लिश०" ४।३।३१ इति क्त्वः क्त्वे गुधित्वा । "वौ व्यञ्जनादेः०" ४।३।२५ इति सनो वा क्त्वे जुगुधिषति, जुगोधिषति । भिदाद्यङि गोधा । उणादौ "कुथिगुधेरूमः" (उ० ३५३) गोधूमः । गुधच् परिवेष्टने [ ३।१२ ], गुध्यति ॥

'४५ बन्धंश् बन्धने'। बध्नाति, हौ बधान । बबन्ध । संयोगान्तत्वाद् "इन्ध्यसंयोगा०" ४।३।२१ इति क्त्वाभावे बबन्धतुः, बबन्धुः । अनुस्वारेत्त्वान्नेट्, "गडदबादेः०" २।१।७७ इति बस्य भे संभन्त्स्यति । संबन्द्धा, बद्धः । "बन्धेर्नाम्नि" ५।४।६७ इति णमि कुक्कुटीबन्धं बद्धः । "आधारात्" ५।४।६८

हस्तवन्धं वद्धः । उणादौ "दृकृनृ०" (उ० २७) इत्यके वन्धकः चारकपालः । गौरादित्वाद् ङ्याम् वन्धकी पांसुला । "मृमनि०" (उ० ५८) इति ऊके वन्धूकः । "वन्धेः" (उ० १५७) इति कित्यूटे वधूटी । "दिननग्न०" (उ० २६८) इति ने निपातनाद् [1]व्रध्नः रविः । "शुषीषि०" (उ० ४१६) इति किति इरे वधिरः । "भृमृतॄ०" (उ० ७१६) इत्युः, वन्धुः ॥

## अथ भान्तास्त्रयः सेटश्च ॥

'४६ क्षुभश् संचलने' । "क्षुभ्नादीनाम्" २।३।९६ इति णत्वाभावे क्षुभ्नाति, क्षुभ्नीतः, क्षुभ्नन्ति । हौ क्षुभाण । चुक्षोभ, क्षोभिता, अक्षोभीत् । "क्षुब्धविरिब्ध०" ४।४।७० इति क्ते निपातनाद् नेट्, क्षुब्धः मन्थश्चेत्, क्षुभितः अन्यः । क्षुभि सञ्चलने [ १।९४८ ], क्षोभते । क्षुभंच् सञ्चलने [ ३।५६ ], क्षुभ्यति । पुष्याद्यङि अक्षुभत् ॥

'४७ णभ ४८ तुभश् हिंसायाम्' । "पाठे०" २।३।९७ इति णो ने नभ्नाति । "अदुरुपसर्गा०" २।३।७७ इति नो णे प्रणभ्नाति । हौ नभान । ननाभ । "अनादेशादेः०" ४।१।२४ इति अत एत्वे द्वित्वाभावे च नेभतुः, नेभुः । नभिता, नभितः ॥

'४८ तुभश्' । तुभ्नाति, तुतोभ, तुतुभतुः, तुतुभुः, तोभिता, तुभितः । णभि-तुभि हिंसायाम् [ १।९४९, ९५० ], नभते, तोभते । णभ-तुभच् हिंसायाम् [ ३।५७, ५८ ], नभ्यति, तुभ्यति ॥

## अथ वान्तः सेट् च ॥

'४९ खवश् हेठश्वत्' । यथा हेठश् भूतप्रादुर्भावे तथाऽयमपि, वर्णक्रमानुरोधेन तु तत्रैव न पठितः । "अनुनासिके च०" ४।१।१०८ इति व ऊटि "ऊटा" १।२।१३ इत्यतः औत्वे खौनाति । ऊटं, "य्वोः०" ४।४।१२१ इति वलुकं च नेच्छन्त्येके, तन्मते खव्नाति । हौ खवान । चखाव, खविता खवितुम्, खवित्वा, खवितः । क्विप्यपि खौः । चान्तोऽयमित्येके, चान्तं धात्वन्तरमित्यन्ये, तन्मते "तवर्गस्य०" १।३।६० इति नो ञत्वे खच्ञाति । हौ खचान । खचितः खचितवान्, खचितुम् ॥

---

१. व्रघ्नो इति मु० ॥

## अथ शान्तौ सेटौ च ॥

'५० क्लिशौश् विबाधने'। "तवर्गस्य०" १।३।६० इति नो ञस्य "न शात्" १।३।६२ इत्यभावे क्लिश्नाति। ह्यौ क्लिशान। चिक्लेश। औदित्त्वाद् वेट्, क्लेष्टा, क्लेशिता। क्तक्तवतुषु "पूङ्क्लिशिभ्यो०" ४।४।४५ इति वेटि क्लिष्टः, क्लिशितः, क्लिष्टवान्, क्लिशितवान्, क्लिष्ट्वा। "वौ व्यञ्जनादेः०" ४।३।२५ इति विकल्पापवादे "क्षुधक्लिश०" ४।३।३१ इति क्त्वे क्लिशित्वा। उणादौ "क्लिशः के च" (उ० ५३०) इति शे केशः। क्लिशिच् उपतापे [ ३।१३३ ], क्लिश्यते। क्लिश्यति इति तु आत्मनेपदस्याऽनित्यत्वज्ञापनात् ॥

'५१ अशश् भोजने'। अश्नाति। ह्यौ अशान। आश, अशिता, अशितः। "भावे चाशिताद्०" ५।१।१३० इति निर्देशात् साप्यादपि कर्तरि क्ते दीर्घे च आङ्पूर्वादविवक्षितकर्मणो वा क्ते आशितः तृप्तः। "वेयिवद्०" ५।२।३ इति निपातनाद् भूतमात्रे क्वसुः न चेट्, नाशीत, अनाश्वान्। "भुजिपति०" ५।३।१२८ इति कर्मणि अनटि अशनम्। क्यनि "क्षुत्तृट्०" ४।३।११३ इति निपातनाद् अशनायति बुभुक्षुः। क्षुधोऽन्यत्र अशनीयति दातुम्। उणादौ "इण्यशि०" (उ० ७७) इति तककि अष्टका पितृदैवत्यं कर्म। अश्रिः इति तु "तङ्किवङ्कि०" (उ० ६९२) इति रौ अश्नोतेः। अशौटि व्याप्तौ [ ४।२९ ], अश्नुते ॥

## अथ षान्ताः सप्त सेटश्च ॥

'५२ इषश् आभीक्ष्ण्ये'। आभीक्ष्ण्यं पौनःपुन्यम्। इष्णाति। ह्यौ इषाण। इयेष, एषिता, इषितः, इषितवान्। तादौ "सहलुभेच्छ०" ४।४।४६ इति इट् वा अतोऽपीत्येके, एष्टा, एषिता। वेट्त्वात् क्तयोर्नेट्, इष्टः, इष्टवान्। इषच् गतौ [ ३।२५ ], अन्विष्यति। इषत् इच्छायाम् [ ५।१०५ ], इच्छति, इष्टः ॥

'५३ विषश् विप्रयोगे'। विष्णाति। ह्यौ विषाण। विवेष, वेषिता। "वौ व्यञ्जनादेः०" ४।३।२५ इति क्त्वासनोः वा क्त्वे विषित्वा, वेषित्वा, विविषिषति, विवेषिषति। विषितः। "नाम्युपान्त्य०" ५।१।५४ इति के विषम्। विषू सेचने [ १।५२३ ], वेषति। विष्लृंकी व्याप्तौ [ २।८५ ], वेविष्टे, वेवेष्टि, अविषत् ॥

'५४ प्रुष ५५ प्लुषश् स्नेहसेचनपूरणेषु'। प्रुष्णाति, ह्यौ प्रुषाण। पुप्रोष, प्रोषिता, प्रुषितः। "क्रुत्संपदा०" ५।३।११४ इति क्विपि विप्रुट्। उणादौ "निघृपी०" (उ० ५११) इति किति वे प्रुष्वा निवृत्तिः ॥

'५५ प्लुषश्' । प्लुष्णाति । ह्रौ प्लुषाण । प्लोषिता । प्लुषितः । प्रुषू, प्लुषू दाहे [ १।५३२, ५३३ ], प्रोषति, प्लोषति । प्लुषूच् दाहे [ ३।६८ ], प्लुष्यति ॥

'५६ मुषश् स्तेये' । मुष्णाति, ह्रौ मुषाण । मुमोष, मोषिता, मुषितः । "रुदविद०" ४।३।३२ इति क्त्वासनोः क्त्वे मुषित्वा, मुमुषिषति । उणादौ "विचिपुषि०" (उ० २२) इति किति के मुष्कः पेलम् । "मुषेर्दीर्घश्च" (उ० ४३) इति इके मूषिकः, अजादित्वादापि मूषिका ॥

'५७ पुषश् पुष्टौ' । पुष्णाति, ह्रौ पुषाण । पुपोष, पोषिता । पुष पुष्टौ [ १।५३६ ], पोषति । पुषंच् पुष्टौ [ ३।३२ ], पुष्यति, पोष्टा ॥

'५८ कुषश् निष्कर्षे' । निष्कर्षः बहिष्कर्षणम् । कुष्णाति । कर्मकर्तरि "कुषिरञ्जेः०" ३।४।७४ इति वा परस्मैपदे श्ये च कुष्यति पादः स्वयमेव, पक्षे "एकधातौ०" ३।४।८६ इति क्याऽऽत्मनेपदयोः कुष्यते पादः स्वयमेव । ह्रौ कुषाण । चुकोष, कोषिता । "वौ व्यञ्जनादेः०" ४।३।२५ इति सनो वा क्त्वे चुकुषिषति, चुकोषिषति । "क्षुधक्लिश०" ४।३।३१ इति क्त्वः क्त्वे कुषित्वा । निरः परात् "निष्कुषः" ४।४।३९ इति वेट्, "हशिटो०" ३।४।५५ इति सक्त्वि निरकुक्षत्, पक्षे सिचि निरकोषीत् । सनि निश्चुकुक्षति । "उपान्त्ये" ४ ४।४४ इत्यत्र क्त्त्वम् निश्चुकुषिषति । निश्चुकोषिषति, निष्कोष्टा, निष्कोषिता । "क्तयोः" ४।४।४० इति इटि निष्कुषितः, निष्कुषितवान् । उणादौ "कुपेः कित्" (उ० ८०) इति ईतके कुषीतकः ऋषिः । "कुषेर्वा०" (उ० १६४) इति वा किति ठे कोष्ठः, कुष्टम् । प्रकोष्ठः दोषः । "प्रुषिप्लुषि०" (उ० ७०७) इति सिक्ति कुक्षिः । "सिविकुटि०" (उ० ७५३) इति कित्याकौ कुषाकुः अग्निः ॥

## अथ सान्तः सेट् च ॥

'५९ ध्रसूश् उञ्छे' । ध्रस्नाति । ह्रौ ध्रसान । दध्रास, ध्रसिता, ध्रसितुम् । ऊदित्त्वात् क्त्वि वेट्, ध्रस्त्वा, ध्रसित्वा । वेट्त्वात् क्तयोर्नेट्, ध्रस्तः, ध्रस्तवान् । ध्रसण् उत्क्षेपे [ ९।१९५ ], ध्रासयति ॥

## अथाऽऽत्मनेपदी ऋदन्तः सेट् च ॥

'६० वृङ्श् संभक्तौ' । संभक्तिः संसेवा । "इङितः०" ३।३।२ इति आत्मनेपदे "एषामी०" ४।२।९७ इति ईत्वे वृणीते । वव्रे । "वृतो नवा०"

४।४।३५ इति इटो वा दीर्घे वरिता, वरीता। "इट् सिजाशिषोः०" ४।४।३६ इति वेटि अवरिष्ट, अवरीष्ट; पक्षे "ऋवर्णात्" ४।३।३६ इति सिचः किंत्वे अवृत। वरिषीष्ट, पक्षे वृषीष्ट। "इवृध०" ४।४।४७ इति सनि वेट्, विवरिषते, विवरीषते; पक्षे "नामिनोऽनिट्" ४।३।३३ इति सनः किंत्वे वुवूर्षते। किति "ऋवर्णश्रि०" ४।४।५७ इति नेट्, वृतः, वृतवान्, वृत्वा। "वर्योपसर्या०" ५।१।३२ इति ये निपातनाद् वर्यम् उपेयम्, वार्यम् अन्यत्। "भृवृजि०" ५।१।११२ इति खे पतिंवरा कन्या। "वृङ्भिक्षि०" ५।२।७० इति टाके वराकः, वराकी। "युवर्ण०" ५।३।२८ इत्यलि वरः। उणादौ "जृपृदृ०" (उ० ४७) इति ईके द्वित्वे आदौ च रे [1]वर्वरीका सरस्वती। "वृङ एण्यः" (उ० ३८२) वरेण्यः। वृगूट् वरणे [ ४।९ ], वृणुते, वृणोति। वृगण् आवरणे [ ९।३८० ], "युजादेः०" ३।४।१८ इति वा णिचि वारयति; पक्षे वरते, वरति॥

इत्याचार्यश्रीहेमचन्द्रविरचिते स्वोपज्ञधातुपारायणे
श्नाविकरणः शित् क्र्यादिगणः सम्पूर्णः॥



१. उणादिविवरणे तु 'वृगूट् वरणे' इत्यस्माद् धातोः 'वर्वरीका' शब्दः साधितः॥

# अथ चुरादयः (९) ॥

अथ णितश्चुरादयो वर्णक्रमेण प्रस्तूयन्ते, तत्राऽऽदौ—

'१ चुरण् स्तेये'। णित्त्वं चुरादित्वज्ञापनार्थम्। स्वार्थिकत्वेनान्तरङ्गत्वाद् विशेषविधानाच्च कर्त्रादिकारकापेक्षत्वेन बहिरङ्गेभ्यः सामान्यविहितेभ्यश्च तिवादिभ्यः प्रागेव "चुरादिभ्यो०" ३।४।१७ इति स्वार्थे णिचि, णिजन्तस्यापि क्रियार्थत्वाद्धातुत्वे "शेषात्०" ३।३।१०० इति परस्मैपदे चोरयति। णिचो ञित्त्वाभावात् फलवत्कर्तर्यात्मनेपदं नास्ति। चन्द्रस्तु णिच्यपि उभयपदित्वमाम्नासीत् णिज्विकल्पं च। "धातोरनेकस्वराद्०" ३।४।४६ इति परोक्षाया आमि चोरयांचकार। "णिश्रि०" ३।४।५८ इति ङे अचूचुरत्। चोरयन्तं प्रायुङ्क्त इति णिजन्ताद् "प्रयोक्तृव्यापारे०" ३।४।२० इति णिगि "णेरनिटि" ४।३।८३ इति णिचो लुक्यपि णिजात्याश्रयणात् समानलोपित्वाभावात् "उपान्त्यस्या०" ४।२।३५ इति ह्रस्वे "लघोर्दीर्घो०" ४।१।६४ इति पूर्वस्य दीर्घे च अचूचुरत्। कर्मकर्तरि "एकधातौ०" ३।४।८६ इति जिक्याऽऽत्मनेपदेषु प्राप्तेषु "भूषार्थ०" ३।४।९३ इति जिक्ययोरभावे अचूचुरत गौः स्वयमेव, चोरयते गौः स्वयमेव। ञिच एव प्रतिषेधाञ्जिटि चोरिष्यते गौः स्वयमेव। चोरयिता। "सेट्क्तयोः" ४।३।८४ इति णेर्लुकि चोरितः, चोरितवान्। अचि चोरः। गौरादित्वाद् ङ्याम् चोरी। प्रज्ञाद्यणि चौरः। "णिवेत्ति०" ५।३।१११ इति अने चोरणा। णिचोऽनित्यत्वादभावे भिदादिनिपातनादङि चुरा। छत्रादित्वादणि चुराशीलः चौरः, "अणञेये०" २।४।२० इति ङ्याम् चौरी। "युवर्ण०" ५।३।२८ इत्यलि चोरः।

'इह पचुण्—चितुण्प्रभृतीनां सनकारनिर्देशमकृत्वा उदित्करणं चुरादिणिचोऽनित्यत्वज्ञापक. न च 'चिन्त्यते' इत्यादौ नलोपाभावार्थम्; ततो णिज्लुकः स्थानित्वेन उपान्त्यत्वाभावान्नलुकोऽप्रसङ्गात्, तेन चोरति, चिन्तति इत्यादि सिद्धम्। इदं च ज्ञापकं, 'घुषेरविशब्दे" ४।४।६८ इति विशब्दनप्रतिषेधः, अयं हि विशब्दने घुषेरिट्प्रतिषेधाभावार्थः, स च णिचोऽनित्यत्वेऽनेकस्वरत्वादेव सिद्धः। तेन 'महीपालवचः श्रुत्वा जुघुषुः पुष्यमाणवाः' [पातञ्जल महाभाष्य, ७।२।२३] इत्यपि सिद्धम् ॥

## अथ ऋदन्तौ ॥

'२ पॄण् पूरणे'। स्वार्थे णिचि पारयति। क्ये पार्यते। "धातोरनेकस्वराद्०" ३।४।४६ इति आमि पारयांचकार। "साहिसाति०" ५।१।५९ इति शे पारयः। ऋदन्तोऽयमित्येके। पॄंक् पालन पूरणयोः [ २।७६ ] पिपर्ति। पृङ्त् व्यायामे [ ५।१५१ ], व्याप्रियते ॥

'३ घॄण् स्रवणे'। घारयति, घारयामास। घृं सेचने [ १।२० ], घरति घृतम्। घृ स्रु आवरणे इति पूर्वे पेठुः ॥

## अथ कान्ता अष्टौ ॥

'४ श्वल्क ५ वल्कण् भाषणे'। श्वल्कयति, श्वल्कयांचकार ॥

'५ वल्कण्'। वल्कयति, वल्कयांचकार। अलि वल्कः त्वरुत्वक्। वल्कलम् इति तु वलेः कलकि ॥

'६ नक्क ७ धक्कण् नाशने'। नक्कयति, धक्कयति ॥

'८ चक्क ९ चुक्कण् व्यथने'। चक्कयति। उणादौ "मुरल०" (उ० ४७४) इति निपातनादले चक्कलम्, चक्कलकम् ॥

'९ चुक्कण्'। चुक्कयति। अचि अलि वा चुक्कः। चिक्क इति कौशिकः। चिक्कसम् चिक्कणम् ॥

'१० टकुण् बन्धने'। उदित्वान्ने टङ्कयति, अलि विटङ्कः। "पुंनाम्नि०" ५।३।१३० इति घे टङ्कः दृषद्दारणः, अनटि टङ्कनम्। "णिवेत्ति०" ५।३।१११ इति अने टङ्कना ॥

'११ अर्कण् स्तवने'। अर्कयति। अचि अलि वा अर्कः ॥

## अथ चान्तौ ॥

'१२ पिच्चण् कुट्टने'। पिच्चयति। पिचुः इति तु "पचेरिच्चातः" (उ० ७३५) इति पचेः औ रूपम् ॥

'१३ पचुण् विस्तारे'। उदित्वान्ने प्रपञ्चयति, अलि प्रपञ्चः। पचुङ् व्यक्तीकरणे [ १।६५७ ] पञ्चते। "नाम्नि पुंसि च" ५।३।१२१ इति णके पञ्चिका। अचि गौरादित्वाद् ङ्याम् विपञ्ची। घञि न्यङ्क्वादित्वात् कत्वे पङ्कः ॥

'३९ लुण्टण् स्तेये च'। चकारादनादरे। लुण्टयति। "वृद्भिक्षि०" ५।२।७० इति टाके लुण्टाकः, लुण्टाकी। णिजभावे "क्तेटो०" ५।३।१०६ इत्यः, लुण्टा ॥

'४० स्निटण् स्नेहने'। स्नेटयति ॥

'४१ घट्टण् चलने'। घट्टयति। अलि संघट्टः। "णिवेत्ति०" ५।३।१११ इत्यने घट्टना। "पुंनाम्नि०" ५।३।१३० इति करणाधारे घे घट्टः नद्यवतरण-स्थानम्, अचि अरघट्टः। घट्टि चलने [ १।६६८ ], घट्टते ॥

'४२ खट्टण् संवरणे'। खट्टयति मुखम् ॥

'४३ षट्ट ४४ स्फिटण् हिंसायाम्'। "षः सो०" २।३।९८ इति से सट्टयति। षोपदेशत्वाद् "णिस्तोरेवा०" २।३।३७ इति षत्वे सिषट्टयिषति। णके सट्टकः। अयं बलदाननिकेतनेष्वपि इत्यन्ये। स्फेटयति, णके स्फेटकः "पुंनाम्नि०" ५।३।१३० इति घे स्फेटः संस्फेटश्च तुमुलयुद्धम्। स्फिटण् अनादरे इत्यन्ये ॥

'४५ स्फुडण् परिहासे'। उदित्त्वान्ने स्फुण्टयति। अयं स्फुटण् इत्येके, स्फोटयति ॥

'४६ कीटण् वर्णने'। बन्धे इत्यन्ये। कीटयति। अचि कीटः ॥

'४७ वट्टण् विभाजने'। उदित्त्वान्ने वण्टयति। डान्तोऽयमित्येके, वण्डयति। अचि वण्डः। वट्ट विभाजने [ १।२०५ ], वण्टति ॥

'४८ रुटण् रोषे'। रोटयति। अणि ग्रामरोटः। रुट्ट स्तेये [१।२०६], रुण्टति ॥

'४९ शठ ५० श्वठ ५१ श्वठुण् संस्कारगत्योः'। शाठयति। शठ कैतवे च [ १।२२२ ], शठति। अचि शठः। श्वाठयति ॥

'५१ श्वठुण्'। उदित्त्वान्ने श्वण्ठयति ॥

'५२ शुठण् आलस्ये'। शोठयति। शुठ गतिप्रतीघाते [१।२२३], शोठति ॥

'५३ शुठुण् शोषणे'। उदित्त्वान्ने शुण्ठयति। अचि शुण्ठः। गौरादित्वाद् ङ्याम् शुण्ठी। शुठु शोषणे [ १।२२६ ], शुण्ठति ॥

'५४ गुठुण् वेष्टने'। उदित्त्वान्ने गुण्ठयति। "णिवेत्ति०" ५।३।१११ इति अने गुण्ठना। क्ते अवगुण्ठितः ॥

## अथ डान्ताः सप्तदश ॥

'५५ लडण् उपसेवायाम्' । लाडयति । डस्य लत्वे उपलालयति । लड विलासे [ १।२५४ ], लडति । जिह्वोन्मन्थने घटादित्वाद् णिगि ह्रस्वे लडयति ॥

'५६ स्फुडुण् परिहासे' । उदित्त्वान्ने स्फुण्डयति । णके स्फुण्डिका ॥

'५७ ओलडुण् उत्क्षेपे' । उदित्त्वान्ने ओलण्डयति । "सेट्क्तयोः" ४।३।८४ इति णेर्लुकि ओलण्डितः, ओलण्डितवान् । ओदिदयमित्यन्ये; तन्मते लण्डयति । णिजिटोरनित्यत्वात् "सूयत्यादि०" ४।२।७० इति क्तयोस्तस्य नत्वे लण्डूणः, लण्डूणवान् । ओदित्करणबलात् णिज्व्यवायेऽपि नत्वमित्यन्ये; लण्डिनः, लण्डिनवान् । [1]लदुण् अपि इति चान्द्राः; अवलन्दयति उष्ट्रम् ॥

'५८ पीडण् गहने' । गहनं बाधा । पीडयति । ङे "भ्राजभास०" ४।२।३६ इति वा ह्रस्वे अपीपिडत्, अपिपीडत् । "भीषिभूषि०" ५।३।१०९ इत्यत्र बहुवचनादङि पीडा । अवगाहने इत्यन्ये । तिलपीलकः ॥

'५९ तडण् आघाते' । ताडयति । उणादौ णिचोऽनित्यत्वादभावे "शलिबलि०" (उ० ३४) इति आके तडाकं सरः । तिन्तिडीक इति तु "सृणीका०" (उ० ५०) इति ईके निपातनात् तिमेः । "तडेरागः" (उ० ९७) तडागं सरः । "हृसृरुहि०" (उ० ८८७) इति इति तडित् । "कमिवमि०" (उ० ६१८) इति णिदिः, ताडिः ॥

'६० खड ६१ खडुण् भेदे' । खाडयति ॥

'६१ खडुण्' । उदित्त्वान्ने खण्डयति ॥

'६२ कडुण् खण्डने च' । चकाराद् भेदे । उदित्त्वान्ने कण्डयति । खुडुण्, खण्डने इत्येके, खुण्डयति, खुण्डितः ॥

'६३ कुडुण् रक्षणे' । उदित्त्वान्ने कुण्डयति । कुडुङ् दाहे [१।६९०], कुण्डते ॥

'६४ गुडुण् वेष्टने च' । चकाराद् रक्षणे । उदित्त्वान्ने गुण्डयति ॥

'६५ चुडुण् छेदने' । उदित्त्वान्ने चुण्डयति ॥

---

१. तुलना:-चान्द्रा लदिमप्याहुः, (क्षी. त. पृ. २८०) ॥

## अथ छान्तः ॥

'१४ म्लेछण् म्लेच्छने'। म्लेच्छनम् अव्यक्ता वाक्। म्लेच्छयति । म्लेच्छ अव्यक्तायां वाचि [ १।११९ ], म्लेच्छति ॥

## अथ जान्ता एकादश ॥

'१५ ऊर्जण् बलप्राणनयोः'। प्राणनं जीवनम् । ऊर्जयति । "दिद्युद्०" ५।२।८३ इति क्विपि ऊर्क्। "रात्सः" २।१।९० इति नियमादत्र संयोगान्तलुक् नास्ति। ऊर्ग् अस्यास्ति इति "ऊर्जो विन्वलावश्चान्तः" ७।२।५१ ऊर्जस्वी, ऊर्जस्वलः । भिदाद्यङि ऊर्जा । क्ते ऊर्जितम् ॥

'१६ तुजु १७ पिजुण् हिंसाबलदाननिकेतनेषु'। निकेतनं गृहम् । उदित्वान्ने तुञ्जयति, पिञ्जयति । उणादौ "ऋच्छिचटि०" (उ० ३९७) इति अरे पिञ्जरः । "पिञ्जिमञ्जि०" (उ० ४८८) इति ऊले पिञ्जूलः हस्तिबन्धनपाशः । लुजुमप्येके पेठुः, लुञ्जयति । लोकृ-तर्केति दण्डकेऽनयोः पुनः पाठः अर्थभेदार्थः आत्मनेपदार्थः सकर्मकार्थश्च, तुञ्जयते, पिञ्जयते । तुजु बलने च [ १।१६२ ], तुञ्जति, पिजुकि संपर्चने [ २।५२ ], पिङ्क्ते ॥

'१८ क्षजुण् कृच्छ्रजीवने'। उदित्त्वान्ने क्षञ्जयति । क्षजुङ् गतिदानयोः [ १।१००१ ] क्षञ्जते । घटादित्वाद् ञिणम्परे णौ वा दीर्घे अक्षाञ्जि, अक्षञ्जि ॥

'१९ पूजण् पूजायाम्'। पूजयति । "य एच्चा०" ५।१।२८ इति ये पूज्यम् । णके पूजकः । याजकादित्वात् "कर्मजा तृचा च" ३।१।८३ इति प्रतिषिद्धोऽपि षष्ठीसमासः, गुरूणां पूजकः गुरुपूजकः । "ज्ञानेच्छार्चा०" ५।२।९२ इति सति क्ते "क्तयोरसदा०" २।२।९१ इत्यत्र सदर्थस्य वर्जनात् प्रतिषेधाभावे "कर्तरि" २।२।८६ इति षष्ठ्यां राज्ञां पूजितः । "ज्ञानेच्छार्चा०" ३।१।८६ इति प्रतिषेधाच्चात्र न षष्ठीसमासः । "भीषीभूषि०" ५।३।१०९ इति अङि पूजा ॥

'२० गज २१ मार्जण् शब्दे'। गाजयति, मार्जयति । मर्चमर्जावपि एके पठन्ति; मर्चयति, मर्जयति, मर्जिता ॥

'२२ तिजण् निशाने'। तेजयति । तेजयामास । "णिवेत्ति०" ५।३।१११ इति अने तेजना । तिजि क्षमानिशानयोः [ १।६६७ ], "गुप्तिजो०" ३।४।५

---

१. °यश्चान्त इति मु० ॥

इति सनि तितिक्षते, निशाने तु तेजते । उणादौ "अस्" ( उ० ९५२ ) इति असि तेजः ॥

'२३ वज २४ व्रजण् मार्गणसंस्कारगत्योः'। मार्गणः बाणः, तस्य संस्कारे गतौ च । मार्गसंस्कारेऽपीत्यन्ये । वाजयति, व्राजयति । वज, व्रज गतौ [ १।१३६, १३७ ], वजति, व्रजति ॥

'२५ रुजण् हिंसायाम्' । रोजयति, रोजयांचकार ॥

## अथ टान्तास्त्रयोविंशतिः ॥

'२६ नटण् अवस्यन्दने' । अवस्यन्दनं भ्रंशः । "जासनाट०" २।२।१४ इति कर्मणो वा कर्मत्वे "शेषे" २।२।८१ इति षष्ठ्यां चोरस्योन्नाटयति । णके नाटकम् । णट नृतौ [ १।१८७], नटति, नतौ घटादित्वाद् ह्रस्वे नटयति शाखाम् । नतेरन्यत्र घटादित्वाभावे नाटयति नटम् । नड इति नन्दी । नडः नाडी, प्रणालः, प्रणाली ॥

'२७ तुट २८ चुट २९ चुडु ३० छुटण् छेदने' । तोटयति, चोटयति । उदित्त्वान्ने चुण्टयति । छोटयति, आच्छोटयति । "नाम्नि पुंसि च" ५।३।१२१ इति णके छोटिका, अनटि आच्छोटनम् । छुटत् छेदने [ ५।१२२ ], छुटति ॥

'३१ कुट्टण् कुत्सने च' । चकारात् छेदने । कुट्टयति । "वृङ्भक्षि०" ५।२।७० इति टाके कुट्टाकः, इक्षुकुट्टाकः, कुट्टाकी । अलि कुट्टः । रम्यादित्वात् कर्तरि अनटि कुट्टनी । उणादौ "कुट्टिवेष्टि०" ( उ० ३४९ ) इति इमे कुट्टिमं संस्कृतभूतलम् ॥

'३२ पुट्ट ३३ चुट्ट ३४ षुट्टण् अल्पीभावे' । पुट्टयति, चुट्टयति, "षः सो०" २।३।९८ इति से सुट्टयति । षोपदेशत्वाद् "णिस्तोरेवा०" २।३।३७ इति षे सुषुट्टयिषति । अषोपदेशोऽयमनादरार्थश्चेत्यन्ये; तन्मते षत्वाभावे सुसुट्टयिषति ॥

'३५ पुट ३६ मुटण् संचूर्णने' । पोटयति, अचि पोटा । भासार्थेऽपि वक्ष्यते । पुटत् संश्लेषणे [ ५।१२७ ], पुटति ॥

'३६ मुटण्' । मोटयति, अनटि मोटनम् । मुटत् आक्षेपप्रमर्दनयोः [ ५।१२५ ], मुटति ॥

'३७ अट्ट ३८ स्मिटण् अनादरे' । अट्टयति । अलि अट्टः । अचि अट्टा, अट्टां करोति इति क्यङि अट्टायते । स्मेटयति । अषोपदेशत्वात् षत्वाभावे सिस्मेटयिषति । अट्ट अल्पीभावे इत्येके ॥

'६६ मडुण् भूषायाम्' । उदित्त्वान्ने मण्डयति । "भूषाक्रोधार्थ०" ५।२।४२ इत्यने मण्डनशीलो मण्डनः । "युवर्ण०" ५।३।२८ इत्यलि मण्डः । "णिवेत्ति०" ५।३।१११ इत्यने मण्डना । मडु भूषायाम् [ १।२३१ ], मण्डति । मडुङ् वेष्टने [ १।६९२ ], मण्डते ॥

'६७ भडुण् कल्याणे' । उदित्त्वान्ने भण्डयति । "णिवेत्ति०" ५।३।१११ इत्यने भण्डना । दान्तोऽयमित्यन्ये, भन्दयति । उणादौ णिचोऽनित्यत्वाद् भन्देर्न लुक् च वा (द्र० उ० ३९१) इति रकि भद्रं भन्द्रं च कल्याणम् । भडुङ् परिभाषणे [ १।६९३ ], भण्डते, भण्डः ॥

'६८ पिडुण् संघाते' । उदित्त्वान्न पिण्डयति । पिडुङ संघाते [ १।६८४ ], पिण्डते, पिण्डः, पिण्डी । पडुण् अयमित्येके, पण्डयति । पडुङ् गतौ [ १।६८२ ], पण्डते, पण्डितः, पण्डः, पण्डा ॥

'६९ ईडण् स्तुतौ' । ईडयति । ईडिक् स्तुतौ [ २।५६ ], ईट्टे ॥

'७० चडुण् कोपे' । उदित्त्वान्ने चण्डयति । अचि चण्डः । "न वा शोणादेः" २।४।३१ इति वा ङ्याम् चण्डी, चण्डा । चडुङ् कोपे [ १।६९७ ], चण्डते, चण्डालः ॥

'७१ जुड ७२ चूर्ण ७३ वर्णण् प्रेरणे' । प्रेरणं दलनम् । जोडयति, लत्वे जोलयति । क्ते जोडितम् ॥

## अथ णान्ताः षट् ॥

'७२ [ चूर्णण् ]' । चूर्णयति । अचि चूर्णः । उणादौ "स्वरेभ्य०" ( उ० ६०६ ) इति इः, चूर्णिः ॥

'७३ [ वर्णण् ]' । वर्णयति । "णिवेत्ति०" ५।३।१११ इत्यने संवर्णना ॥

'७४ चूण ७५ तूणण् संकोचने' । चूणयति । "युवर्ण०" ५।३।२८ इत्यलि चूणः । तूणयति । "युवर्ण०" ५।३।२८ इत्यलि तूणः । उणादौ "जम्बीराभीर०" ( उ० ४२२ ) इति ईरे तूणीरः ॥

'७६ श्रणण् दाने' । श्राणयति । "णिवेत्ति०" ५।३।१११ इत्यने विश्राणना । क्लीबेऽनटि विश्राणनम् । "भीषिभूषि०" ५।३।१०९ इत्यत्र बहुवचनादनापवादे अङि श्राणा यवागूः । "यमोऽपरिवेषणे०" ४।२।२९ इत्यत्र णिचो

ग्रहणाद् एषु "घटादेः०" ४।२।२४ इति ह्रस्वो नास्ति, णिचोऽनित्यत्वादभावपक्षे तु णिगि ह्रस्वे श्रणयति । श्रण दाने [ १।१०४२ ], श्रणति ॥

'७७ पूणण् संघाते' । पूणयति ॥

## अथ तान्ताः षट् ॥

'७८ चितुण् स्मृत्याम्' । उदित्त्वान्ने चिन्तयति । "णिवेत्ति०" ५।३।१११ इत्यनापवादे "भीषिभूषि०" ५।३।१०९ इत्यङि चिन्ता । भीष्यादिभ्योऽनापवादेऽप्रत्ययेऽपि णेर्लुकि भीषादीनां सिद्धौ अङ्विधानं णेर्लुकोऽनित्यत्वज्ञापनार्थम्, तेन णेर्लुगभावे "संयोगात्०" २।१।५२ इति इयि चिन्तिया । तथा–

न यमेन न जातवेदसा, न कुवेरेण न वज्रपाणिना ।
[1]मघवो युधि [2]सुप्रकम्पया, श्वसनेनैव वसुन्धरापते ॥

अत्र सुप्रपूर्वात् कम्पेः खलि णेर्लुगभावे गुणेऽयादेशे च सुप्रकम्पया इति सिद्धम् । ज्ञापकेन च क्वचिदेव णिलुगभावो ज्ञाप्यते । आमादिषु तु सर्वत्राऽव्यभिचारी अयादेश इत्यामन्तेति वचनम् ॥

'७९ पुस्त ८० वुस्तण् आदरानादरयोः' । पुस्तयति । अलि पुस्तं लेप्यकर्म । णके पुस्तकम् । अयं वन्दने इति चन्द्रः ॥

'८० वुस्तण्' । वुस्तयति । उणादौ "स्वरेभ्य०" (उ० ६०६) इति इः, वुस्तिः शुष्कुली ॥

'८१ मुस्तण् संघाते' । मुस्तयति । अचि मुस्ता ॥

'८२ कृतण् संशब्दने' । संशब्दनं ख्यातिः । "कृतः कीर्तिः" ४।४।१२२ कीर्तयति । ङे "ऋ[दृ]वर्णस्य" ४।२।३७ इति कीर्त्यादेशाऽपवादे ऋतो वा ऋति अचीकृतत्, अचीकीर्तत् । "सातिहेति०" ५।३।९४ इति निपातनादनाऽपवादे क्तौ कीर्तिः । उणादौ "[3]स्वरेभ्य०" (उ० ६०६) इति इः, कीर्तिः ॥

---

१. माधवो इति रा० प्रतौ ॥

२. सुप्रकम्पया' इति हेमहंसगणिकृते न्यायार्थमञ्जूषायाः न्यासे ( पृ० १८५ ) ॥

३. अनेन सूत्रेण तु 'स्वरान्तेभ्यः धातुभ्य. इः प्रत्ययो भवति' । कीर्तिशब्दस्तु "क्रिलिपिलि०" (उ० ६०८) इत्यनेन साधित. ॥

'८३ स्वर्त ८४ पथुण् गतौ'। स्वर्तयति। अपोपदेशत्वाद् "णिस्तोरेवा०" २।३।३७ इति न षत्वम्, सिस्वर्तयिषति। षोपदेशोऽयमिति नन्दी। "णिस्तोरेवा०" २।३।३७ इति षत्वे सिष्वर्तयिषति। अयं कृच्छ्रजीवनेऽपीत्यन्ये॥

## अथ थान्ताश्चत्वारः॥

'८४ पथुण्'। उदित्त्वान्ने पन्थयति, परिपन्थयति॥

'८५ श्रथण् प्रतिहर्षे'। प्रतियत्ने इत्यन्ये। श्राथयति। श्रथण् बन्धने च [९।३९६], इति युजादौ पठिष्यमाणोऽपि अर्थभेदादिह पुनरधीतः। आत्मनेपदे न रूपान्यत्वार्थमिह पाठ इत्येके, श्राथयते॥

'८६ पृथण् प्रक्षेपणे'। पर्थयात। अयं पर्थण् इत्येके, पार्थण् इत्यन्ये; तन्मते पर्थयति, पार्थयति॥

'८७ प्रथण् प्रख्याने'। प्रक्षेपणे इत्येके। प्राथयति। ङे "स्मृदृत्वर०" ४।१।६५ इति सन्वद्भावापवादे पूर्वस्याऽत्वे अपप्रथत्॥

## अथ दान्ताः पञ्च॥

'८८ छदण् संवरणे'। छादयति। ऊर्जने तु घटादित्वाद् ह्रस्वे छदयति। णौ "दान्तशान्त०" ४।४।७४ इति क्ते वा निपातनात् छन्नः, छादितः। णके उच्छादकः। "कर्मजा तृचा च" ३।१।८३ इति प्रतिषिद्धोऽपि याजकादित्वात् षष्ठीसमासः; राजोच्छादकः। क्विपि "छदेरिस्०" ४।२।३३ इति ह्रस्वे तनुच्छत्। करणाधारे 'पुंनाम्नि०" ५।३।१३० इति घे "एकोपसर्गस्य०" ४।२।३४ इति ह्रस्वे छदः, प्रच्छदः, उरश्छदः। उणादौ "त्रट्" (उ० ४४६) इति त्रटि छत्त्रम्। "हुयामा०" (उ० ४५१) इति त्रे ह्रस्वाभावे छात्त्रः। "मन्" (उ० ९११) इति मनि छद्म। "रुच्यर्चि०" (उ० ९८९) इति इसि छदिः। अदन्तोऽप्ययमित्येके; छदयति। छदण् अपवारणे [९।३९८], "युजादेः०" ३।४।१८ इति वा णिचि छादयति, छदति। रूपान्यत्वार्थं चेह पाठः, छादयते; अत्राऽऽत्मनेपदं सिद्धम्॥

'८९ चुदण् संचोदने'। संचोदनं नोदनम्। चोदयति। "य एचा०" ५।१।२८ इति ये चोद्यम्। "णिवेत्ति०" इत्यने चोदना। भिदाद्यङि निपातनात् चूडा॥

'९० मिदुण् स्नेहने'। उदित्त्वान्ने मिन्दयति। अचि मिन्दः कुष्ठी। टान्तोऽयमित्येके, मिण्टयति। नायमुदिदिति कौशिकः; मेदयति॥

'९१ गुर्दण् निकेतने'। पूर्वनिकेतने इत्येके; पूर्वनिकेतनम् आद्यो निवासः। "भ्वादेः०" २।१।६३ इति दीर्घे, गूर्दयति। गुर्दि क्रीडायाम् [ १।७३४ ], गूर्दते॥

'९२ छर्दण् वमने'। छर्दयति। उणादौ "पदिपठि०" (उ० ६०७) इति इः, छर्दिः; सान्तस्तु "रुच्यर्चि०" ( उ० ९८९ ) इति इसि छर्दिस्तेः। इह गर्दण् शब्दे इत्येके पेठुः, गर्दयति गर्दभः। भ्वादौ गर्दति। अयं गर्जे इत्यपरे॥

## अथ धान्ताः पञ्च॥

'९३ बुधण् हिंसायाम्'। उदित्त्वान्ने बुन्धयति। ठान्तोऽयमित्यन्ये, बुण्ठयति॥

'९४ वर्धण् छेदनपूरणयोः'। वर्धयति॥

'९५ गर्धण् अभिकाङ्क्षायाम्'। गर्धयति॥

'९६ बन्ध ९७ बधण् संयमने'। बन्धयति। बन्धंश् बन्धने [ ८।४५ ], बध्नाति॥

'९७ बधण्'। बाधयति। ङे अबीबधत्। बधि बन्धने [१।७४६], बीभत्सते॥

## अथ पान्ता अष्टौ॥

'९८ छपुण् गतौ'। उदित्त्वान्ने छम्पयति॥

'९९ क्षपुण् क्षान्तौ'। उदित्त्वान्ने क्षम्पयति॥

'१०० ष्टूपण् समुच्छ्राये'। "षः सो०" २।३।९८ इति से स्तूपयति। पोपदेशत्वात् "णिस्तोरेवा०" २।३।३७ इति षे तुष्टूपयिषति। अषोपदेशोऽयमित्यन्ये, तुस्तूपयिषति। स्तुपण् इत्येके, स्तोपयति। ष्टूपच् समुच्छ्राये [ ३।५४ ], स्तूप्यति॥

'१०१ डिपण् क्षेपे'। डेपयति। डिपिण् संघाते [ ९।२६४ ], डेपयते॥

'१०२ ह्लपण् व्यक्तायां वाचि'। ह्लापयति॥

'१०३ डपु १०४ डिपुण् संघाते'। अभिमर्दने इत्येके। उदित्त्वान्ने डम्पयति, डिम्पयति। भान्तावेतौ इत्यन्ये; डम्भयति, डिम्भयति। अचि डिम्भः॥

'१०५ शूर्पण् माने'। तालव्यादिः। शूर्पयति। अचि "पुंनाम्नि०" ५।३।१३० इति करणेऽधिकरणे वा घे शूर्पः॥

## अथ वान्ता अष्टौ

'१०६ शुल्वण् सर्जने च'। चकारान्माने। तालव्यादिः। शुल्वयति। अचि शुल्वम्॥

'१०७ डवु १०८ डिवुण् क्षेपे'। उदित्त्वान्ने डम्वयति, विडम्वयति। उणादौ "जठर०" (उ० ४०३) इत्यरे आडम्वरः॥

'१०८ डिवुण्'। उदित्त्वान्ने डिम्वयति। अचि डिम्वम् अशस्त्रकलहः। केचित्तु दभदम्भुदिभूनपि भान्तानिह अधीयते; दाभयति, दम्भयति, दिम्भयति॥

'१०९ सम्वण् सम्वन्धे'। सम्वयति। पोपदेशोऽयमित्यन्ये। "णिस्तोरेवा०" २।३।३७ इति षत्वे सिषम्वयिषति। तालव्यादिरयमिति द्रमिलाः। शम्वयति शम्वलम्। साम्व इत्येके, साम्वयति। अलि साम्वः॥

'११० कुवुण् आच्छादने'। उदित्त्वान्ने कुम्वयति। "भीषिभूषि०" ५।३।१०९ इत्यङि कुम्वा॥

'१११ लुवु ११२ तुवुण् अर्दने'। उदित्त्वान्ने लुम्वयति। उणादौ "स्वरेभ्य०" (उ० ६०६) इति इः, लुम्विः॥

'११२ तुवुण्'। उदित्त्वान्ने तुम्वयति। अचि गौरादित्वाद् ङ्याम् तुम्वी। "तिकृतौ०" ५।१।७१ इति अके तुम्वकः। तुपुण् इत्यप्यन्ये, तुम्पयति॥

'११३ पुर्वण् निकेतने'। "भ्वादेर्नामिनो०" २।१।६३ इति दीर्घे पूर्वयति। अचि पूर्वः। पूर्व इत्यमरकोशे ओष्ठ्यान्तेषु पठितः, तत् प्रकृतित्वानुरोधाद् वान्तेष्वयमस्माभिरिहाधीतः॥

## अथ मान्तः॥

'११४ यमण् परिवेषणे'। अपरिवेषणे इत्यन्ये। यामयति अतिथींश्चन्द्रमसं वा। परिवेषणादन्यत्र "यमोऽपरिवेषणे णिचि च" ४।२।२९ इति ह्रस्वे यमयति॥

## अथ यान्तः ॥

'११५ व्ययण् क्षये'। व्याययति ॥

## अथ रान्तास्त्रयः ॥

'११६ यत्रुण् संकोचने'। उदित्त्वान्ने यन्त्रयति, नियन्त्रयति। "णिवेत्ति०" ५।३।१११ इत्यने यंत्रणा ॥

'११७ कुद्रुण् अनृतभाषणे'। उदित्त्वान्ने कुन्द्रयति। ङे अचुकुन्द्रत्। गादिरयमिति अन्ये; गुन्द्रा भद्रमुस्ता ॥

'११८ श्वभ्रण् गतौ'। श्वभ्रयति। अचि श्वभ्रम् ॥

## अथ लान्ताः षोडश ॥

'११९ तिलण् स्नेहने'। तेलयति। णिचोऽनित्यत्वादभावे "नाम्युपान्त्य०" ५।१।५४ इति के तिलाः। उणादौ "कीचक०" (उ० ३३) इत्यके निपातनात् तिलकम्। तिलत् स्नेहने [ ५।९१ ], तिलति ॥

'१२० जलण् अपवारणे'। जालयति। णके जालकम्। अचि जालम्। अयं लजण् इति नन्दी, लाजयति। अचि लाजाः। जल घात्ये [ १।९७३ ], जलति ॥

'१२१ क्षलण् शौचे'। शौचं शौचकर्म। क्षालयति, क्षालितम् ॥

'१२२ पुलण् समुच्छ्राये'। पोलयति। पुल महत्त्वे [ १।९८० ], पोलति। तुदादौ अप्ययं इत्येके, पुलति ॥

'१२३ बिलण् भेदे'। ओष्ठ्यादिः। बेलयति। उणादौ णिचोऽनित्यत्वादभावे "[1]बिलिभिलि०" (उ० ३४०) इति क्रिति मे बिल्मं प्रकाशम्। "निघृपी०" (उ० ५११) इति किति वे बिल्वम्। भिल इति कौशिकः, भेलयति, भिल्मम्। बिलत् भेदने [ ५।९५ ], बिलति ॥

'१२४ तलण् प्रतिष्ठायाम्'। तालयति, उत्तालयति। अचि तालः। स्वार्थे के तालिका। णिचोऽनित्यत्वात् तलति। अचि तलम् ॥

'१२५ तुलण् उन्माने'। तोलयति। "भीषिभूषि०" ५।३।१०९ इत्यङि तोला। बाहुलकाद् "णिवेत्ति०" ५।३।१११ इत्यने तोलना। णिचोऽनित्यत्वाद-

---

१. विलि° इति मु०। उणादि विवरणे तु बिलत् वरणे, बिल्मं प्रकाशः ॥

भावे "नाम्युपान्त्य०" ५।१।५४ इति के तुलः, आपि तुला । भिदाद्यङि अपि तुला । तुलयति इति तुलशब्दाद् "णिज् बहुलं०" ३।४।४२ इति णिचि रूपम् ॥

'१२६ दुलण् उत्क्षेपे' । दोलयति । अचि स्त्रियामापि दोला । "सेट्क्तयोः" ४।३।८४ इति णेर्लुकि दोलितः । "भीषिभूषि०" ५।३।१०९ इत्यङि दोला । उणादौ णिचोऽनित्यत्वादभावे "नाम्युपान्त्य०" (उ० ६०९) इति किदिः, दुलिः कच्छपी । अन्दोलयतीति तु रूढेः, यथा प्रेङ्खोलयति, वीजयति ॥

'१२७ बुलण् निमज्जने' । बोलयति, बोलितम् । अनटि बोलनम् । णिचोऽनित्यत्वाद् "नाम्युपान्त्य०" ५।१।५४ इति के बुलः ॥

'१२८ मूलण् रोहणे' । मूलयति, अचि मूलम् । उणादौ "स्वरेभ्य०" (उ० ६०६) इति इः, मूलिः । मुल इति नन्दी, मोलयति । णिचोऽनित्यत्वाद् "नाम्युपान्त्य०" ५।१।५४ इति के मुलः । मूल प्रतिष्ठायाम् [१।४२७], मूलति ॥

'१२९ कल १३० किल १३१ पिलण् क्षेपे' । कालयति गाः । अचि कालयति क्षिपति स्वेषु स्वेषु पर्यायान्तरेषु भावान् इति कालः । कलण् संख्यानगत्योः [९।३४२], अदन्तः, सङ्कलयति । अलि कलः । कलि शब्दसंख्यानयोः [१।८१४], कलते ॥

'१३० किल' । केलयति । उणादौ "स्वरेभ्य०" (उ० ६०६) इति इः, केलिः । किलत् श्वैत्यक्रीडनयोः [५।८६], किलति ॥

'१३१ पिलण्' । पेलयति । अचि पेलम् । पेल्यन्ते वस्त्रादीनि अस्यामिति बाहुलकाद् अनडपवादः, "शंसिप्रत्ययात्" ५।३।१०५ इति अः, भिदादित्वाद् वाऽङि पेला । णिचोऽनित्यत्वात् पिल्यते ॥

'१३२ पलण् रक्षणे' । पालयति । पाल इति चन्द्रः, पाली ॥

'१३३ इलण् प्रेरणे' । एलयति । "उपसर्गस्यानिणु०" १।२।१९ इति अवर्णलोपे प्रेलयति, परेलयति । ङे ऐलिलत्, अचि एला । इलत् गतिस्वप्नक्षेपणेषु [५।८७], इलति ॥

'१३४ चलण् भृतौ' चालयति । चल कम्पने [१।९७२], चलति । कम्पने घटादित्वाद् ह्रस्वे चलयति । चलत् विलसने [५।९२], "अवर्णादश्नो०" २।१।११५ इति शतुर्वाऽन्ताऽऽदेशे चलती चलन्ती स्त्री कुले वा ॥

## अथ वान्तः ॥

'१३५ सान्त्वण् सामप्रयोगे'। सान्त्वयति। अषोपदेशत्वाद् "णिस्तोरेवा०" २।३।३७ इति षत्वाभावे सिसान्त्वयिषति। षोपदेशोऽयमिति एके, सिषान्त्वयिषति। साम सान्त्वप्रयोगे इति चन्द्रः, सामयति। ङे "उपान्त्यस्या०" ४।२।३५ इति ह्रस्वे असीसमत्। सामण् सान्त्वने [ ९।३२९ ], अदन्तः, अससामत् ॥

## अथ शान्तः ॥

'१३६ धूशण् कान्तीकरणे'। धूशयति। दन्त्यान्तोऽयमित्येके, धूसयति। "जठरक्रकर०" ( उ० ४०३ ) इत्यरे धूसरः। मूर्धन्याऽन्तोऽयमित्यन्ये, धूषयति॥

## अथ षान्ताश्चत्वारः ॥

'१३७ श्लिषण् श्लेषणे'। श्लेषयति। श्लिषू दाहे [ १।५३१ ], श्लेषति। श्लिषंच् आलिङ्गने [ ३।६७ ], श्लिष्यति ॥

'१३८ लूषण् हिंसायाम्'। लूषयति ॥

'१३९ रुषण् रोषे'। रोषयति। रुष हिंसायाम् [ १।५१४ ], रोषति। रुषच् रोषे [ ३।७२ ] रुष्यति ॥

'१४० प्युषण् उत्सर्गे'। प्योषयति। णिचोऽनित्यत्वात् पुप्योष। प्युषच् विभागे [ ३।७३ ], प्युष्यति ॥

## अथ सान्ताः षट् ॥

'१४१ पसुण् नासने'। उदित्त्वान्ने पंसयति। उणादौ "पंसे दीर्घश्च" ( उ० ७१८ ) इत्यौ पांसुः ॥

'१४२ जसुण् रक्षणे'। उदित्त्वान्ने जंसयति। दहुण् इत्यप्येके, दंहयति ॥

'१४३ पुंसण् अभिमर्दने'। पुंसयति। क्ते उत्पुंसितम्। उणादौ "नञः पुंसेः" ( उ० ३२ ) इत्यके नखादित्वाद् नञोऽदभावे नपुंसकम् ॥

'१४४ ब्रूस १४५ पिस १४६ जस १४७ बर्हण् हिंसायाम्'। ब्रूसयति। पेसयति। गतौ अयमित्येके, बलदाननिकेतनेष्वपीत्यन्ये। पिसृ गतौ [ १।५४६ ], पेसति। ऋदनुबन्धत्वाद् णौ ङे ह्रस्वाभावे अपिपेसत्। एके त्वाहुः नायम् ऋदित्

तथा च णिचोऽनित्यत्वात् चौरादिकेनैव पेसति इति प्रयोगसिद्धौ भ्वादौ पाठोऽस्याऽऽत्मनेपदार्थः, पेसते ॥

'१४६ जस'। "जासनाट०" २।२।१४ इति कर्मणो वा कर्मत्वे "शेषे" २।२।८१ इति षष्ठ्यां चौरस्य उज्जासयति ॥

## अथ हान्तौ ॥

'१४७ बर्हण्'। बर्हयति। बर्हि प्राधान्ये [ १।८६२ ], बर्हते ॥

'१४८ ष्णिह्ण् स्नेहने'। "षः सो०" २।३।९८ इति से स्नेहयति। षोपदेशत्वाद् "णिस्तोरेवा०" २।३।३७ इति षत्वे सिष्णेहयिषति। ष्णिहौच् प्रीतौ [ ३।९८ ], स्निह्यति ॥

## अथ क्षान्तास्त्रयः ॥

'१४९ म्रक्षण् म्लेच्छने'। म्रक्षयति। अनटि म्रक्षणम्। भ्वादौ म्रक्ष रोषे इत्येके, म्रक्षति ॥

'१५० भक्षण् अदने'। भक्षयति। णिगि "भक्षेर्हिंसायाम्" २।२।६ इति अणिकर्तुः कर्मत्वे भक्षयति गौः यवान्, भक्षयति गां यवान् मैत्रः। अत्र यवानां प्रसवप्ररोहधर्मत्वेन चेतनत्वाद् भक्षणे प्राणवियोगलक्षणा हिंसा अस्त्येव। हिंसाया अन्यत्र "गतिबोधा०" २।२।५ इति प्राप्तमपि कर्मत्वं न भवतीति "हेतुकर्तृ०" २।२।४४ इति कर्तरि तृतीयायां भक्षयति पिण्डीं शिशुना मैत्रः, "शीलिकामि०" ५।१।७३ इति अणपवादे णे मांसभक्षा स्त्री। "युवर्ण०" ५।३।२८ इत्यलि भक्षः ॥

'१५१ पक्षण् परिग्रहे'। पक्षयति। कर्मण्यणि पक्षः ॥

## अथोभयपदी क्षान्तः ॥

'१५२ लक्षीण् दर्शनाङ्कनयोः'। अङ्कनं चिह्नम्। ईदित्त्वाद् "ईगितः" ३।३।९५ इति फलवत्कर्तर्यात्मनेपदे लक्षयते, फलवतोऽन्यत्र "शेषात्०" ३।३।१०० इति परस्मैपदे लक्षयति। "णिवेत्ति०" ५।३।१११ इति अने लक्षणा। "करणाधारे" ५।३।१२९ इत्यनटि लक्षणम्। उणादौ "तॄकृशॄ०" (उ० १८७) इत्यणे लक्षणम्। "लक्षेर्मोऽन्तश्च" (उ० ७१५) इति ई, लक्ष्मीः। लक्षिण् आलोचने [ ९।२४९ ], अर्थविशेषे चुरादिः, लक्षयते ॥

'इतोऽर्थविशेपे आलक्षिणः'। इतः परम् अर्थविशेपे चुरादयो लक्षिण्पर्यन्ताः प्रस्तूयन्ते, तत्राऽऽदौ आदन्तः—

'१५३ ज्ञाणू मारणादिनियोजनेषु'। मारणादयो "मारण–तोषण–निशाने ज्ञश्च" ४।२।३० इति सूत्रोक्ताः, तेषु नियोजने चार्थे। जानातिश्चुरादिः। मारणे "मारण०" ४।२।३० इति ह्रस्वे संज्ञपयति पशुम्, तोषणे विज्ञपयति गुरुम्। आज्ञपयति, आज्ञपितः। सनि "इवृध०" ४।४।४७ इति वेट्, जिज्ञपयिषति; पक्षे "ज्ञप्याप०" ४।१।१६ इति ज्ञीपि द्वित्वाभावे च ज्ञीप्सति। निशाने प्रज्ञपयति शस्त्रम्। नियोजने आज्ञापयति भृत्यम्, ज्ञापितः, ज्ञापितवान्; अत्र मारणाद्यर्थाभावात् ह्रस्वाभावः। उक्तेभ्योऽर्थेभ्योऽन्यत्र न चुरादिः, इति क्र्यादित्वात् श्नाः, आजानाति ॥

## अथ उदन्तः ॥

'१५४ च्युणू सहने'। हसने इत्येके। च्यावयति शरान्, सहते इत्यर्थः। अन्यत्र च्युंङ् गतौ [ १।५९४ ], च्यवते ॥

## अथ ऊदन्तः ॥

'१५५ भूणू अवकल्कने'। अवकल्कनं मिश्रीकरणम्। भावयति दध्नौदनम्। विकल्कने इति नन्दी; भावयेत् ब्राह्मणं तपः। अवकल्पने इत्यन्ये; भावयति साधुः समयम्। भू सत्तायाम् [ १।१ ], भवति। प्राप्तौ तु "भूङः०" ३।४।१९ इति वा णिङि भावयते, पक्षे ङित्त्वाद् "इङितः" ३।३।२२ इति आत्मनेपदे भवते ॥

## अथ कान्तास्त्रयः ॥

'१५६ बुक्कणू भषणे'। भाषणे इत्येके, आभाषणे इत्यन्ये। बुक्कयति श्वा चौरान्। भषणादन्यत्र बुक्क भाषणे [ १।५४ ], बुक्कति ॥

'१५७ रक १५८ लक १५९ रग १६० लगणू आस्वादने'। राकयति, लाकयति। आसादने इत्यन्ये, आराकयति, आलाकयति धर्मम् ॥

## अथ गान्तास्त्रयः ॥

'१५९ रग। रागयति ॥

'१६० लग'। लागयति। अन्यत्र रगे शङ्कायाम् [ १।१०२३ ], रगति। लगे सङ्गे [ १।१०२४ ], लगति। णिगि "घटादेः०" ४।२।२४ इति ह्रस्वे रगयति, लगयति ॥

'१६१ लिगुण् चित्रीकरणे'। उदित्त्वान्ने लिङ्गयति शब्दम्; स्त्रीपुंनपुंसक-लिङ्गैश्चित्रीकरोतीत्यर्थः। उल्लिङ्गयति। अचि लिङ्गम्। अन्यत्र लिगु गतौ [ १।९० ], लिङ्गति, आलिङ्गति ॥

## अथ चान्तास्त्रयः ॥

'१६२ चर्चण् अध्ययने'। चर्चयति शास्त्रम्। "भीषिभूषि०" ५।३।१०९ इत्यङि चर्चा। अन्यत्र चर्चत् परिभाषणे इति केचित्; चर्चति ॥

'१६३ अञ्चण् विशेषणे'। विशेषणम् अतिशयः। अञ्चयति अर्थम्, व्यक्तीकरोतीत्यर्थः। अन्यत्र अञ्चू गतौ च [ १।८९० ], अञ्चति ॥

'१६४ मुचण् प्रमोचने'। मोचयति शरान्। प्रयोजने इत्यन्ये, मोचयति कुण्डले प्रयोजयतीत्यर्थः। अन्यत्र मुचि कल्कने इत्येके, मोचते। मुच्लृंती मोक्षणे [ ५।६ ], मुञ्चते, मुञ्चति ॥

## अथ जान्तौ ॥

'१६५ अर्जण् प्रतियत्ने'। प्रतियत्नः संस्कारः। अर्जयति, हिरण्यं निवेशयतीत्यर्थः। डे आर्जिजत्। अन्यत्र तु अर्ज सर्ज अर्जने [ १।१४२, १।१४३ ], अर्जति ॥

'१६६ भजण् विश्राणने'। विश्राणनं विपचनम्। भाजयति, विभाजयति। अचि अलि वा भाजः। स्त्रियां "भाजगोण०" २।४।३० इति ङ्याम् भाजी पक्वा चेद्, भाजा अन्या। अन्यत्र तु भजीं सेवायाम् [ १।८९५ ], भजते, भजति ॥

## अथ टान्तास्त्रयः ॥

'१६७ चट १६८ स्फुटण् भेदे'। चाटयति। अनटि उच्चाटनम्। णिचोऽनित्यात् चटति, विचटति। उणादौ "दृकॄनॄ०" ( उ० २७ ) इति अके चटका। स्फोटयति, आस्फोटयाञ्चकार। अर्थान्तरे तु स्फुटृ विसरणे [ १।२०९ ], स्फोटति। स्फुटि विकसने [ १।६६९ ], स्फोटते। स्फुटत् विकसने [ ५।१२६ ], स्फुटति ॥

'१६९ घटण् संघाते'। घाटयति। अनटि उद्घाटनम्। उद्घाटितः कपाटः। अर्थान्तरे तु घटिष् चेष्टायाम् [ १।१००० ], घटते। घटादित्वाद् ह्रस्वे घटयति। 'हन्त्यर्थाश्च; येऽन्यत्र हन्त्यर्था हिंसार्थाः पठ्यन्ते, तेऽप्यत्र चुरादौ वेदितव्याः'। हनंक् हिंसागत्योः [ २।४२ ], घातयति। हिंसु तृहप् हिंसायाम् [ ६।२२, २३ ], हिंसयति, तर्हयति। तत्तद्गणपाठ—सामर्थ्यात्तु हन्ति, हिनस्ति, तृणेढि इत्यादयोऽपि। अनेनैव च सिद्धेऽन्येषां हिंसार्थानां चुरादौ पाठः आत्मनेपदादिगतरूपभेदार्थः॥

अन्ये तु चटास्फुटौ घट च हन्त्यर्था इत्याद्यं पाठं मन्यन्ते; अस्यार्थः —:चट इत्ययं धातुः, आङ्पूर्वश्च स्फुट इति, घट इत्ययं च त्रयोऽप्येते हन्त्यर्था हिंसार्थाः सन्तश्चुरादौ भवन्ति; चाटयति, आस्फोटयति, घाटयति, हन्ति इत्यर्थः। अर्थान्तरे तु न चुरादित्वम्; चटति, आस्फुटति, घटते। अपरे त्वन्यथा व्याचक्षते; चटास्फुटौ आस्फुटत्यर्थे चुरादिः, चाटयति। घट च; अयं च आस्फुटत्यर्थे चुरादिः, घाटयति। अन्यत्र चटति, घटते॥

## अथ णान्तः॥

'१७० क्षणण् निमीलने'। काणयति चक्षुः, अचि काणः। अर्थान्तरे तु कण शब्दे [ १।२७० ], कणति। गतौ घटादित्वाद् णिगि ह्रस्वे कणयति॥

## अथ तान्तः॥

'१७१ यतण् निकारोपस्कारयोः'। निकारः खेदनम्, यातयति अरिम्। "णिवेत्ति०" ५।३।१११ इत्यने यातना तीव्रव्यथा। उपस्कारे यातयति दरिद्रो नागरस्य धनम्। यातयति [1]छिद्रं राजा, प्रच्छादयतीत्यर्थः। प्रतियातयति, प्रतिबिम्बयतीत्यर्थः। अर्थान्तरे तु यतैङ् प्रयत्ने [ १।७११ ], यतते। निरश्च प्रतिदाने, निरः परो यतिः प्रतिदानेऽर्थे चुरादिः, निर्यातयति, ऋणम् शोधयतीत्यर्थः॥

## अथ दान्ताः षट्॥

'१७२ शब्दण् उपसर्गाद् भाषाऽऽविष्कारयोः'। भाषो भाषणम्। भाषे आविष्कारे चार्थे शब्द इत्ययं धातुरुपसर्गात्परः चुरादिः, विशब्दयति, प्रशब्दयति। प्रतिशब्दयति, प्रतिश्रुत्कामाऽऽविष्करोतीत्यर्थः। योगविभागोऽत्र इति नन्दी। शब्द

१. च्छिद्रं इति मु०॥

उपसर्गादित्येकः, शब्द इत्ययं धातुरुपसर्गात्परः चुरादिः; प्रशब्दयति, विशब्दयति । भाषाऽऽविष्कारयोः इत्यपरः, अनुपसर्गार्थोऽयमारम्भः । पूर्वस्तु भाषणाऽऽविष्कारार्थः; शब्दयति, विशब्दयति । अन्यस्तु शब्द शब्दक्रियायामित्यधीते; शब्दयति । [१]भषणस्यापि शब्द विशेषक्रियारूपत्वादत्रैवान्तर्भावः, ततः उपसर्गादाविष्कारे इति पठित्वा प्रशब्दयति, विशब्दयति इत्याविष्कारमात्रे उदाहरन्ति ॥

'१७३ षूदण् आस्रवणे' । क्षरणे इत्येके । "षः सो०" २।३।९८ इति से सूदयति । षोपदेशत्वात् "णिस्तोरेवा०" २।३।३७ इति षत्वे सुषूदयिषति । अनटि निषूदनम् । अर्थान्तरे तु षूदि क्षरणे [ १।७३६ ], सूदते । "नाम्युपान्त्य०" ५।१।५४ इति के सूदः ॥

'१७४ आङः क्रन्दण् सातत्ये' । आङः परः क्रन्द इत्ययं धातुः सातत्येऽर्थे चुरादिः; आक्रन्दयति । अलि आक्रन्दः । अर्थान्तरे तु क्रदु रोदनाऽऽह्वानयोः [ १।३१६ ], आक्रन्दति ॥

'१७५ ष्वदण् आस्वादने' । संवरणे इत्यन्ये । "षः सो०" २।३।९८ इति से स्वादयति । षोपदेशत्वाद् "नाम्यन्तस्था०" २।३।१५ इति षत्वे असिष्वदत् । अर्थान्तरे तु ष्वदि आस्वादने [ १।७२९ ], मैत्राय स्वदते दधि ॥

'१७६ आस्वदः सकर्मकात्' । आङ्पूर्वात् स्वदतेः सकर्मकात् णिच् भवति, आस्वादयति यवागूम् । अन्ये तु ग्रसण् ग्रहणे [९।१९६], पुषण् धारणे [९।१८८], दलण् विदारणे [ ९।१८४ ], लोकृ तर्केति भाषार्थदण्डकः, पूरण् आप्यायने [ ९।१८३ ], स्वदण् संवरणे इति क्रमेण पठित्वा व्याख्यान्ति; ग्रसिमारभ्य आस्वदः स्वदमभिवाप्य यो धातुः पठितस्तस्मात् सकर्मकक्रियावचनादेव णिच् भवति । ततोऽकर्मकेभ्यो णिचो व्यावृत्तिः ॥

'१७७ मुदण् संसर्गे' । मोदयति सक्तून् सर्पिषा । मोदयति उष्णा अपः शीताभिरद्भिः । उभयत्र संसृजतीत्यर्थः । "नाम्नि पुंसि च" ५।३।१२१ इति णके मोदकः । अर्थान्तरे तु मुदि हर्षे [ १।७२६ ], मोदते ॥

## अथ धान्तः ॥

'१७८ शृधण् प्रसहने' । प्रसहनम् अभिभवः । अप्रसहने इत्येके । अप्रसहनम् अमर्षः । शर्धयति अरिम् । डे "ऋदृवर्णस्य" ४।२।३७ इति गुणापवादे ऋतो वा

१. भाष इति मु० पा० ॥

ऋति अशीशृधत् , अशशर्धत् । अर्थान्तरे तु शृधूङ् शब्दकुत्सायाम् [ १।९५८ ], शर्धते । शृधूग् उन्दे [ १।९१० ], शर्धते, शर्धति ॥

## अथ पान्तः ॥

' १७९ कृपण् अवकल्कने ' । अवकल्कनं मिश्रीकरणं सामर्थ्यं च । कल्पयति । अवकल्पने इत्यन्ये, कल्पयति वृत्तिं राजा । चन्द्रस्तु भूकृपौ द्वावपि अवकल्कने चिन्तने इति व्याख्यत् ; संभावयति, अवकल्पयति । अर्थान्तरे तु कृपौङ् सामर्थ्ये [ १।९५९ ], कल्पते ॥

## अथ भान्तः ॥

' १८० जभुण् नाशने ' । उदित्त्वान्ने जम्भयति । क्ये जम्भ्यते । जभण् इति चन्द्रः । " जभः स्वरे " ४।४।१०० इति स्वरात्परे ने जम्भयति । अर्थान्तरे तु जभुङ् गात्रविनामे [ १।७८२ ] जम्भते ॥

## अथ मान्तः ॥

' १८१ अमण् रोगे ' । " अमो कम्यमि० " ४।२।२६ इत्यत्र अमो वर्जनाद् "यमोऽपरिवेषणे०" ४।२।२९ इत्यत्र णिचो नियमार्थत्वाद् वा ह्रस्वाभावे "रुजार्थस्या०" २।२।१३ इति वा कर्मणः कर्मत्वे शेषषष्ठ्याम् आमयति चौरस्य ज्वरः । अलि आमः । उणादौ " कुगुवलि० " ( उ० ३६५ ) इत्यये आमयो रोगः । " श्वन्मातरिश्वन्०" ( उ० ९०२ ) इत्यनि निपातनाद् अरीन् आमयति इति अर्यमा रविः । अर्थान्तरे तु अम गतौ [ १।३९२ ], अमति । घञि अमः ॥

## अथ रान्तौ ॥

' १८२ चरण् असंशये ' । विचारयत्यर्थान् । " णिवेत्त्ति० " ५।३।१११ इत्यने विचारणा । अन्ये तु चरण् संशये इति पठन्ति । विचारणा हि संशये सति भवति इति चाहुः । अर्थान्तरे तु चर भक्षणे च [ १।४१० ], चरति ॥

' १८३ पूरण् आप्यायने ' । पूरयति । अर्थान्तरे तु पूरैचि आप्यायने [ ३।१२५ ], पूर्यते ॥

## अथ लान्तः ॥

' १८४ दलण् विदारणे ' । दालयति, दारयतीत्यर्थः । अर्थान्तरे तु दल त्रिफला विशरणे [ १।४१३-४१४ ], दलति । णिगि घटादित्वाद् ह्रस्वे दलयतीत्येके ॥

## अथ वान्तः ॥

'१८५ दिवण् अर्दने'। देवयति शत्रून्। परिदेवयति, अतिदेवयति। अतिपूर्वादेव णिच् इत्येके। अर्थान्तरे तु दिवूच् क्रीडादौ [ ३।१ ], दीव्यति ॥

## अथ शान्तः ॥

'१८६ पश १८७ पषण् बन्धने'। पाशयति पाशैः अश्वम् ॥

## अथ षान्ताश्चत्वारः ॥

'१८७ पषण्'। पाषयति पाशैः अश्वम्। दन्त्यान्त्योऽयमित्येके। अर्थान्तरे तु पषी बाधनस्पर्शनयोः इति मूर्धन्यान्तः, तालव्यान्तो, दन्त्यान्त्यश्च आचार्यभेदेन; पशते पशति, पषते पषति, पसते पसति ॥

'१८८ पुषण् धारणे'। पोषयति आभरणम्, धारयतीत्यर्थः। अर्थान्तरे तु पुष पुष्टौ [ १।५३६ ], पोषति। पुषंच् पुष्टौ [ ३।३२ ], पुष्यति। पुषश् पुष्टौ [ ८।५७ ], पुष्णाति ॥

'१८९ घुषृण् विशब्दने'। विशब्दनं विशिष्टशब्दकरणं नानाशब्दनं वा; घोषयति, उद्घोषयति। अविशब्दने इत्येके; अपघोषयति, पापम् अपह्नुते इत्यर्थः। ऋदित्करणं चुरादिणिचोऽनित्यत्वे लिङ्गम्, तेन "ऋदिच्छ्वि०" ३।४।४५ इति इति वाऽङि अघुषत्; पक्षे अघोषीत्। घोषति। 'जुघुषुः पुष्पमाणवाः' [ पातञ्जल महाभाष्य, ७।२।२३ ] इति विशब्दनेऽपि भवन्ति। नायम् ऋदिदिति कौशिकः। अर्थान्तरे तु घुषृ शब्दे [ १।४९७ ], घोषति। आङः क्रन्दे, क्रन्दः सातत्ये इत्यन्ये। आङः परो घुषिः क्रन्देऽर्थे चुरादिः भवति, आघोषयति। "णिवेत्ति०" ५।३।१११ इत्यने आघोषणा। अन्ये तु आङः क्रन्दः सातत्ये इति पठन्ति। आङः परात् क्रन्देः सातत्येऽर्थे णिज् भवति; आक्रन्दयति नित्यम्, अन्यत्र आक्रन्दति ॥

'१९० भूष १९१ तसुण् अलङ्कारे'। भूषयति कन्याम्, भूष अलङ्कारे [ १।५३७ ], भूषति ॥

## अथ सान्ताः सप्त ॥

'१९१ तसुण्'। उदित्त्वान्नं तंसयति। "पुंनाम्नि०" ५।३।१३० इति करणे घे अवतंसः। तसु अलङ्कारे [ १।५३८ ], तंसति ॥

'१९२ जसण् ताडने'। जासयति। "जासनाट०" २।२।१४ इति कर्मणो वा कर्मत्वे "शेषे" २।२।८१ इति षष्ठ्याम् चौरस्य उज्जासयति। अर्थान्तरे तु जसूच् मोक्षणे [ ३।८० ], जस्यति। जसण् हिंसायाम् [ ९।१४६ ] इति पठितोऽप्यर्थभेदात् पुनरधीतः ॥

'१९३ त्रसण् वारणे'। धारणे इति नन्दी। ग्रहणे इत्येके। त्रासयति मृगान्, निराकरोतीत्यर्थः। अर्थान्तरे तु त्रसैच् भये [ ३।२८ ], त्रस्यति, त्रसति ॥

'१९४ वसण् स्नेहच्छेदावहरणेषु'। स्नेहे वासयति वमा। छेदे वासयति वृक्षम्। अवहरणे वासयति अरीन्, मारयतीत्यर्थः। अर्थान्तरे तु वसं निवासे [ १।९९९ ], वसति। वसिक् आच्छादने [ २।५९ ], वस्ते ॥

'१९५ ध्रसण् उत्क्षेपे'। उञ्छे इत्येके[1]। ध्रासयति। अर्थान्तरे तु ध्रसूश् उञ्छे [ ८।५९ ], ध्रस्नाति। उकारादी इमौ इत्येके, उध्रासयति, उध्रस्नाति ॥

'१९६ ग्रसण् ग्रहणे'। ग्रासयति फलम्। अर्थान्तरे तु ग्रसूङ् अदने [ १।८५४ ], ग्रसते ॥

'१९७ लसण् शिल्पयोगे'। लासयति दारु, श्रमादिना तक्ष्णोतीत्यर्थः। अर्थान्तरे तु लस श्लेषणक्रीडनयोः [ १।५४३ ], लसति। भ्वादौ पाठः शिल्पयोगेऽपि णिज्भावार्थः। एवमन्यत्रापि। पान्तोऽयमित्येके[1], लापयति दारु। अन्यत्र लपी कान्तौ [ १।९२७ ], लपति, लष्यति। तालव्यान्त इति तु कौशिकः ॥

## अथ हान्तः ॥

'१९८ अर्हण् पूजायाम्'। अर्हयति। ङे आर्जिहत्। "णिवेत्ति०" ५।३।१११ इत्यने अर्हणा। अर्थान्तरे तु अर्ह पूजायाम् [ १।५६४ ], अर्हति ॥

## अथ क्षान्तः ॥

'१९९ मोक्षण् असने'। मोक्षयति शरान्। "युवर्ण०" ५।३।२८ इति अलि मोक्षः। अन्यत्र मोक्षति ॥

## अथ वर्णक्रमेण भासार्थाः। तत्र कान्तौ ॥

'२०० लोकृ, २०१ तर्क, २०२ रघु, २०३ लघु, २०४ लोचृ, २०५ विछ, २०६ अजु, २०७ तुजु, २०८ पिजु, २०९ लजु, २१० लुजु, २११ भजु,

१. क्षीरस्वामी (क्षी. त. पृ. ३०, ३३०) ॥

२१२ पट, २१३ पुट, २१४ लुट, २१५ घट, २१६ घट्ट, २१७ वृत, २१८ पुथ, २१९ नद, २२० वृध, २२१ गुप, २२२ धूप, २२३ कुप, २४ चीव, २२५ दसु, २२६ कुशु, २२७ त्रसु, २२८ पिसु, २२९ कुसु, २३० दसु, २३१ वर्ह, २३२ वृहु, २३३ वल्ह, २३४ अहु, २३५ वहु, २३६, महुण् भासार्थाः । लोकयति, विलोकयति । ऋदित्त्वाद् "उपान्त्यस्य०" ४।२।३५ इति ह्रस्वाभावे अलुलोकत् । अन्यत्र लोकृङ् दर्शने [ १।६१२ ], लोकते ॥

'२०१ तर्क' । तर्कयति । "युवर्ण०" ५।३।२८ इत्यलि तर्कः, वितर्कः । क्ते तर्कितः । गणान्तरेषु अपठिता अप्यत्र दण्डके पाठाद् धातव एवेति अर्थान्तरे, तर्केति ॥

## अथ [1]घान्तौ ॥

'२०२ रघु २०३ लघु' । उदित्त्वान्ने रङ्घयति, लङ्घयति । अन्यत्र रघुङ् लघुङ् गतौ [ १।६३७-६३८ ], रङ्घते, लङ्घते ॥

## अथ चान्तः ॥

'२०४ लोचृ' । लोचयति, आलोचयति । ऋदित्त्वाद् "उपान्त्यस्य०" ४।२।३५ इति ह्रस्वाभावे अलुलोचत् । अन्यत्र लोचृङ् दर्शने [ १ ६४६ ], लोचते ॥

## अथ छान्तः ॥

'२०५ विछ' । "स्वरेभ्यः" १।३।३० इति द्वित्वे विच्छयति । अन्यत्र विछत् गतौ [ ५।२९ ], "अशवि ते वा" ३।४।४ इति वा ये विच्छायति, विच्छति ॥

## अथ जान्ताः षड् उदितश्च ॥

'२०६ अञ्जु'। अञ्जयति। अन्यत्र अञ्जौप् व्यक्त्यादौ [ ६।१६ ], व्यनक्ति ॥

'२०७ तुञ्जु' । तुञ्जयति। तुञ्जु बलने च [ १।१६२ ], तुञ्जति ॥

'२०८ पिञ्जु' । पिञ्जयति। अन्यत्र पिञ्जुकि संपर्चने [ २।५२ ], पिङ्क्ते ॥

'२०९ लञ्जु' । लञ्जयति । अन्यत्र लञ्जु भर्त्सने [ १।१५५ ], लञ्जति ॥

---

१. घान्तौ इति मू० ॥

'२१० लुजु'। लुञ्जयति। अन्यत्र लुञ्जति॥

'२११ भजु'। भञ्जयति। अन्यत्र भञ्जोंप् आमर्दने [ ६।१४ ], भनक्ति॥

## अथ टान्ताः पञ्च ॥

'२१२ पट'। पाटयति। अन्यत्र पट गतौ [ १।१९५ ], पटति। पटण् ग्रन्थे [ ९।२९४ ], अदन्तः, पटयति ॥

'२१३ पुट'। पोटयति । अन्यत्र पुटत् संश्लेषणे [ ५।१२७ ], पुटति ॥

'२१४ लुट'। लोटयति। अन्यत्र लुटि प्रतीघाते [ १।९४१ ], लोटते। लुटच् विलोटने [ ३।३४ ], लुट्यति ॥

'२१५ घट'। घाटयति। अन्यत्र घटिष चेष्टायाम् [ १।१००० ], घटते। णिगि "घटादेः०" ४।२।२४ इति ह्रस्वे घटयति। घटण् संघाते [ ९।१६९ ] इति पठितोऽपि सकर्मकार्थम् अर्थविशेषार्थं च पुनरिहायमधीतः ॥

'२१६ घट्ठ'। उदित्त्वान्ने घण्टयति। अचि घण्टा। अन्यत्र घण्टति ॥

इह रुटनटौ टान्तौ लडुतडौ च डान्तौ केचिदधीयते । रुट रोटयति । अन्यत्र रुटि प्रतीघाते [ १।९४० ], रोटते । नट नाटयति । अन्यत्र णट नृत्तौ [ १।१८७ ], नटति । ञ्वादौ आत्मनेपदीति नन्दी, नटते । लडु, उदित्त्वान्ने लण्डयति । अन्यत्र लण्डति । तड ताडयति, अन्यत्र तडति ॥

## अथ तान्तः ॥

'२१७ वृत'। वर्तयति। अन्यत्र वृतृङ् वर्तने [ १।९५५ ], वर्तते ॥

## अथ थान्तः ॥

'२१८ पुथ'। पोथयति। अन्यत्र पुंथच् हिंसायाम् [ ३।११ ], पुथ्यति ॥

## अथ दान्तः ॥

'२१९ नद'। नादयति। अन्यत्र णद अव्यक्ते शब्दे [ १।२९९ ], नदति ॥

## अथ धान्तः ॥

'२२० वृध'। वर्धयति। अन्यत्र वृधूङ् वृद्धौ [ १।९५७ ], वर्धते ॥

## अथ पान्तास्त्रयः ॥

'२२१ गुप'। गोपयति। अन्यत्र गुपौ रक्षणे [ १।३३२ ], "गुपौधूप०" ३।४।१ इत्याये गोपायति ॥

'२२२ धूप'। धूपयति। अन्यत्र धूप संतापे [ १।३३४ ], धूपायति ॥

'२२३ कुप'। कोपयति। अन्यत्र कुपच् क्रोधे [ ३।४८ ], कुप्यति ॥

## अथ वान्तः ॥

'२२४ चीव'। चीवयति। अन्यत्र चीवृग् झषीवत् [ १।९२१ ], चीवते चीवति ॥

## अथ शान्तावुदितौ च ॥

'२२५ दशु'। दंशयति। अन्यत्र दंश दशने [ १।४९६ ], दशति ॥

'२२६ कुशु'। कुंशयति। अन्यत्र कुंशति ॥

## अथ सान्ताश्चत्वार उदितश्च ॥

'२२७ त्रसु'। त्रंसयति। अन्यत्र त्रंसति ॥

'२२८ पिसु'। पिंसयति। अन्यत्र पिंसति ॥

'२२९ कुसु'। कुंसयति। अन्यत्र कुंसति ॥

'२३० दसु'। दंसयति। अन्यत्र दंसति ॥

## अथ हान्ताः षट् वर्हवल्हौ मुक्त्वा उदितश्च ॥

'२३१ वर्ह'। वर्हयति। अन्यत्र वर्हि प्राधान्ये [ १।८६२ ], वर्हते ॥

'२३२ बृहु'। बृहयति। "णिवेत्ति०" ५।३।१११ इत्यने बृंहणा। अन्यत्र बृहु शब्दे च [ १।५६० ], बृंहति ॥

'२३३ वल्ह'। वल्हयति। अन्यत्र वल्हि प्राधान्ये [ १।८६३ ], वल्हते ॥

'२३४ अहु'। अंहयति। अन्यत्र अहुङ् गतौ [ १।८५८ ], अंहते ॥

'२३५ बहु'। बंहयति ॥

'२३६ महुण्'। मंहयति । अन्यत्र वहुङ् महुङ् वृद्धौ [ १।८७३–८७४ ], वंहते मंहते । लोकृतर्कादयः स्वार्थे णिचमुत्पादयन्ति भासार्थाश्चेति पारायणम् । भासयति दिशः, दीपयति, इन्धयति, प्रकाशयति । गणान्तरपाठस्तु एषामात्मनेपदादिकार्यार्थः ॥

## अथात्मनेपदिनः तत्रोदन्तः ॥

'२३७ युणि जुगुप्सायाम्'। इदित्त्वाद् "इङितः०" ३।३।२२ इति आत्मनेपदे यावयते धर्मं जाल्मः । "य एचा०" ५।१।२८ इति ये याव्यम् । अन्यत्र युक् मिश्रणे [ २।२२ ], यौति । युंगूश् बन्धने [ ८।६ ], युनीते, युनाति । युजिरयमित्येके, योजयति ॥

## अथ ॠदन्तः ॥

'२३८ गॄणि विज्ञाने'। विज्ञापने इत्येके । गारयते । अन्यत्र गॄत् निगरणे [ ५।२१ ], गिरति । गॄश् शब्दे [ ८।३१ ] गृणाति । कॄणीति चन्द्रः, कारयते । अन्यत्र कॄत् विक्षेपे [ ५।२० ], किरति ॥

## अथ चान्तः ॥

'२३९ वञ्चिण् प्रलम्भने'। प्रलम्भनं मिथ्याफलाख्यानम् । वञ्चयते । "णिवेत्ति०" ५।३।१११ इत्यने वञ्चना । अन्यत्र वञ्चू गतौ [ १।१०६ ], वञ्चति । इदित्त्वादेव णिजन्ताद् आत्मनेपदे सिद्धे "प्रलम्भे गृधिवञ्चेः" ३।३।८९ इति तद्विधानं णिगन्तादफलवत्कर्त्रर्थमित्येके ॥

## अथ टान्तः ॥

'२४० कुटिण् प्रतापने'। कोटयते, उत्कोटयते । अन्यत्र कुटत् कौटिल्ये [ ५।११२ ], कुटति ॥

## अथ दान्तौ ॥

'२४१ मदिण् तृप्तियोगे'। तृप्तिशोधने इत्यन्ये[1] । तृप्तेः शोधनं संपत्तिः । मादयते । अन्यत्र मदैच् हर्षे [ ३।९३ ], माद्यति । हर्षग्लपनयोः घटादित्वाद् णिगि ह्रस्वे, मदयति ॥

'२४२ विदिण् चेतनाख्याननिवासेषु'। वेदयते सुखम्, चेतयते इत्यर्थः । आवेदयते धर्मम्, आख्यातीत्यर्थः । वेदयते गृहम्, निवासं करोतीत्यर्थः ।

१. क्षीरस्वामी (क्षी. त. पृ. २९७) ॥

विवादेऽप्यन्ये, प्रवेदयते वादिना । अन्यत्र विदक् ज्ञाने [ २।४१ ], वेत्ति । विदिच् सत्तायाम् [ ३।११५ ], विद्यते । विद्लृंती लाभे [ ५८ ], विन्दते, विन्दति । विदिप् विचारणे [ ६।२५ ], विन्ते ॥

## अथ नान्तः ॥

' २४३ मनिण् स्तम्भे ' । स्तम्भो गर्वः । मानयते, विमानयते वृपलः; पक्षे मनति इति चन्द्रः । अन्यत्र मनिच् ज्ञाने [ ३।१२० ], मन्यते । मनूयि बोधने [ ७।९ ], मनुते ॥

## अथ लान्तौ ॥

' २४४ वलि २४५ भलिण् आभण्डने[1] ' । आमण्डनं निरूपणम् । वलिः ओष्ठ्यादिः, उद्वालयते । भालयते, निभालयते । अन्यत्र वलि संवरणे [ १।८०७ ], वलते । भलि परिभाषणादौ [ १।८१२ ], भलते ॥

## अथ वान्तः ॥

' २४६ दिविण् परिकूजने ' । देवयति गन्त्री । अन्यत्र दिवूच् क्रीडादौ [ ३।१ ] दीव्यति ॥

## अथ षान्तः ॥

' २४७ वृषिण् शक्तिबन्धे ' । आवर्षयते ग्रामः, शक्तिं बध्नातीत्यर्थः । शक्तिबन्धः प्रजनासामर्थ्यमित्यन्ये[2] । वर्षयते वर्षधरः । तवर्गतुर्यादिः अय सामर्थ्यवारणार्थ इत्येके, धर्षयते अरीन् । केचिदमुमूदितं णिचोऽनित्यत्वार्थं पठन्ति, तन्मते शक्तिबन्धेऽपि णिचोऽभावाद् आत्मनेपदाभावे वर्षति । ऊदित्त्वात् क्त्वि वेट् , वृष्ट्वा वर्षित्वा । अर्थान्तरे तु वृषू सेचने, वर्षति ॥

## अथ सान्तः ॥

' २४८ कुत्सिण् अवक्षेपे ' । कुत्सयते । " भीषिभूषि० " ५।३।१०९ इत्यत्र बहुवचनाद् अङि कुत्सा । बाहुलकाद् " णिवेत्ति० " ५।३।१११ इति अने कुत्सना ॥

---

१. °णे इति मु० ॥ २. क्षीरस्वामी ( क्षी. त. पृ. २९६ ) ॥

## अथ क्षान्तः ॥

'२४९ लक्षिण् आलोचने'। लक्षणं लक्षयते। अन्यत्र लक्षीण् दर्शनाऽङ्कनयोः [ ९।१५२ ], लक्षयति, लक्षयते। णिचोऽनित्यत्वाद् लक्षते ॥

## अथ आत्मनेपदिन एवार्थान्तरेऽपि चुरादयः ॥

## अथ कान्तास्त्रयः ॥

'२५० हिष्किं २५१ किष्किण् हिंसायाम्'। हिष्कयते। क्ते हिष्कितम्। हिकितम् इति तु हिकी अव्यक्ते शब्दे [ १।८८९ ] इत्यस्य ॥

'२५१ किष्किण्'। किष्कयते। उणादौ "पृकाहृषि०" ( उ० ७२९ ) इति उः, किष्कुः वितस्तिः। किष्किन्धा इति तु किमप्यन्तर्दधाति इति पृषोदरादित्वात् दधातेः ॥

'२५२ निष्किण् परिमाणे'। निष्कयति। अचि निष्कः ॥

## अथ जान्तः ॥

'२५३ तर्जिण् संतर्जने'। तर्जयते। करणेऽनटि तर्जनी। यत्तु लक्ष्ये तर्जयति इति परस्मैपदं दृश्यते तथा भर्त्सयति, निशामयति, भालयति, कुत्सयति, वञ्चयति, निवेदयतीत्यादि; तद् भ्वादौ राजृग् टुभ्राजि इति पुनः भ्राजिग्रहणेनाऽऽत्मनेपदस्याऽनित्यत्वज्ञापनात् सिद्धम्। तर्ज भर्त्सने [ १।१५६ ] तर्जति ॥

## अथ टान्तौ ॥

'२५४ कूटिण् अप्रमादे'। आप्रदाने इत्यन्ये[1] कूटयते। अलि कूटः। कूटण् दाहे [ ९।२९३ ], अदन्तः, कूटयति ॥

'२५५ त्रुटिण् छेदने'। त्रोटयते रज्जुम्। डान्तोऽयमित्येके, उत्त्रोडयते तृणम्। त्रुटत् छेदने [ ५।१२३ ], त्रुट्यति, त्रुटति ॥

## अथ ठान्तः ॥

'२५६ शठिण् श्लाघायाम्'। शाठयते। अचि शाठः। "णिवेत्ति०" ५।३।१११ इत्यने शाठना। शट इति नन्दी। शल इति कौशिकः। शठ कैतवे च [ १।२२२ ], शठति, शठः ॥

---

१. दुर्गः (क्षी. त पृ. २९५) ॥

## अथ णान्तास्त्रयः ॥

'२५७ कूणिण् संकोचने'। कूणयते मुखम्। क्ते कूणितं चक्षुः। उणादौ "स्वरेभ्य०" (उ० ६०६) इत्यौ कूणिः ॥

'२५८ तूणिण् पूरणे'। तूणयते। अलि तूणः। उणादौ "जम्बीरामीर०" (उ० ४२२) इतीरे तूणीरः। तूलेति चन्द्रः ॥

'२५९ भ्रूणिण् आशायाम्'। आशङ्कायामित्येके, भ्रूणयते। अलि भ्रूणः ॥

## अथ तान्तौ ॥

'२६० चितिण् संवेदने'। चेतयते। अशिति विषये णेर्लुकि व्यञ्जनान्तत्वाद् "इङितो०" ५।२।४४ इत्यने चेतनाशीलः चेतनः। अप्रत्ययापवादे "णिवेत्ति०" ५।३।१११ इत्यने चेतना। "रम्यादिभ्यः०" ५।३।१२६ इति कर्तरि अनटि चेतनः। चितै संज्ञाने [ १।२७८ ], चेतति ॥

'२६१ वस्ति २६२ गन्धिण् अर्दने'। वस्तयते। अचि वस्तः। उणादौ "स्वरेभ्य०" (उ० ६०६) इत्यौ वस्तिः ॥

## अथ धान्तः ॥

'२६२ गन्धिण्'। गन्धयते। अलि गन्धः। अनटि गन्धनम्। उणादौ "गन्धेरर् चान्तः" (उ० ५०८) इति वे गन्धर्वः ॥

## अथ पान्ताश्चत्वारः ॥

'२६३ डपि २६४ डिपि २६५ डम्पि २६६ डिम्पि २६७ डम्भि २६८ डिम्भिण् संघाते'। डापयते। डेपयते। डम्पयते। डिम्पयते ॥

## अथ भान्तौ ॥

'२६७ डम्भि'। डम्भयते ॥

'२६८ डिम्भिण्'। डिम्भयते। अचि डिम्भः ॥

## अथ मान्तास्त्रयः ॥

'२६९ स्यमिण् वितर्के'। "यमोऽपरिवेषणे०" ४।२।२९ इत्यत्र ण्यधिकारेऽपि णिज्ग्रहणं नियमार्थम्, तेन "अमोकम्यमि०" ४।२।२६ इति ह्रस्वाभावे

स्यामयते । स्यमू शब्दे [ १।३८७ ], स्यमति । णिगि "अमो०" ४।२।२६ इति ह्रस्वे स्यमयति ॥

'२७० शमिण् आलोचने'। शामयते, विशामयते । "णौ दान्त०" ४।४।७४ इति क्ते वा निपातनात् शान्तः, पक्षे "सेट्क्तयोः" ४।३।८४ इति णेर्लुक्, शामितः । शमूच् उपशमे [ ३।८७ ], शाम्यति । णिगि "शमोऽदर्शने" ४।२।२८ इति ह्रस्वे शमयति रोगम् ॥

'२७१ [1]कुस्मिण् कुस्मयने'। मतिदृष्टे बुद्ध्युत्प्रेक्षितेऽर्थे इत्यन्ये । कुत्सितं स्मयनम्, कुस्मयनम् । कुस्मयते, प्रकुस्मयते, आकुस्मयते । क्ये कुस्म्यते । "धातोरनेकस्वरा०" ३।४।४६ इत्यामि कुस्मयांचक्रे । ङे अचुकुस्मत । सनि चुकुस्मयिषते । कुस्मयिता, कुस्मयितव्यम् । क्विपि णिलुकौ "न सन्धि०" ७।४।१११ इति स्थानित्वप्रतिषेधस्य स्कोर्लुक्यभावात् स्थानित्वे "संयोगस्यादौ०" २।१।८८ इति सस्य लुगभावे, संयोगान्तलोपे तु णिलुकौ "न सन्धि०" ७।४।१११ इति स्थानित्वप्रतिषेधात् "पदस्य" २।१।८९ इति मस्य लुकि सुकूः साधुकूः । "णिवेत्ति०" ५।३।१११ इत्यने कुस्मना । कुस्मयित्वा, प्रकुस्म्य ॥

कुपूर्वेण स्मिङैव कुस्मयते इति प्रयोगसिद्धेर्व्यर्थोऽयमिति चेत्, नैवम्, अनिष्टापत्तेः तथा हि, । "गतिक्वन्य०" ३।१।४२ इति समासस्य नाम्नैव सह विधानात् तिवाद्यन्तेन सहाभावे "प्रथमोक्तं प्राक्" ३।१।१४८ इति प्राक्त्वानियम इति स्मयतेकु इत्यपि स्यात्, उपसर्गस्य च धातोः प्राक्त्वनियमात् कुप्रस्मयते । अडागमस्य च धात्वादित्वात् कोरग्रतः पाते कवस्मयत । क्ये "दीर्घश्च्वि०" ४।३।१०८ इति दीर्घे कुस्मीयते । एकस्वरत्वाच्च परोक्षाया आमभावे कुसिष्मिये । अद्यतन्यां सिचि कवस्मेष्ट । सनि "ऋस्मि०" ४।४।४८ इतीटि "णिस्तोरेवा०" २।३।३७ इति नियमात् षत्वाभावे कुसिस्मयिषते । तृचि तव्ये चानुस्वारेत्त्वादिडभावे कुस्मेता, कुस्मेतव्यम् । क्विपि "ह्रस्वस्य तः०" ४।४।११३ इति तेऽन्ते कुस्मित् । "स्त्रियां०" ५।३।९१ भावाकर्त्रोः क्तौ कुस्मितिः । क्त्व कुस्मित्य-कुप्रस्मित्ये-त्यादीनि रूपाणि स्मिङः प्राप्नुवन्ति । अथ कथं कुस्मति इति ? कुपूर्वात् स्मयतेः "क्वचित्" ५।१।१७१ इति ङे कुस्म इवाचरतीति क्विपि क्रियार्थत्वाद् धातुत्वे "शेषात्" ३।३।१०० इति परस्मैपदे भविष्यति । कुस्मनाम्नस्तु णिज्बाहुलकान्नेष्यते ॥

---

१. तुलनार्थं विशेषार्थं च द्रष्टव्या क्षी. त. ( पृ. २९७ ) ॥

## अथ रान्तास्त्रयः ॥

'२७२ गूरिण् उद्यमे'। गूरयते, उद्गूरयते खड्गम् । "णिवेत्ति०" ५।३।१११ इत्यने गूरणा, आगूरणा । गूरैचि गतौ [ ३।१२९ ], गूर्यते ॥

'२७३ तन्त्रिण् कुटुम्बधारणे'। कुटुम्बं परिवारः । उपलक्षणं चैतत् । तन्त्रयते, तन्त्रयांचक्रे । अचि अलि वा तन्त्रम् । कर्मणोऽणि स्वतन्त्रः । उणादौ "पदिपठि०" ( उ० ६०७ ) इत्यौ तन्त्रिः वीणासूत्रम् । "तृस्तृतन्द्रि०" ( उ० ७११ ) इति ईः, तन्त्रीः शुष्कस्नायुः आलस्यं च । कुटुम्ब इत्यपि धातुरिति चान्द्राः, कुटुम्बयते ॥

'२७४ मन्त्रिण् गुप्तभाषणे'। मन्त्रयते । "ग्रहादिभ्यो०" ५।१।५३ इति णिनि मन्त्री । अलि मन्त्रः । उणादौ "पदिपठि०" ( उ० ६०७ ) इत्यौ मन्त्रिः सचिवः ॥

## अथ लान्तः ॥

'२७५ ललिण् ईप्सायाम्'। लालयते । अचि लालः, कुत्सितो लालः कुलालः, कर्मणोऽणि कुं लालयते कुलालः । "णिवेत्ति०" ५।३।१११ इत्यने लालना । णिचोऽनित्यत्वाद् "ङङितो०" ५।२।४४ इत्यने लालनाशीला ललना । क्ते ललितः । लाला इति तु "भिल्लाच्छभल्ल०" ( उ० ४६४ ) इति निपातनाद् ले लातेः । लड विलासे [ १।२५४ ], ऋफिडादित्वाद् डस्य लत्वे ललति । णिगि जिह्वोन्मन्थने घटादित्वाद् ह्रस्वे ललयति श्वा जिह्वाम् । [1]गलिण् स्रावणे इत्यप्येके, गालयते, उद्गालयते । गल अदने [ १।४५२ ], गलति ॥

## अथ शान्तौ ॥

'२७६ स्पशिण् ग्रहणश्लेषणयोः'। स्पाशयते । ङे "स्मृदृत्वर०" ४।१।६५ इति सन्वद्भावापवादे पूर्वस्याऽत्वे अपस्पशत् । "णौ दान्तशान्त०" ४।४।७४ इति क्ते वा निपातनात् स्पष्टः, स्पाशितः । पषी बाधनस्पर्शनयोः [ १।९२६ ], अयं स्पशीत्येके[2]; स्पशते, स्पशति । "व्यञ्जनाद्" [५।३।१३२] घञि स्पाशः ॥

---

१ मुद्रिते चान्द्रधातुपाठे 'तत्रि कुटुम्बधारणे' इत्येवमेकधातुरूपं सूत्रं पठ्यते, स चापपाठः । ( क्षी. त. टि पृ. २९३ ) । तुलना:- क्षी. त. ( पृ. २९३ ) ॥

२ क्षीरस्वामी, ( क्षी. त. पृ. २९९, पृ. १२७ ) ॥

'२७७ दंशिण् दशने'। दंशयते। "णिवेत्ति०" ५।३।१११ इत्यने दंशना। अनटि दंशनम्। दशुण् भासार्थः [ ९।२२५ ], दंशयति। दंशं दशने [ १।४९६ ], दशति। दाशिण् दाने इत्यप्येके, दाशयते। दाशृग् दाने [ १।९२२ ], दाशते, दाशति ॥

## अथ सान्तौ ॥

'२७८ दंसिण् दर्शने च'। चकाराद् दशने। दंसयते। क्ते दंसितः। पृषोदरादित्वात् टे नस्यात्वे च दासी। दसुण् भासार्थः [ ९।२३० ], दंसयति, अन्यत्र दंसति ॥

'२७९ भर्त्सिण् संतर्जने'। भर्त्सयते। "णिवेत्ति०" ५।३।१११ इत्यने भर्त्सना ॥

## अथ क्षान्तः ॥

'२८० यक्षिण् पूजायाम्'। यक्षयते। अलि यक्षः। उणादौ "सात्मन्०" ( उ० ९१६ ) इति मनि यक्ष्मा रोगः ॥

आत्मनेभाषाः ॥

## इतोदन्ताः ॥

इत उर्ध्वं युजादेः प्रागदन्तत्वं धातूनां विधीयते, ततश्च "अतः" ४।३।८२ इत्यल्लुकः स्थानित्वाद् गुणवृद्ध्योः समानलोपित्वाच्च सन्वद्भावदीर्घोपान्त्यह्रस्वानामभावः, यथा सुखयति, रचयति; अत्र "अतः" ४।३।८२ इत्यल्लुकः स्वरादेशत्वेन पूर्वविधिं प्रति स्थानित्वाद् गुणवृद्ध्यभावः। अररचत्, असुसुखत्; अत्र समानलोपित्वाद् "असमानलोपे०" ४।१।६३ इति पूर्वस्य सन्वद्भावः, "लघोर्दीर्घो०" ४।१।६४ इति दीर्घश्च न भवति। असुखचत्, अत्रोपान्त्यह्रस्वाभावः।

अङ्कादीनां तु उक्तफलाभावेऽपि पूर्वाचार्यानुरोधेनादन्तेषु पाठः। णिजभावेऽनेकस्वरत्वाद् यङ्निवृत्त्यर्थ इत्येके। द्रमिलास्तु एवंप्रकाराणामत्वविधानसामर्थ्याद् अल्लोपाभावं मन्यन्ते, ततश्च "ञ्णिति" ४।३।५० इति वृद्धौ प्वागमे च दुःखापयति, लज्जापयति, वण्टापयति, रंहापयति, अर्थापयते सत्रापयते, गर्वापयते इत्युदाहरन्ति। ते हि "ञ्णिति" ४।३।५० इति वृद्धिं स्वरमात्रस्येच्छन्ति ॥

## तत्र कान्तौ ॥

'२८१ अङ्कण् लक्षणे'। अङ्कयति। सनि "स्वरादे:०" ४।१।४ इति के-द्वित्वे अञ्चिकयिषति। अनदन्त एवायमित्येके। अकुङ् लक्षणे [ १।६१० ], अङ्कते॥

'२८२ क्लेष्कण् दर्शने'। क्लेष्कयति। णिजभावेऽप्यदन्तत्वार्थोऽस्य पाठः, तेनानेकस्वराद् यङ् न भवति। एवं मूत्रि-रूक्षि-गर्विप्रभृतीनां पाठे प्रयोजन-मुन्नेयम्; अनदन्ता एवैते इत्येके॥

## अथ खान्तौ ॥

'२८३ सुख २८४ दुःखण् तत्क्रियायाम्'। सुखनं दुःखनं च तत्क्रिया; सुखयति, असुसुखत्। अचि सुखम्। दुःखयति। अचि दुःखम्॥

## अथ गान्तः ॥

'२८५ अङ्गण् पदलक्षणयोः'। अङ्गयति। सनि अञ्जिगयिषति। अस्यापि पूर्वाचार्यानुरोधेनाऽदन्तेषु पाठः॥

## अथ घान्तः ॥

'२८६ अघण् पापकरणे'। अघयति। सनि अजिघयिषति॥

## अथ चान्तौ ॥

'२८७ रचण् प्रतियत्ने'। रचयति, रचयांचकार, अररचत्। "णिवेत्ति०" ५।३।१११ इत्यने रचना॥

'२८८ सूचण् पैशून्ये'। सूचयति। अपोपदेशत्वात् षत्वाभावे असुसूचत्। "अट्यर्ति०" ३।४।१० इति यङि सोसूच्यते। [1]स्मिप्रभृतिभिः साहचर्याद् एक-स्वराणामेव हि षोपदेशस्मृतिः अत एव सूत्र-सत्र-संग्राम-साम-सभाज-स्थूल-स्तन-स्तेन-स्तोम-सुखानामषोपदेशत्वात् सोसूत्र्यते, सिसत्रयिषते इत्यादौ न षत्वम्। णके सूचकः। अचि सूचः। गौरादित्वाद् ङ्याम् सूचयति सूत्रमार्गमिति सूची। "नाम्नि पुंसि च" ५।३।१२१ इति णके भीरुष्ठानादित्वात् षत्वे विषूचिका। उणादौ "रुक्मग्रीष्म०" ( उ० ३४६ ) इति मे निपातनात् सूक्ष्मः। "पुत्रादयः" (उ० ४५५) इति त्रे निपातनात् सूत्रम्। "स्वरेभ्य०" (उ० ६०५) इत्यौ सूचिः॥

---

१. तुलना:-क्षीरतरङ्गिणी ( पृ. ३१९ )॥

## अथ जान्ताश्चत्वारः ॥

'२८९ भाजण् पृथक्कर्मणि'। भाजयति, विभाजयति, अबभाजत्। क्ते भाजितम्। क्त्वो यपि विभाज्य ॥

'२९० सभाजण् प्रीतिसेवनयोः'। [1]प्रीतिदर्शनयोरित्यन्ये। सभाजयति। क्ये सभाज्यते। ङे अससभाजत्। अनटि सभाजनम् ॥

'२९१ लज २९२ लजुण् प्रकाशने'। लजयति, अललजत् ॥

'२९२ लजुण्'। उदित्त्वान्ने लञ्जयति। लजुण् भासार्थः [ ९।२१० ], लञ्जयति। लज–लजु भर्त्सने [ १।१५४–१५५ ], लजति, लञ्जति ॥

## अथ टान्ताः सप्त ॥

'२९३ कूटण् दाहे'। आमन्त्रणेऽपीत्येके। कूटयति ङे अचुकूटत्। अचि कूटम् ॥

'२९४ पट २९५ वटण् ग्रन्थे'। ग्रन्थो वेष्टनम्। पटयति रज्जुम्, वेष्टयतीत्यर्थः। एवं वटयति। विभाजनेऽप्ययमित्यन्ये। ङे अपपटत्, अववटत्। पट गतौ [ १।१९५ ], पटति। पटण् भासार्थः [ ९।२१२ ], पाटयति। वट वेष्टने [ १।१७६ ], वटति। णिगि परिभाषणे घटादित्वाद् ह्रस्वे वटयति। वटुण् विभाजने [ ९।२९९ ], वण्टयति ॥

'२९६ खेटण् भक्षणे'। खेटयति। ङे अचिखेटत्। णके खेटकं फलकः, अलि खेटो ग्रामः। "णिवेत्ति०" ५।३।१११ इत्यने आखेटना। नायं खेटः, [2]खेड इति देवनन्दी, खेडयति। खिट उत्त्रासे [ १।१७८ ], खेटति, अचीखिटत् ॥

'२९७ खोटण् क्षेपे'। खोटयति। ङे अचुखोटत्। अलि खोटः। डान्तोऽयमिति देवनन्दी[3], खोडयति। दान्त इत्यन्ये, खोदयति ॥

'२९८ पुटण् संसर्गे'। पुटयति। ङे [4]अपुपुटत्। पुटत् संश्लेषणे [५।१२७], पुटति। पुटण् भासार्थः [ ९।२१३ ], पोटयति ॥

'२९९ वटुण् विभाजने'। उदित्त्वान्ने वण्टयति। वण्टापयतीत्यप्येके। वटु विभाजने [ १।२०५ ], वण्टति ॥

---

१. प्रीतिदर्शने इति क्षीरस्वामी, ( क्षी. त. पृ. ३१६ ) ॥
२. खेढ इति दीर्घाः, ( क्षी. त. पृ. ३१४ ) ॥
३. क्षीरस्वामी अपि, ( क्षी. त. पृ. ३१४ ) ॥
४. अ पुटत् इति मु० ॥

## अथ ठान्तौ ॥

'३०० शठ ३०१ श्वठण् 'सम्यग्भाषणे' । शठयति, श्वठयति । ङे अशशठत्, अशश्वठत् । शठ कैतवे च [ १।२२२ ], शठति । णिगि शाठयति । शठ श्वठ श्वठुण् संस्कारगत्योः [ ९।४९, ५०, ५१ ], शाठयति, श्वाठयति, श्वण्ठयति ॥

## अथ डान्तः ॥

'३०२ दण्डण् दण्डनिपातने' । दण्डयति । दण्डादेर्नाम्नो णिचि दण्डयत्यादिसिद्धौ दण्डण्प्रभृतीनां पाठो यथाभिधानं णिचं विनाऽपि प्रयोगार्थः । अत एवाऽदन्तत्वमप्यनेकस्वरकार्यार्थं फलवत् ॥

## अथ णान्ता अष्टौ ॥

'३०३ व्रणण् गात्रविचूर्णने' । व्रणयति । ङे अवव्रणत् । अचि व्रणः । व्रण शब्दे [ १।२६२ ], व्रणति । णिगि व्राणयति ॥

'३०४ वर्णण् वर्णक्रियाविस्तारगुणवचनेषु' । वर्णक्रिया वर्णनं वर्णकरणं वा । कथां वर्णयति, सुवर्णं वर्णयति । विस्तारे वर्णनेयम् । गुणवचनं स्तुतिः शुक्लाद्युक्तिर्वा, राजानम् उपवर्णयति । "नाम्नि पुंसि च" ५।३।१२१ इति णके वर्णकः ॥

'३०५ पर्णण् हरितभावे' । पर्णयति । अचि पर्णम् ॥

'३०६ कर्णण् भेदे' । कर्णयति, आकर्णयति ॥

'३०७ तूणण् संकोचने' । वितूणयति मुखम् । ङे व्यतुतूणत् । चूण तूणण् संकोचने [ ९।७४, ७५ ], असमानलोपित्वाद् "उपान्त्यस्या०" ४।२।३५ इति ह्रस्वे अतूतुणत् ॥

'३०८ गणण् संख्याने' । गणयति । ङे "[2]ई च गणः" ४।१।६७ इति पूर्वस्याऽत्वे ईति च अजगणत्, अजीगणत् । णके गणकः । "कर्मजा तृचा च" ३।१।८३ इति प्रतिषिद्धोऽपि "पत्तिरथौ०" ३।१।७९ इति षष्ठीसमासः, पत्तिगणकः, रथगणकः । स्त्रियामापि गणयति धनागममिति गणिका । अलि गणः । "णिवेत्ति०" ५।३।१११ इत्यने गणना ॥

---

१. असम्यग्भाषणे इति क्षीर० ( क्षी त. पृ ३११ )॥
२. 'ईश्च ग' इति मु० ॥

'३०९ कुण ३१० गुण ३११ केतण् आमन्त्रणे, आमन्त्रणं गूढोक्तिः; कुणयति, गुणयति । ङे अचुकुणत् , अजुगुणत् । कुणत् शब्दोपकरणयोः [ ५।५२ ], कुणति । णिगि ङे अचूकुणत् ॥

## अथ तान्तास्त्रयः ॥

'३११ केतण्' । केतयति, संकेतयति । ङे अचिकेतत् , क्ते केतितः । क्त्वो यपि संकेत्य । अयं निश्रावणनिमन्त्रणयोऽपीत्येके[१] ॥

'३१२ पतण् गतौ वा' । वाशब्दो णिजदन्तत्वयोः युगपद्विकल्पार्थः, पतयति । ङे अपपतत् । "शीङ्श्रद्धा०" ५।२।३७ इति आलौ "आमन्ता०" ४।३।८५ इति णेरयि पतनशीलः, पतयालुः, पक्षे पतति । "व्यञ्जनादेः०" ४।३।७८ इति वा वृद्धौ अपातीत् , अपतीत् । पत्लृ गतौ [ १।९६२ ], पतति, अपप्तत् ॥

'३१३ वातण् गतिसुखसेवनयोः' । सुखसेवनयोः इत्येके । वातयति, ङे अववातत् । नायं वातः किन्तु वा इत्येके, वापयति, निर्वाप्य गतः । वांक् गतिगन्धनयोः [ २।५ ], वाति ॥

## अथ थान्तौ ॥

'३१४ कथण् वाक्यप्रबन्धे' । वाक्यप्रतिबन्धे इत्यन्ये । प्रतिबन्धो विच्छेदोदीरणात् । वदने इत्यपरे । कथयति । ङे अचकथत् । णके कथकः । "भीषिभूषि०" ५।३।१०९ इत्यङि कथा । "पुंनाम्नि०" ५।३।१३० इत्याधारे घे आगत्य कथ्यतेऽस्मिन्निति आस्कथः, वर्चस्कादित्वात् सोऽन्तः । क्त्वो यपि "लघोः०" ४।३।८६ इति णेरयि सकथय्य । कथम् अचीकथत् ? 'भूरिदाक्षिण्यसंपन्नं, यच्चं सान्त्वमचीकथः' [ ] इति प्रयोगं दृष्ट्वा ये गणयतेरन्यस्यापि पूर्वस्य ईत्वमिच्छन्ति, तन्मते भविष्यति, प्रकृत्यन्तरं वाऽन्वेष्यम् ॥

'३१५ श्रथण् दौर्बल्ये' । श्रथयति । ऋफिडादित्वाल्लत्वे श्लथयति । ङे अशश्लथत् । श्रथण् प्रतिहर्षे [ ९।८५ ], श्राथयति । श्रथण् बन्धने च [ ९।३९६ ], "युजादेः०" ३।४।१८ इति वा णिचि श्राथयति, श्रथयति । श्रथुङ् शैथिल्ये [ १।७१७ ], श्रन्थते ॥

---

१. विश्रामणाऽऽमन्त्रणयोरिति क्षीर० ( क्षी. त. पृ ३१६ ) ॥

## अथ दान्तौ ॥

'३१६ छेदण् द्वैधीकरणे'। छेदयति। ङे अचिच्छेदत्। क्ते छेदितम्। क्त्वो यपि विच्छेद्य ॥

'३१७ गदण् गर्जे'। गर्जो मेघशब्दः। गदयति। ङे अजगदत्। गद व्यक्तायां वाचि [ १।२९७ ], गदति। णिगि गादयति। ङे अजीगदत् ॥

## अथ धान्तः ॥

'३१८ अन्धण् दृष्ट्युपसंहारे'। अन्धयति। सनि "न बदनं०" ४।१।५ इति नस्य द्वित्वप्रतिषेधाद् धेरेव द्वित्वे अन्दिधयिषति ॥

## अथ नान्ताश्चत्वारः ॥

'३१९ स्तनण् गर्जे'। गर्जो मेघशब्दः। स्तनयति। ङे अतस्तनत्। अषोपदेशत्वात् षत्वाभावे तिस्तनयिषति। उणादौ "हृषिपुषि०" (उ० ३९७) इति इत्नौ स्तनयित्नुः गदयित्नुश्च मेघः। स्तन शब्दे [ १।३२३ ], स्तनति। णिगि शब्दादन्यत्र न घटादित्वम्, स्तानयति ॥

'३२० ध्वनण् शब्दे'। ध्वनयति। ङे अदध्वनत्। ध्वन शब्दे [१।३२५], ध्वनति। णिगि शब्दादन्यत्र घटादित्वाभावे ध्वानयति ॥

'३२१ स्तेनण् चौर्ये'। स्तेनयति। ङे अषोपदेशत्वात् षत्वाभावे अतिस्तेनत्। अचि स्तेनः ॥

'३२२ ऊनण् परिहाणे'। ऊनयति। ङे मा भवान् ऊनिनत्। अचि ऊनः। क्ते ऊनितम् ॥

## अथ पान्तास्त्रयः ॥

'३२३ कृपण् दौर्बल्ये'। कृपयति। ङे अचकृपत्। नन्द्यादित्वादने कृपणः। स्त्री चेत् कृपणा। "मृगया०" ५।३।१०१ इति निपातनाद् अनापवादेऽङि कृपा। कृपौङ् सामर्थ्ये [ १।९५९ ], कल्पते। कृपण् अवकल्कने [ ९।१७९ ], कल्पयति ॥

'३२४ रूपण्[1] रूपक्रियायाम्'। रूपक्रिया राजमुद्रादिरूपस्य करणम्, रूपयति। णके रूपकम्। अलि रूपम्। "णिवेत्ति०" ५।३।१११ इत्यने रूपणा। रूपप्रदर्शनं वा रूपक्रिया; निरूपयति, निरूपणा ॥

१. तुलना:-क्षीरतरङ्गिणी पृ. ३२१ ॥

'३२५ क्षप ३२६ लाभण् प्रेरणे'। क्षपयति। अचि क्षपा॥

## अथ भान्तः॥

'३२६ लाभण्'। लाभयति। ङे अललाभत्। अचि अलि वा लाभः। लभण्[1] इति सभ्याः; लभितम्, विलभना। डुलभिंष् प्राप्तौ [ १।७८६ ], लभते। णिगि लम्भयति॥

## अथ मान्ताः पञ्च॥

'३२७ भामण् क्रोधे'। भामयति। ङे अबभामत्। भामि क्रोधे [ १।७८७ ], भामते। णिगे ङे अबीभमत्॥

'३२८ गोमण् उपलेपने'। गोमयति भूमिम्। ङे अजुगोमत्। उणादौ "गयहृदय०" (उ० ३७०) इति निपातनादये गोमयं गोशकृत्॥

'३२९ सामण् सान्त्वने'। सान्त्वनं प्रीणनम्। सामयति, अससामत्। अषोपदेशत्वात् षत्वाभावे सिसामयिषति॥

'३३० श्रामण् आमन्त्रणे'। श्रामयति। ङे अशश्रामत्॥

'३३१ स्तोमण् श्लाघायाम्'। स्तोमयति। ङे अतुस्तोमत्। अलि स्तोमः। "ज्योतिरायुर्भ्याम्०" २।३।१७ इति षत्वे अग्निष्टोमः॥

## अथ यान्तः॥

'३३२ व्ययण् वित्तसमुत्सर्गे'। वित्तसमुत्सर्गस्त्यागः, गतावित्येके[2]। व्यययति। ङे अवव्ययत्। अलि व्ययः। व्ययी गतौ [ १।९१८ ], व्ययते, व्ययति, अव्ययीत्। णिगि व्याययति। वित्त इति धात्वन्तरमित्येके[3]; वित्तयति, वित्तितः, वित्तयित्वा॥

## अथ रान्तास्त्रयोदश॥

'३३३ सूत्रण्[1] विमोचने'। विमोचनं मोचनाभावः, ग्रन्थनम् इति यावत्। सूत्रयति। ङे असुसूत्रत्। "अत्यर्ति०" ३।४।१० इति यङि सोसूत्र्यते। अचि सूत्रम्। "हेतुतच्छील०" ५।१।१०३ इत्यत्र सूत्रस्य वर्जनात् कर्मणोऽणि सूत्रकारः॥

१. तुलना-क्षी. त. पृ ३२१, ३१७॥ २. क्षीरस्वामी, (क्षी. त. पृ. ३२१)॥
३. दुर्गादासः (श. क. पृ. ३८५)॥

'३३४ मूत्रण् प्रस्रवणे'। मूत्रयति। ङे अमुमूत्रत्। "अत्यर्ति०" ३।४।१० इति यङि मोमूत्र्यते॥

'३३५ पार ३३६ तीरण् कर्मसमाप्तौ'। पारयति, अपपारत्। अलि पारम्। "साहिसाति०" ५।१।५९ इति शे पारयः। क्ते पारितम्। "णिवेत्ति०" ५।३।१११ इत्यने पारणा॥

'३३६ तीरण्'। तीरयति। ङे अतितीरत्। अचि अलि वा तीरम्॥

'३३७ कत्र ३३८ गात्रण् शैथिल्ये'। कत्रयति। ङे अचकत्रत्। क्ते कत्रितः। अयं कर्त्रण् इत्येके[1], कर्त्रयति, कर्त्रितम्। चन्द्रस्तु कर्तृण् इति ऋदितं मन्यते, कर्तयति। कत्थण् इति देवनन्दी; कत्थयति॥

'३३८ गात्रण्'। गात्रयति। ङे अजगात्रत्॥

'३३९ चित्रण् चित्रक्रियाकदाचिद्दृष्ट्योः'। चित्रयति, आलेख्यं करोति, कदाचित् पश्यति वा इत्यर्थः। वैचित्र्यकरणार्थोऽयं, न चित्रक्रियार्थ इत्यन्ये[2], तन्मते चित्रयति, वैचित्र्यं संपादयति, कदाचित् पश्यति वेत्यर्थः। क्ते चित्रितम्। "णिवेत्ति०" ५।३।१११ इत्यने विचित्रणा॥

'३४० छिद्रण् भेदे'। छिद्रयति। ङे अचिच्छिद्रत्। अचि छिद्रम्॥

'३४१ मिश्रण् संपर्चने'। संपर्चनं श्लेषः। मिश्रयति। ङे अमिमिश्रत्। अचि मिश्रः॥

'३४२ वरण् ईप्सायाम्'। वरयति कन्याम्। ङे अववरत्। अचि वरः॥

'३४३ स्वरण् आक्षेपे'। स्वरयति। ङे असस्वरत्। आक्षेपादन्यत्र औस्वृ शब्दोपतापयोः [ १।२१ ], स्वरति। णिगि स्वारयति॥

'३४४ शारण् दौर्बल्ये'। तालव्यादिः, शारयति। ङे अशशारत्। शर इति नन्दी, अशशरत्॥

'३४५ कुमारण् क्रीडायाम्'। कुमारयति। ङे अचुकुमारत्। अचि कुमारः; कुत्सितो मारोऽस्येति, "कमेरत उच्च" ( उ० ४०९ ) इत्यारे कमतेर्वा। लान्तोऽयमित्येके, कुमालयति॥

१. दुर्गः; (क्षी. त. पृ. ३१८)॥ २. क्षीरस्वामी; (क्षी. त. पृ. ३२०)॥

## अथ लान्ताः पञ्च ॥

'३४६ कलण् संख्यानगत्योः'। कलयति। ङे अचकलत्। कलि शब्द-संख्यानयोः [ १।८१४ ], कलते। णिगि कालयति। कलण् क्षेपे [ ९।३४६ ], कालयति गाः ॥

'३४७ शीलण् उपधारणे'। उपधारणम् अभ्यासः परिचयो वा, शीलयति। ङे अशिशीलत्। अलि शीलम्। शील समाधौ [ १।४२१ ], शीलति। णिगि ङे [1]अशीशि (शिशी) लत् ॥

'३४८ वेल ३४९ कालण् उपदेशे'। वेलयति। ङे अविवेलत्। अचि वेला। वेल़ चलने [ १।४४३ ], वेलति ॥

'३४९ कालण्'। कालयति। ङे अचकालत्। कालोपदेश इत्यर्थनिर्देश इत्येके ॥

'३५० पल्यूलण् लवनपवनयोः'। पल्यूलयति क्षेत्रं सबुसधान्यं वा। ङे अपपल्यूलत्। पल्पूल इत्येके। वल्यूल इत्यन्ये। पप्पूल इत्यपरे ॥

## अथ शान्तः ॥

'३५१ अंशण् समाघाते'। समाघातो विभाजनम्। अंशयति रिक्थम्। अलि अंशः। चन्द्रो दन्त्यान्तमाह, व्यंसयति, मयूरव्यंसकः ॥

## अथ षान्तास्त्रयः ॥

'३५२ पषण्[2] अनुपसर्गः'। पष इत्ययं धातुरनुपसर्गोऽदन्तो णिचमुत्पादयति; पषयति अपपषत्। गत्यर्थोऽयमित्येके। अनुपसर्ग इति किम्? प्रपषति। पषी बाधनस्पर्शनयोः [ १।९२६ ], पषते, पषति। पषण् बन्धने [ ९।१८७ ] पाषयति। तालव्यान्तोऽयमित्येके, केचित्तु इमं तालव्यान्तमधीत्य व्याचक्षते पश इति धातुः अर्थानिर्देशात् भ्वादिश्चुरादिश्चानुपसर्गः चुरादिरदन्तः, पशयति। अनुपसर्ग इति किम्? प्रपशति। तालव्यान्त एव वाऽदन्त इत्यन्ये, पशयति, पाशयति ॥

'३५३ गवेषण् मार्गणे'। गवेषयति। डे अजगवेषत्। अनटि गवेषणम् ॥

'३५४ मृषण् क्षान्तौ'। क्षान्तिः तितिक्षा। मृषयति, ङे अममृषत्। अनटि मृषणम्। मृषीच् तितिक्षायाम् [ ३।१४१ ], मृष्यते, मृष्यति, मृषिण् तितिक्षायाम् [ ९।४०९ ], "युजादेः०" ३।४।१८ इति वा णिचि मर्षयति, मर्षति ॥

१. अत्र तु समानलोपत्वाद् ह्रस्वो न भवति। दृश्यताम् ३३९ तमे पृष्ठे १५ तमपंक्तितः ॥
२. तुलना:-क्षी. त पृ. ३१२ ॥

## अथ सान्तास्त्रयः ॥

'३५५ रसण् आस्वादनस्नेहनयोः'। रसयति। ङे अररसत्। अलि रसः। उणादौ "स्वसिरसि०" (उ० २६९) इत्यने रसना। रस शब्दे [१।५४२], रसति। णिगि रासयति। घञि रासः॥

'३५६ वासण् उपसेवायाम्'। वासयति। ङे अववासत्। णके वासकः। "णिवेत्ति०" ५।३।१११ इत्यने वासना। वस निवासे [१।९९९], वसति। वसिक् आच्छादने [२।५९] वस्ते। वसण् स्नेहादौ [९।१९४], वासयति। ङे अवीवसत्॥

'३५७ निवासण् आच्छादने'। निवासयति। ङे अनिनिवासत्। सनि निनिवासयिषति। क्त्वि निवासयित्वा। वासण् उपसेवायाम् [९।३५६], निपूर्वस्य ङे न्यववासत्। क्त्वो यपि निवास्य॥

## अथ हान्ताः पञ्च ॥

'३५८ चहण् कल्कने'। कल्कनं दम्भः। चहयति। ङे अचचहत्। ञिणम्परे णिचि "चहणः शाठ्ये" ४।२।३१ इति वा दीर्घे अचाहि, अचहि, चाहंचाहम्, चहंचहम्। "युवर्ण०" ५।३।२८ इत्यलि विचहः। चह कल्कने [१।५५३], चहति। णिगि चाहयति। ङे अचीचहत्॥

'३५९ महण् पूजायाम्'। महयति। ङे अममहत्। "पुन्नाम्नि०" इत्याधारे घे महः उत्सवः। गौरादित्वाद् ङ्याम् मही। मह पूजायाम् [१।५६५], महति। उणादौ "महेर्णिद् वा" (उ० २८५) इति इने महिनं राज्यम्, ञ्वादेस्तु माहिनं तदेव। "श्रुदक्षि०" (उ० ३७३) इत्याय्ये "आमन्त०" ४।३।८५ इति णेरयि महयाय्यः अश्वमेधः। "मह्यविभ्यां टित्" (उ० ५४९) इतीषे महिषः, महिषी। "स्वरेभ्य०" (उ० ६०६) इति इः, महिः। "द्रुहिवृहि०" (उ० ८८४) इति कर्तरि महान्॥

'३६० रहण् त्यागे'। रहयति। ङे अररहत्। अलि विरहः। रह त्यागे [१।५५४], रहति। णिगि राहयति॥

'३६१ रहुण् गतौ'। उदित्त्वान्ने रंहयति। अदन्तत्वबलाद् "अतः" ४।३।८२ इति लुकं बाधित्वा अनुपान्त्यस्याप्यतो "ञ्णिति" ४।३।५० इति वृद्धौ "अर्तिरी०" ४।२।२१ इति पौ रंहापयति। रहु गतौ [१।५५५] रंहति॥

'३६२ स्पृहण् ईप्सायाम्'। "स्पृहेर्व्याप्यं वा" २।२।२६ इति व्याप्यस्य वा संप्रदानत्वे पुष्पेभ्यः स्पृहयति। अकर्मकत्वाद् "गत्यर्था०" ५।१।११ इति कर्तरि क्ते पुष्पेभ्यः स्पृहितो मैत्रः, पक्षे पुष्पाणि स्पृहयति। कर्मणि क्ते पुष्पाणि स्पृहितानि मैत्रेण। ङे अपस्पृहत्। "शीङ्श्रद्धा०" ५।२।३७ इत्यालौ "आमन्त०" ४।३।८५ इति णेरयि स्पृहाशीलः स्पृहयालुः। "भीपिभूषि०" ५।३।१०९ इत्यङि स्पृहा। उणादौ "श्रुदक्षि०" (उ० ३७३) इति आय्ये स्पृहयाय्यं घृतम्॥

## अथ क्षान्तः॥

'३६३ रूक्षण् पारुष्ये'। रूक्षयति। ङे अरुरूक्षत्। अचि रूक्षः। अनटि विरूक्षणम्। क्त्वो यपि विरूक्ष्य॥

## अथाऽदन्तेष्वेव कुहणिमभिव्याप्याऽऽत्मनेपदिनः, तत्र गान्तः॥

'३६४ मृगणि अन्वेषणे'। इदित्त्वाद् "इङितः०" ३।३।२२ इति आत्मनेपदे मृगयते। "मृगयेच्छा०" ५।३।१०१ इति शे निपातनाद् मृगया। क्ते मृगितम्॥

## अथ थान्तः॥

'३६५ अर्थणि उपयाचने'। अर्थयते। पूर्वाचार्यानुरोधाददन्तेष्वस्य पाठः, एवं सत्रिगर्व्योरपि। केचित्तु अदन्तपाठबलाद् अतो [४।३।८२] लुकं बाधित्वाऽनुपान्त्यस्यापि "ञ्णिति" ४।३।५० इति वृद्धौ "अर्तिरी०" ४।२।२१ इति पौ अर्थापयते, सत्रापयते, गर्वापयते इत्याहुः। ङे आर्तिथत। सनि अर्तिथयिषते। क्ते अर्थितम्। अलि अर्थः। "णिवेत्ति०" ५।३।१११ इत्यने प्रार्थना॥

## अथ दान्तः॥

'३६६ पदणि गतौ'। पदयते। ङे अपपदत्। पदिच् गतौ [३।११४], पद्यते। णिगि उपपादयति॥

## अथ मान्तः॥

'३६७ संग्रामणि युद्धे'। संग्रामयते शूरः। असंग्रामयत। सनि अपोपदेशत्वात् षत्वाभावे सिसंग्रामयिषते। अलि "पुन्नाम्नि०" ५।३।१३० इति आधारे घे वा संग्रामः। क्त्वि संग्रामयित्वा। अयं परस्मैपदीत्येके[1], संग्रामयति॥

१. क्षीरस्वामी, (क्षी. त पृ. ३२०)॥

## अथ रान्तास्त्रयः ॥

'३६८ शूर ३६९ वीरणि विक्रान्तौ'। शूरयते। ङे अशुशूरत[1]। अचि शूरः। शूरैचि स्तम्भे [ ३।१३० ], शूर्यते। णिगि ङे अशुशूरत ॥

'३६९ वीरणि'। वीरयते। ङे अविवीरत[1]। अचि वीरः। "य एच्चा०" ५।१।२८ इति भावे ये वीर्यम् ॥

'३७० सत्रणि संदानक्रियायाम्'। सन्तानक्रियायामित्येके[2]। सत्रयते शत्रून्। ङे अससत्रत[1]। सनि अपोपदेशत्वात् षत्वाभावे सिसत्रयिषते ॥

## अथ लान्तः ॥

'३७१ स्थूलणि परिबृंहणे'। परिबृंहणं पीनत्वम्। स्थूलयते। ङे अतुस्थूलत[1]। सनि अपोपदेशत्वात् षत्वाभावे तुस्थूलयिषते। अचि स्थूलः ॥

## अथ वान्तः ॥

'३७२ गर्वणि माने'। गर्वयते। ङे अजगर्वत[1]। अलि गर्वः। गर्व दर्पे [ १।४६२ ], गर्वति ॥

## अथ हान्तौ ॥

'३७३ गृहणि ग्रहणे'। गृहयते। ङे अजगृहत। "शीङ्श्रद्धा०" ५।२।३० इत्यालौ गृहयालुः। क्ते गृहितम् ॥

'३७४ कुहणि विस्मापने'। कुहयते। ङे अचुकुहत। णके [3]कुहकः। भिदाद्यङि कुहा नाम नदी। "णिवेत्ति०" ५।३।१११ इत्यने कुहना दम्भः। उणादौ "मिवमि०" (उ० ५१) इत्युके कुहुकम् आश्चर्यम्। "पृकाहृषि०" (उ० ७२९) इति क्विद् उः, कुहुः नष्टचन्द्राऽमावास्या। "नृतिशृधि०" (उ० ८४४) इति क्विद् ऊः, कुहूः सैव ॥ अवसिता अदन्ताः ॥

---

१. °त् इति मु०। अत्र आत्मनेपदी धातुः, परस्मैपदिन. रूपं तु अशुद्धम् ॥
२. 'सत्र संतानक्रियायाम्' इति क्षीरस्वामी, (क्षी. त. पृ. ३१७) ॥
३ कुहुकः इति मु० ॥

## अथ विकल्पितणिचो युजादयः ॥

'३७५ युजण् संपर्चने'। "युजादेः०" ३।४।१८ इति वा णिचि योजयति, पक्षे न्यायत्यविकरणः शव् योजति । युजिंच् समाधौ [ ३।१११ ], युज्यते । युजूंपी योगे [ ६।४ ]; युङ्क्ते, युनक्ति । [1]इह युजादीनां नियतो णिज्विकल्पः, चुरादीनां तु यथादर्शनं णिजनित्य इत्युक्तमेव ॥

## अथ ईदन्तास्त्रयः ॥

'३७६ लीण् द्रवीकरणे'। "लियो नोऽन्तः०" ४।२।१५ इति नेऽन्ते घृतं विलीनयति, पक्षे "नामिनो०" ४।३।५१ इति वृद्धौ विलाययति । "लीङ्-लिनोर्वा" ४।२।९ इति आत्वमस्याऽपीत्येके, तन्मते वाऽऽत्वे "लो लः" ४।२।१६ इति वा लेऽन्ते घृतं विलालयति; पक्षे "अर्तिरी०" ४।२।२१ इति पौ विलापयति । लीङ्लिनोऽर्चा०" ३।३।९० इत्यात्मनेपदमात्वं चास्यापि णिच्यपीत्येके, कस्त्वाम् उल्लापयते, आलापयते, अपलापयते । णिजभावे विलयति, लयति । लीङ्-च् श्लेषणे [ ३।१०५ ], लीयते । लींश् श्लेषणे [ ८।१९ ], लिनाति ॥

'३७७ मीण् मतौ'। मतिर्मननम् । गतावित्यन्ये[2] । माययति, मयति । मींङ्च् हिंसायाम् [ ३।१०३ ], मीयते । मींग्श् हिंसायाम् [ ८।५ ], मीनाति, मीनीते ॥

'३७८ प्रीगण् तर्पणे'। गित्त्वस्य णिजभावे फलवत्कर्तर्यात्मनेपदार्थत्वाद् णिचि "धूग्प्रीगोः" ४।२।१८ इति नेऽन्ते, "शेषात्०" ३।३।१०० इति परस्मैपदे प्रीणयति । क्र्यादेरेव नामच्छन्त्येके, तन्मते "नामिनो०" ४।३।५१ इति वृद्धौ प्राययति[1], पक्षे प्रयते, प्रयति । प्रींङ्च् प्रीतौ [ ३।११० ], प्रीयते । प्रींग्श् तृप्तिकान्त्योः [ ८।३ ], प्रीणीते, प्रीणाति ॥

## अथ ऊदन्तः ॥

'३७९ धूगण् कम्पने'। "धूग्प्रीगोः०" ४।२।१८ इति ने धूनयति । नं नेच्छन्त्येके धावयति[1], पक्षे गित्त्वात् फलवत्कर्तरि आत्मनेपदम् । अन्यत्र तु "शेषात्०" ३।३।१०० इति परस्मैपदम्, धवते, धवति । धूगट् कम्पने [४।६], धूनुते, धूनोति । धूत् विधूनने [ ५।११६ ], धुवति । धूग्श् कम्पने [ ८।१३ ], धुनीते, धुनाति ॥

१. तुलना.-क्षो. त. पृ. ३०५, ३०८ ॥ २. क्षीरस्वामी, (क्षो. त. पृ. ३०७) ॥

## अथ [1]ऋदन्तः ॥

'३८० वृगूण् आवरणे'। वारयति, पक्षे णिच्चात् उभयपदे वरते, वरति। वृगूट् वरणे [ ४।९ ] वृणुते, वृणोति। वृङ्श् संभक्तौ [ ८।६० ], वृणीते ॥

## अथ ॠदन्तः ॥

'३८१ जॄण् वयोहानौ'। जारयति। "णिवेत्ति०" ५।३।१११ इत्यने जारणा। पक्षे जरति। ज्रीति नन्दी, ज्राययति, ज्रयति। जॄषूच् जरसि [ ३।२ ], जीर्यते। जॄश् वयोहानौ [ ८।२९ ], जृणाति ॥

## अथ कान्तौ ॥

'३८२ चीक ३८३ शीकण् आमर्षणे'। चीकयति, चीकति ॥

'३८३ शीकिः तालव्यादिः'। शीकयति, शीकति। ङे अशीशिकत्। शीकङ् सेचने [ १।६११ ], शीकते। णिगि ङे ऋदित्त्वाद् ह्रस्वाभावे अशिशीकत् ॥

## अथ गान्तः ॥

'३८४ मार्गण् अन्वेषणे'। मार्गयति, मार्गति। अमार्गीत् ॥

## अथ चान्ताश्चत्वारः ॥

'३८५ पृचण् संपर्चने'। संपर्चयति, संपर्चति। यङि परीपृच्यते। पृचैङ्क् संपर्चने [ २।५० ], संपृक्ते। पृचैप् संपर्के [ ६।१० ], संपृणक्ति ॥

'३८६ रिचण् वियोजने च'। चकारात् संपर्चने। रेचयति, रेचति। रिचूंपी विरेचने [ ६।२ ], रिङ्क्ते, रिणक्ति ॥

'३८७ वचण् भाषणे'। संदेशने इत्येके[2]। वाचयति, वचति। "यजादि०" ४।१।७२ इत्यत्र यौजादिकस्याऽग्रहणाद् य्वृदभावे क्ये वच्यते। ङे अवीवचत्। वचंक् भाषणे [ २।३८ ], वक्ति। क्ये उच्यते ॥

'३८८ अर्चिण् पूजायाम्'। अर्चयति, पक्षे इदित्त्वादात्मनेपदे शवि अर्चते। अर्च पूजायाम् [ १।१०४ ], अर्चति ॥

---

१. ऋदन्त इति मु० ॥ २. तुलना – चन्द्रः संदेशे चुरादिमाह (क्षी त. पृ. ३१०) ॥

## अथ जान्तौ ॥

‘ ३८९ वृजैण् वर्जने ’ । वर्जयति, वर्जति । ऐदित्त्वात् क्तयोर्नेट्, अपवृक्तः, अपवृक्तवान् । घञि वर्गः । वृजैकि वर्जने [ २।५३ ], वृक्ते ॥

‘ ३९० मृजौण् शौचालङ्कारयोः ’ । “ मृजोऽस्य० ” ४।३।४२ इति वृद्धौ मार्जयति । “ णिवेत्ति० ” ५।३।१११ इत्यने मार्जना । क्ते “ सेट्क्तयोः ” ४।३।८४ इति णेर्लुकि मार्जिता रसाला, मर्जितेति रूढेः, पक्षे मार्जति । औदित्त्वाद् वेट् मार्जिता, मार्ष्टा । वेट्त्वात् क्तयोर्नेट्, मृष्टः, मृष्टवान् । मृजौक् शुद्धौ [ २।३९ ], मार्ष्टि ॥

## अथ ठान्तः ॥

‘ ३९१ कठुण् शोके ’ । उदित्त्वान्ने कण्ठयति, उत्कण्ठति । कठुङ् शोके [ १।६७८ ], कण्ठते, उत्कण्ठते ॥

## अथ थान्ताश्चत्वारः ॥

‘ ३९२ श्रन्थ ३९३ ग्रन्थण् सन्दर्भे ’ । सन्दर्भो बन्धनम् । श्रन्थयति, श्रन्थति । ग्रन्थयति, ग्रन्थति । श्रथुङ् शैथिल्ये [ १।७१७ ], श्रन्थते । ग्रथुङ् कौटिल्ये [ १।७१८ ], ग्रन्थते । श्रन्थश् मोचनप्रतिहर्षयोः [ ८।३९ ], श्रथ्नाति । ग्रंथश् सन्दर्भे [ ८।४१ ], ग्रथ्नाति ॥

‘ ३९४ क्रथ ३९५ अर्दिण् हिंसायाम् ’ । क्राथयति, चौरस्य उत्क्राथयति । क्रथति । क्रथ हिंसार्थः [ १।१०४५ ], णिगि घटादित्वाद् ह्रस्वे चौरम् उत्क्रथयति ॥

## अथ लाघवार्थं थान्तमध्ये एव अर्थानुगुण्येन दान्तः ॥

‘ ३९५ अर्दिण् ’ । इदित्त्वाद् अस्य णिजभावे आत्मनेपदे न सार्थकत्वाद् णिचि “ शेषात्० ” ३।३।१०० इति परस्मैपदे अर्दयति । अर्दते । परस्मैपद्ययम् इत्येके, अर्दति । अर्द गतियाचनयोः [ १।३०१ ], अर्दति ॥

'३९६ श्रथण् बन्धने च'। चकाराद् हिंसायाम्। मोक्षणे इत्येके। श्राथयति, श्रथति। अयं श्रन्थण् हिंसार्थः इत्यन्ये, श्रन्थयति, श्रन्थति ॥

## अथ दान्ताश्चत्वारः ॥

'३९७ वदिण् भाषणे'। सन्देशने इत्यन्ये। वादयति, संवादयति। पक्षे इदित्त्वादात्मनेपदे वदते। क्ये वद्यते। वद व्यक्तायां वाचि [ १।९९८ ], वदति। यजादित्वाद् य्वृति उद्यते ॥

'३९८ छदण् अपवारणे'। छादयति, छदति। छदण् संवरणे [ ९।८८ ], ऊर्जने घटादित्वाद् ह्रस्वे छदयति ॥

'३९९ आङः सदण् गतौ'। आङः परः सद इत्ययं धातुः गतावर्थे युजादिः, आसादयति, आसीदति। आसदति इत्येके। अनुस्वारेत्वान्नेट् इत्यन्ये, आसत्ता, आसात्सीत्। आङोऽन्यत्र सीदति, गतेरन्यत्र सीदति। षद्लृं विशरणादौ [ १।९६६ ], असदत् ॥

'४०० छृदण् सन्दीपने'। छर्दयति, छर्दति। "कृतचृत०" ४।४।५० इत्यत्र तृदसाहचर्येण रुधादेरेव ग्रहणात् सादाविड्विकल्पाभावे छर्दिष्यति। ऐदिदयमित्येके। "डीयश्वि०" ४।४।६१ इति क्तयोर्नेट् छृण्णः, छृण्णवान्। ऊछृदृपी दीप्तिदेवनयोः [ ६।८ ], छृन्त्ते, छृणत्ति ॥

## अथ धान्तः ॥

'४०१ शुन्धिण् शुद्धौ'। शुन्धयति, शुन्धते। अनिदिदित्येके, शुन्धति। क्ते शुन्धितम्। शुधंच् शौचे [ ३।४० ], शुध्यति ॥

## अथ नान्तौ ॥

'४०२ तनूण् श्रद्धाघाते'। श्रद्धोपकरणयोः इत्यन्ये। तानयति, तनति। क्त्वि ऊदित्त्वाद् वेट्, तान्त्वा, तनित्वा। वेट्त्वात् क्तयोर्नेट्, नितान्तः, नितान्तवान्। "तन्व्यधि०" ५।१।६४ इति णे तानः श्रद्धाहीनो जनः। तनूयि विस्तारे

[ ७।१ ], तनुते, तनोति । क्ते ततः । "उपसर्गाद् दैर्घ्ये" उपसर्गपूर्वः तनू दैर्घ्येऽर्थे युजादिः, आतानयति, वितानयति, प्रतानयति; आतनति, वितनति, प्रतनति । अन्यत्र तनोति । चन श्रद्धोपहिंसनयोः इति चान्द्रं पारायणम् ॥

'४०३ मानण् पूजायाम्' । मानयति, मानति । अयं मनणू इत्येके, मानयति, मनति । मानि पूजायाम् [ १।७४९ ], मीमांसते ॥

## अथ पान्तास्त्रयः ॥

'४०४ तपिण् दाहे' । तापयति, पक्षे इदित्त्वाद् आत्मनेपदे तपते । तपं सन्तापे [ १।३३३], तपति । तपिंच् ऐश्वर्ये वा [ ३।१२४ ], तप्यते ॥

'४०५ तृपण् प्रीणने'। सन्दीपने इत्येके । तर्पयति, तर्पति । क्ते तृपितम् । अयं चृतण् दृपण् सन्दीपने इत्येके, चर्तयति, चर्तति; दर्पयति, दर्पति । दृपौच् हर्षमोहनयोः [ ३।४७ ], दृप्यति । तृपौच् प्रीतौ [ ३।४६ ], तृप्यति । तृपट् प्रीणने [ ४।२३ ], तृप्नोति ॥

'४०६ आप्लृण् लम्भने' । लम्भनं प्राप्तिः । आपयति, आपति । लृदित्त्वादङि आपत् । क्ते आपितम् । "वाऽऽप्नोः" ४।३।८७ इति यपि णेर्वाय् अस्यापीत्येके, प्रापय्य प्राप्य वा गतः । आप्लृंट् व्याप्तौ [ ४।२२ ], आप्नोति ॥

## अथ भान्तः ॥

'४०७ दृभैण् भये' । दर्भयति, दर्भति । ऐदित्त्वात् क्तयोर्नेट्, दृब्धः, दृब्धवान् । दृभैत् ग्रन्थे [ ५।७५ ], दृभति ॥

## अथ रान्तः ॥

'४०८ ईरण् क्षेपे' । गतावित्येके । क्षेपः प्रेरणम् । ईरयति, ईरति । ईरिक् गतिकम्पनयोः [ २।५७ ], ईर्ते ॥

## अथ षान्ताश्चत्वारः ॥

'४०९ मृषिण् तितिक्षायाम्' । मर्षयति, पक्षे इदित्त्वादात्मनेपदे मर्षते । मृषू सहने च [ १।५२८ ], मर्षति । मृषीच् तितिक्षायाम् [ ३।१४१ ], मृष्यते, मृष्यति । मृषण् क्षान्तौ [ ९।३५४ ], अदन्तः, मृषयति । णिचोऽनित्यत्वात्

मृपति, अदन्तत्वाद् न गुणः। अर्चि-अर्दि-शुन्धि-तपि-वदि-मृपयः षडपि परस्मैपदिन इति भीमसेनीयाः ॥

'४१० शिषण् असर्वोपयोगे'। असर्वोपयोगः अनुपयुक्तत्वम्, शेषयति, शेषति। शिष्लृंप् विशेषणे [ ६।२० ], शिनष्टि। विपूर्वोऽतिशये, अतिशय उत्कर्षः, विपूर्वः शिषिः अतिशये युजादिः, विशेषयति, विशेषति। क्ये [1]विशेष्यते। सिचि व्यशेषीत्। शिष्लृंप् विशेषणे [ ६।२० ], विशिनष्टि, व्यशिषत् ॥

'४११ जुषण् परितर्कणे'। परितर्पण इत्येके। जोषयति, जोषति। जुषैति प्रीतिसेवनयोः [ ५।१५८ ], जुषते ॥

'४१२ धृषण् प्रसहने'। प्रसहनम् अभिभवः। धर्षयति, धर्षति। "ऋदुपान्त्याद्०" ५।१।४१ इति क्यपि प्रधृष्यम्। आदिदयमित्येके, तन्मते "नवा भावाऽऽरम्भे" ४।४।७२ इति क्तयोर्वा नेट्, प्रधृष्टमनेन। "न डीङ्०" ४।३।२७ इति किद्भावाभावे प्रधर्षितमनेन, प्रधृष्टः, प्रधृष्टवान्, प्रधर्षितः, प्रधर्षितवान्। ञिधृषाट् प्रागल्भ्ये [ ४।२७ ], धृष्णोति ॥

## अथ सान्तः ॥

'४१३ हिसुण् हिंसायाम्'। उदित्त्वान्ने हिंसयति, हिंसति। हिसुप् हिंसायाम् [ ६।२२ ], हिनस्ति ॥

## अथ हान्तौ ॥

'४१४ गर्हण् विनिन्दने'। गर्हयति, गर्हति। गर्हि कुत्सने [ १।८६० ], गर्हते ॥

'४१५ षहण् मर्षणे'। "षः सो०" २।३।९८ इति सत्वे साहयति।

'सहति कलभेभ्यः परिभवम्' ( सुभाषित० ६३१)। षहि मर्षणे [१।९९०], सहते ॥

१. विशि इति मु० पा० ॥

बहुलमेतन्निदर्शनम्, यदेतद् भ्वत्यादिधातुपरिगणनं तद्बाहुल्येन निदर्शनत्वेन ज्ञेयम् । तेनाऽत्रापठिता अपि क्लविप्रभृतयो लौकिकाः, स्तम्भूप्रभृतयः सौत्राः, चुलुम्पादयश्च वाक्यकरणीया धातव उदाहार्याः । वर्धते हि धातुगणः, यल्लक्ष्यम् ॥

मिलन्त्याशासु जीमूता, विक्लवन्ते दिवि ग्रहाः ।
उपक्षपयति प्रावृट्, क्षीयन्ते कामिविग्रहाः ॥

इत्यादि ।

मुसलक्षेपहुङ्कार स्तोभैः कलमखण्डिनि ।
कुचविष्कम्भमुत्तभ्नन्निस्कुभ्नातीव ते स्मरः ॥

[1]नीपानन्दोलयन्नेष, प्रेङ्खोलयति मे मनः ।
पवनो विजयन्नाशा, ममाशामुच्चुलुम्पति ॥

तावत् खरः प्रखरमुल्ललयांचकार ॥
( शिशुपाल० ५।७ )

यद्वा भ्वादिगणाद्येकोक्ताः स्वार्थणिजन्ता अपि बहुलं भवन्ति । चुरादि-पाठस्तु निदर्शनार्थः, यदाहुः —

निवृत्तप्रेषणाद्धातोः, प्राकृतेर्थे णिजिष्यते[2] ॥

लक्ष्यम् :–

'रामो राज्यमकारयद्' [ रामा० यु० १२८।१०५ ] । अकरोदित्यर्थः । रञ्जयति वस्त्रम्, रजति इत्यर्थः । भेदयति कुल्यान्, भिनत्ति इत्यर्थः । तापयति, वाचयति, वाहयति, घातयति; तपति, वक्ति, वहति, हन्तीत्यर्थः । यद्वा प्रयोज्यव्यापारेऽपि प्रयोक्तृव्यापाराऽनुप्रवेशो णिगं विनाऽपि बुद्ध्याऽऽरोपाद् बहुलं भवति ॥

'[3]जजान गर्भं मघवा' । इन्द्रः अजीजनत् इत्यर्थः । 'एकं द्वादशधा जज्ञे' । जनितम् इत्यर्थः । षड्भिर्हलैः कृषति, कर्षयतीत्यर्थः ॥

---

१. नयन्नान्दो° इति क्षी. त. पृ. ३२२ ॥
२. विशेषार्थिना द्र० बृहद्वृत्तिः ३।३।८८ ॥
३. जजान गर्भमहिमानमिन्द्रः ( अथर्व० ३।१०।१२ ) इति क्षीरतरङ्गिण्याम् [पृ. ३२२]॥

वान्ति पर्णशुषो वाता, वान्ति पर्णमुचोऽपरे ।
वान्ति पर्णरुहोऽप्यन्ये, ततो देवः प्रवर्षति[1] ॥

॥ इति ॥

अथवा नाम्नो "णिज् बहुलम्०" ३।४।४२ इत्येव सिद्धेः तत्र सूत्रच्छिद्रान्ध-दण्डादयः उदाहरणार्थाः, तेनाऽदन्तेषु अनुक्ता अपि बहुलं द्रष्टव्याः। तेन स्कन्ध समाहारे, ऊप छुरणे, स्फुट प्रकटभावे, वस निवासे इत्यादयोऽपि भवन्ति। तथा ओजयति ओजः ॥

'तडितखचयतीवाशाः' । [2]'पांसुर्दिशां मुखमतुत्थयदुत्थितोद्रेः'।

[ शिशुपालवध, ५।२ ] इति ॥

इत्याचार्य श्रीहेमचन्द्रविरचिते स्वोपज्ञधातुपारायणे
स्वार्थे णिजन्तो णिच्चुरादिगणः संपूर्णः ॥

समर्थितं चेदं धातुपारायणमिति ॥



---

१ वान्ति पर्णशुषो वातास्ततः पर्णमुचोऽपरे। ततः पर्णरुह. पश्चात् ततो देवः प्रवर्धते ॥ उणादिविवरण, २० ॥

२. पांसु० इति क्षी. त. पृ. ३२३ ॥

# प्रथमं परिशिष्टम्

## [1]कण्ड्वादिधातवः ॥

१ कन्डूञ् गात्रविनामे कण्डूयति । २ महीङ् वृद्ध्यर्चयोः महीयते । ३ हृणीङ् रोपे हृणीयते । ४ मन्तु रोपे वैमनस्ये च मन्तूयति । ५ असु मानसोपतापे असूयति । वल्गु माधुर्यपूजयोः वल्गूयति । ७–८–९–१० वेङ् लाङ् वेट् लाट् धौर्त्ये अस्वप्ने पूर्वभावे च वेयते, लायते, वेट्यति, लाट्यति । ११ लिट् अल्पार्थकुत्सयोः लिट्यति । १२ लोट् दीप्तौ लोट्यति । १३–१४ इरज इरस ईर्ष्यायाम् इरज्यति इरस्यति । १५ भिष्णज् उपसेवायाम् भिष्णज्यति । १६ भिषज् चिकित्सायाम् भिषज्यति । १७ उरस ऐश्वर्ये उरस्यति । १८ नन्द समृद्धौ नन्द्यति । १९ कुषुभ क्षेपे कुषुभ्यति । २० संभूयस प्रभूतार्थे संभूयस्यति । २१–२२ इयस इसस ईर्ष्यायाम् इयस्यति, इसस्यति । २३ पुष्य सन्तोषे पुष्यति । २४ उपस प्रभातार्थे उपस्यति । २५ रेषा चित्रे रेषायति । २६ पयस् प्रसवे पयस्यति । २७ वेला समयार्थे वेलायति । २८ चरण गतौ चरण्यति । २९ अगद औषधे अगद्यति । ३०–३१ तिरस तरण प्रसिद्धौ तिरस्यति, तरण्यति । ३२ दुवस परितापपरिचरणयोः दुवस्यति । ३३ कुसुभ क्षेपे कुसुभ्यति । ३४–३५–३६ एला केला खेला विलासार्थे एलायति केलायति खेलायति । ३७ मेधा आशुग्रहणे मेधायति । ३८ मगध परिवेष्टने मगध्यति । ३९ समर युद्धे समर्यति । ४० सुख सुखीभवने सुख्यति । ४१ दुःख दुखीभवने दुःख्यति । ४२–४३ भुरण पुरण गतौ भुरण्यति पुरण्यति । ४४ भरण धारण-पोषण-युद्धेषु भरण्यति । ४५ चुरण चौर्यचेतनयोः चुरण्यति । ४६ इषध शरधारणे इषध्यति । ४७–४८ तन्तस पम्पस दुःखार्थौ तन्तस्यति, पम्पस्यति । ४९ गद्गद वाक्यस्खलने गद्गद्यते । ५० तुरण त्वरायाम् तुरण्यति । ५१ सपर पूजायाम् सपर्यति ॥

---

१. इह धातुपारायणे ये कण्ड्वादि धातवः न संगृहिता, ते ग्रन्थान्तरेभ्य उद्धृत्य अत्र प्रदर्श्यन्ते ॥

# द्वितीयं परिशिष्टम्

## सौत्रा धातवः ॥[1]

'१ स्तम्भू स्तम्भे'। स्तभ्नाति, स्तभ्नोति। ("स्तम्भू०" ३।४।७८ सूत्रे दर्शितः)॥

'२ तन्द्रा आलस्ये'। तन्द्राति। ("शीङ्श्रद्धा०" ५।२।३७ सूत्रे दर्शितः)॥

'३ कि ज्ञाने'। कयति। ("जनिपणि०" उ० १४० सूत्रे दर्शितः)॥

'४ पति पतने'। पतयति। ("शीङ्श्रद्धा०" ५।२।३७ सूत्रे दर्शितः)॥

'५ गृही ग्रहणे'। गृहयति। ("शीङ्श्रद्धा०" ५।२।३७ सूत्रे दर्शितः)॥

'६ चिरिटू हिंसायाम्'। चिरिणोति। ("चिरेरिटो भू च" उ० १४९ सूत्रे दर्शितः)॥

'७ जुं वेगे'। जवति। ("जनिपणि०" उ० १४० सूत्रे दर्शितः)॥

'८ क्रुङ् गतौ'। क्रवते॥

'९ भूङ् प्राप्तौ'। भावयते, भवते। ("भूङः प्राप्तौ णिङ्" ३।४।१९ सूत्रे दर्शितः)॥

'१० तर्क विचारे'। तर्कति॥

'११ कक १२ कर्क हासे'। कर्कति। ("कर्केरारुः" उ० ८१३ सूत्रे दर्शितः)॥

'१३ सिक सेवने'। सेकति॥ ("पृपिरञ्जिसिकि०" उ० २०८ सूत्रे दर्शितः)॥

'१४ मर्क संप्रच्छने'। मर्कति। ("दिव्यविश्रू०" उ० १४२ सूत्रे दर्शितः)॥

'१५ चक्कि भ्रमणे'। चङ्कते। ("वाश्यसि०" उ० ४२३ सूत्रे दर्शितः)॥

'१६ मकि गतौ'। मकते। ("ककिमकि०" उ० २४५ सूत्रे दर्शितः)॥

'१७ रिखि लिखेस्तुल्यार्थे'। रेखति॥

'१८ कगे मिथःसंप्रहारे'। कगति। ('कगेवनू०" ४।२।२५ सूत्रे दर्शितः)॥

'१९ अर्घ मूल्ये'। अर्घति॥

'२० मर्चणू शब्दे'। मर्चयति ("भीणू-शलि०" उ० २१ सूत्रे दर्शितः)॥

---

१. इह धातुपारायणे ये सौत्रा धातवः न संङ्गृहिताः ते ग्रन्थान्तरेभ्य उद्धृत्य अत्र प्रदर्श्यन्ते॥

'२१ मञ्ज सौन्दर्ये च'। चकारात् शब्दे, मञ्जति। ("ऋच्छिचटि०" उ० ३९७ सूत्रे दर्शितः) ॥

'२२ पञ्ज रोधे'। पञ्जति। ("ऋच्छिचटि०" उ० ३९७ सूत्रे दर्शितः) ॥

'२३ कञ्ज शब्दे'। कञ्जति। ("अग्यङि०" उ० ४०५ सूत्रे दर्शितः) ॥

'२४ रण्ट प्राणहरणे'। रण्टति। ("कोरुरुण्टिरण्टिभ्यः" उ० २८ सूत्रे दर्शितः) ॥

'२५ घट्ट शब्दे'। घण्टति ॥

'२६ मट ह्रासे'। मटति। ("कृपृकटि०" उ० ५८९ सूत्रे दर्शितः) ॥

'२७ कुठ छेदने'। कोठति। ("तुपिकुठिभ्यां कित्" उ० ४०७ सूत्रे दर्शितः) ॥

'२८ क्रुड शब्दे'। क्रोडति ॥

'२९ उड संघाते'। ओडति। ("उडेरुपक्" उ० ३११ सूत्रे दर्शितः) ॥

'३० वड आग्रहणे'। वडति ("कृशृ०" उ० ३२९ सूत्रे दर्शितः) ॥

'३१ णडण् भ्रंशे'। नडति। ("नडेर्णित्" उ० ७१२ सूत्रे दर्शितः) ॥

'३२ क्रिणत् शब्दगत्योः'। क्रिणति। ("निघृषी०" उ० ५११ सूत्रे दर्शितः) ॥

'३३ कुत गुम्फप्रीत्योः'। कोतति। ("भुजिकुति०" उ० ३०५ सूत्रे दर्शितः) ॥

'३४ पुत गतौ'। पोतति। ("कुतिपुति०" उ० ७६ सूत्रे दर्शितः) ॥

'३५ लत आदाने'। लतति। ("कुतिपुति०" उ० ७६ सूत्रे दर्शितः) ॥

'३६ सात सुखे'। सातति। ("साहिसाति०" ५।१।५९ सूत्रे दर्शितः) ॥

'३७ कथ वाक्यप्रबन्धे' ॥

'३८ उद आघाते'। ओदति। ("कुटिकुलि०" उ०१२३ सूत्रे दर्शितः) ॥

'३९ क्षुद हिंसासंवरणयोः'। क्षुदति। ("हुयामा०" उ० ४५१ सूत्रे दर्शितः) ॥

'४० सुन्द हिंसासौन्दर्ययोः'। सुन्दति। ("ऋच्छिचटि०" उ० ३९७ सूत्रे दर्शितः) ॥

'४१ कदि वैक्लव्यछेदनयोः'। कदते। ("कदेर्णिद् वा" उ० ३२२ सूत्रे दर्शितः) ॥

'४२ मिधृग् मेधाहिंसासंगमेषु'। मेधति, मेधते ॥

'४३ धनरु धान्ये'। दधन्ति। ("भृमृ०" उ० ७१६ सूत्रे दर्शितः) ॥

'४४ रिप कुत्सायाम्'। रेपति ॥

'४५ कप कम्पने'। कम्पति। ("कटिपटि०" उ० ४९३ सूत्रे दर्शितः) ॥

'४६ क्षुप ह्रासे'। क्षोपति ॥

'४७ टुप संरम्भे'। टोपति ॥

'४८ विम्च दीप्तौ'। विम्चति ॥

'४९ रिभि ५० स्तुम्भू ५१ स्कम्भू स्तम्भे। विरेभते, स्तुभ्नाति, स्तुभ्नोति, विष्कभ्नाति, विस्कभ्नोति ॥

'५२ स्कुम्भू विसारणे च'। विष्कभ्नाति, विस्कभ्नोति। ("स्तम्भू०" ३।४।७८ सूत्रे दर्शितः) ॥

'५३ दभ वञ्चने। दभति ॥

'५४ डिम हिंसायाम्'। डेमति। ("डिमेः कित्" उ० ३५६ सूत्रे दर्शितः) ॥

'५५ धम शब्दे'। धमति। ("सदिवृति०" उ० ६८० सूत्रे दर्शितः) ॥

'५६ पीय पाने'। पीयति। ("खलिफलि०" उ० ५६० सूत्रे दर्शितः) ॥

'५७ उर गतौ'। ओरति। ("उरेरशक्" उ० ५३१ सूत्रे दर्शितः) ॥

'५८ तुर त्वरणे'। तोरति ॥

'५९ तन्द्रि सादमोहयोः। तन्द्रते। ("तॄस्तॄ०" उ० ७११ सूत्रे दर्शितः) ॥

'६० चुल परिवेष्टने' ॥

'६१ उल दाहे'। ("उलेः०" उ० ८२८ सूत्रे दर्शितः) ॥

'६२ लुल कम्पने'। लुल्यते। ("कुलिलुलि०" उ० ३७२ सूत्रे दर्शितः) ॥

'६३ सल्ल गतौ'। ("दॄकॄ०" उ० २७ सूत्रे दर्शितः) ॥

'६४ ह्वल्ल घूर्णने' ॥

'६५ भिलण् भेदे'। भेलयति। ("विलिभिलि०" उ० ३४० सूत्रे दर्शितः ॥

'६६ धन्व ६७ तव गतौ'। धन्वति। तवति। ("उक्षितक्षि०" उ० ९०० सूत्रे "तवे र्वा" उ० ५५० सूत्रे च दर्शितौ) ॥

'६८ पशी ६९ स्पशी बाधनग्रथनयोश्च' । "स्मृदृ०" ४।१।६५ सूत्रे दर्शितः) ॥

'७० ऋशत् गतिस्तुत्योः' । ऋशति । ("ऋशिजनि०" उ०३६१ सूत्रे दर्शितः) ॥

'७१ भिष भये' । भेषति । ("भिषेः०" उ० १३१ सूत्रे दर्शितः) ॥

'७२ युषी सेवने' । योषति । (युष्यसि०" उ० ८९९ सूत्रे दर्शितः) ॥

'७३ लुस हिंसायाम्' । लोसति । ("ऋपिवृपि०" उ० ३३१ सूत्रे दर्शितः) ॥

'७४ पसी गतिबन्धननिवासेषु' । पसते । ("मृशीपसि०" उ० ३६० सूत्रे दर्शितः) ॥

'७५ भसक् भर्त्सनदीप्त्योः' । बभस्ति । ("हुयामा०" उ० ४५१ सूत्रे दर्शितः) ॥

'७६ लुहं हिंसामोहयोः' । लोहति ॥

'७७ रिहं हिंसाकत्थनादौ' ॥

'७८ चुक्ष शौचे' । चुक्षति ॥

'७९ चिक्षि विद्योपादाने' । चिक्षते ॥



# तृतीयं परिशिष्टम्

[1] लौकिक–वाक्यकरणीय–आगमिका धातवः ॥

## लौकिका धातवः ॥

‘१ वलवि वैक्लव्ये’ ॥

‘२ वीजण् व्यजने’ । [‘राजहंसैरवीज्यत’ इति प्रयोगानुसारेण] ॥

‘३ हीलण् निन्दायाम्’ ॥

‘४ आन्दोलण् ५ हिन्दोलण् ६ प्रह्लोलण् दोलने’। [‘चलितं कंपितं धूतं वेल्लितान्दोलितेऽपि’ इति अभिधान चि० ६।११७ प्रयोगानुसारेण] ॥

‘७ रुषण् रूक्षणव्याप्त्योः।’ [‘करीव सोन्तर्गिरि रेणु रुषितः’ इति प्रयोगानुसारेण] ॥

## वाक्यकरणीयाः धातवः ॥

‘१ चुलुम्प छेदने’। चुलुम्पति ॥

‘२ कुच उद्भेदने’। कुचति ॥ [‘कुञ्चिकायां तु कूचिका’]

‘३ घटण् बन्धने’। निर्घाटयति ॥

‘४ अवधीरण् अवज्ञायाम्’। [“तन्न धर्ममवधीरय धीर]

‘५ उद्घुषत् ६ उल्लकसत् उच्छ्वसने। उद्घुषति, उच्छ्वसति। [रोमोद्गम उद्घुषणमुल्लकसनमित्यपि अ. चि. २।२२०] ॥

## आगमिका धातवः ॥

‘१ दङ्घ आच्छादने’।

‘२ विकुर्व विक्रियायाम्’।

‘३ कुर्व करणे’।

‘४ उषण् निवासे’।

‘५ युहं उद्धरणे’।

---

१ इह धातुपारायणे ये लौकिकाः वाक्यकरणीया आगमिकाश्च धातवो न संगृहिता ते ग्रन्थान्तरेभ्य उद्धृत्य अत्र प्रदर्श्यन्ते ॥

# चतुर्थं परिशिष्टम्

## [1]धातुसूचिः

अकारादिक्रमेणात्र धातुपाठः प्रदर्श्यते ।
सूचकाङ्कं गणस्याद्यं द्वितीयं धातुसूचकम् ॥

| धातु | गण | धातुक्रमांक | धातु | गण | धातुक्रमांक |
|---|---|---|---|---|---|
| | अ | | अञ्ज् | ६ | १६ |
| | | | अञ्ज् | ९ | २०६ |
| अंश | ९ | ३५१ | अट् | १ | १९४ |
| अंह् | १ | ८५८ | अट्ट् | १ | ६७४ |
| अंह् | ९ | २३४ | अट्ट् | ९ | ३७ |
| अक् | १ | १०२० | अठ | १ | २२७ |
| अक्ष् | १ | ५७० | अड | १ | २५३ |
| अग् | १ | १०२२ | अड्ड् | १ | २५७ |
| अघ | ९ | २८६ | अण् | १ | २५९ |
| अङ्क् | १ | ६१० | अण्ठ | १ | ६८१ |
| अङ्क् | ९ | २८१ | अत् | १ | २७९ |
| अङ्ग् | १ | ८३ | अद् | २ | १ |
| अङ्ग् | ९ | २८३ | अन् | २ | ३१ |
| अङ्घ् | १ | ६३९ | अन् | ३ | १२१ |
| अज् | १ | १३९ | अन्त | १ | २८५ |
| अञ्च् | १ | १०५ | अन्द् | १ | ३०८ |
| अञ्च् | १ | ८९० | अन्ध् | ९ | ३१८ |
| अञ्च | ९ | १६३ | | | |

१ अत्र सूचौ निरनुबन्धाः धातवः दर्शिताः, यत्र उदित् धातुस्तत्र स्वरात् नोऽन्तः कृत्वा दर्शितः। यथा धातुपाठे प्रोक्तः 'अहुड् गतौ' अत्र अंह १, ८५८ इति दर्शितः॥

| धातु | गण | धातुक्रमांक |
|---|---|---|
| अभ्र् | १ | ४०७ |
| अम् | १ | ३९१ |
| अम् | १ | ३९२ |
| अम | ९ | १८१ |
| अम्ब् | १ | ७६४ |
| अम्भ् | १ | ७७६ |
| अय् | १ | ७९० |
| अर्क् | ९ | ११ |
| अर्च् | १ | १०४ |
| अर्च | ९ | ३८८ |
| अर्ज् | १ | १४२ |
| अर्ज् | ९ | १६५ |
| अर्थ् | ९ | ३६५ |
| अर्द् | १ | ३०१ |
| अर्द् | ९ | ३९५ |
| अर्ब् | १ | ३५४ |
| अर्व् | १ | ४७६ |
| अर्ह् | १ | ५६४ |
| अर्ह् | ९ | १९८ |
| अल् | १ | ९११ |
| अव् | १ | ४८९ |
| अश् | ४ | २९ |
| अश् | ८ | ५१ |
| अष् | १ | ९३१ |
| अस् | १ | ९३२ |
| अस् | २ | ४४ |
| अस् | ३ | ७८ |

## आ

| धातु | गण | धातुक्रमांक |
|---|---|---|
| आञ्छ् | १ | १२३ |
| आप् | ४ | २२ |
| आप | ९ | ४०४ |
| आस् | २ | ६१ |

## इ

| धातु | गण | धातुक्रमांक |
|---|---|---|
| इ | १ | ११ |
| इ | २ | १६ |
| इ | २ | १७ |
| इ | २ | ४६ |
| इख् | १ | ७४ |
| इङ्ख् | १ | ७५ |
| इङ्ग् | १ | ८७ |
| इञ्ज् | १ | ६६२ |
| इद् | १ | १९६ |
| इन्द् | १ | ३०९ |
| इन्ध् | ६ | २६ |
| इन्व् | १ | ४८८ |
| इल् | ५ | ८७ |
| इल् | ९ | १३३ |
| इष् | ३ | २५ |
| इष् | ५ | १०५ |
| इष् | ८ | ५२ |

## ई

| धातु | गण | धातुक्रमांक |
|---|---|---|
| ई | ३ | १०९ |
| ईक्ष् | १ | ८८२ |
| ईङ्ख् | १ | ७६ |

| धातु | गण | धातुक्रमांक |
| --- | --- | --- |
| ईज् | १ | ६६३ |
| ईड् | २ | ५६ |
| ईड् | ९ | ६९ |
| ईर् | २ | ५७ |
| ईर् | ९ | ४०८ |
| ईर्क्ष्य् | १ | ४०१ |
| ईर्ष्य् | १ | ४०२ |
| ईश् | २ | ५८ |
| ईष् | १ | ५०५ |
| ईष् | १ | ८३३ |
| ईह | १ | ८५७ |
| **उ** | | |
| उ | १ | ५८९ |
| उक्ष् | १ | ५६६ |
| उख् | १ | ६३ |
| उङ्ग् | १ | ८८ |
| उच् | ३ | ३३ |
| उञ्छ् | ५ | ३० |
| उञ्छ् | ५ | ३२ |
| उज्झ | ५ | ४१ |
| उठ् | १ | २१८ |
| उन्द् | ६ | १९ |
| उब्ज् | ५ | ३४ |
| उभ् | ५ | ७१ |
| उम्भ् | ५ | ७२ |
| उष् | १ | ५२९ |
| उह् | १ | ५६१ |
| **ऊ** | | |
| ऊन् | ९ | ३२२ |
| ऊय् | १ | ८०० |
| ऊर्ज् | ९ | १५ |
| ऊर्णु | २ | ६५ |
| ऊर्द् | १ | ७३२ |
| ऊर्व् | १ | ४७० |
| ऊष् | १ | ५०४ |
| ऊह् | १ | ८७० |
| **ऋ** | | |
| ऋ | १ | २६ |
| ऋ | २ | ७७ |
| ऋच् | ५ | २६ |
| ऋच्छ् | ५ | २८ |
| ऋज् | १ | ६६४ |
| ऋञ्ज | १ | ६६५ |
| ऋण् | ७ | ५ |
| ऋत् | १ | २८७ |
| ऋध् | ३ | ४३ |
| ऋध् | ४ | २१ |
| ऋफ् | ५ | ६५ |
| ऋम्फ् | ५ | ६६ |
| ऋष् | ५ | १०४ |
| **ॠ** | | |
| ॠ | ८ | ३२ |

| धातु | गण | धातुक्रमांक |
|---|---|---|
| | **ए** | |
| एज् | १ | १४८ |
| एज् | १ | ६९१ |
| एठ् | १ | ६७९ |
| एध् | १ | ७४१ |
| एष् | १ | ८३८ |
| | **ओ** | |
| ओख् | १ | ५५ |
| ओण् | १ | २७३ |
| ओलण्ड् | १० | ५७ |
| | **क** | |
| कँस् | २ | ६२ |
| केत् | १० | २२१ |
| कक् | १ | ६१८ |
| कक्ख् | १ | ६२ |
| कख् | १ | १०२९ |
| कड्ड् | १ | ६२२ |
| कच् | १ | ६४१ |
| कञ्च् | १ | ६५० |
| कट् | १ | १७४ |
| कट् | १ | १९८ |
| कठ् | १ | २०० |
| कड् | १ | २१६ |
| कड् | ६ | ४५ |
| कड्ड् | १ | २५६ |
| कण् | १ | २७० |
| कण् | १ | १०३८ |
| कण् | १० | १७० |
| कण्ट् | १ | १९१ |
| कण्ठ् | १ | ६७८ |
| कण्ठ् | १० | ३११ |
| कण्ड् | १ | २५५ |
| कण्ड् | १ | ६८७ |
| कण्ड् | १० | ६२ |
| कत्थ् | १ | ७११ |
| कत्र् | १० | ३३७ |
| कथ् | १० | ३१४ |
| कन् | १ | ३१५ |
| कन्द् | १ | १००६ |
| कब् | १ | ७६७ |
| कम् | १ | ७८१ |
| कम्प् | १ | ७५७ |
| कर्ज् | १ | १४४ |
| कर्ण् | १० | ३०६ |
| कर्द् | १ | ३०६ |
| कर्ब् | १ | ३५५ |
| कर्व् | १ | ४६० |
| कल् | १ | ८१४ |
| कल् | १० | ३२१ |
| कल्ल् | १० | ३४६ |
| कल्ल् | १ | ८१५ |
| कश् | १ | ४९० |
| कष् | १ | ५०७ |
| कस् | १ | ९८७ |
| कंस् | २ | ६२ |

| धातु | गण | धातुक्रमांक | धातु | गण | धातुक्रमांक |
|---|---|---|---|---|---|
| काङ्क्ष् | १ | ५८० | कुड् | ५ | १३० |
| कामय् | १ | ७८९ | कुण् | ५ | ५२ |
| काल् | ९ | ३४९ | कुण् | ९ | ३०९ |
| काश् | १ | ८३० | कुण्द् | १ | २०१ |
| काश् | ३ | १३५ | कुण्ठ् | १ | २२४ |
| कास् | १ | ८४५ | कुण्ड् | १ | ६९० |
| किट् | १ | १७७ | कुण्ड् | ९ | ६३ |
| किट् | १ | १९७ | कुत्स् | ९ | २४८ |
| कित् | १ | २८६ | कुथ् | ३ | १० |
| किल् | ५ | ८६ | कुन्थ् | १ | २८८ |
| किल् | ९ | १३० | कुन्थ् | ८ | ४२ |
| किष्क् | ९ | २५१ | कुन्द्र् | ९ | ११७ |
| कीट् | ९ | ४६ | कुप् | ३ | ४८ |
| कील् | १ | ४२२ | कुप् | ९ | २३३ |
| कु | १ | ५९० | कुमार् | ९ | ३४५ |
| कु | २ | २८ | कुम्ब् | १ | ३६८ |
| कु | ५ | १४८ | कुम्ब् | ९ | २१० |
| कुंश् | ९ | २२६ | कुर् | ५ | ७७ |
| कुंस् | ९ | २२९ | कुल् | १ | ९८१ |
| कुक् | १ | ६१९ | कुश् | ३ | ६० |
| कुच् | १ | १०० | कुष् | ८ | ५८ |
| कुच् | १ | ९६१ | कुस् | ३ | ७७ |
| कुच् | ५ | ११७ | कुस्म् | ९ | २७१ |
| कुज् | १ | १४० | कुह् | ९ | ३७४ |
| कुञ्च् | १ | १०२ | कू | ५ | १४९ |
| कुट् | ५ | ११२ | कूज् | १ | १८१ |
| कुट् | ९ | २४० | कूट् | ९ | २५४ |
| कुट्ट् | ९ | २१ | कूट् | ९ | २९३ |
| | | | कूण् | ९ | २५७ |

| धातु | गण | धातुक्रमांक |
|---|---|---|
| कूर्द् | १ | ७३३ |
| कूल् | १ | ४२३ |
| कृ | १ | ८८८ |
| कृ | ४ | ८ |
| कृड् | ५ | १२९ |
| कृत् | ५ | ११ |
| कृत् | ६ | १८ |
| कृन्व | ४ | २५ |
| कृप् | १ | ९५९ |
| कृप् | ९ | १७९ |
| कृप | ९ | ३२३ |
| कृश् | ३ | ६४ |
| कृष | १ | ५०६ |
| कृष् | ५ | ५ |
| कॄ | ५ | २० |
| कॄ | ८ | १५ |
| कॄ | ८ | २२ |
| कॄत् | ९ | ८२ |
| केत | ९ | ३११ |
| केप् | १ | ७५५ |
| केल् | १ | ४४५ |
| केव् | १ | ८२० |
| कै | १ | ३६ |
| क्नथ् | १ | १०४४ |
| क्नस् | ३ | २७ |
| क्नु | ८ | ८ |
| क्नूय् | १ | ८०२ |
| क्मर् | १ | ४०६ |
| क्रथ् | १ | १०४५ |

| धातु | गण | धातुक्रमांक |
|---|---|---|
| क्रथ् | ९ | ३९४ |
| क्रन्द् | १ | ३१६ |
| क्रन्द् | १ | १००७ |
| आङः क्रन्द् | ९ | १७४ |
| क्रप् | १ | १००९ |
| क्रम् | १ | ३८५ |
| क्री | ८ | १ |
| क्रीड | १ | २४३ |
| क्रुञ्च | १ | १०१ |
| क्रुध् | ३ | ४१ |
| क्रुश् | १ | ९८६ |
| क्लथ् | १ | १०४६ |
| क्लन्द् | १ | १००८ |
| क्लन्द | १ | ३१७ |
| क्लम् | ३ | ९४ |
| क्लिद् | ३ | ३६ |
| क्लिन्द् | १ | ३१८ |
| क्लिन्द् | १ | ७२५ |
| क्लिश् | ३ | १३३ |
| क्लिश् | ८ | ५० |
| क्लीव् | १ | ७६८ |
| क्लेश् | १ | ८३१ |
| क्वण् | १ | २७१ |
| क्वथ् | १ | ९६४ |
| क्वेल | १ | ४४६ |

## क्ष

| धातु | गण | धातुक्रमांक |
|---|---|---|
| क्षञ्ज् | १ | १००१ |
| क्षञ्ज् | ९ | १८ |

| धातु | गण | धातुक्रमांक |
|---|---|---|
| क्षण् | ७ | ३ |
| क्षप् | ९ | ३२५ |
| क्षम् | १ | ७८८ |
| क्षम् | ३ | ९२ |
| क्षम्प् | ९ | ९९ |
| क्षर् | १ | ९७१ |
| क्षल् | ९ | १२१ |
| क्षि | १ | १० |
| क्षि | ५ | १७ |
| क्षि | ८ | ३४ |
| क्षिण् | ७ | ४ |
| क्षिप् | ३ | १५ |
| क्षिप् | ५ | ३ |
| क्षिव् | १ | ४६४ |
| क्षिव् | ३ | २४ |
| क्षीज | १ | १५० |
| क्षीव् | १ | ७६९ |
| क्षु | २ | २६ |
| क्षुद् | ६ | ७ |
| क्षुध् | ३ | ३९ |
| क्षुभ् | १ | ९४८ |
| क्षुभ् | ३ | ५६ |
| क्षुभ् | ८ | ४६ |
| क्षुर् | ५ | ७८ |
| क्षै | १ | ४२ |
| क्ष्णु | २ | २४ |
| क्ष्माय् | १ | ८०३ |
| क्ष्मील | १ | ४१८ |
| क्ष्विद् | १ | ३०० |
| क्ष्विद् | १ | ९४५ |
| क्ष्विद् | ३ | ३८ |

ख

| धातु | गण | धातुक्रमांक |
|---|---|---|
| खज् | १ | १४६ |
| खञ्ज | १ | १४७ |
| खद् | १ | १८६ |
| खट्ट् | ९ | ४२ |
| खड् | ९ | ६० |
| खण्ड | १ | ६८८ |
| खण्ड् | ९ | ६१ |
| खद् | १ | २९६ |
| खन् | १ | ९१३ |
| खर्ज् | १ | १४५ |
| खर्द् | १ | ३०७ |
| खर्ब् | १ | ३५५ |
| खर्व् | १ | ४६१ |
| खल् | १ | ४४९ |
| खव् | ८ | ४९ |
| खाद् | १ | २९४ |
| खिद् | १ | १७८ |
| खिद् | ३ | ११६ |
| खिद् | ५ | १२ |
| खिद् | ६ | २४ |
| खुज् | १ | १४१ |
| खुण्ड | १ | ६८९ |
| खुर् | ५ | ७९ |
| खेट | ९ | २९६ |
| खेल्ल् | १ | ४४७ |
| खेव् | १ | ८२१ |
| खै | १ | ४१ |
| खोट् | ९ | २९७ |

| धातु | गण | धातुक्रमांक |
|---|---|---|
| खोड् | १ | २५१ |
| खोर् | १ | ४१२ |
| ख्या | २ | १३ |
| **ग** | | |
| गग्घ् | १ | ९५ |
| गज् | १ | १७१ |
| मज् | ९ | २० |
| गञ्ज् | १ | १६४ |
| गड् | १ | १०३४ |
| गण | ९ | ३०८ |
| गण्ड् | १ | २३२ |
| गद् | १ | २९७ |
| गद् | ९ | ३१७ |
| गन्ध् | ९ | २६२ |
| गम् | १ | ३९६ |
| गर्ज् | १ | १६३ |
| गर्द् | १ | ३०४ |
| मर्ध् | ९ | ९५ |
| गर्ब् | १ | ३५७ |
| गर्व् | १ | ४६२ |
| गर्व् | ९ | ३७२ |
| गर्ह् | १ | ८६० |
| गर्ह् | ९ | ४१४ |
| गल् | १ | ४५२ |
| गल्भ् | १ | ७७४ |
| गल्ह् | १ | ८६१ |
| गवेष् | ९ | ३५३ |
| गा | १ | ५८६ |
| गात्र् | ९ | ३३८ |
| गाध् | १ | ७४३ |
| गाह् | १ | ८७१ |
| गु | १ | ५९१ |
| गु | ६ | ११३ |
| गुज् | १ | १५२ |
| गुज् | ६ | ११९ |
| गुञ्ज् | १ | १५३ |
| गुड् | ६ | १३१ |
| गुण् | ९ | ३१० |
| गुण्ठ् | ९ | ५४ |
| गुण्ड् | ९ | ६४ |
| गुद् | १ | ७३५ |
| गुध् | ३ | १२ |
| गुध् | ८ | ४४ |
| गुप् | १ | ३३२ |
| गुप् | १ | ७६३ |
| गुप् | ३ | ४९ |
| गुप् | ९ | २२१ |
| गुफ् | ६ | ६९ |
| गुम्फ् | ६ | ७० |
| गुर् | ६ | १५० |
| गुह् | १ | ९३५ |
| गुर्द् | १ | ७३४ |
| गुर्द् | ९ | ९१ |
| गूर् | ३ | १२९ |
| गूर् | ९ | २७२ |
| गूर्व | १ | ४८१ |
| गृ | १ | १९ |

| धातु | गण | धातुक्रमांक | धातु | गण | धातुक्रमांक |
|---|---|---|---|---|---|
| गृज् | १ | १६५ | | **घ** | |
| गृञ्ज् | १ | १६६ | घंस् | १ | ८५६ |
| गृध् | ३ | ४४ | घट् | १ | १००० |
| गृह् | ९ | ३७३ | घट् | ९ | १६९ |
| गॄ | ५ | २१ | घट् | ९ | २१५ |
| गॄ | ८ | ३१ | घट्ट् | १ | ६६८ |
| गॄ | ९ | २३८ | घट्ट् | ९ | ४१ |
| गेप् | १ | ७५६ | घण्ट् | ९ | २१६ |
| गेव् | १ | ८२२ | घस् | १ | ५४४ |
| गेष् | १ | ८३४ | घिण्ण् | १ | ७०५ |
| गै | १ | ३७ | घु | १ | ५९२ |
| गोपाय् | १ | ३३२ | घुंष् | १ | ८४३ |
| गोम् | ९ | ३२८ | घुट् | १ | ९३९ |
| गोष्ट् | १ | ६७१ | घुट् | ५ | १२० |
| ग्रन्थ् | १ | ७१८ | घुण् | १ | ७०८ |
| ग्रन्थ् | ८ | ४१ | घुण् | ५ | ५३ |
| ग्रन्थ् | ९ | ३९३ | घुण्ण् | १ | ७०६ |
| ग्रस् | १ | ८५४ | घुर् | ५ | ८० |
| ग्रस् | ९ | १९६ | घुष् | १ | ४९७ |
| ग्रह् | ८ | १० | घुष् | ९ | १८९ |
| ग्रुच् | १ | ११७ | घूर् | ३ | १२६ |
| ग्लस् | १ | ८५५ | घूण् | १ | ७०९ |
| ग्लह् | १ | ८७२ | घूर्ण् | १ | ७०८ |
| ग्लुच् | १ | ११४ | घूर्ण | ५ | ५४ |
| ग्लुञ्च् | १ | ११५ | घृ | १ | २० |
| ग्लेप् | १ | ७५८ | घृ | ९ | ३ |
| ग्लेव् | १ | ८२३ | घृण् | ७ | ७ |
| ग्लै | १ | ३१ | घृण्ण | १ | ७०७ |

| धातु | गण | धातुक्रमांक |
|---|---|---|
| चुड्ड् | १ | २५८ |
| चुण् | ५ | १२३ |
| चुण्ट् | १ | २०४ |
| चुण्ट् | ९ | २९ |
| चुण्ड् | ९ | ६५ |
| चुत् | १ | २८१ |
| चुद् | ९ | ८९ |
| चुप् | १ | ३४२ |
| चुम्ब् | १ | ३७१ |
| चुर् | ९ | १ |
| चुल्ल् | १ | ४३० |
| चूण् | ९ | ७४ |
| चूर् | ३ | १३२ |
| चूर्ण् | ९ | ७२ |
| चृष् | १ | ४९८ |
| चृत् | ५ | ५५ |
| चेल् | १ | ४४४ |
| चेष्ट् | १ | ६७० |
| च्यु | १ | ५९४ |
| च्यु | ९ | १५४ |
| च्युत् | १ | २८० |
| | **छ** | |
| छद् | १ | १०४७ |
| छद् | ९ | ८८ |
| छद् | ९ | ३९८ |
| छम | १ | २८१ |
| छम्प् | ९ | ९८ |
| छर्द् | ९ | ९२ |

| धातु | गण | धातुक्रमांक |
|---|---|---|
| छष् | १ | ९२९ |
| छिद् | ६ | ६ |
| छिद्र | ९ | ३४० |
| छुट् | ५ | १२२ |
| छुट | ९ | ३० |
| छुप् | ५ | ६१ |
| छुर् | ५ | १४५ |
| छृद् | ६ | ८ |
| छृद् | ९ | ४०० |
| छेद् | ९ | ३१६ |
| छो | ३ | ६ |
| | **ज** | |
| जंस् | ९ | १४२ |
| जक्ष् | २ | ३३ |
| जज् | १ | ४५९ |
| जञ्झ् | १ | १६० |
| जट् | १ | ४८१ |
| जन् | ३ | १२२ |
| जप् | १ | ३३८ |
| जम्भ् | १ | ३७९ |
| जभ | १ | ७८३ |
| जम् | १ | ३८२ |
| जम्भ् | १ | ७८२ |
| जम्भ् | ९ | १८० |
| जर्च् | ५ | २३ |
| जर्ज् | ५ | ३९ |
| जल् | १ | ९७३ |
| जल | ९ | १२० |

| धातु | गण | धातुक्रमांक | धातु | गण | धातुक्रमांक |
|---|---|---|---|---|---|
| डम्प् | ९ | २६५ | तड् | ९ | ५९ |
| डम्ब् | ९ | १०७ | तण्ड् | १ | ६८६ |
| डम्भ् | ९ | २६७ | तन् | ७ | १ |
| डिप् | ३ | ५३ | तन् | ९ | ४०२ |
| डिप् | ५ | १४४ | तन्त्र् | ९ | २७३ |
| डिप् | ९ | १०१ | तप् | १ | ३३३ |
| डिप् | ९ | २६४ | तप् | ३ | १२४ |
| डिम्प् | ९ | १०४ | तप् | ९ | ४०४ |
| डिम्प् | ९ | २६६ | तम् | ३ | ८९ |
| डिम्ब् | ९ | १०८ | तय् | १ | ७९७ |
| डिम्भ् | ९ | २६८ | तर्क् | ९ | २०१ |
| डी | १ | ५८८ | तर्ज् | १ | १५६ |
| डी | ३ | १०६ | तर्ज् | ९ | २५३ |
| | | | तर्द् | १ | ३०५ |
| | ढ | | तर्व् | १ | ३५९ |
| ढौक् | १ | ६२७ | तल् | ९ | १२४ |
| | | | तस् | ३ | ८१ |
| | त | | ताय् | १ | ८०६ |
| | | | तिक् | १ | ६३२ |
| तंम् | १ | ५३८ | तिक् | ४ | १६ |
| तस् | ९ | १९१ | तिग् | ४ | १७ |
| तक् | १ | ५१ | तिज् | १ | ६६७ |
| तक्ष् | १ | ५७१ | तिज् | ९ | २२ |
| तङ्क् | १ | ५२ | तिप् | १ | ७५० |
| तङ्ग् | १ | ८० | तिम् | ३ | १७ |
| तञ्च् | १ | १०८ | तिल् | १ | ४३९ |
| तञ्च् | ६ | १२ | तिल् | ५ | ९१ |
| तञ्ज् | ६ | १३ | तिल् | ९ | ११९ |
| तट् | १ | १८५ | तिल्ल् | १ | ४४० |

| धातु | गण | धातुक्रमांक | धातु | गण | धातुक्रमांक |
|---|---|---|---|---|---|
| तीम | ३ | १८ | तृण् | ९ | ७५ |
| तीर् | ९ | ३३६ | तृण् | ९ | २५८ |
| तीव् | १ | ४६८ | तूण् | ९ | ३०७ |
| तु | २ | २१ | तृद् | ३ | १३१ |
| तुज् | १ | १६१ | तृल् | १ | ४२५ |
| तुञ्ज् | १ | १६२ | तृप् | १ | ४९९ |
| तुञ्ज् | ९ | १६ | तृंह | ६ | १०९ |
| तुभ्र् | ९ | २०७ | तृक्ष् | १ | ५७४ |
| तुट् | ६ | १२४ | तृण् | ७ | ६ |
| तुट् | ९ | २७ | तृद् | ६ | ९ |
| तुड् | १ | २४४ | तृप् | ३ | ४६ |
| तुड् | ६ | १३३ | तृप् | ४ | २३ |
| तुण् | ६ | ४७ | तृप् | ९ | ४०५ |
| तुण्ड् | १ | ६९५ | तृफ | ६ | ६३ |
| तुद् | ६ | १ | तृम्फ | ६ | ६४ |
| तुप् | १ | ३४३ | तृष् | ३ | ६९ |
| तुफ् | १ | ३४७ | तृह् | ६ | १०८ |
| तुभ् | १ | ९५० | तृह् | ६ | २३ |
| तुभ् | ३ | ५८ | तॄ | १ | २७ |
| तुभ् | ८ | ४८ | तेप् | १ | ७५३ |
| तुम्प् | १ | ३४४ | तेव् | १ | ८१६ |
| तुम्फ् | १ | ३४८ | तोड् | १ | २४६ |
| तुम्ब् | १ | ३७० | तौड् | १ | २४२ |
| तुम्ब् | ९ | ११२ | त्यज् | १ | १७२ |
| तुर्व् | १ | ४७१ | त्रंस् | ९ | २२७ |
| तुल् | ९ | १२५ | त्रङ्क् | १ | ६२४ |
| तुष् | ३ | ७० | त्रन्द् | १ | ३१४ |
| तुस् | १ | ५३९ | त्रप् | १ | ७६२ |
| तुह् | १ | ५६२ | त्रस् | ३ | २८ |
| तूड् | १ | २४५ | त्रस् | ९ | १९३ |

| धातु | गण | धातुक्रमांक |
|---|---|---|
| त्रुट् | ५ | १२३ |
| त्रुट् | ९ | २५५ |
| त्रुड् | ५ | १४२ |
| त्रुप् | १ | ३४५ |
| त्रुफ् | १ | ३४९ |
| त्रुम्प् | १ | ३४६ |
| त्रुम्फ् | १ | ३५० |
| त्रै | १ | ६०५ |
| त्रौक् | १ | ६२८ |
| त्वक्ष् | १ | ५७२ |
| त्वक्ष् | १ | ५७८ |
| त्वङ्ग् | १ | ९१ |
| त्वच् | ५ | २५ |
| त्वञ्च् | १ | १०९ |
| त्वर् | १ | १०१० |
| त्विष् | १ | ९३० |
| त्सर् | १ | ४०५ |
| | **थ** | |
| थुड् | ५ | १३५ |
| थुर्व् | १ | ४७२ |
| | **द** | |
| दंश् | १ | ४९६ |
| दंश् | ९ | २२५ |
| दंश् | ९ | २७७ |
| दंस् | ९ | २३० |
| दंस् | ९ | २७८ |
| दक्ष् | १ | ८७५ |
| दक्ष् | १ | १०१२ |
| दघ् | १ | ९६ |
| दण्ड् | ९ | ३०२ |
| दद् | १ | ७२७ |
| दध् | १ | ७४५ |
| दम् | ३ | ८८ |
| दम्भ् | ४ | २४ |
| दय् | १ | ७९९ |
| दरिद्रा | २ | ३४ |
| दल् | १ | ४१३ |
| दल् | ९ | १८४ |
| दस् | ३ | ८२ |
| दह् | १ | ५५२ |
| दा | १ | ७ |
| दा | २ | १३ |
| दा | २ | ८० |
| दाघ् | १ | ६४४ |
| दान् | १ | ९१४ |
| दाश् | १ | ९२२ |
| दास् | १ | ९३३ |
| दिन्व् | १ | ४८६ |
| दिव् | ३ | १ |
| दिव् | ९ | १८५ |
| दिव् | ९ | २४६ |
| दिश् | ५ | ४ |
| दिह् | २ | ७० |
| दी | ३ | २०१ |
| दीक्ष् | १ | ८८१ |
| दीदांस | १ | ९१७ |
| दीप् | ३ | १२३ |
| दु | १ | ३१ |

| धातु | गण | धातुक्रमांक | धातु | गण | धातुक्रमांक |
|---|---|---|---|---|---|
| दु | ४ | १२ | द्राङ्क्ष् | १ | ५८३ |
| दुःख् | ९ | २८४ | द्राघ् | १ | ६४४ |
| दुड् | ६ | १४० | द्राड् | १ | ६१८ |
| दुल् | ९ | १२६ | द्राह् | १ | ८६९ |
| दुष् | ३ | ६६ | द्रु | १ | १३ |
| दुह् | १ | ५६३ | द्रुण् | ६ | २९ |
| दुह् | २ | ६९ | द्रुह् | ३ | ९६ |
| दृ | ३ | १०० | द्रू | ८ | ९ |
| दुर्वी | १ | ४७३ | द्रेक् | १ | ६१४ |
| दृंह् | १ | ५५७ | द्रै | १ | ३४ |
| दृंह् | ६ | १५२ | द्विष् | २ | ६८ |
| दृप् | ३ | ४७ | द्वृ | १ | २२ |
| दृफ् | ६ | ६७ | | | |
| दृभ् | ६ | ७५ | | ध | |
| दृभ् | ९ | ४०७ | | | |
| दृम्फ् | ६ | ६८ | धक्क् | ९ | ७ |
| दृश् | १ | ४९५ | धण् | १ | २६७ |
| दृह् | १ | ५५६ | धन् | १ | ३२४ |
| दॄ | १ | १०१५ | धन्व् | १ | ४५८ |
| दॄ | ८ | २८ | धा | २ | ८१ |
| दे | १ | ६०४ | धाव् | १ | ९२० |
| देव् | १ | ८१७ | धि | ६ | १६ |
| दै | १ | २९ | धिक्ष् | १ | ८७७ |
| दो | ३ | ५ | धिन्व् | ४ | २६ |
| द्यु | २ | १९ | धी | ३ | १०२ |
| द्युत् | १ | ९३७ | धुक्ष् | १ | ८७६ |
| द्यै | १ | ३३ | धू | ४ | ६ |
| द्रम् | १ | ३९३ | धू | ५ | ११६ |
| द्रा | २ | ८ | धू | ८ | १३ |
| द्राख् | १ | ५८ | धू | ९ | ३७९ |

| धातु | गण | धातुक्रमांक |
|---|---|---|
| धूप् | १ | ३३४ |
| धृप् | ९ | २२२ |
| धूर् | ३ | १२८ |
| धूर्व | १ | ४७४ |
| धृश् | ९ | १३६ |
| धृ | १ | ६०२ |
| धृ | १ | ८८७ |
| धृ | ५ | १५३ |
| धृज् | १ | १३० |
| धृञ् | १ | १३१ |
| धृष् | ४ | २७ |
| धृष् | ९ | ४१२ |
| धे | १ | २८ |
| धोर् | १ | ४११ |
| ध्मा | १ | ४ |
| ध्यै | १ | ३० |
| ध्रज् | १ | १३४ |
| ध्रञ् | १ | १३५ |
| ध्रण् | १ | २६९ |
| ध्रस् | ८ | ५९ |
| ध्रस् | ९ | १९५ |
| ध्राख् | १ | ५९ |
| ध्राङ्क्ष् | १ | ५८४ |
| ध्राड् | १ | ६९९ |
| ध्रु | १ | १६ |
| ध्रु | ५ | ११४ |
| ध्रेक् | १ | ६१५ |
| ध्रै | १ | ३५ |
| ध्वंस् | १ | ९५४ |
| ध्वज् | १ | १३२ |
| ध्वञ् | १ | १३३ |
| ध्वण | १ | २६८ |
| ध्वन् | १ | ३२५ |
| ध्वन् | १ | १०५१ |
| ध्वन् | ९ | ३२० |
| ध्वाङ्क्ष् | १ | ५८५ |
| ध्वृ | १ | २३ |
| | **न** | |
| नक्क् | ९ | ६ |
| नक्ष् | १ | ५७६ |
| नख् | १ | ६४ |
| नख् | १ | ६५ |
| नट् | १ | १८७ |
| नट् | १ | १०३३ |
| नट् | ९ | २६ |
| नद् | १ | २९९ |
| नद् | ९ | २१९ |
| नन्द् | १ | ३१२ |
| नभ् | १ | ९४९ |
| नभ् | ३ | ५७ |
| नभ् | ८ | ४७ |
| नम् | १ | ३८८ |
| नय् | १ | ७९४ |
| नय् | १ | ७९८ |
| नर्द् | १ | ३०२ |
| नर्द् | १ | ३०३ |
| नर्व् | १ | ३६० |
| नल् | १ | ९७८ |

| धातु | गण | धातुक्रमांक | धातु | गण | धातुक्रमांक |
|---|---|---|---|---|---|
| नश् | ३ | ५९ | | प | |
| नस् | १ | ८५१ | | | |
| नह् | ३ | १४२ | पंन् | ९ | १४१ |
| नाथ् | १ | ७१६ | पच् | ९ | १५१ |
| नाध् | १ | ७४७ | पच् | १ | ८९२ |
| नास् | १ | ८५० | पञ्च् | १ | ६५७ |
| निन्व् | १ | ४८४ | पञ्च् | ९ | १३ |
| निंस् | २ | ६३ | पट् | १ | १९५ |
| निक्ष् | १ | ५७३ | पट् | ९ | २१२ |
| निज् | २ | ८३ | पट् | ९ | २९४ |
| निञ्ज् | २ | ५४ | पठ् | १ | २१३ |
| निद् | १ | ९०५ | पण् | १ | ७१० |
| निन्द् | १ | ३११ | पण्ड् | १ | ६८२ |
| निल् | ५ | ९६ | पत् | १ | ९६२ |
| निवास् | ९ | ३५७ | पत | ९ | ३१२ |
| निश् | १ | ४९४ | पथ् | १ | ९६३ |
| निष् | १ | ५२५ | पद् | ३ | ११४ |
| निष्क् | ९ | २५२ | पद् | ९ | ३६६ |
| नी | १ | ८८४ | पन् | १ | ७४८ |
| नील् | १ | ४२० | पन्थ् | ९ | ८४ |
| नीव् | १ | ४६९ | पय् | १ | ७९२ |
| नु | २ | २३ | पर्ण् | ९ | ३०५ |
| नुद् | ५ | ५६ | पर्द् | १ | ७३९ |
| नृ | ५ | ११५ | पर्ब् | १ | ३६१ |
| नृत् | ३ | ९ | पर्व | १ | ४५५ |
| नॄ | १ | १०१६ | पर्ष | १ | ८४२ |
| नॄ | ८ | ३० | पल् | १ | ९८२ |
| नेद् | १ | ९०६ | पल् | ९ | १३२ |
| नेष् | १ | ८३७ | पल्ल् | १ | ४४१ |
| | | | पल्युल् | ९ | ३५० |

| धातु | गण | धातुक्रमांक |
|---|---|---|
| पच् | १ | ८२९ |
| पश् | ९ | १८६ |
| पष् | १ | ९२६ |
| पष् | ९ | १८७ |
| पष | ९ | ३५२ |
| पा | १ | २ |
| पा | २ | ९ |
| पार् | ९ | ३३५ |
| पिंस् | ९ | २२८ |
| पि | ६ | १५ |
| पिच्छ् | ९ | १२ |
| पिञ्ज् | २ | ५२ |
| पिञ्ज् | ९ | १७ |
| पिञ्ज् | ९ | २०८ |
| पिट् | १ | १८३ |
| पिठ् | १ | २२१ |
| पिण्ड् | १ | ६८४ |
| पिण्ड् | ९ | ६८ |
| पिन्व् | १ | ४८२ |
| पिल् | ९ | १३१ |
| पिश् | ६ | १३ |
| पिष् | ७ | २१ |
| पिस् | १ | ५४६ |
| पिस् | ९ | १४५ |
| पी | ३ | १०८ |
| पीड् | ९ | ५८ |
| पील् | १ | ४१९ |
| पीव् | १ | ४६६ |
| पुंस् | ९ | १४३ |
| पुट् | ६ | १२७ |
| पुट् | ९ | ३५ |
| पुट् | ९ | २१३ |
| पुट् | ९ | २९८ |
| पुड्ड् | ९ | ३२ |
| पुण् | ६ | ६० |
| पुण्ड् | १ | २२९ |
| पुथ् | ३ | ११ |
| पुथ | ९ | २१८ |
| पुन्थ् | १ | २८९ |
| पुर् | ६ | ८१ |
| पुल् | १ | ९८० |
| पुल् | ९ | १२२ |
| पुष् | १ | ५३६ |
| पुष् | ३ | ३२ |
| पुष् | ८ | ५७ |
| पुष् | ९ | ३८८ |
| पुष्प् | ३ | १६ |
| पुम् | ३ | ७५ |
| पुस्त् | ९ | ७९ |
| पू | १ | ६०० |
| पू | ८ | ११ |
| पूज् | ९ | ४९ |
| पूण् | ९ | ७७ |
| पूय् | १ | ८०१ |
| पूर् | ३ | १२५ |
| पूर् | ९ | १८३ |
| पूर्व् | ९ | २१३ |
| पूर्व् | ९ | ४०४ |
| पूल् | १ | ४२६ |
| पूष् | १ | ५०० |

| धातु | गण | धातुक्रमांक |
| --- | --- | --- |
| पॄ | २ | ७६ |
| पॄ | ४ | १३ |
| पॄ | ५ | १५१ |
| पॄ | ९ | २ |
| पृच् | २ | ५० |
| पृच् | ६ | १० |
| पृच् | ९ | २८५ |
| पृञ्ज | २ | ५१ |
| पृड् | ५ | ४३ |
| पृण् | ५ | ४६ |
| पृथ् | ९ | ८६ |
| पृष् | १ | ५२६ |
| पॄ | ८ | २५ |
| पेल् | १ | ४३२ |
| पेव् | १ | ८२४ |
| पेस् | १ | ५४७ |
| पै | १ | ४७ |
| पैण् | १ | २७७ |
| प्याय् | १ | ८०५ |
| प्युष् | ३ | ७३ |
| प्युष् | ९ | १४० |
| प्युस् | ३ | २९ |
| प्युस् | ३ | ७४ |
| प्यै | १ | ६०७ |
| प्रच्छ् | ६ | ३३ |
| प्रथ् | १ | १००३ |
| प्रथ् | ९ | ८१ |
| प्रस् | १ | १०११ |
| प्रा | २ | १४ |
| प्री | ३ | ११० |
| प्री | ८ | ३ |
| प्री | ९ | ३७८ |
| प्रु | १ | ५९७ |
| प्रुष् | १ | ५३२ |
| प्रुष् | ८ | ५४ |
| प्रोथ् | १ | ९०० |
| प्लिह | १ | ८५९ |
| प्लु | १ | ५९८ |
| प्लुष् | १ | ५३३ |
| प्लुष् | ३ | ६८ |
| प्लुष् | ८ | ५५ |
| प्लेव् | १ | ८२५ |
| प्सा | २ | २ |
| **फ** | | |
| फक्क् | १ | ५० |
| फण् | १ | १०३७ |
| फल् | १ | ४१४ |
| फल् | १ | ४२८ |
| फल् | १ | ९८३ |
| फुल्ल् | १ | ४२९ |
| फेल् | १ | ४३३ |
| **ब** | | |
| बंह् | १ | ८७३ |
| बण् | १ | २६३ |
| बद् | १ | २९५ |
| बध् | १ | ७४६ |

| धातु | गण | धातुक्रमांक |
|---|---|---|
| वध् | १ | ९७ |
| रन्ध् | ८ | ४५ |
| वन्ध् | ९ | ९६ |
| वभ्र् | १ | ४०८ |
| वर्ब् | १ | ३६२ |
| वर्ह् | १ | ८६४ |
| वर्ह् | ९ | १४७ |
| वल् | १ | ९७९ |
| वल् | ९ | २४४ |
| वल्ह् | १ | ८६५ |
| वाध् | १ | ७४४ |
| बिल् | ५ | ९५ |
| विल् | ९ | १२३ |
| वीभेत्स् | १ | ७४६ |
| वुक्क् | १ | ५४ |
| वुक्क् | ९ | १५६ |
| वुध् | १ | ९१२ |
| वुध् | १ | ९६८ |
| वुध् | ३ | ११९ |
| वुन्द् | १ | ९०४ |
| वुन्ध् | ९ | ९३ |
| वुल् | ९ | १२७ |
| वुस्त् | ९ | ८० |
| वृ | ८ | २६ |
| ब्रू | २ | ६७ |
| ब्रूस् | ९ | १४४ |
| ब्लेष्क् | ९ | २८२ |

| धातु | गण | धातुक्रमांक |
|---|---|---|
| | **भ** | |
| भक्ष् | ९ | १५० |
| भज् | १ | ८९५ |
| भज् | ९ | १६६ |
| भञ्ज् | ६ | १४ |
| भञ्ज् | ९ | २११ |
| भट् | १ | १८४ |
| भट् | १ | १०३२ |
| भण् | १ | २६४ |
| भण्ड् | १ | ६९२ |
| भण्ड् | ९ | ६६ |
| भन्द् | १ | ७२२ |
| भर्त्स् | ९ | २७९ |
| भर्भ् | १ | ३७६ |
| भर्व् | १ | ३७७ |
| भल् | १ | ८१२ |
| भल् | ९ | २४५ |
| भल्ल् | १ | ८१३ |
| भष् | १ | ५२१ |
| भा | २ | ३ |
| भाज् | ९ | २८९ |
| भाम् | १ | ७८७ |
| भाम् | ९ | ३२७ |
| भाष् | १ | ८३२ |
| भास् | १ | ८४६ |
| भिक्ष् | १ | ८८० |
| भिद् | ६ | ५ |
| भी | २ | ७४ |

| धातु | गण | धातुक्रमांक |
|---|---|---|
| भुज् | ५ | ३७ |
| भुज् | ६ | १५ |
| भुण्ड् | १ | ६९६ |
| भू | १ | १ |
| भू | ९ | १५५ |
| भूष् | १ | ५३७ |
| भूष् | ९ | १९० |
| भृ | १ | ८८६ |
| भृ | २ | ८२ |
| भृज् | १ | ६६६ |
| भृश् | ३ | ६१ |
| भृ | ८ | २७ |
| भ्रेज् | १ | ६६० |
| भेष | १ | ९२४ |
| भ्यस् | १ | ८५२ |
| भ्रंश् | १ | ९५२ |
| भ्रंश् | ३ | ६२ |
| भ्रण् | १ | २६५ |
| भ्रम् | १ | ९७० |
| भ्रम् | ३ | ९१ |
| भ्रस्ज् | ५ | २ |
| भ्राज् | १ | ६६१ |
| भ्राज् | १ | ८९४ |
| भ्राम् | १ | ८४७ |
| भ्री | ८ | ३६ |
| भ्रुड् | ५ | १३९ |
| भ्रूण् | ९ | २५९ |
| भ्रेष् | १ | ९२५ |
| भ्लस् | १ | ९३६ |
| भ्लास् | १ | ८४८ |

म

| धातु | गण | धातुक्रमांक |
|---|---|---|
| मंह् | १ | ८७४ |
| मंह् | ९ | २३६ |
| मक्ष् | १ | ५६८ |
| मख् | १ | ६७ |
| मङ्क् | १ | ६०९ |
| मङ्ख् | १ | ७० |
| मङ्ग् | १ | ८५ |
| मङ्घ् | १ | ६४१ |
| मच् | १ | ६५४ |
| मज् | १ | १७० |
| मज्ज् | ५ | ३८ |
| मञ्च् | १ | ११० |
| मञ्च् | १ | ६५६ |
| मठ् | १ | २१५ |
| मण् | १ | २६६ |
| मण्ठ् | १ | ६७७ |
| मण्ड् | १ | २३१ |
| मण्ड् | १ | ६९२ |
| मण्ड् | ९ | ६६ |
| मथ् | १ | ९६५ |
| मद् | १ | १०४८ |
| मद् | ३ | ९३ |
| मद् | ९ | २४१ |
| मन् | ३ | १२० |
| मन् | ७ | ९ |
| मन् | ९ | २४३ |
| मन्थ् | १ | २९१ |
| मन्थ् | १ | २९२ |

